**परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्द्धे वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्**

परेति । वै । एषः । यज्ञम् । पशून् । वपति । यः । अग्निम् । उद्वासयत इत्युत्—वासयते । पञ्चकपाल इति पञ्च—कपालः । पुरोडाशः । भवति । पाङ्क्तः । यज्ञः । पाङ्क्ताः । पशवः । यज्ञम् । एव । पशून् । अवेति । रुन्धे । वीरहेति वीर—हा । वै । एषः । देवानाम् । यः । अग्निम् । उद्वासयत इत्युत्—वासयते । न । वै । एतस्य । ब्राह्मणाः । ऋतायव इत्यृत—यवः । पुरा । अन्नम् । अक्षन् ।

'परा वा' इत्यादि ॥ परावापो विनाशः । पञ्चकपालः इति पुनर्विधानं प्रयोजनान्तरार्थम् । पाङ्क्तः यज्ञः इति, धानादिपञ्चकाधीनसिद्धित्वात् । उत्सादित्वादणपवादोऽञ् उक्तः (पा ४·१·८६) । पाङ्क्ता इति पशुसाधनत्वात् पाङ्क्ताः । यज्ञं पशून् च अव रुन्धे प्राप्नोति ॥

'वीरहा' इत्यादियाज्यानुवाक्याविशेषविधिः ॥ देवानां मध्ये वीरस्याग्नेर्हन्ता, का कथान्येषां देवानामिति ? तस्मात् सर्वेऽप्यस्मात् बिभ्यतीति । ऋतायवः *ऋतं सत्यं यज्ञं वा आत्मन इच्छन्तः । क्यचि "न छन्दस्यपुत्रस्य" (पा ७·४·३५) इतीत्वाभावः । "क्याच्छन्दसि" (पा ३·२·१७०) इत्युप्रत्ययः । ऋतायुत्वादेतस्योद्वासिताग्नेः अन्नं न अक्षन् नादन्, अभोज्यान्नत्वादेतस्य[1] । अत्तेर्लुङि "लुङ्सनोर्घस्लृ" (पा २·४·३७) इति घस्लादेशः । "मन्त्रे घस" (पा २·४·८०) इत्यादिना च्लेर्लुक् । "घसिभसोः" (पा ६·४·१००)

**परा वेति** ॥ द्वितीयानुवाके[1] याज्याद्यङ्गजातं विधित्सुः पूर्वोक्तं द्रव्यविधिमनूद्य प्रशंसति— 'परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्द्धे' इति ॥ परा वपति विनाशयति । धानादिभिर्हविर्भिः यज्ञः पाङ्क्तः । पङ्क्तिच्छन्दसः पशुहेतुत्वात्[2] पशवः अपि पाङ्क्ताः ॥

**वीरहेति** ॥ याज्यानुवाक्ये विधत्ते—'वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन् पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव वीरं निरवदायाग्निं पुनरा धत्ते' इति ॥ देवानां मध्ये वीरोऽग्निः । [3]तद्वधकारिणो यजमानस्य अन्नम् ऋतायवः सत्यमिच्छन्तः ब्राह्मणाः पुरा नैव अक्षन् नैव भुक्तवन्तः । अश भोजने इत्यस्य रूपम् । 'अग्ने

*[द्र. निरुक्त ४·१९] । १. ब—अभोज्यान्न इति ।

१. इ.उ—'याद्यनुवाके । २. ति—'हेतुत्वेन । ३. त्रि४—तद्वधकाङ्क्षिणः ।

**यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः सं वा एतस्य गृहे वाक् सृज्यते योऽग्निमुद्वासयते स वाचꣳ संꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्-**

यत् । वै । अग्निः । आहित इत्या–हितः । न । ऋध्यते । ज्यायः । भागधेयमिति भाग–धेयम् । निकामयमान इति नि–कामयमानः । यत् । आग्नेयम् । सर्वम् । भवति । सा । एव । अस्य । ऋद्धिः । समिति । वै । एतस्य । गृहे । वाक् । सृज्यते । यः । अग्निम् । उद्वासयत इत्युत्–वासयते । सः । वाचम् । सꣳसृष्टामिति सम्–सृष्टाम् । यजमानः । ईश्वरः । अन्विति । पराभवितोरिति परा–भवितोः ।

' यद्वा ' इत्यादि ॥ येन $^{v}$न $^{v}$ऋध्यते ऋद्धिहेतुर्न भवति तत् $^{v}$ज्यायः प्रशस्यतरं अग्न्याधेयभागात् केवलाग्नेयत्वात् पुनराधेयभागं तत् $^{v}$निकामयमानः तन्निभृतम् आत्मनः संपादयितुमिच्छन् ऋद्धिहेतुतामग्निर्न प्रतिपद्यत इति । आहितशब्दे " गतिरनन्तरः " ( पा ६.२.४९ ) इति स्वरः । ततः केवलाग्नेयकरणेन ऋद्धिहेतुरयमिति । तस्मात् $^{v}$सर्वम् $^{v}$आग्नेयं कर्तव्यमिति विधिः ॥

अथ विभक्तिविधानार्थमाह—' सं वा ' इति ॥ अस्य $^{v}$वाक् $^{v}$गृहे $^{v}$सं $^{v}$सृज्यते गृहवासिनां वाग्योगे न वैलक्षण्यं भजते । ततश्चाबहुमतवाक्त्वात् $^{v}$पराभवितोः पराभवितुम् $^{v}$ईश्वरः स्यात् । ततश्चास्य गृहान् भावयितुमेव वरमिति । वक्ष्यति च—" आयतनादेव नैति " ( तैसं १.५.२ ) इति । [3]कृतमूकत्वं वा वाक्संसर्गः । " ईश्वरे तोसुन्कसुनौ " ( पा ३.४.१३ ) ।

यद्वेति ॥ [6]–प्रधानकर्मण इव–[6] प्रयाजाज्यभागाद्यङ्गानामप्याग्नेयत्वं विधत्ते—' यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः ' इति ॥ यजमानस्य समृद्ध्यभावादग्नेः समृद्ध्यभावोऽनुमेयः ॥

सं वेति ॥ " समिधो अग्न आज्यस्य वियन्तु " ( तैब्रा ३.५.५ ) इत्यादिषु चतुर्षु प्रयाजमन्त्रेषु संबुद्ध्यन्तादग्निशब्दात् पूर्वं संबुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्तानामग्निशब्दानां क्रमेण योगं विधत्ते—' सं वा एतस्य गृहे वाक्सृज्यते योऽग्निमुद्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्विभक्त्यो भवन्ति । वाचो विधृत्यै यजमानस्यापराभावाय ' इति । अग्निमुद्वासयितुः $^{v}$एतस्य $^{v}$वाक् $^{v}$गृहे अवस्थितानां स्त्रीशूद्रादीनां वाग्भिः $^{v}$सं $^{v}$सृज्यते तत्समा भवति । तां $^{v}$वाचम् $^{v}$अनु $^{v}$यजमानः अपि

३. मै–मूकत्वम् ।

६–६. इ.उ.ना.पा.हा–प्रधानकर्मणश्च ।

विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्यापराभावाय (२) विभक्तिं करोति ब्रह्मैव तदकरुपांशु यजति यथा वामं वसु विविदानो गूहति तादृगेव

विभक्तय इति वि–भक्तयः । भवन्ति । वाचः । विधृत्या इति वि–धृत्यै । यजमानस्य । अपराभावायेत्यपरा–भावाय (२) । विभक्तिमिति वि–भक्तिम् । करोति । ब्रह्म । एव । तत् । अकः । उपांश्वित्युप–अंशु । यजति । यथा । वामम् । वसु । विविदानः । गूहति । तादृक् । एव ।

लक्षणेऽनोः कर्मप्रवचनीयत्वम् ( पा १·४·८४ ) । तस्मात् ‘ विभक्तयो भवन्ति ’ इति विधिः । विभज्यते व्यावर्त्यतेऽस्य वागाभिरिति विभक्तयः ‘ अग्नाग्ने अग्नावग्ने अग्निनाग्ने अग्निमग्ने ’ इति चतस्रः । एताश्च चतुर्षु प्रयाजेषु देयाः नोत्तमे । “ तादौ च° ” ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरत्वम् । विधृत्यै विलक्षणावस्थानाय प्रयाजानामग्न्याधेयाद्वैलक्षण्यापादने वाचः संसर्गदोषः परिह्रियत इति ॥

‘ विभक्तिम् ’ इति ॥ विभक्तिं वैलक्षण्यविभक्तिप्रदानमस्य कर्मणो यत्करोति तेन हेतुना पुनराधेयं ब्रह्म परिवृढम् अग्न्याधेयात् अकः करोति । छान्दसो लुङ्, “ मन्त्रे घस° ” ( पा २·४·८० ) इति च्लेर्लुक् । ‘ मन्त्रे ’ इति वेदमात्रस्य ग्रहणम् । यद्वा—लङि व्यत्ययेन शपो लुक् ॥

‘ उपांशु ’ इति ॥ सर्वो यागः उपांशुः कर्तव्यः ओत्तमादनूयाजात् । “ उपादद्व्यज-जिनम्° ” ( पा ६·२·१९४ ) इत्युत्तरपदान्तोदात्तत्वम् । ‘ यथा ’ इति । यथा वामं वननीयं वरिष्ठं धनं मुषितं विविदानः लभमानः लब्धुं यतमानः तत् गूहति संवृणोति तादृक् तत उपांशुकरणम् । छन्दसि लिटः कानजादेशः ( पा ३·२·१०६ ) ॥

इतरवैलक्षण्यरूपस्योत्कर्षस्याभावात् पराभूतो भवति । एताभिस्तु विभक्तिभिः पुनराधेयस्याग्न्याधेयात् वैलक्षण्ये सति यजमानस्य विलक्षणत्वेन वाग्विधृतौ सत्यां पराभवः शाम्यति । विभक्तयः सूत्रे दर्शिताः—“ अग्नाऽग्ने अग्नावग्नेऽग्निनाऽग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ” ( आपश्रौ ५·२८·६ ) इति । तथा चैवं मन्त्रपाठः संपद्यते—‘ समिधोऽग्नाऽग्न आज्यस्य वियन्तु, तनूनपादग्नावग्न आज्यस्य वेतु , इडोऽग्निनाग्न आज्यस्य वियन्तु, बर्हिरग्निमग्न आज्यस्य वेतु ’ इति ॥

विभक्तिमिति ॥ यथोक्तविभक्तिविधिमनूद्य प्रशंसति—‘ विभक्तिं करोति ब्रह्मैव तदकः ’ इति । तत्पुनराधेयं ब्रह्म एव अग्न्याधेयात् परिवृढमेव करोति ॥

उपांश्विति ॥ अत्र मन्त्राणां नीचध्वनिं विधत्ते—‘ उपांशु यजति यथा वामं वसु विविदानो गूहति तादृगेव तत् ’ इति ॥ यथा लोके श्रेष्ठं वसु लब्धवान् पुरुषो गोपायति तद्वत् ॥

४. मै–छान्दसस्य ।

७. ति.त्रि४–वस्तु ।

**तदग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तद्विभक्तिमुक्त्वा प्रयाजेन वषट् करोत्यायतनादेव नैति यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती (३)जुहोति**

तत् । अग्निम् । प्रतीति । स्विष्टकृतमिति स्विष्ट—कृतम् । निरिति । आह । यथा । वामम् । वसु । विविदानः । प्रकाशमिति प्र—काशम् । जिगमिषति । तादृक् । एव । तत् । विभक्तिमिति वि—भक्तिम् । उक्त्वा । प्रयाजेनेति प्र—याजेन । वषट् । करोति । आयतनादित्या—यतनात् । एव । न । एति । यजमानः । वै । पुरोडाशः । पशवः । एते इति । आहुती इत्या—हुती । यत् । अभितः । पुरोडाशम् । एते इति । आहुती इत्या—हुती ( ३ ) । जुहोति ।

‘ अग्निं प्रति ’ इति ।। Vस्विष्टकृतम् Vअग्निं Vप्रति Vनिः Vआह निर्गतं ब्रूयात्, उच्चैरिति यावत् । लक्षणादिना प्रतेः कर्मप्रवचनीयत्वम् ( पा १.४.९० ) । ‘ यथा ’ इति । Vयथा Vवामं Vवसु Vविविदानः अन्विष्य लब्धवान् तत् Vप्रकाशं विवृतं Vजिगमिषति ख्यापयितुमिच्छति अहो इदं दृष्टं पश्यतेति Vतादृक् तदुच्चैर्वचनम् । परोक्षे लिटः कानजादेशः ( पा ३.२.११५, १०६ ) ।

‘ विभक्तिम् ’ इति । ‘ ये यजामहे ’ इत्यस्यानन्तरं Vविभक्तिम् Vउक्त्वा ततः प्रयाजमन्त्रेण Vवषट् Vकरोति हविर्ददाति । अनेन कर्मणा स्वस्मात् Vआयतनात् Vन Vएति न गच्छति । अनुष्ठेयवचनः स्व आयतने निवसति ।।

‘ यजमानो वै ’ इत्यादि ।। प्राधान्यात् ताद्धर्म्येण ताच्छब्द्यम् । ‘ पशवः ’ इति । तद्धेतुत्वात् ताच्छब्द्यम् । स्वयं पशव एव । ‘ पुनरूर्जा नि वर्तस्व सह रय्या नि वर्तस्व ’ ( तैसं १.५.३ ) इति Vएते Vआहुती । ‘ यदभितः ’ इति । Vअभितः पुरस्तादुपरिष्टाच्च पुरोडाशहोमस्य । “ अभितः परितः॰ ” ( द्र.पाभा २.३.२ वा १ ) इति द्वितीया । गतमन्यत् ।।

**अग्निमिति** ।। स्विष्टकृदुच्चध्वनिं विधत्ते—‘ अग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तत् ’ इति ।। Vनिराह [८]निःशेषेण ध्वनिं कुर्यात् । Vयथा लोके [९-]श्रेष्ठं Vवसु लब्धवान्[-९] द्रव्यपतिः प्रसिद्धिं गन्तुमिच्छति तद्वत् ।।

**विभक्तिमिति** ।। पूर्वं विहितानां विभक्तीनां प्रयाजमन्त्रसंबन्धं विधत्ते—‘ विभक्तिमुक्त्वा प्रयाजेन वषट्करोत्यायतनादेव नैति ’ इति । विभक्तिवचनप्रकारो दर्शितः । तदुक्तिसहितेन प्रयाजमन्त्रेण वषट्कारपूर्वं यजेत । तथा सति पूर्वोक्तवाक्संसर्गकृतपराभवरहितः Vआयतनात् स्वगृहात् Vन Vएति न निर्गच्छति । किंतु स्वगृहे प्रतितिष्ठति ।।

**यजमान इति** ।। “ पुनरूर्जा नि वर्तस्व ”, “ सह रय्या नि वर्तस्व ” ( तैसं १.५.३ ) इत्याभ्यां मन्त्राभ्यामाग्नेयपुरोडाशस्याधस्तादुपरिष्टाच्चाऽऽहुतिद्वयं विधत्ते—‘ यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती जुहोति यजमानमेवोभयतः पशुभिः परि गृह्णाति ’ इति ।।

८. आ.क.ना.हा–निःशेष॰ । ९–९. ति.त्रि४–‘ श्रेष्ठं वसु लब्धवान् ’ नास्ति ।

**यजमानं वेवोभयतः पशुभिः परि गृह्णाति कृतयजुः संभृतसंभार इत्याहुर्न संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः**

यजमानम् । एव । उभयतः । पशुभिरिति पशु-भिः । परीति । गृह्णाति । कृतयजुरिति कृत-यजुः । संभृतसंभार इति संभृत-संभारः । इति । आहुः । न । संभृत्या इति सम्-भृत्याः । संभारा इति सम्-भाराः । न । यजुः । कर्तव्यम् । इति । अथो इति । खलु । संभृत्या इति सम्-भृत्याः । एव । संभारा इति सम-भाराः । कर्तव्यम् । यजुः । यज्ञस्य । समृद्ध्या इति सम्-ऋद्ध्यै । पुनर्निष्कृत इति पुनः-निष्कृतः । रथः । दक्षिणा । पुनरुत्स्यूतमिति पुनः-उत्स्यूतम् । वासः ।

'कृतयजुः' इति ॥ कृतस्तम्बयजुरग्न्याधेयेन संभृताश्च संभाराः तस्मादत्र ᵛन ᵛसंभृत्याः न संभरणीयाः ᵛसंभाराः ᵛन ᵛयजुः ᵛकर्तव्यम् इत्याहुरेके आचार्याः । "भृञोऽसंज्ञायाम्" (पा ३·१·११२) इति क्यप् ॥

एतद्दूषयति— ᵛअथो ᵛखलु वयं ब्रूमः — 'संभृत्या एव' इति ॥ गतम् ॥

'पुनर्निष्कृतः' [5]इत्यादि ॥ ᵛपुनर्निष्कृतः पुनःसंस्कृतः[5] ᵛपुनरुत्स्यूतं पुनः संस्कृतमेव संहितच्छिद्रम् । षिवेर्निष्ठायां "च्छ्वोः शूडनुनासिके च" (पा ६·४·१९) इत्यूठ् । ᵛपुनरु-

**कृतयजुरिति** ॥ अत्र चोदकप्राप्तान् संभारानाधानमन्त्रांश्च वाजसनेयादिशाखान्तरमनुसृत्य पूर्वपक्षरूपेण निराचष्टे—'कृतयजुः संभृतसंभार इत्याहुर्न संभृत्याः संभारा न यजुः कर्तव्यमिति' इति । यजुःशब्देन सर्पराज्ञीप्रभृतयः (तैसं १·५·३) आधानमन्त्रा विवक्षिताः[10] । संभारशब्देन सिकतोषादिसप्तमृद्विशेषाः [11]वानस्पत्याश्चाश्वत्थादयः सप्त[12] विवक्षिताः । प्रथमाधाने यजुषामुच्चारितत्वात् संभाराणां च संपादितत्वादस्यापि कर्मविशेषस्याऽऽधानादत्यन्तभेदाभावेन यजुःसंभारयोः सिद्धत्वात् तदुभयं पुनः ᵛन ᵛकर्तव्यम् इति पूर्वः पक्षः । प्रथमाधाने वाजसनेयिमतं[13] सूत्रकार उदाजहार—"सप्त पार्थिवान् संभारानाहरति । एवं वानस्पत्यान् पञ्च पञ्च वा । भूयसो वा पार्थिवान् । [14]न संभारान् संभरेदिति वाजसनेयिकम्" (आपश्रौ ५·१·४-६) इति ॥

**अथो इति** ॥ सिद्धान्तमाह—'अथ खलु संभृत्या एव संभाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै' इति । अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अत्र सूत्रकारः पक्षद्वयमुदाजहार—"कृताकृताः संभारा यजूंषि च भवन्ति । अपि वा पञ्च पार्थिवान् संभारानाहरत्येवं वानस्पत्यान्" (आपश्रौ ५·२७·७-८) इति ॥

**पुनर्निष्कृत इति** ॥ दक्षिणां विधत्ते—'पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः । पुनरुत्सृष्टोऽनड्वान् पुनराधेयस्य समृद्ध्यै" इति । [15]आदौ रथो भग्नः सन् पुनर्दृढीकृतः ᵛपुनर्निष्कृतः

५-५. ब-इति । पुनः संभृतः ।

१०. तं.ति-विहिताः । ११. आ.क.तं.ति.त्रि.४.हा-'वानस्पत्याश्चाश्वत्थादयः' नास्ति । १२. क.तं.ति-च ; त्रि४-'सप्त' नास्ति । १३. इ.उ.पा.ना.हा-°मते । १४.आप-श्रौतसूत्रमनुसृत्य शुद्धीकृतोऽयं पाठः । लिखितपुस्तकेषु मुद्रितपुस्तकयोश्च 'न' नास्ति । १५-१५. आ-भग्नः सन्दृढीकृतः पुनर्निष्कृतः ।

पुनरुत्सृष्टोऽनड्वान् पुनराधेयस्य समृद्ध्यै सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं तत( ४ )एवैनमव रुन्धे वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्-

पुनरुत्सृष्ट इति पुनः—उत्सृष्टः । अनड्वान् । पुनराधेयस्येति पुनः—आधेयस्य । समृद्ध्या इति सम्—ऋद्ध्यै । सप्त । ते । अग्ने । समिध इति सम्—इधः । सप्त । जिह्वाः । इति । अग्निहोत्रमित्यग्नि—होत्रम् । जुहोति । यत्रयत्रेति यत्र—यत्र । एव । अस्य । न्यक्तमिति नि—अक्तम् । ततः (४) । एव । एनम् । अवेति । रुन्धे । वीरहेति वीर—हा । वै । एषः । देवानाम् । यः । अग्निम् । उद्वासयत इत्युत्—वासयते । तस्य । वरुणः । एव । ऋणयादित्यृण—यात् । आग्निवारुणमित्याग्नि—वारुणम् । एकादशकपालमित्येकादश—कपालम् । अनु । निरिति । वपेत् ।

त्सृष्टः अवशीर्णगवः । एते पात्रेसमितादयो द्रष्टव्याः ( पा २·१·४८ ) उपपदसमासो वा । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । " पुनश्चनसौ छन्दसि " ( पा १·४·६० वा २ ) इति गतित्वात् गतिसमासो ( द्र.पाभा २·२·१८ वा ४ ) वा । प्रवृद्धादेराकृतिगणत्वादुत्तरपदान्तोदात्तत्वम् ( पा ६·२·१४७ ) ।

' सप्त ते अग्ने ' इति ॥ न्यक्तिः नियता अक्तिरनुगतिः ॥

' वीरहा ' इत्यादि ॥ पुनर्वचनं हविरन्तरविधानार्थम् । [v]वरुणः [v]एव देवानां मध्ये [v]ऋणयात् ऋणेन यातयिता ऋणिनमिव तममुञ्चन् पीडयति । ण्यन्तात् ( पा ३·१·२६ ) क्विप् ( पा ३·२·७६ ) । ऋणमिच्छतीति [६-]क्यचि ( पा ३·१·८ ) वा[-६] पूर्ववदीत्वाभावः ( पा ७·४·३५) । शतरि छान्दसो नुमभावः पररूपाभावश्च ॥

॥ इति प्रथमकाण्डस्य पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥

एतादृशो दक्षिणा । दक्षिणेति सर्वत्र योजनीयम्[-१५] । छिन्नं सत् सूचीतन्तुभ्यां स्यूतं [v]पुनरुत्स्यूतम् । दौर्बल्येन[१६] भारं वोढुमशक्ततया परित्यक्तः सन् [१७-]केनचित् पोषणेन पुनःशक्तीकृतः[-१७] [v]पुनरुत्सृष्टः ॥

सप्तेति ॥ " तूष्णीमेव होतव्यम् " ( तैब्रा १·१·६ ) इति [१८-]प्रथमाधानस्य अमन्त्रत्वेन[१९] यदग्निहोत्रं विहितं तदत्र चोदकप्राप्तं, तदपोह्य समन्त्रकं विधत्ते—' सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं तत एवैनमव रुन्धे ' इति । मन्त्रस्तूपरिष्टाद्व्याख्यास्यते । अस्य पुनराधेयदेवस्याग्नेर्यदङ्गं यस्मिन् यस्मिन् प्रदेशे न्यक्तं निमग्नं विस्मृतं तत एव प्रदेशात् साङ्गमेनमग्निं संपादयति ॥

६. तं.ति.मै२—क्यच् ।

१६. तं—दौर्बल्यात्; ति—दौर्बल्यादिता । १७—१७. आ—कथंचित् पोषणेन शक्तीकृतः । १८. त्रि४—प्रधानस्य । १९. तं.त्रि४—अङ्गत्वेन ।

याज्यादिविधानम् ]

यं चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नाऽर्तिमार्च्छति यजमानः ॥ (२)॥

[ आऽपराभावाय पुरोडाशमेते आहुती ततः षट्त्रिंशच्च ]

यम् । च । एव । हन्ति । यः । च । अस्य । ऋणयादित्यृण–यात् । तौ । भागधेयेनेति भाग–धेयेन । प्रीणाति । न । आर्तिम् । एति । ऋच्छति । यजमानः ॥ २ ॥

[ मैसं १.७.२–५; कासं ८.१५, ९.१–३; कपिसं ८.३–६; शब्रा २.२.३ ]

**वीरहेति** ॥ अनुनिर्वाप्यं हविर्विधत्ते—' वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नाऽऽर्तिमार्च्छति यजमानः ' इति ॥ ऋणिनमिव यातयति पीडयतीति ऋणयात् । तौ वध्याग्निपीडयितृवरुणौ तोषयति ॥

अथ मीमांसा ॥ दशमाध्यायस्य तृतीयपादे चिन्तितम्—

" एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः ।
बाधकं वा समुच्चेयमुभयीरित्युदीरणात् ॥
आधानदक्षिणोपेतमुभयीरित्यनूद्यते ।
ददातीत्यविधायित्वात् कार्यैक्यात् बाधकं भवेत् ॥" (जैन्या १०.३.८-९) इति ॥

आधाने विकल्पिता गोद्रव्यदक्षिणा द्रव्यान्तरदक्षिणाश्च [२०]बह्वयः श्रूयन्ते—" एका देया षड् देया द्वादश देयाः " (द्र.कासं ८.८) इत्यादिना । पुनराधेये[२१] तु ' पुनर्निष्कृतो रथः ' ( तैसं १.५.२ ) इत्यादि श्रुतम् । भग्नः सन् पुनः समाहितः पुनर्निष्कृतः । सेयं पुनर्निष्कृतादिदक्षिणा किमतिदिष्टयैकादिदक्षिणया[२२] समुच्चीयत उत तां बाधत इति संशयः । " उभयीर्दक्षिणा ददाति । आग्न्याधेयिकीः पौनराधेयिकीश्च " (आपश्रौ ५.२८.१९–५.२९.१) इत्युक्तत्वात् समुच्चय इति पूर्वः पक्षः ॥ ' ददाति ' इति वर्तमाननिर्देशस्य विधित्वाभावादाधानकाले पूर्वं दत्तं [२३]पुनराधानकाले दीयमानं च मिलित्वोभयीरित्यनूद्यते । दक्षिणात्वरूपस्य कार्यस्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥

२०. शुद्धीकृतः । लिखितपुस्तकेषु मुद्रितपुस्तकयोश्च ' बहवः ' इति । २१. क.ति.त्रि४–पुनराधाने । २२. त्रि४–'अतिदेष्टयैकादिदक्षिणया; इ.उ–अतिदिष्टैकादि' । २३. तं.ति–पुनराधेय' ।

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा ।
उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽ दधे ॥
भूमिः । भूम्ना । द्यौः । वरिणा । अन्तरिक्षम् । महित्वेति महि--त्वा ।
उपस्थ इत्युप–स्थे । ते । देवि । अदिते । अग्निम् । अन्नादमित्यन्न–अदम् ।
अन्नाद्यायेत्यन्न–अद्याय । एति । दधे ॥

अथ पुनराधेयमन्त्राः । तत्र गार्हपत्य आधीयमाने सर्पराज्ञीस्तिस्रोऽनुवर्तयति ' भूमिर्भूम्ना ' इति ॥ प्रथमोपरिष्टाद्बृहती, अन्त्यस्य पादस्य द्वादशाक्षरत्वात् । हे देवि अदिते अखण्डिते भूमे । आहवनीयो भूमित्वेन स्तूयते । भूम्ना बहुत्वेन [1]विपुलत्वेन त्वं भूमिः एवासि । द्यौः असि त्वं वरिणा उरुत्वेन । ताद्धर्म्यात् ताच्छब्द्यम् । मकारलोपश्छान्दसः । अन्तरिक्षम् असि महित्वा माहात्म्येन । व्यञ्जनविपर्ययः । सर्वत्रोदात्तनिवृत्तिस्वरेण ( पा ६·१·१६१ ) तृतीयाया उदात्तत्वम् । महित्वशब्दात् तृतीयाया आकारो वा । अत्र तव उपस्थे उत्सङ्गे गार्हपत्यात्मनि अग्निम् अन्नादम् अन्नस्य हविषोऽत्तारम् अन्नाद्याय अन्नादनसामर्थ्यात्मिकायै ऋद्धयै आ दधे स्थापयामि। पचाद्यचि ( पा ३.१·१३४ ) अन्नादः । इतरत्र छान्दसो भावे यत् । 'ऌयावन्ते' ( फि ४२ ) इति मध्योदात्त उपस्थशब्दः, मरुद्वृधादित्वाद्वा ( पा ६·२·१०६ वा २ )॥

द्वितीया–' आऽयम् ' इति गायत्री ॥ इदानीमादित्यात्मना स्तूयते—अयम् अग्निः गौः आदित्यात्मा, गच्छतीति गौः गमनशीलः, पृश्निः शुक्लवर्णः आदित्यनामैव वा ।

प्रथमद्वितीययोः पुनराधेयस्य [1]प्रधानविधिस्तदङ्गानि च निरूपितानि । तृतीये त्वाधानमन्त्रा आम्नायन्ते ॥

भूमिर्भूम्नेति ॥ कल्पः—" भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति । ... । यत्त्वा क्रुद्धः परोवप इति दक्षिणाग्निम् । यत्ते मन्युपरोप्तस्येतीतरान् " ( आपश्रौ ५·२७·९–११ ) इति ॥ आहवनीयसभ्यावसथ्यानित्यर्थः । त एते षण्मन्त्राः ॥ तत्र प्रथम एवं पठ्यते—' भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽ दधे ' इति ॥ हे गार्हपत्यप्रदेश, त्वं लोकत्रयात्मकोऽसि । तत्र भूम्ना बाहुल्येन भूरसि । वरिणा वरिम्णा श्रेष्ठत्वेन द्यौः असि । महित्वा महत्त्वेन अन्तरिक्षम् असि । हे अदिते भूमे तत्प्रदेशरूपे देवि[2], [3]उपस्थे तवोत्सङ्गे अन्नादम् अन्नभोक्तारं गार्हपत्याग्निम् अन्नाद्याय[3] यजमानस्यादनयोग्यान्नसिद्ध्यर्थम्[4] आ दधे ॥

१. ब—विविधफलत्वेन ।

१. तं.ति.त्रि–प्रधानविस्त° । २. ति–ते । ३. आ–तवोत्सङ्गेऽन्नभोक्तारं गार्हपत्याग्निम् । ४. ति–°योग्यान्नादिसिद्ध्यर्थम् ।

**आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः ॥**

**त्रिꣳशद्धाम वि राजति वाक् पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः ॥**

एति । अयम् । गौः । पृश्निः । अक्रमीत् । असनत् । मातरम् । पुनः ।
पितरम् । च । प्रयन्निति प्र-यन् । सुवः ॥
त्रिꣳशत् । धाम । वीति । राजति । वाक् । पतङ्गाय । शिश्रिये ।
प्रतीति । अस्य । वह । द्युभिरिति द्यु-भिः ॥

Vआक्रमीत् अयमेवादित्यात्मना विश्वमाक्रामतीति । प्रकर्षेणाविच्छेदेन गच्छन् । V[1]सुवः शोभना रतिः । छान्दसौ लुङ्लङौ । आक्रम्य च Vमातरं भूमिम् Vअसनत् भूमौ मातरि शान्तोऽभूत् । Vपितरं दिवं Vप्रयन् प्रकर्षेण गच्छन् सर्वतो ज्वलन् धूमज्वालाभ्यामभ्रं लिहन् सुवः पितृस्थानीये दिवि स्वरतिरभूत्[2] ॥

तृतीया 'त्रिंशत्' इति गायत्री । त्रिंशद्धामानि स्थानानि Vवि Vराजति प्रकाशवद्भवति । उभयत्रापि वचनव्यत्ययः । त्रिंशन्मुहूर्ता उच्यन्ते, पञ्चदश अह्नः, पञ्चदश रात्रेः । तेषु वाक् Vशिश्रिये[3] आश्रिता Vपतङ्गाय आदित्याय[4] । यथा—"ऋग्भिः पूर्वाह्ने दिवि देव ईयते" (तैब्रा ३·१२·९) इति । या स्तुतिलक्षणा वाक् तेषु सर्वेष्वपि मुहूर्तेषु पतङ्गं श्रिता । कर्मणि चतुर्थी ( द्र. पाभा १·४·३२ ) । तस्मात् तादृशो महानुभावः आदित्यात्मा त्वं Vप्रति Vअस्य [5]स्वप्रतिकूलं यत्प्रकृतं तवोद्वासनं[5] तदस्य विसृज बुद्धौ मा कृथाः । 'ससाधनां क्रियामुपसर्ग आह[*]' इति प्रतिशब्देन[6] प्रतिकूलमुच्यते । ततः प्रसन्नो भूत्वा Vवह हवींष्यस्माकं Vद्युभिः दिनेदिने । अधिकरणानां साधकतमत्वविवक्षया तृतीया ( पा १·४·४२, २·३·१८ ),

**आऽयमिति** ॥ अथ द्वितीयः—'आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः' इति ॥ Vअयं गार्हपत्य आदित्यरूपेण Vगौः गमनशीलः Vपृश्निः श्वेतवर्णो जगदक्रमीत् । आक्रमणप्रकार एव स्पष्टीक्रियते—Vपुनः[5] Vमातरं पृथिवीम् Vअसनत् आसीदत् प्राप्नोदित्यर्थः । Vसुवः स्वर्गरूपं Vपितरं च Vप्रयन् प्रकर्षेण गच्छन्नवस्थितः । 'द्यौः पिता पृथिवी माता' ( द्र.ऋसं १·१६४·३३, १·१९१·६, ६·५१·५ ) इति श्रुत्यन्तरात् तयोर्मातापितृत्वम् ॥

**त्रिꣳशद्धामेति** ॥ अथ तृतीयः—'त्रिꣳशद्धाम वि राजति वाक् पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः' इति ॥ आदित्यरूपस्य [6]गार्हपत्यस्य संबन्धि त्रिंशत्संख्याकं Vधाम मुहूर्तरूपं तेजो विशेषेण

२–२. मै२–रक्षोभिः अबाधितत्वात् अयमाक्रमंश्च पुनर्मातरं पृथिवीं पितरं भूतानां द्युलोकं चशब्दात् अन्तरिक्षं च असनत् संविभजत् (?) तत्तल्लोकवासिनो विभागशोऽनुगृह्णाति, छान्दसो लुङ् लङ् वा । ३. मै–'शिश्रिये' इत्यस्यानन्तरं 'सिषेवे' । ४. मै–पतङ्ग आदित्यः । ५–५. ब–प्रति प्रतिकूलं यत् कृतं तदुद्वासनम् । [*]( द्र.पाभा ५·२·२८ 'उपसर्गाश्च...ससाधनां क्रियामाहुः' । ) । ६. मै–'प्रतिशब्देन' नास्ति ।

५. इ.उ.तं.ति.त्रि४.ना.पा.हा–पुनः पुनः । ६. तं.ति–गार्हपत्याग्नेः ।

**अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः ॥**

अस्य । प्राणादिति प्र--अनात् । अपानतीत्यप--अनती । अन्तः । चरति । रोचना । वीति । अख्यत् । महिषः । सुवः ॥

यथा 'स्थाल्या पचतीति'। "ऊडिदम्" (पा ६·१·१७१) इति प्राप्तस्य विभक्त्युदात्तत्वस्य "दिवो झल्" (पा ६·१·१८३) इति प्रतिषेधः। अस्मिन् व्याख्याने तिङः परत्वात् ७-वहेत्यस्य निघातो-७ दुर्लभः स्यात् (पा ८·१·२८)। अथ ब्रूमः—एवं महातेजाः पतङ्गः, अस्य प्रतिवह प्रतिरूपतया वर्तस्व द्युभिः तेजोभिः। अन्वादेशत्वादस्येति सर्वानुदात्तः (पा २·४·३२)॥

आहवनीये तिस्रोऽनुवर्तयति। तत्र प्रथमा—'अस्य' इति गायत्री। 'अपानती' इति प्रथमपादान्तः। ^V^अस्य अग्नेः ^V^रोचना दीप्तिः रोचनशीला। "अनुदात्तेतश्च" (पा ३·२·१४९) इति युच्। ^V^अन्तः शरीरेषु ^V^चरति। किं कुर्वती? ^V^प्राणात् प्राणव्यापारात् अनन्तरम् ^V^अपानती अपानव्यापारं कुर्वती। जीवानामूर्ध्वगमनं प्राणनम्, अधोगमनमपाननम्। जीवः श्वासवायुः। किंच ^V^महिषः महति शरीरे सीदति। "सदिरप्रतेः" (पा ८·३·६६) इति षत्वम्। अन्त्यविकारश्छान्दसः। यद्वा—महतेष्टिषचि (उ ४५) लिङ्गव्यत्ययः। महनीया ^V^सुवः शोभना रोचना८ ^V^व्यख्यत् विचष्टे प्रकाशते जीवानामन्तः९। छान्दसो लुङ्। "अस्यतिवक्ति" (पा ३·१·५२) इत्यादिनाऽङ्। "उदात्तस्वरितयोः" (पा ८·२·४) इति संहितायामडागमः स्वर्यते। अन्य आहुः—अस्याग्नेः सुवः आदित्यात्मिका रोचना दीप्तिः। प्राणादुदयात् अपानती अस्तं गच्छन्ती अन्तःशरीरे द्यावापृथिव्योर्मध्ये चरति। महत्यन्तरिक्षे सीदति। व्यख्यत् प्रकाशयति च द्यावापृथिव्यौ। एवं महानुभावं त्वामादधामीति॥

राजते। अह्नः पञ्चदश मुहूर्ता रात्रेः पञ्चदश। किंच वैदिकस्तुतिरूपा ^V^वाक् ^V^पतङ्गाय पक्षिवदाकाशसंचारिणमादित्यं ^V^शिश्रिये आश्रितवती। ७-तथा च-७ अन्यत्राऽऽम्नायते—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते" (तैब्रा ३·१२·९) इत्यादि। हे तादृग्गार्हपत्य, ८-त्वां ^V^प्रति यदस्माभिरुद्वासनरूपं-८ प्रतिकूलमाचरितं तत्सर्वम् ^V^अस्य प्रतिक्षिप मनसि मा कृथाः। ^V^द्युभिः ज्वालारूपाभिः ^V^वह अस्मदीयं हविर्देवेषु प्रापय॥

अस्येति॥ अथ चतुर्थः—'अस्य प्राणादपानत्यन्तश्चरति रोचना। व्यख्यन् महिषः सुवः' इति॥ ^V^अस्य आदित्यस्य ^V^रोचना दीप्तिः ^V^प्राणात् उच्छ्वाससदृशादुदयात् ^V^अपानती निःश्वासतुल्यमस्तमयं गच्छन्ती द्यावापृथिव्योः ^V^अन्तः ^V^चरति। महति मण्डले सीदतीति ^V^महिषः आदित्यः ९-^V^सुवः स्वर्गे-९ ^V^व्यख्यत् यजमानेभ्यः प्रकाशितवान्। आदित्यरूपेण स्तूयमान हे गार्हपत्य, त्वामादधामीत्यभिप्रायः॥

७-७. मै–वहेत्यनिघातः। ८. ति–'रोचना' इत्यस्यानन्तरं 'किरणाः'। ९. मै२–'जीवानामन्तः' इत्यस्यानन्तरं 'शरीरे'।

७-७. आ.ना.द्दा–इत्यर्थः अत एव। ८-८. तं.ति–प्रतिपदुद्वासनरूपम्; इ.उ.त्रि.४.ना.पा.द्दा–प्रति यदस्माभिरुद्वासनरूपम्। ९-९. तं.ति.त्रि४–स्वर्गलोकम्; क–सुवः स्वर्गलोकम्।

**यत्त्वा (१) क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ॥**

**यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन् ॥**

यत्। त्वा ( १ )। क्रुद्धः। परोवपेति परा-उवप। मन्युना। यत्। अवर्त्या। सुकल्पमिति सु-कल्पम्। अग्ने। तत्। तव। पुनः। त्वा। उदिति। दीपयामसि ॥

यत्। ते। मन्युपरोप्तस्येति मन्यु-परोप्तस्य। पृथिवीम्। अन्विति। दध्वसे ॥ आदित्याः। विश्वे। तत्। देवाः। वसवः। च। समाभरन्निति सम्-आभरन् ॥

---

द्वितीया—' यत् त्वा ' इत्यनुष्टुप्। तवेति तृतीयपादान्तः ॥ [v]यत् येन कारणेन [10]ऋद्ध्यभावेन [v]क्रुद्धः अहं त्वामपि [v]परोवप परोप्तवान् उद्वासितवानस्मि। " णलुत्तमो वा " ( पा ७·१·९१ ) इति णित्त्वाभावः। " यद्वृत्तान्नित्यम् " ( पा ८·१·६६ ) इति निघाताभावे " तिङि चोदात्तवति " ( पा ८·१·७१ ) इति गतेरनुदात्तत्वं, समासश्च ( द्र. पाभा २.२.१८ वा ४ )। लिति प्रत्ययात् पूर्वस्योदात्तत्वम् ( पा ६·१·१९३ )। [v]मन्युना शोकेन परितोऽहम् [v]अवर्त्या दारिद्र्येण पाप्मना वा यत् त्वां परोवप विनाशितवान् हे [v]अग्ने, [v]तत् अपि तव प्रसादात् [v]सुकल्पं [11]शोभनकृतिकरमेव भवति। " आद्युदात्तं द्व्यच् छन्दसि " ( पा ६·२·११९ ) इत्युत्तरपदाद्युदात्तत्वम्। " युष्मदस्मदोर्ङसि " ( पा ६·१·२११ ) इति तवशब्द आद्युदात्तः। अतः [v]पुनः[12] त्वां पूर्ववदेव [v]उद्दीपयामसि उद्दीपयामः[13]। " इदन्तो मसि " ( पा ७·१·४६ )।

अथ तृतीया—' यत् ते ' इत्यनुष्टुप् ॥ [v]ते तव [v]मन्युपरोप्तस्य मन्युना हेतुना मयोद्वासितस्य। " तृतीया कर्मणि " ( पा ६·२·४८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। [v]यत्

---

**यत्त्वेति** ॥ अथ पञ्चमः—' यत्त्वा क्रुद्धः परोवप मन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ' इति। हे दक्षिणाग्ने, [v]क्रुद्धः कोपपराधीनोऽहं तेन [v]मन्युना त्वां [v]परोवप, ' उवप ' इति लिडुत्तमपुरुषः, परोप्तवानुद्वासितवानस्मीति [v]यत्, [v]यत् च [v]अवर्त्या समृद्ध्यभावलक्षणेन दारिद्र्येणोद्वासितवानस्मि, हे [v]अग्ने[10], [v]तव प्रसादात् [v]तत्[11] [v]सुकल्पं सुष्ठु कृतमस्तु। [v]पुनरपि त्वां वयमुद्दीपयामः ॥

**यदिति** ॥ अथ षष्ठः—' यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन् ' इति ॥ हे आहवनीय, [12]मदीयकोपनोद्वासितस्य तव [v]यत् तेजः [v]पृथिवीम् अनुप्रविश्य ध्वस्तं तत्तेज आदित्यादयः समाहरन्तु ॥

---

१०. तं.ति—बुद्ध्यभावेन। ११. तं. ति. मै.२—शोभनकृतिकमेव। १२. मै—' पुनः ' नास्ति। १३. तं. ति.मै—उद्दीपामः।

---

१०. ति.त्रि.४—' अग्ने ' इत्यस्यानन्तरम्—' तत्सर्वम् '। ११. इ.उ.तं.ति.त्रि४.ना.पा.हा—' तत् ' नास्ति। १२. इ.उ.ना.पा.हा—मदीयक्रोधेनो'।

**मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।**
**बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥**
**सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त(२)र्षयः सप्त धाम प्रियाणि ।**

मनः । ज्योतिः । जुषताम् । आज्यम् । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु ।
बृहस्पतिः । तनुताम् । इमम् । नः । विश्वे । देवाः । इह । मादयन्ताम् ॥
सप्त । ते । अग्ने । समिध इति सम्-इधः । सप्त । जिह्वाः ।
सप्त ( २ ) । ऋषयः । सप्त । धाम । प्रियाणि ।

तेजः पृथिवीम् अनु दध्वसे ध्वस्तं पृथिवीमनुप्रविश्य वा नष्टं तत् आदित्याः विश्वे देवाः वसवः च समाभरन् समाभरन्तु । " ह्रग्रहोः° " ( पा ८.२.३२ वा १ ) इति भत्वम् ॥

[14]अग्निहोत्रमन्त्रावुपस्थानार्थौ । तत्र प्रथमा—' मनः ' इति विराट् ॥ हे अग्ने, तव ज्योतिः । कीदृशम् ? मननीयम् । यद्वा—मनःशेषमुद्वासितेन पीडितं यन्मननीयमेवासीत् नाथत्वे विद्यते तदिदम् आज्यं जुषतां सेवताम् अनेन कर्मणा पूर्ववत् समृद्धमस्तु । यद्वा—मनः सदा मननीयं मनोहरम् अग्न्याख्यं ज्योतिः उद्वासनापराधं चेतस्यकृत्वा जुषतामाज्यमिति । ततः विच्छिन्नम् उद्वासने तव यज्ञम् इमम् सं दधातु । बृहस्पतिः च नः अस्माकम् इमं यज्ञं तनुतां विश्वे देवाः च इह अद्य[15] अस्मिन् कर्मणि मादयन्तां मोदयन्ताम् । मद तृप्तियोगे चुरादिः । बृहस्पतिशब्दश्च पारस्करादिः वनस्पत्यादिश्च । तेन सुडागमः ( द्र. पाभा ६.१.१५७ ); पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वं च ( पा ६.२.१४० )॥

द्वितीया—' सप्त ते ' इति त्रिष्टुप् ॥ हे अग्ने, तव प्रियाणि सप्त धामानि स्थानानि भूरादयो लोकाः । " सुपां सुलुक्° " ( पा ७.१.३९ ) इति धाम्नो जसो लुक् । तेषु सप्तसु धामसु तव सप्त समिधः सम्यगिद्धास्तनवः । सप्त जिह्वाः ज्वाला याभिः सप्तसु रसनास्वदनाय स्वादयसि सप्त ऋषयः दर्शयित्र्यः प्रकाशशक्तयः । यद्वा—सप्तर्षयो मन्त्राः सप्त धिष्ण्य-

**मन इति ॥ कल्पः—" मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते " ( आपश्रौ ५.२७.१२ ) इति ॥ पाठस्तु—' मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ' इति ॥ उद्वासनापराधपरिहाराय मनः मा(म ?)ननीयमग्नेः ज्योतिः होष्यमाणम्[13] आज्यं [14]जुषतां सेवताम् । विच्छिन्नम् इमं यज्ञं सं दधातु । बृहस्पतिः अस्माकम् इमं यज्ञं विस्तीर्णं करोतु । सर्वेऽपि देवाः इह कर्मणि मादयन्तां तृप्तियुक्ता भवन्तु ॥**

**सप्तेति ॥ कल्पः —" सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति " ( आपश्रौ ५.२७.१३ ) इति ॥ पाठस्तु—' सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि । सप्त**

१४. मै२—अथ अग्निहोत्रमन्त्राः । अथ द्वावुपस्थानार्थौ । १५. मै—' अद्य ' नास्ति ।

**१३. आ.क.ना.हा—हव्यम् । १४. आ—' जुषताम् ' नास्ति ।**

पुनराधानमन्त्राः ]

सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन ॥
पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः ॥

सप्त । होत्राः । सप्तधेति सप्त–धा । त्वा । यजन्ति । सप्त । योनीः । एति । पृणस्व । घृतेन ॥
पुनः । ऊर्जा । नीति । वर्तस्व । पुनः । अग्ने । इषा । आयुषा ॥
पुनः । नः । पाहि । विश्वतः ॥

---

विषयाः । सप्त होत्राः होत्रादयो वषट्कर्तारः । ते त्वामेकं सप्तधा यजन्ति । स त्वं तथेष्टः सप्त योनीः स्थानानि भूरादीनि सप्त कारणानि घृतेनाज्येन उदकेन वा फलभूतेन आ पृणस्व आप्रीणय । पृण प्रीणने ॥

अभितः पुरोडाशमाहुतीर्जुहोति पुरस्तादुपरिष्टाच्च ‘ पुनरूर्जा ’ इति द्वाभ्यां गायत्रीभ्याम् ॥ हे अग्ने, ऊर्जा रसेन क्षीरादिना अस्मभ्यं देयेन सह नि वर्तस्व पुनरुद्वासितोऽहमिति संजातमन्युर्वा मय्युपेक्षां मा कार्षीः । इषा अन्नेन आयुषा च सह पुनः नि वर्तस्व इत्येव । उद्वासननिमित्ताच्च पापात् विश्वतः अस्मान् पुनः पाहि रक्ष ॥

---

होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन ’ इति ॥ हे अग्ने, ते तव समिधः सप्तसंख्याकाः अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः । अत एव सूत्रकारो यथोक्तान् सप्त संभारान् समन्त्रकाननुक्रम्य, ‘ इति वानस्पत्यान् ’ ( द्र. आपश्रौ ५.२७.८ ) इत्युपसंजहार । ज्वालारूपाः जिह्वाः च सप्त । तथा चाऽऽथर्वणिका आमनन्ति—“ काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ” ( मुंड १.२.४ ) इति। ऋषयः मन्त्राः । ते च यथोक्तसमित्संपादनार्थाः[15] सप्तसंख्याका “ अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः ” ( तैब्रा १.२.१ ) इत्यादयः समाम्नाताः । प्रियाणि धाम स्थानान्याहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजहिताग्नीध्रीयाख्याणि सोमयागे वह्निधारकाणि सप्तसंख्याकानि । सप्त होत्राः होतृप्रमुखा वषट्कर्तारः, होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेति सप्तसंख्याकाः । त्वां यजमानाः सप्तधा यजन्ति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति सप्त प्रकाराः । तादृशस्त्वं सप्त योनीः आहवनीयादिस्थानानि घृतेन सर्वतः पूरय ॥

पुनरूर्जेति ॥ कल्पः—“ पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुतीर्जुहोति । पुनरूर्जेति वा पुरस्तात् [16]प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम् ” ( आपश्रौ ५.२८.१६–१७ ) इति । प्रथममन्त्रपाठस्तु—‘ पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः ’ इति ॥ हे अग्ने, त्वं [17]मयोद्वासितोऽपि ऊर्जा क्षीरादिरसेन सह पुनः नि वर्तस्व अत्राऽऽगच्छ । इषा अन्नेन आयुषा च सह पुनः आगच्छ । अस्मान् पुनः पुनःकृतात् विश्वतः सर्वस्मादपराधात् पाहि ॥

---

१५. तं.ति–°संपादनाय । १६. क–प्रयाजानूयाजानाम् । १७. इ.उ.ना.हा–अपोद्वा° ।

सह र॒य्या नि व॑र्तस्वाग्ने॒ पिन्व॑स्व॒ धार॑या । वि॒श्वप्स्नि॑या वि॒श्वत॒स्परि॑ ॥

स॒ह । र॒य्या । नीति॑ । व॒र्त॒स्व॒ । अग्ने॑ । पिन्व॑स्व । धार॑या ।
वि॒श्वप्स्नि॒येति॑ वि॒श्व–प्स्नि॒या । वि॒श्वत॑ः । परि॑ ॥

---

द्वितीया—हे [v]अग्ने, [v]रय्या धनेन [v]सह [v]नि [v]वर्तस्व । " उदात्तयणः° " ( पा ६·१·१७४ ) इति तृतीयायाः उदात्तत्वम् । [v]धारया अनयाऽऽहुत्या एतदाहुतिहेतुकया वा वर्षधारया [v]विश्वतः [v]परि विश्वस्य रक्षणीयस्य तृणधान्यलतापादपादेर्मूर्ध्नि [v]पिन्वस्व सिञ्च । पिवि सेचने; इदित्वान्नुम् ( पा ७·१·५८ ) । " पञ्चम्याः परावध्यर्थे " ( पा ८·३·५१ ) इति संहितायां सत्वम् । धारा विशेष्यते—' विश्वप्स्न्या ' । प्सा भक्षणे । विश्वेन प्सानीया भक्षणीया विश्वं वा प्साति भक्षयति व्याप्नोतीति [16]विश्वप्स्नी । " श्वन्नुक्षन्° " ( उ १६५ ) इत्यादौ कनिन्प्रत्ययान्तो निपात्यते । निपातनसामर्थ्यादभीष्टस्वरसिद्धिः । " ऋन्नेभ्यः° " ( पा ४·१·५ ) इति ङीप् ॥

तृतीयमादधानस्य स्रुवाहुतिमन्त्राः—' लेकः ' इत्यादयः द्विपदा विच्छन्दसः, यजूंषि वा । एते लेकादयो नवादित्याः नः अस्माकमिदमाज्यं जुषाणाः प्रीणानाः वियन्तु पिबन्तु । [17]लेकतिः दर्शनकर्मा । सर्वैर्दृश्यते इति लेकः द्रष्टव्यो वा । दर्शनेन प्रकाशात्मकेन सह वर्तते इति सलेकः । शोभनदर्शनः सुलेकः । " आद्युदात्तं द्व्यच् छन्दसि " ( पा ६·२·११९ ) इत्याद्युदात्तत्वम् । कित ज्ञाने, सर्वैर्ज्ञायते इति केतः सर्वैरुपासनीयः । सकेतसुकेतौ गतौ ।

---

सहेति ॥ द्वितीयमन्त्रपाठस्तु—' सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्नया विश्वतस्परि ' इति ॥ हे [v]अग्ने, [v]रय्या धनेन [v]सह [v]नि [v]वर्तस्व । ' प्सा भक्षणे ' इति धातुः । [18]विश्वेन प्सायते भक्ष्यते पीयत इति विश्वप्स्नी[18] । तादृश्या[19] वृष्टिधारया [v]विश्वतः [v]परि सर्वेषां तृणधान्यलतापादपानामुपरि [v]पिन्वस्व सिञ्च ॥

---

१६. मै–विश्वप्सम्; मै२–विश्वप्स्ना । १७. मै२–लेक इति ।

---

१८–१८. तं–विश्वे सर्वे प्सायन्ते भक्ष्यन्ते पीयन्त इति विश्वप्स्नी; ति–विश्वैः सर्वैः प्सायते भक्ष्यते पीयते इति विश्वप्स्नीः; त्रि४–विश्वेन प्सीयते भक्ष्यते पीयत इति विश्वप्स्नीः; ना.हा–विश्वतः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी । १९. त्रि४–ईदृश्या ।

लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु
केतः सकेतः सुकेतस्ते न (३) आदित्या आज्यं जुषाणा वियन्तु
विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु ॥ ( ३ ) ॥

[ त्वा जिह्वाः सप्त सुकेतस्ते नस्त्रयोदश च ]

लेकः । सलेक इति स–लेकः । सुलेक इति सु-लेकः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु ॥ केतः । सकेत इति स–केतः । सुकेत इति सु–केतः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु ॥ विवस्वान् । अदितिः । देवजूतिरिति देव–जूतिः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु ॥ (३) ॥

[ मैसं १·७·१; कासं ८·१४; कपिसं ८·२ ]

---

विवस्वान् दीप्तिमान् धनवान् वा । अदितिः अखण्डनीयः केनापि । देवजूतिः देवानामपि गतिः देवैर्वा गन्तव्यः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·४२ ) । इदं तृतीयाधेयमग्न्याधेयमुपश्रयतीत्येके[१८] । पुनराधेयमित्यन्ये ॥

॥ इति प्रथमकाण्डस्य पञ्चमप्रपाठकस्य तृतीयोऽनुवाकः ॥

---

लेक इति ॥ कल्पः—" यस्तृतीयमादधीत स एतान् होमाञ्जुहुयात् लेकः सलेक इति " ( आपश्रौ ५·२९·११ ) इति ॥ मन्त्रत्रयपाठस्तु—' लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु केतः सकेतः सुकेतस्ते न आदित्या आज्यं जुषाणा वियन्तु विवस्वाꣳ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु ' इति ॥ नवसंख्याकाः[२०] लेकादिनामका य आदित्यास्ते सर्वे जुषाणाः प्रीयमाणा अस्माकम् आज्यं वियन्तु पिबन्तु ॥

अत्र विनियोगसंग्रहः—

" चतुर्भिर्भूमिरित्याद्यैराद्ध्यात् पश्चिमानलम् ।
दक्षिणाग्निं तु यत्त्वेति यदित्याहवनीयकम् ॥ १ ॥
मनस्तूपस्थितिः सप्त जुहुयादग्निहोत्रकम् ।
पुनर्द्वाभ्यां पुरोडाशमभितो जुहुयादथ ॥
तृतीयमादधानस्य लेकाद्या होममन्त्रकाः " ॥ २ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥

---

१८. तं.ति–°मुपाश्रयतीत्येके ।

---

२०. क–लेकः सलेकः सुलेकः केतः सकेतः सुकेतः विवस्वान् अदितिर्देवजूतिश्चेति नवसंख्याकाः ।

भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमा धत्ते सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा दधाति पुनर्नवमेवैनमजरं कृत्वाऽऽ धत्तेऽथो पूतमेव

भूमिः । भूम्ना । द्यौः । वरिणा । इति । आह । आशिषेत्या--शिषा । एव । एनम् । एति । धत्ते । सर्पाः । वै । जीर्यन्तः । अमन्यन्त । सः । एतम् । कसर्णीरः । काद्रवेयः । मन्त्रम् । अपश्यत् । ततः । वै । ते । जीर्णाः । तनूः । अपेति । अघ्नत । सर्पराज्ञिया इति सर्प--राज्ञियाः । ऋग्भिरित्यृक्--भिः । गार्हपत्यमिति गार्ह--पत्यम् । एति । दधाति । पुनर्नवमिति पुनः--नवम् । एव । एनम् । अजरम् । कृत्वा । एति । धत्ते । अथो इति । पूतम् । एव ।

अथ सर्पराज्ञ्यादीनां मन्त्राणां ब्राह्मणम्—' भूमिः ' इत्यादि ॥ आशिषा अन्नाद्यं प्राप्तुमिच्छया ॥

' सर्पा वै ' इत्यादि ॥ धिक् जरा प्राप्यतेऽस्माभिरिति सविषादां मतिमकुर्वत सर्पाः । अथ तेषु [v]कसर्णीरः नाम कश्चित् कद्रूपुत्रः, [v]सः [v]एतं ' भूमिर्भूम्ना ' इत्यादिकं सर्पराज्ञ्याख्यं [v]मन्त्रम् [v]अपश्यत् । " स्त्रीभ्यो ढक् " ( पा ४·१·१२० ) इति ढक् । [v]ततः सर्पा एतेनाग्निमादधतेति सामर्थ्यात् गम्यते । ततश्च [v]जीर्णाः [v]तनूः अपहत्याभिनवा अलभन्तेत्यर्थः । ' सर्पराज्ञिया ' इत्यादि । गतम् । पृथिवी सर्पराज्ञी । यथोक्तम्—" इयं वै सर्पतो राज्ञी " ( तैसं ७·३·१ ) इति । तस्या [v]ऋग्भिः ' भूमिर्भूम्ना ' इत्यादिभिः । ' अपोद्धृत्य घर्मशिर एतस्य सर्पराज्ञीरोप्य गार्हपत्यमेव सर्वाभिरादधीत* ' ( द्र· बौश्रौ २४·१९ ) इत्याचार्याः । राजनशीला राज्ञी । " कनिन्युवृष° " ( उ १६२ ) इति कनिन्प्रत्ययः । " ऋन्नेभ्य° : " ( पा ४·१·५ ) इति ङीप् । सर्पाणां राज्ञी स्वामिनी सर्पराज्ञी । " समासस्य " ( ६·१·२२३ ) इत्यन्तोदात्तत्वम् । " उदात्तयणः° " ( पा ६·१·१७४ ) इत्येतद्बाधित्वा व्यत्ययेन " उदात्तस्वरितयोर्यणः° " ( पा ८·२·४ ) इति विभक्तिः स्वर्यते । ' पुनर्नवम् ' इत्यादि । गतम् । [v]अथो अपि च [v]पूतम् [v]एव आ धत्ते, येनायमृद्धिहेतुर्भवति, ˇइत्यादिहेतुश्च न भवति ।

चतुर्थानुवाके पूर्वोक्ता मन्त्रा व्याख्यास्यन्ते ॥

**भूमिर्भूम्नेति** ॥ तत्र ' अन्नाद्याय ' ( तैसं १·५·३ ) इत्येतस्य मन्त्रपदस्याभिप्रायमाह— ' भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमा धत्ते ' इति ॥ [v]आशिषा अन्नं प्राप्तुमिच्छया ॥

**सर्पा इति** ॥ चतसृभिर्ऋग्भिराधानं विधत्ते—' सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः [1]काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमा दधाति पुनर्नवमेवैन-

*[ संभावितोऽयं पाठः । लिखितपुस्तकेषु मैसूरमुद्रितपुस्तके च ' आददीत ' इत्यस्ति । ] ।

ˇ( मैसूरमुद्रितपुस्तकेऽत्र कतिपयाक्षरमुद्रणपर्याप्तं स्थलममुद्रितं परिशोध्य, टिप्पण्यां ' ज्यान्यां पुत्रमर्त्यायां.... विधुरतां नीयात् ' ( आपश्रौ ५·२६·२ ) इति पाठः संभावितोऽस्ति । ) ।

१. आ–' काद्रवेयः ' नास्ति ।

पुनराधानमन्त्राणां व्याख्यानम् ]

**पृथिवीमन्नाद्यं नोपानमत् सैतं (१) मन्त्रमपश्यत् ततो वै तामन्नाद्यमुपानमद्यत् सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते यत् त्वा क्रुद्धः परोवपेत्याहाप ह्नुत एवास्मै तत्**

पृथिवीम् । अन्नाद्यमित्यन्न–अद्यम् । न । उपेति । अनमत् । सा । एतम् (१) । मन्त्रम् । अपश्यत् । ततः । वै । ताम् । अन्नाद्यमित्यन्न–अद्यम् । उपेति । अनमत् । यत् । सर्पराज्ञिया इति सर्प–राज्ञियाः । ऋग्भिरित्यृक्–भिः । गार्हपत्यमिति गार्ह–पत्यम् । आदधातीत्या–दधाति । अन्नाद्यस्येत्यन्न–अद्यस्य । अवरुद्ध्या इत्यव–रुध्यै । अथो इति । अस्याम् । एव । एनम् । प्रतिष्ठितमिति प्रति–स्थितम् । एति । धत्ते । यत् । त्वा । क्रुद्धः । परोवपेति परा–उवप । इति । आह । अपेति । ह्नुते । एव । अस्मै । तत् ।

‘ पृथिवीम् ’ इत्यादि । गतम् । “ अन्नाद्यायादधे ” ( तैसं १·५·३ ) इति मन्त्रपदम् । [v]अथो अपि च [v]अस्यां पृथिव्यां [v]प्रतिष्ठितम् [v]आ [v]धत्ते । “ उपस्थे ते देवि ” ( तैसं १·५·३) इति मन्त्रपदम् । ‘ यत् त्वा ’ इति । आत्मीयमुद्वासनात्मकं दुष्कृतम् [v]अस्मै अग्नये [v]अप [v]ह्नुते अपलपति “ सुकल्पमग्ने तत् ” ( तैसं १·५·३ ) इति प्रच्छादयति । तद्दुष्कृतमपि त्वत्प्रसादात् सुकृतमेव भवतीति ॥

मजरं कृत्वाऽऽ धत्तेऽथो पूतमेव ’ इति ॥ [v]जीर्यन्तः जरां प्राप्नुवन्तः [v]अमन्यन्त कोऽस्या जरायाः प्रतीकार इति विचारितवन्तः । तदा कसर्णीरनामकः [v]काद्रवेयः[1] कद्रूपुत्रः “ भूमिः ” ( तैसं १·५·३ ) इत्यादिकं मन्त्रसंघमपश्यत् । तन्मन्त्रसामर्थ्यात् [v]ते सर्पा जीर्णाः शरीरत्वचोऽपहृत्य कोमलास्त्वचः प्राप्नुवन् । सर्पाणां राज्ञी भूमिः । “ इयं वै सर्पतो राज्ञी ” ( तैसं ७·३·१ ) इत्यन्यत्राऽऽम्नानात् । तस्या ऋचः “ भूमिर्भूम्ना ” ( तैसं १·५·३ ) इत्यादयः; ताभिराहितो वह्निर्जरां परित्यज्य नूतनः पूतश्च भवति ॥

पृथिवीमिति ॥ तमेव विधिमनूद्य प्रशंसति—‘ पृथिवीमन्नाद्यं नोपानमत् सैतं मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत् सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठितमा धत्ते ’ इति ॥ ‘ अन्नाद्याय ’ इत्युक्तत्वात् तत्प्राप्तिः । “ उपस्थे ते देवि, ” ( तैसं १·५·३ ) इत्युक्तत्वात् भूमौ प्रतिष्ठितत्वम् ॥

यत्त्वेति ॥ ‘ यदहं परोवप तत्सुकल्पम् ’ ( द्र. तैसं १·५·३ ) इत्युक्तिर्बालस्येवाग्नेः[2] सान्त्वनायापलाप इत्याह—‘ यत्त्वा क्रुद्धः परोवपेत्याहाप ह्नुत एवास्मै तत् ’ इति ॥

१. आ– ‘ काद्रवेयः ’ नास्ति । २. ति–°क्तिर्धर्मातस्येवाग्नेः ।

पुनस्त्वोद्दीपयामसीत्याह समिन्द्ध एवैनं यत् ते मन्युपरोप्तस्येत्याह देवताभिरेवै(२)नꣳ सं भरति वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोप तिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति

पुनः । त्वा । उदिति । दीपयामसि । इति । आह । समिति । इन्द्धे । एव । एनम् । यत् । ते । मन्युपरोप्तस्येति मन्यु-परोप्तस्य । इति । आह । देवताभिः । एव (२) । एनम् । समिति । भरति । वीति । वै । एतस्य । यज्ञः । छिद्यते । यः । अग्निम् । उद्वासयत इत्युत्-वासयते । बृहस्पतिवत्येति बृहस्पति-वत्या । ऋचा । उपेति । तिष्ठते । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । यज्ञम् । समिति । दधाति । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । इति । आह । संतत्या इति सम्-तत्यै । विश्वे । देवाः । इह । मादयन्ताम् । इति । आह । संतत्येति सम्-तत्या । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति ।

~~~~~~~~~~~~~~~~~~

'पुनस्त्वा' इत्यादि ।। गतम् ।।

'वि वा एतस्य' इत्यादि । "मनो ज्योतिः" ( तैसं १.५.३ ) इत्येषा बृहस्पतिवती ऋक् । "छन्दसीरः" ( पा ८.२.१५ ) इति मतुपो वत्वम् । बृहस्पतिशब्दस्याद्युदात्तत्वम् ( पा ६.२.१४० ) । 'विश्वे देवाः' इति । $^v$विच्छिन्नं $^v$यज्ञं $^v$संतत्य $^v$एव संधाय संततमिहेति $^v$देवेभ्यः $^v$अनुदिशति ज्ञापयति ।।

~~~~~~~~~~~~~~~~~~

**पुनस्त्वेति** ।। 'उद्दीपयामसि' इत्यस्याभिप्रायमाह— 'पुनस्त्वोद्दीपयामसीत्याह समिन्द्ध एवैनम्' इति ।।

**यत्त इति** ।। 'आदित्या विश्वे तद्' इत्यादेरभिप्रायमाह—'यत्ते मन्युपरोप्तस्येत्याह देवताभिरेवैनꣳ सं भरति' इति ।।

**वि वेति** ।। उपस्थानं विधत्ते—'वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोप तिष्ठते ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति' इति । बृहस्पतिशब्दोऽस्यामस्तीति बृहस्पतिवती ।।

**विच्छिन्नमिति** ।। तं शब्दं प्रशस्य 'सं दधातु' इति शब्दस्याभिप्रायमाह—'विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै' इति ।।

**विश्व इति** ।। देवसंबोधनस्योपयोगमाह—'विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति' इति । यज्ञं संततं कृत्वा देवेभ्यस्तत्कथनाय संबोधनम् ।।

**सप्त ते अग्ने समिधः सप्त जिह्वा (३) इत्याह सप्तसप्त वै सप्तधाऽग्नेः प्रियास्तनुवस्ता एवाव रुन्द्धे पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमानमेवोर्जा च रय्या चोभयतः परि**

सप्त । ते । अग्ने । समिध इति-सम्-इधः । सप्त । जिह्वाः (३) । इति । आह । सप्तसप्तेति सप्त-सप्त । वै । सप्तधेति सप्त-धा । अग्नेः । प्रियाः । तनुवः । ताः । एव । अवेति । रुन्द्धे । पुनः । ऊर्जा । सह । रय्या । इति । अभितः । पुरोडाशम् । आहुती इत्या-हुती । जुहोति । यजमानम् । एव । ऊर्जा । च । रय्या । च । उभयतः । परीति ।

---

'सप्त ते' इति ॥ समिदादयः [v]सप्तसप्त प्रत्येकं सप्तसंख्याः [v]सप्तधा सर्वा अपि सप्तधा भिन्नाः [v]अग्नेः [v]प्रियाः [v]तनुवः तनुवत् मूर्तिरिव प्रधानभूताः अग्नेः [v]ताः सर्वाः [v]अव [v]रुन्द्धे स्वाभिमतसाधनतया लभते ।

'पुनरूर्जा' इति ॥ 'पुनरूर्जा नि वर्तस्व', 'सह रय्या नि वर्तस्व' (तैसं १.५.३) इति मन्त्राभ्याम् [v]अभितः [v]पुरोडाशम् [v]आहुती [v]जुहोति पुरस्तादुपरिष्टाच्च। "अभितःपरितः°" (द्र. पाभा २.३.२ वा १) इति द्वितीया। 'यजमानमेव' इत्यादि । "सावेकाचः°" (पा ६.१.१६८) इत्येकत्रोदात्तत्वम्[1], "उदात्तयणः°" (पा ६.१.१७४) इतीतरत्र ॥

---

**सप्तेति ॥ समिदादिषु सप्तसंख्याया उपयोगमाह—'सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह सप्तसप्त वै सप्तधाऽग्नेः प्रियास्तनुवस्ता एवाव रुन्द्धे' इति । समिदादयः [3]सर्वे पदार्थाः प्रत्येकं [4-][v]सप्तसप्त विनिर्दिश्यन्ते[-4] । यस्मात् [v]सप्तधा अवस्थिताः पदार्थाः [v]अग्नेः [v]प्रियाः [v]तनुवः तस्मात्तदवरोधाय सप्तसंख्या ॥**

**पुनरूर्जेति ॥ द्वितीयानुवाके विहितयोरात्योर्मन्त्रौ विनियुङ्क्ते—'पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति यजमानमेवोर्जा च रय्या चोभयतः परि गृह्णाति' इति ॥**

---

१. तं.ति—इत्यन्तोदात्तत्वम् ।

---

**३. ति—सप्त । ४–४. ति—सप्तसप्तैव निर्दिश्यन्ते ।**

गृह्णात्यादित्या वा अस्माल्लोकादमुं लोकमायन् तेऽमुष्मिँल्लोके व्यतृष्यन् त इमं लोकं पुनरभ्यवेत्याग्निमाधायैतान् (४) होमानजुहवुस्त आर्ध्नुवन् ते सुवर्गं लोकमायन् यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमाञ्जुहुयाद्यामेवाऽऽदित्या ऋद्धिमार्ध्नुवन् तामेवर्ध्नोति ॥ ४ ॥

[ सैतं देवताभिरेव जिह्वा एतान् पञ्चविंशतिश्च ]

गृह्णाति । आदित्याः । वै । अस्मात् । लोकात् । अमुम् । लोकम् । आयन् । ते । अमुष्मिन् । लोके । वीति । अतृष्यन् । ते । इमम् । लोकम् । पुनः । अभ्यवेत्येत्यभि–अवेत्य । अग्निम् । आधायेत्या–धाय । एतान् । होमान् (४) । अजुहवुः । ते । आर्ध्नुवन् । ते । सुवर्गमिति सुवः–गम् । लोकम् । आयन् । यः । पराचीनम् । पुनराधेयादिति पुनः–आधेयात् । अग्निम् । आदधीतेत्या–दधीत । सः । एतान् । होमान् । जुहुयात् । याम् । एव । आदित्याः । ऋद्धिम् । आर्ध्नुवन् । ताम् । एव । ऋध्नोति ॥ ४ ॥

[ मैसं १·७·३–५; कासं ९·१–३; कपिसं ८·४–६ ]

'आदित्याः' इत्यादि ॥ भूलोकाद्द्युलोकं गताः ऋद्ध्यर्थं कृतपुनराधानाः [v]आदित्याः । तत्र च [v]ते [v]व्यतृष्यन् भूयोऽपि [2]ऋद्ध्यभावेन विविधं [3]तृष्यन्तोऽभवन् । (ञि)तृषा पिपासायां दैवादिकः । ततः [v]ते पुनरपि [v]इमम् एव [v]लोकम् [v]अभ्यवेत्य अभ्यावृत्त्य तृतीयम् [v]अग्निम् [v]आधाय [v]एतान् "लेकः" ( तैसं १·५·३ ) इत्यादीन् [v]होमान् [v]अजुहवुः । [4]ऋद्धाः स्वर्गं गताः । 'यः' इत्यादि । [v]पराचीनं [v]पुनराधेयात् पुनराधेयानन्तरं तृतीयमित्यर्थः । 'याम्' इत्यादि । अयमृध्नोतिः ऋद्धौ च वर्तते यथा ऋध्नुवन्तीति । ऋद्धिकर्मिकायां च प्राप्तौ ऋद्धिमार्ध्नुवन्निति । तत्र पोषं पुष्णातीतिवत् प्राप्तिमात्रप्रवृत्तिर्द्वितीयो द्रष्टव्यः ॥

॥ इति प्रथमकाण्डस्य पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥

**आदित्या इति** ॥ तृतीयाधाने होमान् विधत्ते—'आदित्या वा अस्माल्लोकादमुं लोकमायन् तेऽमुष्मिँल्लोके व्यतृष्यन् त इमं लोकं पुनरभ्यवेत्याग्निमाधायैतान् होमानजुहवुस्त आर्ध्नुवन् ते सुवर्गं लोकमायन् यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमाञ्जुहुयाद्यामेवाऽऽदित्या ऋद्धिमार्ध्नुवन् तामेवर्ध्नोति' इति । [v]आदित्याः आधानपुनराधाने अनुष्ठाय सुवर्गं [5]लोकं गत्वा तत्र [v]व्यतृष्यन् विशेषेण [6]तृष्णां प्राप्ताः । समृद्धिर्न पर्याप्तेति मत्वा भूमावागत्य लेकादिमन्त्रैर्हुत्वाऽतिशयेन समृद्धिं गताः । ततः पुनराधेयादूर्ध्वमग्निमाधाय लेकादिभिर्जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

२. ब–वृद्ध्यभावेन । ३. ब–तृष्णावन्तो° । ४. तं.ति.ब–ऋद्ध्या ।

५. आ.ना.हा–'लोकम्' नास्ति । ६. आ.क–तृषाम् ।

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥
अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥
उपप्रयन्त इत्युप-प्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये ।
आरे । अस्मे इति । च । शृण्वते ॥
अस्य । प्रत्नाम् । अन्विति । द्युतम् । शुक्रम् । दुदुह्रे । अह्रयः ।
पयः । सहस्रसामिति सहस्र-साम् । ऋषिम् ॥

॥ अग्न्युपस्थानकाण्डम् [1]अग्न्यार्षम् ॥

आहवनीयमुपतिष्ठते—' उपप्रयन्तः ' इति षड्भिः ऋग्भिः[2] । " षड्भिरुत्तराभिरुपतिष्ठते " ( तैसं १·५·७ ) इत्यादि ब्राह्मणम् । प्रथमा गायत्री । उपप्रयन्तः उपेत्य प्रकर्षेण गच्छन्तः अध्वरं यज्ञम् अविच्छेदेन गच्छन्तः कुर्वन्तो वयं मन्त्रं वोचेम इत्याशास्यते, उपस्थानमन्त्रस्य वक्तारो भूयास्मेति । वचेराशिषि लिङ् । " लिङ्याशिष्यङ् " ( पा ३·१·८६ ) " वच उम् " ( पा ७·४·२० ) । अग्नये अग्न्यर्थम् । कीदृशायाग्नये ? । आरे दूरे च अस्मे अस्माकं शृण्वते, श्रुत्वा वचनार्थं कुर्वते, सर्वदा तं मन्त्रं वोचेम उच्चारणमविच्छेदेन आशास्यते ॥

द्वितीया—' अस्य प्रत्नाम् ' इति गायत्री ॥ अस्य अग्नेः प्रत्नां पुरातनीम् अनु द्युतम् । अनुद्युदिति दीप्तिनाम । संपदादिलक्षणः क्विप् ( पा ३·३·१०८ वा ९ ) ।

चतुर्भिरनुवाकैः [1]पुनराधानं समापितम् । अथ पञ्चममारभ्य दशमस्य पूर्वार्धपर्यन्तैरनुवाकैः अग्न्युपस्थानमुच्यते ॥

उपप्रयन्त इति ॥ कल्पः—" अग्न्युपस्थानं व्याख्यास्यामः । उपतिष्ठत इति चोद्यमाने आहवनीयमेवोपतिष्ठेत । वचनादन्यः[2] । उत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवोपतिष्ठेत । उपप्रयन्तो अध्वरमिति षड्भिः " ( आपश्रौ ६·१६·१–४ ) इति । तत्र प्रथमा—' उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ' इति । अध्वरं यज्ञम् उपप्रयन्तः प्राप्नुवन्तो वयम् अग्नये अग्निसंतोषार्थमुपस्थानमन्त्रं वोचेम वक्तारो भूयास्म । कीदृशायाग्नये ? [3]दूरादप्यनुग्रहेणास्मदीयं वचः शृण्वते ॥

अस्येति ॥ अथ द्वितीया—' अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ' इति ॥ अस्य अग्नेः प्रत्नां पुरातनीम् अनु द्युतम् अनुकूलदीप्तिं गोस्थानीयाम् अह्रयः लज्जामकुर्वन्त

१. तं.ति.पं.ब–' अग्न्यार्षम् ' नास्ति । २. ब.मै–' ऋग्भिः ' नास्ति ।

१. इ.उ.ना.हा–पुनराधेयम् । २. क.तं–'दन्याम् । ३. तं.ति–दूरेऽप्य' ।

अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥

अग्निः । मूर्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् ।

अपाम् । रेताꣳसि । जिन्वति ॥

~~~~~~~~~~~~~~~~~~~~

गोस्थानीयां [v]दुदुहे दुहन्ति । छान्दसे लिटि " इरयो रे " ( पा ६·४·७६ ) इति रेआदेशः । [v]अह्रयः अह्रियः अलज्जमाना ऋत्विजः । जिह्रेतेः कर्तरि क्विप् ( पा ३·२·७६ ) । व्यत्ययेन ह्रस्वत्वम् । औणादिको वा डिप्रत्ययः । अह्नोतेर्वा क्रिन्प्रत्ययः* । ज्ञातार उच्यन्ते । किं दुदुहे ? [v]शुक्रं सारं निर्मलं वा [v]पयः उदकम् । [illegible]—[v]सहस्रसां बहुनो धनस्य सनित्रीं संभक्त्रीम् [v]ऋषिम् अर्षणीं [3]दृष्टिम् । सनोतेः " जनसनखन° " ( पा ३·२·६७ ) इति विट् । " विड्वनोः° " ( पा ६·४·४१ ) इत्यात्वम् । तस्माद्वयमप्यनेनोपस्थानेन तां दुह्मः[4] इति ॥

तृतीया—' अग्निः ' इति गायत्री ॥ अयम् [v]अग्निः [v]मूर्धा प्रधानभूतः [v]दिवः द्युलोकस्य [v]ककुत् उच्छ्रितः आत्मेत्यर्थः, अयमात्मना दिवो मूर्धत्वेन वर्तते इति । [v]अयम् एव [v]पृथिव्याः [v]पतिः पाता, अग्निर्हि पृथिव्यात्मना वर्तते । सोऽयम् [v]अपां [v]रेतांसि कार्यभूतानि स्थावरजङ्गमाख्यानि माध्यमिकाग्निरूपेण [v]जिन्वति वृष्ट्या तर्पयति । " ऊडिदम्° " ( पा ६·१·१७१ ) इति षष्ठ्या उदात्तत्वम् । " उदात्तयणः° " ( पा ६·१·१७४ ) इति पृथिव्याः ॥

~~~~~~~~~~~~~~~~~~~~

ऋत्विजः [v]पयः [4]क्षीरस्थानीयं [v]शुक्रं ज्योतिः [v]दुदुहे दुहन्ति । कीदृशं शुक्रम् ? [v]सहस्रसां बहुधनप्रदम् [v]ऋर्षिं कर्मप्रवर्तकम् ॥

अग्निरिति ॥ अथ तृतीया—' अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ' इति ॥ [v]अयम् [v]अग्निः आदित्यरूपेण [v]दिवः द्युलोकस्य [v]ककुत् उच्छ्रितः [v]मूर्धा शिरःस्थानीयः [v]पृथिव्याः [v]पतिः दाहपाकादिकारित्वेन पालकोऽप्ययम् । किंच—[v]अपां [v]रेतांसि उदककार्याणि स्थावर-जङ्गमशरीराणि जाठराग्निरूपेण [v]जिन्वति प्रीणयति ॥

*[ द्र. उ. ५०४ ] । ३. तं.ब—स्तुतिम् । ४. तं.ति.पं.ब—दुदुहे ।

४. क—क्षीरादिस्थानीयम् ।

आहवनीयोपस्थानम् ]

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥

अयम् । इह । प्रथमः । धायि । धातृभिरिति धातृ-भिः । होता । यजिष्ठः । अध्वरेषु । ईड्यः ।
यम् । अप्नवानः । भृगवः । विरुरुचुरिति वि-रुरुचुः ।
वनेषु । चित्रम् । विभ्वमिति वि-भ्वम् । विशेविश इति विशे-विशे ॥

चतुर्थी—' अयमिह ' इति जगती ॥ Vअयम् अग्निः Vप्रथमः प्रधानभूतः Vधायि धार्यतेऽस्माभिः Vधातृभिः धारणाय यतमानैः Vहोता आह्वाता देवानां Vयजिष्ठः यष्टृतमः । मनुष्यहोतॄनपेक्ष्य प्रकर्षः । यष्टृशब्दात् " तुश्छन्दसि " ( पा ५·३·५९ ) इतीष्ठनि " तुरिष्ठेमेयस्सु " ( पा ६·४·१५४ ) इति टिलोपः । Vअध्वरेषु यज्ञेषु Vईड्यः स्तुत्यः । " ईडवन्द॰ " ( पा ६·१·२१४ ) इत्याद्युदात्तत्वम् । ' अयम् ' इत्युक्तम् । कीदृशोऽयमित्याह—Vयं Vचित्रं चायनीयं Vविभ्वं व्याप्तिमन्तम् । तन्वादित्वादुवङ् ( पा ६·४·७७ वा १ ) । Vभृगवः Vविरुरुचुः विविधं रोचयामासुः । ण्यन्ताल्लिटि ( पा ३·१·२६ ) " बहुलमन्यत्रापि " ( उ. १९० ) इति णिलुक् । कीदृशाः ? Vअप्नवानः, अप्न इति कर्मनाम तद्वन्तः । " छन्दसीवनिपौ " ( पा ५·२·१०९ वा २ ) इति मत्वर्थीयो वनिप् । यद्वा—अप्नवानो भृगुविशेषः । यथाहुः —' भार्गवच्यावनाप्नवानौर्वजामदग्न्य[M] ' इति । व्यत्ययेनैकवचनम् । विरुरुचुः Vवनेषु आश्रमेषु । किमर्थम् ? Vविशेविशे मनुष्याय मनुष्याय सर्वो मनुष्योऽभ्युदयेन युज्येतेति । यद्वा—विभक्तिव्यत्ययः । विशिविशि व्याप्तवन्तमिति । " सावेकाचः॰ " ( पा ६·१·१६८ ) इति विश इति चतुर्थ्या उदात्तत्वम् । [5]अयमेवं महानुभावोऽस्मान् मृडयत्विति शेषः ॥

**अयमिति** ॥ अथ चतुर्थी— ' अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ' इति ॥ Vअयम् अग्निः Vइह कर्मणि Vप्रथमः प्रधानभूतः Vधातृभिः धारणाय प्रयतमानैरस्माभिः Vधायि धार्यते । कीदृशोऽग्निः ? Vहोता देवानामाह्वाता Vयजिष्ठः मनुष्येभ्योऽतिशयेन यष्टा Vअध्वरेषु यागेषु Vईड्यः स्तुत्यः । किंच–अप्नवानसंज्ञकाः[5] भृगुसंज्ञकाश्च मुनयः Vवनेषु स्वाश्रमेषु Vविशेविशे तत्तत्प्रजाभ्युदयार्थं Vयम् अग्निं Vचित्रं बहुयागाधारत्वेन विचित्रं Vविभ्वं व्याप्तं Vविरुरुचुः विशेषेण दीपितवन्तः ॥

[M][ बौधायनप्रवरसूत्र ३; आपश्रौ २४·५·१२; माश्रौ ११·८·१२ ] । ५–५. तं.ति.ब–' अयमेवं......स्तौमि ' नास्ति ।

५. आ–॰संज्ञको ।

उभा वामिन्द्राग्नी आहुवध्यां (१) उभा राधसः सह मादयध्यै ।
उभा दातारांविषाꣳ रयीणामुभा वाजस्य सातयें हुवे वाम् ॥
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ॥

उभा । वाम् । इन्द्राग्नी इतीन्द्र-अग्नी । आहुवध्यै ( १ ) । उभा । राधसः । सह । मादयध्यै ।
उभा । दातारौ । इषाम् । रयीणाम् । उभा । वाजस्य । सातयें । हुवे । वाम् ॥
अयम् । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः ।
तम् । जानन् । अग्ने । एति । रोह । अथ । नः । वर्धय । रयिम् ॥

"उभा वाम्" इति पञ्चमी प्रथमे प्रश्ने ( तैसं १·१·१४ ) पठिता व्याख्याता च । हे [v]इन्द्राग्नी उभौ युवां, द्वितीयाद्विवचनम् । आहुवे आह्वयामि । किमर्थम्? [v]आहुवध्यै आभिमुख्येन होतुम् उपस्थानेनाराधयितुमित्यर्थः । इह जुहोतिः स्तुतिकर्मा । किंच—राधसः रायो धनं हविर्लक्षणं स्तुतिर्वा । तृतीयार्थे षष्ठी । हेतौ वा पञ्चमी । उभौ युवां [v]सह एव नैकैकशः [v]राधसः [v]मादयध्यै मादयितुं सहैव तर्पयितुमाह्वयामि । अनयोरेवाह्वाने हेतुमाह—'उभा' इति । युवामेव ह्युभौ [v]इषाम् अन्नानां [v]रयीणां धनानां क्षेत्रपुत्रपश्वादीनां [v]दातारौ । तस्मात् [v]वाजस्य अन्नस्य [v]सातये लाभाय प्राप्त्यै तादृशावुभौ [v]वां युवां [v]हुवे आह्वयामि स्तौमि[-५] ॥

अथ षष्ठी—'अयं ते' इत्यनुष्टुप् ॥ हे [v]अग्ने, [v]अयं [v]ते तव [v]योनिः कारणं, गार्हपत्य उच्यते नात्रारणिः, [v]ऋत्वियः ऋतुः प्राप्तोऽस्येति "छन्दसि घस्" ( पा. ५·१·१०६ ) इति घस् । [६]ऋतावृताविज्यत इत्यर्थः । [v]यतः त्वं [v]जातः अरोचथाः दीप्यसे । छान्दसो लङ् ।

उभेति ॥ अथ पञ्चमी—'उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै । उभा दातारविषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम्' इति ॥ इयं च प्रथमप्रपाठके ( तैसं १·१·१४ ) व्याख्याता । हे [v]इन्द्राग्नी युवामुभावपि आभिमुख्येन होतुमिच्छामि । पुनरपि युवामुभौ [v]सह [v]राधसः अन्नेन मादयितुमिच्छामि । यस्माद्युवामुभावन्नानां धनानां च [v]दातारौ [६-]तस्मादन्नस्य लाभाय[-६] युवामुभावाह्वयामि ॥

अयमिति ॥ अथ षष्ठी—'अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आ रोहाथा नो वर्धया रयिम्' इति ॥ हे [v]अग्ने, [v]अयम् आहवनीयप्रदेशः [v]ते [v]योनिः तव स्थानम् । स च योनिः [v]ऋत्वियः ऋतुसंबन्धात्[७] सर्वस्मिन्नप्यृतावनेन होमनिष्पत्तेः । [v]यतः आहवनीयप्रदेशात् [v]जातः

६. ब—ऋतावृतौ विभज्यते ।

६—६. क—तस्मादन्नधनलाभाय । ७. क—°संबन्धः ।

आहवनीयोपस्थानम् ]

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं (२) मयि ॥

अग्ने । आयूꣳषि । पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः ।

आरे । बाधस्व । दुच्छुनाम् ॥

अग्ने । पवस्व । स्वपा इति सु-अपाः । अस्मे इति । वर्चः । सुवीर्यमिति सु-वीर्यम् ।

दधत् । पोषम् । रयिम् ( २ ) । मयि ॥

तं योनिं जानन् त्वं ममायं योनिरित्यवगच्छन् आ रोह, आश्रयं मा कदाचिदपि मुचः । अथ नः अस्माकं रयिं धनं वर्धय । सांहितिकं दीर्घत्वं छान्दसम् । " निपातस्य च " ( पा ६·३·१३६ ) इत्यथशब्दस्य ॥

अथ सप्तम्याद्याः षडपि गायत्र्यः । व्याख्याताश्च " त्वमग्ने रुद्र " ( तैसं १·३·१४ ) इत्यत्र । सप्तमी—हे अग्ने, आयूंषि जीवनानि अन्नानि वा जीवितकाल इति अस्मदीयान्यायूंषि जीवच्छरीरवृत्तिसाधनानि पवसे पवस्व शोधय निर्दोषाणि देहि, यथा वर्धन्ते यथा च न क्षीयन्ते य(त)था ऊर्जं रसं क्षीरादिकं रसम् इषम् अन्नं च नः अस्मभ्यम् आ सुव अनुजानीहि आभिमुख्येनोत्पादय । आरे दूरेण बाधस्व अपगमय दुच्छुनाम् अलक्ष्मीम् ॥

अष्टमी—हे अग्ने, स्वपाः शोभनकर्मा त्वम् । अस्मे अस्मभ्यं सुवीर्यं शोभनवीर्ययुक्तं पुत्रादिकं वर्चः बलमन्नं वा पवस्व शोधय । मयि पोषं पुष्टिं[7] रयिं धनं च दधत् स्थापयन् ॥

उद्भूतस्त्वम् अरोचथाः दीप्यसे तं प्रदेशं जानन् [8]मम [9]स्थानमित्यवगच्छन् आ रोह । अथ[10] अनन्तरमस्माकं धनं वर्धय ॥

अग्न इति ॥ कल्पः—" अग्न आयूꣳषि पवस इति [11]षड्भिः संवत्सरे संवत्सरे सदा वा " ( आपश्रौ ६·१६·८ ) इति ॥ उपतिष्ठत इति शेषः । एताः " त्वमग्ने रुद्र " ( तैसं १·३·१४ ) इत्यत्र व्याख्याताः । तत्र प्रथमा—' अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ' इति । हे अग्ने, त्वमस्मदायूंषि पवसे शोधयसि निर्दोषाणि करोषि अस्माकं [12]रसमन्नं चाऽऽनय, वैरिसेनां दूरे बाधस्व ॥

अग्ने पवस्वेति ॥ अथ द्वितीया-' अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत् पोषꣳ रयिं मयि ' इति ॥ हे अग्ने, स्वपाः शोभनकर्मा त्वमस्मासु ब्रह्मवर्चसं समीचीनसामर्थ्यं च पवस्व शोधय । किं कुर्वन् ? पुष्टिं [13]धनं च मयि धारयन् ।

७. मै-' पुष्टिम् ' इत्यस्यानन्तरम् ' अमित [?] वृद्धिम् ' ।

८. इ.उ.पा.हा-अयम् । ९. इ.उ.पा.हा-अवस्थान° । १०. आ-' अथ ' नास्ति । ११. इ.उ.पा-' षड्भिः ' नास्ति । १२. क-बलमन्नम् । १३. तं.ति-रयिम् ।

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश्च नः ॥
अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥

अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । एति । देवान् । वक्षि । यक्षि । च ॥
सः । नः । पावक । दीदिवः । अग्ने । देवान् । इह । एति । वह । उपेति । यज्ञम् । हविः । च । नः ॥
अग्निः । शुचिव्रततम इति शुचिव्रत-तमः । शुचिः । विप्रः । शुचिः । कविः ।
शुचिः । रोचते । आहुत इत्या-हुतः ॥

---

नवमी—हे अग्ने पावक शोधक, रोचिषा रोचमानया मन्द्रया मदयित्र्या हर्षणशीलया जिह्वया हे देव क्रीडादियुक्त, देवान् इह आ वह च यज च ॥

दशमी—हे अग्ने पावक दीदिवः अस्मदर्थं दीप्यमान, त्वम् इह अस्मिन् कर्मणि देवान् आ वह । नः अस्माकं च हविः उप यज्ञं यज्ञस्य समीपं प्रापय । यद्वा—नः अस्माकमिमं यज्ञं च हविश्चाग्निहोत्रलक्षणम् उपवह देवेभ्यः स त्वमुपहर देवान् प्रापयेत्यर्थः ॥

एकादशी—अयम् अग्निः शुचिव्रततमः स्वयमेव तावत् शुद्धसत्कर्मतमः, विप्रत्वात् मेधावित्वाच्च शुचिः, कवित्वात् क्रान्तदर्शनत्वाच्च शुचिः, वशीकृतवाङ्मयत्वाद्वा । एवं सर्वात्मना आहुतः शास्त्रोक्तवर्त्मनाऽस्माभिराहुतः प्रतीतहविर्लक्षणोऽयं रोचते तेजिष्ठो भवति ॥

---

अग्ने पावकेति ॥ अथ तृतीया–' अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ' इति । हे पावक अग्ने देव, रोचमानया मादयित्र्या जिह्वया देवान् [१४]-आ वक्षि-[१४] यक्षि च ॥

स इति ॥ अथ चतुर्थी—' स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽ वह । उप यज्ञꣳ हविश्च नः ' इति । हे पावक[१५] अग्ने दीदिवः दीप्यमान, सः त्वं देवान् इह आनय । अस्मदीयं यज्ञं हविः च उप गच्छ ॥

अग्निरिति ॥ [अथ पञ्चमी—' अग्निः शुचिव्रततमः] शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ' इति ॥ अयम् अग्निः अतिशुद्धव्रतयुक्तः, विप्राभिमानित्वादपि शुचिः, विद्वदभिमानित्वादपि शुचिः, अस्माभिः सर्वत्र आहुतः शुद्धो दीप्यते ॥

---

१४–१४. क–आ वह यक्षि; तं.ति–आ वह यज । १५. क.नं.ति–शोधक ।

उद॑ग्ने शुच॑यस्तव॑ शुक्रा भ्राज॑न्त ईरते । तव॒ ज्योती॑ꣳष्य॒र्चय॑: ॥

आयु॒र्दा अ॑ग्ने॒ऽस्यायु॑र्मे (३) देहि वर्चो॒दा अ॑ग्ने॒ऽसि वर्चो॑ मे देहि त॒नू॒पा

अ॑ग्ने॒ऽसि त॒नुव॑ं मे पाह्यग्ने॒ यन्मे॑ त॒नुवा॑ ऊ॒नं तन्म॒ आ पृ॑ण

उदिति॑ । अ॒ग्ने॒ । शुच॑यः । तव॑ । शु॒क्राः । भ्राज॑न्तः । ई॒र॒ते॒ । तव॑ । ज्योती॑ꣳषि । अ॒र्चय॑: ॥ आ॒यु॒र्दा इत्या॑युः—दाः । अ॒ग्ने॒ । अ॒सि॒ । आयु॑: । मे॒ (३) । दे॒हि॒ । व॒र्चो॒दा इति॑ वर्च॑:—दाः । अ॒ग्ने॒ । अ॒सि॒ । वर्च॑: । मे॒ । दे॒हि॒ । त॒नू॒पा इति॑ त॒नू—पाः । अ॒ग्ने॒ । अ॒सि॒ । त॒नुव॑म् । मे॒ । पा॒हि॒ । अ॒ग्ने॒ । यत् । मे॒ । त॒नुवा॑: । ऊ॒नम् । तत् । मे॒ । एति॑ । पृ॒ण ।

द्वादशी—हे अग्ने, तव शुचयः तेजांसि शुक्राः निर्मलाः भ्राजन्तः दीप्यमानाः उद् ईरते उद्गच्छन्ति । तव एव स्वभूतानि सर्वाण्यादित्यादीनि ज्योतींषि भवन्ति[८] । अर्चयः अर्चयितारः यागादिभिराराधयितारः ज्योतींषि भवन्ति ज्योतीरूपाः संपद्यन्ते । एवं महानुभावः त्वमस्मदभिमतं क्षिप्रं प्रयच्छेति भावः ॥

तत्राहवनीयमेत्रोपतिष्ठते—'आयुर्दाः' इति ॥ हे अग्ने, त्वम् आयुर्दाः आयुषोऽन्नस्य जीवितस्य वा दाता असि, तस्मात् आयुः मे देहि । एवमुत्तरत्रापि द्रष्टव्यम् । वर्चो बलं दीप्तिर्वा । तनूनां शरीराणां पाता तनूपाः । सर्वत्र "आतो मनिन्" (पा ३.२.७४) इति विच् । हे अग्ने, ऊनं विकलीभूतं छिन्नं भिन्नं वा यत् मे तनुवाः तन्वाः ऊनं तत् मे त्वां भजमानस्य आ पृण आपूरय । यद्वा—यन्मे तन्वाः तनुस्थानीयानां प्रजानां पशूनां ऊनं तदापूरय[९] । पृण प्रीणने, अत्रापूरणे वर्तते । "तन्वादीनां छन्दसि बहुलम्" (पा ६.४.७७ वा १) इत्युवङादेशः ॥

रात्रिमुपतिष्ठते—'चित्रावसो' इति ॥ चित्राः नानारूपाः चायनीया वा वसवो वसून्यावसनानि वस्तारो वा यस्यां सा चित्रावसुः रात्रिः । सांहितिकं दीर्घत्वम् । त्वयि वसन्ति

उदिति ॥ अथ षष्ठी—'उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः' इति ॥ हे अग्ने, तव शुचयः शुद्धाः शुक्राः रश्मयः भ्राजन्तः दीप्यमाना उद्गच्छन्ति अर्चयितारः तव ज्योतींषि प्राप्नुवन्तीति शेषः ॥

आयुर्देति ॥ "आयुर्दा अग्न इति सिद्धमा "चित्रावसोः । *चित्रावसुना सायमुपतिष्ठते" (आपश्रौ ६.१६.१०—११) इति ॥ पाठस्तु—'आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आ पृण' इति । आपूरयेत्यर्थः । चतुर्ष्वेतेषु यजुःषु स्पष्टमन्यत् ॥

८. मै—'भवन्ति' नास्ति । ९-९. ब—ब ऊनं तदापृण ।

१६—१६. आ.क—चित्रावसोः स्वस्तीति; इ.उ.पा.हा—चित्रावसोस्स्विति । *['त्रिश्चित्रावसुना' इति आपश्रौसूत्रे] ।

चित्रावसो स्वस्ति ते पारमशीयेन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम्। अग्ने सपत्नदम्भनं वर्षिष्ठे अधि नाके।

चित्रावसो इति चित्र–वसो। स्वस्ति। ते। पारम्। अशीय। इन्धानाः। त्वा। शतम्। हिमाः। द्युमन्त इति द्यु–मन्तः। समिति। इधीमहि। वयस्वन्तः। वयस्कृतमिति वयः–कृतम्। यशस्वन्तः। यशस्कृतमिति यशः–कृतम्। सुवीरास इति सु–वीरासः। अदाभ्यम्। अग्ने। सपत्नदम्भनमिति सपत्न–दम्भनम्। वर्षिष्ठे। अधीति। नाके॥

सर्वेऽपि सुखेन [१०]अतोऽहमपि [v]ते तव [v]पारं समाप्तिं व्युष्टिं [v]स्वस्ति अविनाशेन सुखेन [v]अशीय प्राप्नुयां त्वत्प्रसादेन। अश्नोतेर्लिङि शपो लुक् ( पा २·४·७३ )॥

आहवनीये समिधमादधाति—'इन्धानाः' इति सप्तपदया शक्वर्या॥ हे अग्ने, त्वाम्[११] [v]इन्धानाः ज्वलयन्तः[१२]। "विभाषा वेण्विन्धानयोः" ( पा ६·१·२१५ ) इत्याद्युदात्तत्वम्। [v]शतं [v]हिमाः संवत्सरान् हेमन्तान् वा। हिमा इति ऋतोः स्त्रीलिङ्गत्वम्, वर्षा इतिवत्, वर्षशतेन शतं हेमन्ता भवन्तीति वर्षमेवाशंसितम्। शिशिरे शीतेन हेमन्ते प्रजानां पीडनात् तेन लक्ष्यते संवत्सरः। यदा हिमशब्देन हेमन्तर्तुर्लक्ष्यते स च मत्वर्थीयाच्प्रत्ययान्तः[*], स स्त्रियां वर्तते। [v]द्युमन्तः दीप्तिमन्तः। "ह्रस्वनुड्भ्यां°" ( पा ६·१·१७६ ) इति मतुप उदात्तत्वम्। [v]सम् [v]इधीमहि सम्यक् दीपयामः, त्वामिन्धाना वयमपि द्युमन्तः समिधीमहि। पूर्ववच्छपो लुक् ( पा २·४·७३ )। ततश्च त्वत्प्रसादात् [v]वयस्वन्तः अन्नवन्तो वयमायुष्मन्तो वा, वयो नाम आयुषोंऽशः। [v]वयस्कृतं वयस्कर्तारं संपूर्णवयसो दातारं त्वाम्। "अतः कृकमि°" ( पा ८·३·४६ ) इति सत्वम्। [v]यशस्वन्तः सत्कीर्तिमन्तो वयं त्वत्समाराधनेन त्वां [v]यशस्कृतम्। गतम्॥

**चित्रावसविति**॥ अथ यजुरन्तरम्—'चित्रावसो स्वस्ति ते पारमशीय' इति॥ हे [v]चित्रा-वसो रात्रे, तव [v]पारं समाप्तिं [v]स्वस्ति क्षेमेण प्राप्नवानि॥

**इन्धाना इति**॥ कल्पः—"त्रिरर्वाग्वसुना प्रातरर्वाग्वसो स्वस्ति ते पारमशीय। इन्धानास्त्वा शतꣳ हिमा इत्युपस्थाय" ( आपश्रौ ६·१६·११–१२ ) इति॥ 'अर्वाक्' इत्यादिः शाखान्तरमन्त्रः[**]। अत्रत्यमन्त्रपाठस्तु—'इन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि। वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम्। अग्ने सपत्नदम्भनं वर्षिष्ठे अधि नाके' इति॥ हे [v]अग्ने, त्वां समिद्भिः [v]इन्धानाः वयं शतसंख्याकान् हेमन्तोपलक्षितसंवत्सरान् [v]द्युमन्तः दीप्तिमन्तः [v]समिधीमहि लोके सम्यक् प्रख्याता भूयास्म। कीदृशं त्वाम्? [v]वयस्कृतम् अन्नस्य कर्तारं [v]यशस्कृतं कीर्तिप्रदम् [v]अदाभ्यं केनाप्यतिरस्कार्यम्। [v]वर्षिष्ठे [v]अधि [v]नाके अतिप्रौढस्वर्गविषये [v]सपत्नदम्भनं विरोधिविनाशनम्। कीदृशा वयम्? [v]वयस्वन्तः अन्नवन्तः [v]यशस्वन्तः कीर्तिमन्तः [v]सुवीरासः शोभनपुत्रादियुक्ताः॥

१०. ब–ततो°। ११. मै–'त्वाम्' नास्ति। १२. मै–ज्वलन्तः। [*][ द्र. पा ५·२·१२७ ]।

[**][ द्र. मैसं १·५·२; कामं ६·९ ]।

सं त्वम॑ग्ने॒ सूर्य॑स्य॒ वर्च॑सा(४)ऽगथाः॒ समृ॑षी॒णाꣳ स्तु॒तेन॒ सं प्रि॒येण॒ धाम्ना॑ ।
त्वम॑ग्ने॒ सूर्य॑वर्चा॒ अ॒सि सं मामायु॑षा॒ वर्च॑सा प्र॒जया॑ सृज ॥ (५) ॥

[ आ॒हु॒व॒ध्यै॒ पोषꣳ॑ र॒यिं मे॒ वर्च॑सा स॒प्तद॑श च । ] ॥ ५ ॥

समिति॑ । त्वम् । अग्ने॒ । सूर्य॑स्य । वर्च॑सा । अग॒थाः॒ । समिति॑ । ऋषी॑णाम् । स्तु॒तेन॑ । समिति॑ । प्रि॒येण॑ । धाम्ना॑ ॥

त्वम् । अ॒ग्ने॒ । सूर्य॑वर्चा॒ इति॒ सूर्य॑-व॒र्चाः॒ । अ॒सि॒ । समिति॑ । माम् । आयु॑षा । वर्च॑सा । प्र॒जयेति॑ प्र-जया॑ । सृ॒ज ॥ ५ ॥

[ मैसं १·५·१–२ ; कासं ६·९ ; कपिसं ४·८ ; वासं ३·११–३५ ]

सुवीरासः कल्याणपुत्रादिका वयम् । "आज्जसेरसुक्" ( पा ७·१·५० ) । "वीरवीर्यौ च" ( पा ६·२·१२० ) इत्युत्तरपदाद्युदात्तत्वम् । अदाभ्यम् अनुपहिंसितं बाधितुमशक्यं त्वां सपत्नदम्भनं सपत्नानामनिष्टानां विनाशयितारं स्वयं केनचिदप्यदाभ्यम् । दभिः प्रकृत्यन्तरमस्तीत्याहुः । अतो ण्यत् । वर्षिष्ठे वृद्धतमे नाके सुखैकरूपेऽस्मिन् स्थाने स्वर्गसदृशे अधि उपरि त्वामिन्धाना वयमीदृशा भूयास्मेति । प्रियस्थिरादिना वृद्धशब्दस्य वर्षादेशः ( पा ६·४·१५७ )॥

पुनरुपतिष्ठते—'सं त्वमग्ने' इति । इयं जगती वृद्धपदा ॥ हे अग्ने, त्वं सूर्यस्य वर्चसा दीप्त्या सम् अगथाः संगच्छसे । छान्दसो लुङ् । "समो गम्यृच्छि°" ( पा १·३·२९ ) इत्यात्मनेपदम् । "मन्त्रे घस°" ( पा २·४·८० ) इति च्लेर्लुक् । "वा गमः" ( पा १·२·१३ ) इति सिचः कित्त्वम् । ऋषीणां मन्त्रद्रष्टॄणां मन्त्राणां वा स्तुतेन स्तुत्या च समगथा इत्येव । प्रियेण च धाम्ना स्थानेनाहवनीयेन समगथाः संपृक्तोऽसि । यस्मादेवं तस्मात् हे अग्ने, त्वं सूर्यवर्चाः सूर्येण तुल्यतेजाः असि । यद्वा—सूर्यस्य वर्चस्त्वमसि । स त्वं मां त्वां प्रपन्नम् आयुषा शतायुष्ट्वेन वर्चसा प्रजया च सत्पुत्रपौत्रादिपरंपरया सं सृज संगमय ॥

॥ इति पञ्चमप्रपाठके अग्न्युपस्थानं नाम पञ्चमोऽनुवाकः ॥

**समिति** ॥ कल्पः — "चतस्रः समिधः एकैकस्मिन्नाधाय सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः' इत्यनुवाकशेषेणोपस्थाय" ( आपश्रौ ६·१·६–१२ ) इति । पाठस्तु –'सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना । त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज' इति ॥ हे अग्ने, त्वं सूर्यस्य वर्चसा तेजसा समगथाः संगतोऽसि । ऋषीणां स्तोत्रेण संगतः असि । प्रियेण स्थानेनाऽऽहवनीयदेशलक्षणेन संगतोऽसि । हे अग्ने, त्वं सूर्यसमानतेजाः असि । मामायुरादिभिः संगतोऽसि ॥

अत्र विनियोगसंग्रहः –

"पूर्वस्याग्नेरुपस्थानमुपप्रेत्यनुवाकतः" ॥ १ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

सं प॑श्यामि प्र॒जा अ॒हमिड॑प्रजसो मा॒न॒वीः । सर्वा॑ भवन्तु॒ नो गृ॒हे ॥

समिति॑ । प॒श्या॒मि॒ । प्र॒जा इति॑ प्र-जाः । अ॒हम् । इड॑प्रजस॒ इतीड॑-प्र॒ज॒सः॒ । मा॒न॒वीः॒ ।
सर्वाः॑ । भ॒व॒न्तु॒ । नः॒ । गृ॒हे ॥

---

गृहांश्च पशूंश्चोपतिष्ठते—' सं पश्यामि ' इति । तत्र प्रथमा गायत्री । शेषाणि यजूंषि ' मयि वो रायः श्रयन्ताम् ' इत्यन्तानि ॥ [v]सं [v]पश्यामि सम्यक् वः पश्यामि अहं [v]प्रजाः गृहवासिनः पशून् । " यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धे " ( तैसं १·५·८ ) इति च ब्राह्मणम् । प्रजाशब्देन पशव उच्यन्ते । [v]इडप्रजसः इडा गौः मनोः पुत्री वा । तस्याः प्रजा इडप्रजसः । सा त्रा यासां तथा ते संपश्यामीति । यथोक्तम्—" इडा वै मानवी " ( तैब्रा १·१·४ ), " साऽब्रवीदिडा मनुम् " ( तैब्रा १·१·४ ) इत्यादि । " ङ्यापोः संज्ञाछन्दसोः° " ( पा ६·३·६३ ) इति ह्रस्वत्वम् । " नित्यमसिच् प्रजामेधयोः " ( पा ५·४·१२२ ) इत्यत्र " नित्यग्रहणमन्यत्रापि यथा स्यात् " इत्युक्तत्वादसिच् समासान्तः । दासीभारादित्वात् ( पा ६·२·४२ ) पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—इडायाः प्रजायन्त इति " गतिकारकयोरिति पूर्वपदप्रकृतिस्वरत्वं च " ( द्र. उ ६७६ ) इत्यसुन्प्रत्ययान्ताद्धातोः अन्तलोपश्छान्दसः । डिद्वा प्रत्ययः कर्तव्यः । [v]मानवीः मनोरपत्यभूताः । जातिविशेषस्याविवक्षितत्वात् " मनोर्जातौ° " ( पा ४·१·१६१ ) इति न प्रवर्तते । [v]सर्वाः ताः सर्वा अपि गवादयः प्रजाः [v]नः अस्माकं [v]गृहे एतस्मिन् स्थाने [v]भवन्तु पशुपुत्रमित्रकलत्रादिसर्वसंपदः सदा प्रभूताः सन्तु । " अस्मदो द्वयोश्च " ( पा १·२·५९ ) इति द्वितीये वाक्ये एकस्मिन् बहुवचनम् । यद्वा—पुत्रपौत्रादिसहितानामस्माकमिति वेदितव्यम् ॥

---

[1]-पञ्चमेऽनुवाकेऽग्न्युपस्थानमुक्तम् । तथापि षष्ठेऽनुवाके पुनरपि गार्हपत्यस्याह[illegible]-[1] चोपस्थानं सपरिकरमभिधीयते ।

समिति ॥ कल्पः —" सं पश्यामि प्रजा अहमिति गृहान् प्रेक्षते " ( आपश्रौ ६·१७·१ ) इति ॥ पाठस्तु— ' सं पश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे ' इति ॥ [v]अहं मनुष्यप्रजाः [v]इडप्रजसः च सम्यक् [v]पश्यामि । इडा धेनुस्तस्याः प्रजा अपत्यानीडप्रजसो [2]मनुष्यरूपाश्च [v]सर्वाः प्रजा अस्माकं [v]गृहे तिष्ठन्तु ॥

---

१-१. आ.डा-षष्ठेऽनुवाके गार्हपत्यस्य पुनरप्याहवनीयस्य । २. ति—मनुष्यरूपाः पशुरूपाश्च ।

अम्भ्युपस्थानम् ]

**अम्भः स्थाम्भो वो भक्षीय महः स्थ महो वो भक्षीय सहः स्थ सहो वो भक्षीयोर्जः स्थोर्जं वो भक्षीय रेवती रमध्वमस्मिँल्लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त ( १ )**

अम्भः । स्थ । अम्भः । वः । भक्षीय । महः । स्थ । महः । वः । भक्षीय । सहः । स्थ । सहः । वः । भक्षीय । ऊर्जः । स्थ । ऊर्जम् । वः । भक्षीय । रेवतीः । रमध्वम् । अस्मिन् । लोके । अस्मिन् । गोष्ठ—इति गो—स्थे । अस्मिन् । क्षये । अस्मिन् । योनौ । इह । एव । स्त । इतः । मा । अपेति । गात । बह्वीः । मे । भूयास्त ( १ ) ।

‘ अम्भः स्थ ’ इत्यादि ॥ [v]अम्भः अदनीयमुच्यते “ अदेर्नुम्भश्च ” ( द्र.उ ६५५, ६५९ ) इत्यसुन् । अन्नमुच्यते । वाजसनेयिनां तु—“ अन्धः स्थ ” ( वासं ३·२० ) इत्येव[1] पाठः । हे पशवः [v]अम्भः[2] [v]स्थ भवथ । तद्धेतुत्वात्ताच्छब्द्यम् । अन्नस्य हेतवः स्थ । तस्मात् [v]वः युष्माकम् [v]अम्भः क्षीराज्यादिरूपमदनीयं [v]भक्षीय भजेयम् । भजेराशिषि लिङ् । महः पूजा ब्रह्म वा, [v]महः तद्धेतवः [v]स्थ यागादिद्वारेण । [v]वः युष्माकम् अदनीयं क्षीरादि [v]भक्षीय । [v]सहः बलं तद्धेतवः [v]स्थ युष्माकं बलकरं [3]घृतादि भक्षीय । मह्यादिभ्योऽसुन्* । ऊर्जयतेः क्विप् संपदादिलक्षणः ( पा ३·३·१०८ वा ९) । हे [v]रेवतीः, रेवत्यः क्षीरादिना धनेन तद्वत्यः । “ रयेर्मतौ बहुलम् ” ( पा ६·१·३७ वा ६ ) इति संप्रसारणम् । “ वा छन्दसि ” ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घत्वम् । [v]रमध्वं प्रीयमाणा वर्तध्वम् । “ पशवो वै रेवतीः पशूनेवात्मन् रमयते ” ( तैसं १·५·८ ) इति ब्राह्मणम् । [v]अस्मिन् [v]लोके पृथिव्याम् । “ ऊडिदम्° ” ( पा ६·१·१७१ ) इति विभक्तिरुदात्ता । [v]अस्मिन् [v]गोष्ठे गवां स्थाने व्रजे, गावः तिष्ठन्त्यस्मिन्निति । “ सुपि स्थः ” ( पा ३·२·४ ) इति कः । “ अम्बाम्ब° ” ( पा ८·३·९७ ) इति मूर्धन्यः ।

**अम्भ इति** ॥ कल्पः — “ अम्भः स्थाम्भो वो भक्षीयेति गोष्ठमुपतिष्ठते ” ( आपश्रौ ६·१७·२ ) इति । पाठस्तु— ‘ अम्भः स्थाम्भो वो भक्षीय महः स्थ महो वो भक्षीय सहः स्थ सहो वो भक्षीयोर्जः स्थोर्जं वो भक्षीय ’ इति ॥ [v]अम्भः पीतोदकसारं [v]महः पूज्यं सर्वैरादरणीयं [v]सहः बलकरमूर्जं स्वादुतमरसरूपं यत्क्षीरादि तत्कारणत्वेन हे पशवस्तद्रूपाः [v]स्थ । ततो युष्मदीयं तत्क्षीरादिकमस्माकं भक्षमस्तु ॥

**रेवतीरिति** ॥ “ रेवती रमध्वमित्यन्त ऽग्नी तिष्ठन्नुपति ” ( आपश्रौ १·१७·३ ) इति ॥ पाठस्तु— ‘ रेवती रमध्वमस्मिँल्लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त’ इति ॥ हे [v]रेवतीः पशवः, [v]अस्मिन् लोके[3] [v]गोष्ठे व्रजविशेषे [v]क्षये गृहविशेषे [v]योनौ स्थानविशेषे

१. तं.ति.मै—इति वा । २. मै—अन्धः । ३. ब—क्षीरादि । *[ द्र. उ ६१८ ] ।

३. आ.हा—भूलोके ।

सꣳहिताऽसि विश्वरूपीरा मोर्जा विशा गौपत्येना रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम् ॥

सꣳहितेति सं–हिता । असि । विश्वरूपीरिति विश्व–रूपीः । एति । मा । ऊर्जा । विश । एति । गौपत्येन । एति । रायः । पोषेण । सहस्रपोषमिति सहस्र–पोषम् । वः । पुष्यासम् । मयि । वः । रायः । श्रयन्ताम् ॥

[v]अस्मिन् [v]क्षये अस्मदीये । " क्षयो निवासे " ( पा ६.१.२०१ ) इत्याद्युदात्तत्वम् । [v]अस्मिन् [v]योनौ रमध्वमिति सर्वत्र । [v]इह [v]एव अस्मदीये लोकादौ [v]स्त भूयास्त । [v]इतः अस्मत्सकाशात् [v]मा [v]अप [v]गात अपरक्ता मा अपगात न निर्गच्छत । अपि तु [v]बह्वीः बह्वयः पुत्रपौत्रादिमत्यो मम [v]भूयास्त ॥

अग्निहोत्री वत्समभिमृशति—' सꣳहिता ' इति ॥ [v]सꣳहिता संयुक्ता मात्रा [v]असि भव । मात्रा वियुक्ता मा भूः । [v]विश्वरूपीः नानारूपवतीः । मत्वर्थीय ईकारः ( पा ५.२.१०९ वा २ ) । सा त्वं माम् [v]ऊर्जा रसेन क्षीरादिना [v]आ [v]विश । क्षीरादेर्दातृत्वेन मत्संबन्धिनी भव । " सावेकाचः° " ( पा ६.१.१६८ ) इत्यूर्जो विभक्तिरुदात्ता । [v]गौपत्येन च मामाविशेत्येव । गवां पतिः स्वामी तद्भावो गौपत्यम् । पत्यन्तलक्षणो यक् ( पा ५.१.१२८ ) । यथाऽहं गोपतिः भवानि तथा मयि वर्तस्व । [v]रायः धनस्य [v]पोषेण पुष्ट्या च मामाविश मदीयानि धनानि पोषयन्ती स्वजन इव मम भव । " ऊडिदम्° " ( पा ६.१.१७१ ) इति रायो विभक्तिरुदात्ता । " षष्ठ्याः पतिपुत्र° " ( पा ८.३.५३ ) इति सत्वम् । किंबहुना, [v]वः युष्माकं [v]सहस्रपोषं बहुप्रकारमहं [v]पुष्यासं पौष्कल्येनोद्भावयिषीय बह्वीनां युष्माकं संबन्धी भूयासम् । गोपोषं पुष्णातीतिवत् सामान्यवचनोऽन्यतरो द्रष्टव्यः । [v]वः युष्माकं [v]रायः धनानि क्षीरादीनि [v]मयि [v]श्रयन्ताम् अविच्छेदेन संततं वर्धन्ताम् ॥

[v]रमध्वं क्रीडध्वम् । [v]इह एव योनौ [v]स्त सर्वदा तिष्ठत । [v]इतः स्थानात् [v]मा [v]अप गात माऽपगच्छत । [v]मे मदर्थमपत्यपरम्परया बहवो [v]भूयास्त ॥

सꣳहितेति ॥ कल्पः— " सꣳहितासि विश्वरूपीरिति वत्समभिमृशति " ( आपश्रौ ६.१७.४ ) इति ॥ पाठस्तु—' सꣳहितासि विश्वरूपीरा मोर्जा विशा गौपत्येना रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम् ' इति ॥ हे वत्स, त्वं [v]सꣳहिता असि मात्रा संयुक्तोऽसि । [v]विश्वरूपीः आदरेण स्तनं पातुं वामतो दक्षिणतश्च पुनः पुनर्धावन् बहुरूपवदवभाससे । [4]तादृक् त्वम् [v]ऊर्जा क्षीरादिरसनिमित्तेन माम् [v]आ [v]विश मत्समीपमागच्छ । [v]गौपत्येन मदीयं बहुपशुस्वामित्वं निमित्तीकृत्य माम् [v]आ विश [v]रायस्पोषेण धनपुष्टिनिमित्तेनापि मामाविश । सहस्रसंख्यया पुष्टिर्यथा भवति तथा युष्मान् [v]पुष्यासम् । [v]मयि युष्मदीयानि क्षीरादिधनान्याश्रयन्ताम् ॥

४. क.ति–तादृशः ।

अग्न्युपस्थानम् ]

उप॑ त्वाऽग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑सि ॥

उपेति॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेदि॑व॒ इति॑ दि॒वे-दि॒वे॒ । दोषा॑वस्त॒रिति॒ दोषा॑-व॒स्तः॒ । धि॒या । व॒यम् ।
नमः॑ । भर॑न्तः । एति॑ । इ॒म॒सि॒ ॥

गार्हपत्यमुपतिष्ठते—‘ उप त्वाऽग्ने ’ इति तिसृभिर्गायत्रीभिः । ‘ अग्ने त्वं नः ’ इति चतसृभिर्द्विपदाभिर्विराड्गायत्रीभिश्च । “ जागतगायत्राभ्यां विराड्गायत्री ” ( द्र. *पिंसू ३·१६ ) इति । “ गायत्रीभिरुप तिष्ठते ” ( तैसं १·५·८ ) इत्यादि ब्राह्मणम् । ‘ उप त्वा ’ इति प्रथमा ॥ हे [v]अग्ने, वयं [v]दिवेदिवे यत् दिने दिने [v]धिया प्रज्ञया कर्मणा वा त्वाम् [v]उप [v]इमसि उपेम उपगच्छामः । “ इदन्तो मसि ” ( पा ७·१·४६ ) । किं कुर्वन्त इत्याह— [v]दोषावस्तः रात्रावह्नि च सायं प्रातश्च [v]नमः [v]भरन्तः नमस्कारमाभरन्तः आहरन्तः नमस्कुर्वन्तः त्वामुपेम इति । त्वं चास्माकमुपकुर्विति शेषः । “ हृग्रहोर्भः° ” ( पा ८·२·३२ वा १ ) । भरतिर्वा भौवादिकः भृञ् भरणे इति । “ सुपां सुलुक्° ” ( पा ७·१·३९ ) इति दिवसवाचिनो दिवशब्दात् परस्य सप्तम्येकवचनस्य शेआदेशः । प्रगृह्यत्वं तु स्यात् । व्यत्ययेन वा चतुर्थी । “ ऊडिदम्° ” ( पा ६·१·१७१ ) इति विभक्तेरुदात्तत्वम् । “ अनुदात्तं च ” ( पा ८·१·३ ) इति द्वितीयं निहन्यते । दोषावस्तरिति कार्तकौजपादिषु द्रष्टव्यः ( पा ६·२·३७ ) । “ सावेकाचः° ” ( पा ६·१·१६८ ) इति धियो विभक्तिरुदात्ता ॥

**उपेति ॥ कल्पः—“ उप त्वाऽग्ने दिवेदिव इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपतिष्ठतेऽग्ने त्वं नो अन्तम इति चतसृभिश्च द्विपदाभिः । *स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मादित्येषा चतुर्थी भवति ” ( आपश्रौ ६·१७·७-८ ) इति । तत्र प्रथमा गायत्री—‘ उप त्वाऽग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ’ इति । हे [v]अग्ने, प्रतिदिनं [v]वयं त्वाम् [v]उप [v]आ [v]इमसि उपगच्छामः । किं कुर्वन्तः ? [v]दोषावस्तः सायं प्रातश्च [v]धिया [v]नमः [v]भरन्तः नमस्कारं संपादयन्तः ॥**

*[ “ तृतीयं द्विपाज्जागतगायत्राभ्याम् ” ( पिंसू ३·१६ ) ] ।

*[ मैसं १·५·३ ] ।

तैसं ६

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे ॥
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥

राजन्तम् । अध्वराणाम् । गोपामिति गो–पाम् । ऋतस्य । दीदिविम् । वर्धमानम् । स्वे । दमे ॥
सः । नः । पिता । इव । सूनवे । अग्ने । सूपायन इति सु–उपायनः । भव ।
सचस्व । नः । स्वस्तये ॥

---

'राजन्तम्' इति द्वितीया—राजन्तं दीप्यमानम् अध्वराणां [४]यज्ञानां गोपां गोप्तारम् । गोपायतेः क्विप् ( पा ३·२·७६ ), अतोलोपयलोपापृक्तलोपाश्च ( पा ६·४·४८; ६·१·६६, ६७ ) । ऋतस्य यज्ञस्य सत्यस्य च गोप्तारम् । यद्वा—अध्वराणां राजन्तं गोपां रक्षितारं स्वयं सर्वदा दीदिविं दीप्यमानम् । अथवा—अध्वराणां यज्ञानां राजानम् । ऋतस्य ऋतेन यज्ञेन सत्येन वा दीदिविं प्रकाशयितारं, गोपां गवां पातारम् । अस्मिन् पक्षे अवग्रह उपपद्यते । "दीर्घश्चाभ्यासस्य" ( उ ५०४ ) इति क्विन्प्रत्ययः । वर्धमानं समिद्भिर्हविर्भिश्च स्वे दमे नः गृहे अग्निहोत्रवेश्मनि तं त्वामुपेमसीति ॥

'स नः' इति ॥ हे अग्ने, सः त्वं नः अस्मभ्यं पिता इव सूनवे तात इव पुत्राय सूपायनः सूपचरणः सुखेनोपचरणीयः परिचरणीयो वा भव । "छन्दसि गत्यर्थेभ्यः" ( पा ३·३·१२९ ) इति युच् । शोभनोपायनो वा भव[५] । किंच नः अस्माकं स्वस्तये अविनाशाय सचस्व संगच्छस्व मा कदाचिदपि मुचः । "अन्येषामपि दृश्यते" ( पा ६·३·१३७ ) इति संहितायां दीर्घत्वम् । स्वस्तय इति [६]विभक्त्यन्तप्रतिरूपो निपातः[६] ॥

---

राजन्तमिति ॥ अथ द्वितीया–' राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे ' इति ॥ कीदृशं त्वाम् ? अध्वराणां राजन्तं यज्ञराजं गोपां गवां पालकम् ऋतस्य दीदिविं सत्येन द्योतमानं, स्वे दमे स्वकीयेऽग्निहोत्रगृहे हविर्भिः वर्धमानम् ॥

स इति ॥ अथ तृतीया–' स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ' इति ॥ हे अग्ने, सः तादृशस्त्वं नः अस्मदर्थं सूपायनः [५]सुखेन प्राप्तुं[५] शक्यो भव । यथा पुत्रार्थं पिता [६]सूपायनः तद्वदस्माकं स्वस्तये क्षेमाय सचस्व समवेतो भव ॥

---

४. ब– 'यज्ञानाम्' इत्यस्यानन्तरं 'राजानम्' । ५. मै–'भव' नास्ति । ६–६. मै–विभक्त्यन्तप्रतिरूपोऽव्ययः; तं.ति–विभक्तिप्रतिरूपो निपातः ।

---

५–५. आ–प्राप्तुम्; क–भव सुखेन प्राप्तुम् । ६. क–सुप्राप्यः; तं.ति–सुप्रापः ।

**अग्ने (२) त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः ॥**
**तं त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः ॥**

अग्ने (२) । त्वम् । नः । अन्तमः । उत । त्राता । शिवः । भव । वरूथ्यः ॥
तम् । त्वा । शोचिष्ठ । दीदिवः । सुम्नाय । नूनम् । ईमहे । सखिभ्य इति सखि-भ्यः ॥

---

'अग्ने त्वं नः' इति ॥ हे अग्ने, त्वं नः अस्माकम् अन्तमः अन्तिकतमः संनिकृष्टतमः भव[7] । "तमे तादेश्च" (पा ६.४.१४९ वा ९) इति तादिलोपः । उत अपि च त्राता रक्षकः भयेष्विति गम्यते । शिवः सुखकरः सर्वदा भव अस्माकं वरूथ्यः गृहे भवः नित्यसंनिहितः । दिगादित्वात् यत् (पा ४.३.५४) । वरूथाय गृहाय वा हितः वरूथ्यः । उगवादिर्द्रष्टव्यः (पा ५.१.२) ॥

'तं त्वा' इति ॥ हे शोचिष्ठ दीपयितृतम । "तुश्छन्दसि" (पा ५.३.५९) इतीष्ठन् । "तुरिष्ठेमेयःसु" (पा ६.४.१५४) इति टिलोपः । यद्वा-शोचस्वितम । विन्मतोर्लुक्" (पा ५.३.६५) । हे दीदिवः दीप्यमान जिगीषन् वा । दिवेर्लिटः क्वसुरादेशः (पा ३.२.१०७) । "तुजादीनाम्" (पा ६.१.७) इत्यभ्यासस्य दीर्घत्वम् । तं त्वां तादृशमन्तिकतमत्वादिगुणविशिष्टं त्वां सुम्नाय धनाय सुखाय वा ईमहे याचामहे । नूनम् इति पादपूरणे निश्चये वा । यद्वा—नूनं नूतनम् अभूतपूर्वं तं त्वां सखिभ्यः समानख्यानेभ्यः सुहृदयसुहृद्भ्यः । "क्रियाग्रहणं कर्तव्यम्" (द्र.पाभा १.४.३२) इति कर्मणः संप्रदानत्वात् सुम्नायेति चतुर्थी ॥

---

अग्न इति ॥ अथ प्रथमा द्विपदा-'अग्ने त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः' इति ॥ हे अग्ने, त्वं नः अस्माकम् अन्तमः अन्तिकतमो भव । उत अपि च त्राता शिवः च सन् वरूथ्यः वरूथे गृहे नित्यं संनिहितो भव ॥

तमिति ॥ अथ द्वितीया-'तं त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः' इति ॥ हे वह्ने[7] शोचिष्ठ दीदिवः शुद्धतम दीप्यमान, सखिभ्यः सखीनामस्माकं सुम्नाय सुखाय नूनं तं पूर्वोक्तगुणयुक्तं त्वाम् ईमहे प्राप्नुमः ॥

---

७. मै-'भव' नास्ति ।

---

७. क.तं.ति-'वह्ने' नास्ति ।

वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिं दाः ॥
ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडाः स्थ मधुकृतः स्योना माऽऽ विशतेरा मदः । सहस्रपोषं वः पुष्यासं (३) मयि वो रायः श्रयन्ताम् ॥

वसुः । अग्निः । वसुश्रवा इति वसु-श्रवाः । अच्छ । नक्षि । द्युमत्तम इति द्युमत्-तमः । रयिम् । दाः ॥ ऊर्जा । वः । पश्यामि । ऊर्जा । मा । पश्यत । रायः । पोषेण । वः । पश्यामि । रायः । पोषेण । मा । पश्यत । इडाः । स्थ । मधुकृत इति मधु-कृतः । स्योनाः । मा । एति । विशत । इराः । मदः । सहस्रपोषमिति सहस्र-पोषम् । वः । पुष्यासम् (३) । मयि । वः । रायः । श्रयन्ताम् ॥

'वसुः' इति ॥ वसुः वसुमान् । मत्वर्थीयो लुप्यते । अग्निः अङ्गनादिगुणयुक्तः । वसुश्रवाः वासयतीति वसुः तादृशं श्रवणं यस्य तादृशः । वसुभिर्वा श्रूयत इति वसुश्रवाः । "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च" (द्र. उ ६७६) इत्यसुन् । स त्वमस्मान् अच्छ आभिमुख्येन नक्षि प्राप्नुहि । "निपातस्य च" (पा ६.३.१३६) इति संहितायां दीर्घत्वम् । नशतिर्गतिकर्मा । "बहुलं छन्दसि" (पा २.४.७३) इति शपो लुक् । अस्मान् प्राप्य चास्मभ्यं द्युमत्तमः दीप्तिमत्तमः त्वं रयिं धनं दाः देहि । ददातेर्लेटि पूर्ववच्छपो लुक् (पा २.४.७३) । "ह्रस्वनुड्भ्यां मतुप्" (पा ६.१.१७६) इति द्योर्मतुप उदात्तत्वम् ॥

पुनश्च गृहांश्च पशूंश्चोपतिष्ठते—'ऊर्जा वः' इति । एतानि यजूंषि ॥ ऊर्जा क्षीरादिना रसेन समग्राः सदा वः पश्यामि । यूयमपि ऊर्जा रसेन स्नेहेन बलेन वा सहितं मां पश्यत । किंच रायः धनस्य [8]पुत्रपश्वादिलक्षणस्य घासादिलक्षणस्य[8] वा पोषेण वृद्ध्या वः पश्यामि । यूयमपि रायः धनस्य पशुहिरण्यलक्षणस्य पोषेण मां पश्यत । पूर्ववत् सत्वस्वरौ ॥

'इडाः स्थ' इत्यादि अनुष्टुप् ॥ इडाः अन्नानि[9] स्थ तद्धेतुत्वात् ताच्छब्द्यम् । मधुकृतः मधुसदृशस्य कृतः कर्त्र्यः उत्पादयित्र्यः । उक्तं च—"एतद्वै देवानां मधु यद्घृतम्"

वसुरिति ॥ अथ तृतीया—'वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिं दाः' इति ॥ वसुः वसुमानयम् अग्निः वसुरुद्रादिदेवैरादरेण [8]स्तूयमानः श्रूयत इति वसुश्रवाः । हे तादृगग्ने, अच्छ अस्मदभिमुखः नक्षि प्राप्नुहि । द्युमत्तमः अतिशयेन दीप्यमानः रयिं दाः धनं देहि ॥

चतुर्थी तु शाखान्तरगता (मैसं १.५.३) ॥

ऊर्जेति ॥ कल्पः—"ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान् प्रेक्षते पशून् वा" (आपश्रौ ६.१७.९) इति ॥ पाठस्तु—'ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा

८-८. ब-पुत्रादिलक्षणस्य घृतादिलक्षणस्य । ९. मै-अन्नम् ।

८. आ.क-एव ।

तत् स॒वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्र॒चोद॑यात् ॥

तत् । स॒वि॒तुः । वरे॑ण्यम् । भर्गः॑ । दे॒वस्य॑ । धी॒म॒हि॒ ।

धियः॑ । यः । नः॒ । प्र॒चो॒द॒या॒दिति॑ प्र—चो॒द॑यात् ॥

( द्र. नि ८·१८ ) इति, " एतद्वै मधु दैव्यं यदाज्यम् " इति ( ऐब्रा २·२ ) च । ता यूयं Vस्योनाः सुखभूताः माम् Vआ Vविशत । Vइराः क्षीराद्यन्नाद्यात्मिकाः Vमदः मदयित्र्यः देवानां मनुष्याणां च हर्षयित्र्यः । मदेर्ण्यन्तात् क्विप् । 'बहुलं संज्ञाच्छन्दसोः' (द्र.उ १९० ) इति णिलुक् ॥ " सहस्रपोषम् " इति व्याख्यातम् ॥

आहवनीयमुपतिष्ठते—' तत् सवितुः ' इति गायत्र्या ॥ Vतत् तस्य । " सुपां सुलुक् " ( पा ७·१·३९ ) इति षष्ठ्या लुक् । तस्य Vसवितुः Vदेवस्य दानादिगुणयुक्तस्य स्वभूतं तत्प्रसादलभ्यं वा, अत एव Vवरेण्यं वरणीयं सर्वैः प्रार्थनीयं Vभर्गः तेजः अन्नं धनं वा वयं Vधीमहि धारयेम तस्यैव प्रसादात् तस्याधारभूता भवेम । धीङ् आधारे दैवादिकः । " छन्दसि लुङ्लङ्लिटः " इति लङि " बहुलं छन्दस्यमाङ्योगेऽपि " ( पा ६·४·७५ ) इत्यडभावः । दधातेर्वा लिङ् । सर्वत्र " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । कस्येत्याह—Vयः देवः सविताऽस्माकं Vधियः कर्माणि Vप्रचोदयात् प्रचोदयेत्[10] प्रवर्तयेत् । यद्वा—धियः धर्मादिगोचराः बुद्धीः प्रचोदयात्[11] प्रेरयेत् । लेट्यडागमः ( पा ३·४·९४ ) । तस्य सवितुरिति । यद्वा—सवितुः देवस्य तदन्नादि धीमहि । किमित्याह—य इति । लिङ्गव्यत्ययः । तदस्माकं धियः प्रचोदयात् प्रेरयति । यद्वा—यो देवः सविता विश्वस्य प्रसविताऽस्माकं धर्मादिगोचराः धियः प्रेरयति तस्य स्वभूतं वरेण्यं सर्वैर्भजनीयं भर्गः पापानां तापनं तेजो मण्डलात्मकं धीमहि मनसा धारयामः । ध्यायतेरेव वा छान्दसं संप्रसारणम् । एवं बोधप्रकाशाभ्यां समस्तस्य प्रपञ्चस्य उपकुर्वाणं श्रेयोऽर्थिभिर्भजनीयं सूर्यात्मना स्थितं पारमेश्वरं तेज उपास्यत्वेन उपदिश्यते ॥

पश्यतेडाः स्थ मधुकृतः स्योना माऽऽ विशतेरा मदः । सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम् ' इति ॥ हे गृहागताः पशवः, क्षीरादिरसनिमित्तेन धनपुष्टिनिमित्तेन च युष्मानहं Vपश्यामि । यूयमपि तथा मां Vपश्यत । हे Vइडाः गावः, यूयं मधुरघृतकारिण्यः Vस्थ । Vस्योनाः सुखकराः Vइराः अन्नवत्यः Vमदः मादयित्र्यः माम् Vआ Vविशत । सहस्रसंख्यया पुष्टिर्यथा भवति तथा युष्मान् Vपुष्यासम् । युष्माकं धनानि क्षीरादीनि Vमयि Vश्रयन्ताम् ॥

तदिति ॥ कल्पः—" तत्सवितुर्वरेण्यम्, सोमानं स्वरणम्, मित्रस्य चर्षणीधृतः, प्र स मित्र, कदा चन स्तरीरसि, कदा चन प्र युच्छसि, परि त्वाऽग्ने पुरं वयमित्युपस्थाय " ( आपश्रौ ६·१८·१ ) इति ॥ आहवनीयमिति लभ्यते । तत्र प्रथमैवमाम्नाता—' तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ' इति ॥ Vयः सविताऽस्माकं बुद्धीः प्रेरयति तस्य Vसवितुः Vदेवस्य वरणीयं Vतत् Vभर्गः तेजो ध्यायेम ॥

१०. पं—प्रेरयति; तं—' प्रवर्तयेत् ' नास्ति । ११. ति—प्रचोदयेत् ।

सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् ॥
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते ।
कक्षीवन्तमिति कक्षी-वन्तम् । यः । औशिजम् ॥
कदा । चन । स्तरीः । असि । न । इन्द्र । सश्चसि । दाशुषे ।
उपोपेत्युप-उप । इत् । नु । मघवन्निति मघ-वन् । भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते ॥

पुनरप्याहवनीयमुपतिष्ठते—' सोमानम् ' इति गायत्र्या ॥ सोमानं सोतारं सोमानामभिषोतारं मां कृणुहि । " अन्येभ्योऽपि दृश्यते " ( पा ३·२·७५ ) इति मनिन् । उञ्छादित्वादन्तोदात्तत्वम् ( पा ६·१·१६० ) । औणादिको वा मनिन्प्रत्ययः ( उ ५९४ ) । अन्य आहुः सोमानामिति वक्तव्ये छान्दसं ह्रस्वत्वम् । सोमानां सप्तविधानां संबन्धिनं मां कुर्विति । तत्राप्यन्तोदात्तत्वं मृग्यम्, सोमशब्दस्याद्युदात्तत्वात् । स्वरणं शब्दितं सोमत्वेन प्रकाशितम् । स्वृ शब्दोपतापयोः । कर्मणि ल्युट् ( पा ३·३·११३ ) । ईदृशं च मां कुरु । हे ब्रह्मणः परिवृढस्यान्नस्य वा पते स्वामिन् । " षष्ठ्याः पतिपुत्र° " ( पा ८·३·५३ ) इति सत्वम् । " सुबामन्त्रिते° " ( पा २·१·२ ) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायो निहन्यते । कक्षीवन्तं ताद्धर्म्यात् ताच्छब्द्यम् । कक्षीवान्नाम ऋषिः तमिव यः औशिजम् । स्वार्थिकोऽण् ( पा ५·४·३८ ) वचनव्यत्ययः । यद्वा—कक्षीवन्तं हस्त्यादिकक्ष्यावन्तं ईश्वरं मां कुरु । " आसन्दीवदष्ठीवत्° " ( पा ८·२·१२ ) इत्यादिना निपात्यते । य औशिज ईश्वर औशिजो भवति तं मां कुरु । उशिक् कान्तः सर्वलोकप्रियः स औशिजः । स्वार्थिकोऽण् ( पा ५·४·३८ ) ॥

रात्रिमुपतिष्ठते—' कदा चन ' इति पथ्याबृहत्या ॥ " तृतीयश्चेद्द्वादशाक्षरः पथ्या " ( द्र. *पिंसू ३·२७ ) इति । व्याख्याता चेयमादित्यग्रहे ( तैसं १·४·२२ ) । इन्द्रात्मना रात्रिः

**सोमानमिति** ॥ अथ द्वितीया–' सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् ' इति ॥ ब्रह्मणः परिवृढस्य कर्मणः पते स्वामिन्नग्ने, यः त्वम् औशिजम् उशिजः ऋषेः[१] पुत्रं कक्षीवन्तम् ऋषिं कर्मप्रवर्तकं कृतवानसीत्यध्याहारः । तादृशस्त्वं मामपि सोमानं सोमयागानां स्वरणम् उपदेष्टारं कुरु ॥

" मित्रस्य " ( तैसं ३·४·११ ), " प्र स मित्र " ( तैसं ३·४·११ ) इति द्वयं नात्राऽऽम्नातम् ॥

**कदेति** ॥ अथ पञ्चमी–' कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ' इति ॥ हे इन्द्र, परमैश्वर्ययुक्ताग्ने, कदाचिदपि स्तरीः हिंसकः न असि । किंतु दाशुषे हविर्दत्तवते यजमानार्थम् उपोप इत् नु अत्यन्तसमीप एव सश्चसि समवेतोऽसि । हे

*[" पथ्या पूर्वश्चेत्तृतीयः " ( पिंसू ३·२७ ) । ] ।

१. आ.क–' ऋषेः 'नास्ति ।

**परि त्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः ॥**

परीति । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषद्वर्णमिति धृषत्–वर्णम् । दिवेदिव इति दिवे–दिवे । भेत्तारम् । भङ्गुरावत इति भङ्गुर–वतः ॥

स्तूयते । कदाचिदपि स्तरीः छादयिता अभिभविता न भवसि । अपि तु दाशुषे हवींषि दत्तवते यजमानाय सश्चसि समागच्छसि, न कदाचिदपि तत्सकाशं मुञ्चसि उपंकर्तुम् । तथा हि—हे मघवन्, तव देवस्य देवनशीलस्य दानं भूयः भूयोऽपि उप पृच्यते एव, अविच्छेदेन निर्वर्त्यत एव । यद्वा—भूयो भूयोऽपि उपपृच्यतां उत्पाद्यतामिति ॥

गार्हपत्यमुपतिष्ठते—' परि त्वा ' इत्यनुष्टुभा ॥ हे अग्ने सहस्य, सहो बलं तत्र भवः । " दिगादिभ्यो यत् " ( पा ४·३·५४ ) । पुरम् अभिमतानां पूरयितारं विप्रं मेधाविनं धृषद्वर्णं वर्णमात्रेणैव शत्रूणाम् अभिभवितारं भेत्तारम् । कस्य ? भङ्गुरावतः परभञ्जनशीलै-र्व्यापारैः तद्वतो रक्षःप्रभृतेः । छान्दसं संहितायां दीर्घत्वम् । ईदृशं त्वां दिवेदिवे[12] दिनेदिने परि धीमहि सर्वतो धारयेम । दधातेर्लिङि शपो लुक् ( पा २·४·७३ ) ॥

मघवन्, इन्द्रसदृशाग्ने, भूयः इत् नु पुनरपि देवस्य ते तव दानं पृच्यते [10]फलदानमस्माभिः संयुज्यते ।

" कदा चन प्र युच्छसि " ( तैसं १·४·२२ ) इत्येषाऽन्यत्राऽऽम्नाता ॥

परीति ॥ अथ सप्तमी–' परि त्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः ' इति ॥ सहसि बले भवः सहस्यः । हे सहस्य बलवन् अग्ने, वयं त्वां प्रतिदिनं परि धीमहि परितो धारयाम । कीदृशं त्वाम् ? पुरम् अभिमतानां पूरकं विप्रं [11]ब्राह्मणाभिमानिनं धृषद्वर्णं वैरिणम् । धृषन्नभिभवन् वर्णं आकारो यस्य तादृशम् । भङ्गुरावतः भञ्जनशीलव्यापारोपेतस्य रक्षसो भेत्तारम् ॥

अग्न इति ॥ कल्पः–" अग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते । अग्ने गृहपत इति च । पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तवे इत्यजातस्य । अमुष्मा इति जातस्य " ( आपश्रौ ६·१९·१–२ ) इति ॥ आग्निपावमान्यौ त्वन्यत्र ( तैसं १·५·५ ) आम्नाते । मन्त्रान्तरपाठस्तु— ' अग्ने, गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतं हिमास्तामाशिषमाशासे तन्तवे ज्योतिष्मतीं त[illegible]ऽमुष्मै ज्योतिष्मतीम् ' इति ॥ हे गृहपालक अग्ने, गृहपतिना त्वया [12]अनुगृहीतः अहं शोभनो गृहपतिः भूयासम्, तथा गृहपतिना मया पूजितः त्वं गृहस्वामी भूयाः । [13]–कियन्तं कालम् ? –[13]शतं हिमाः । हिमशब्दोपलक्षितहेमन्तर्तुसहितान् शतसंवत्सरान् । अहं तन्तवे उत्पत्स्यमानपुत्रसंतानाय ज्योतिष्मतीं ब्रह्मवर्चसयुक्तां ताम् आशिषम् आयुरारोग्यैश्वर्याभिवृद्धिरूपाम् आशासे । एवम् अमुष्मै जाताय देवदत्तादिनाम्ने ॥

१२. मैं–' दिवेदिवे ' नास्ति ।

१०. आ–फलदानार्थमस्माभिः । ११. क–ब्राह्मणजात्यभि° । १२. क–सुगृहीतः । १३–१३. तं. ति–कियत्कालम् ।

समारोहत्यग्निर्मूर्धा दिवः ककुदित्याह मूर्धानमे(१)वैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रति तिष्ठत्ययमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनं करोत्युभा वामिन्द्राग्नी आहुवध्या इत्याहौजो बलमेवाव रुन्द्धेऽयं ते योनिर्ऋत्विय इत्याह पशवो वै रयिः पशूनेवाव रुन्द्धे

समारोहतीति सम्–आरोहति । अग्निः । मूर्धा । दिवः । ककुत् । इति । आह । मूर्धानम् ( १ )। एव । एनम् । समानानाम् । करोति । अथो इति । देवलोकादिति देव–लोकात् । एव । मनुष्यलोक इति मनुष्य–लोके । प्रतीति । तिष्ठति । अयम् । इह । प्रथमः । धायि । धातृभिरिति धातृ–भिः । इति । आह । मुख्यम् । एव । एनम् । करोति । उभा । वाम् । इन्द्राग्नी इतीन्द्र–अग्नी । आहुवध्यै । इति । आह । ओजः । बलम् । एव । अवेति । रुन्द्धे । अयम् । ते । योनिः । ऋत्वियः । इति । आह । पशवः । वै । रयिः । पशून् । एव । अवेति । रुन्द्धे ।

---

‘ अग्निः ’ इति ।। अग्नेर्मूर्धत्वाभिधानं यजमानस्य प्राधान्यार्थमिति । [v]अथो अपि च [v]देवलोकात् आगत्य [v]मनुष्यलोके प्रतिष्ठितो भवति ।।

पार्थिवस्याग्नेः पश्चादभिधानात् [v]मुख्यम्[४] इति प्रथमत्ववचनादग्नेः मुखमिव मुख्यम्[४] ।।

‘ [५-]ओजः ’ इति[-५] ।। ओजोबलात्मकत्वादिन्द्राग्न्योः ।।

‘ पशवो वै रयिः ’ इति ।। “ वर्धया रयिम् ” ( तैसं १.५.५ ) इति दर्शनात् ।।

---

**अग्निरिति** ।। मूर्धशब्दपृथिवीशब्दाभ्यां सूचितं दर्शयति—‘ अग्निर्मूर्धा दिवः ककुदित्याह मूर्धानमेवैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रति तिष्ठति ’ इति ।। [v]मूर्धानं श्रेष्ठमेनं यजमानं [v][२-]समानानां समानजातीयानां मध्ये [v]करोति । अपि च [v]देवलोकात् आगत्य [v]मनुष्यलोके एव प्रतिष्ठितो भवतीत्यर्थः[-२] ।।

**अयमिति** ।। प्रथमशब्दसूचितं दर्शयति—‘ अयमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनं करोति ’ इति ।।

**उभेति** ।। इन्द्रस्य बलाभिमानित्वादग्नेश्च तेजोऽभिमानित्वात् शब्दद्वयेनोभयप्राप्तिः सूच्यत इत्याह—‘ उभा वामिन्द्राग्नी आहुवध्या इत्याहौजो बलमेवाव रुन्द्धे ’ इति ।।

**अयमिति** ।। मन्त्रगतं रयिशब्दं व्याचष्टे—‘ अयं ते योनिर्ऋत्विय इत्याह पशवो वै रयिः पशूनेवाव रुन्द्धे ’ इति ।।

---

४. मै–मुखम् । ५–५. मै–‘ ओजः इति ’ नास्ति ।

---

२–२. क.करोतीत्यर्थः, इ.उ.तै.ति.पा–‘ समानानां....भवतीत्यर्थः ’ नास्ति ।

**षड्भिरुप तिष्ठते षड्वा (२) ऋतव ऋतुष्वेव प्रति तिष्ठति षड्भिरुत्तराभिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुप तिष्ठते**

षड्भिरिति षट्-भिः। उपेति। तिष्ठते। षट्। वै (२)। ऋतवः। ऋतुषु। एव। प्रतीति। तिष्ठति। षड्भिरिति षट्–भिः। उत्तराभिरित्युत्–तराभिः। उपेति। तिष्ठते। द्वादश। समिति। पद्यन्ते। द्वादश। मासाः। संवत्सर इति सम्–वत्सरः। संवत्सर इति सम्–वत्सरे। एव। प्रतीति। तिष्ठति। यथा। वै। पुरुषः। अश्वः। गौः। जीर्यति। एवम्। अग्निः। आहित इत्या–हितः। जीर्यति। संवत्सरस्येति सम्–वत्सरस्य। परस्तात्। आग्निपावमानीभिरित्याग्नि–पावमानीभिः। उपेति। तिष्ठते।

---

'षड्भिः' इति ॥ आहवनीयमेव सर्वत्र। विशिष्टसंख्यान्वयो विशिष्टफलावाप्तिहेतुरिति[6] भावः। 'षड्भिरुत्तराभिः' इति। ननु द्वादशभिरुपतिष्ठत इत्येव वाच्यं स्यात्। मैवम्[7]। षट्त्वनिबन्धनफलावाप्तये षड्भिः षड्भिरुपस्थीयते। द्वादशेति तन्निबन्धनफलावाप्तिश्च भवति ॥

'यथा' इत्यादि ॥ यथा पुरुषादयः आसादिताहारा जीर्यन्ते एवम् ᵛअग्निः ᵛआहितः ᵛजीर्यति[8]। 'संवत्सरस्य' इत्यादि। "अग्न आयूꣳषि पवसे" (तैसं १·५·५) इत्येताभिः षड्भिः संवत्सरे संवत्सरे ᵛउप ᵛतिष्ठते। "देवताद्वन्द्वे च" (पा ६·२·१४१) इत्युभयपदवृद्धिः, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् ॥

---

**षड्भिरिति** ॥ [3]–पूर्वोत्तरषट्काभ्यां प्रतिदिनमुपस्थानं विधत्ते–[3]—'षड्भिरुप तिष्ठते षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति षड्भिरुत्तराभिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति' इति ॥ 'उपप्रयन्तः' (तैसं १·५·५) इत्यादिकं पूर्वषट्कम्। 'अग्न आयूꣳषि' (तैसं १·५·५) इत्यादिकमुत्तरषट्कम् ॥

**यथेति** ॥ पूर्वषट्केन यथा प्रतिदिनमुपस्थानं तद्वदुत्तरेणापि[4] प्राप्ते कालविशेषं विधत्ते—'यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुप तिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येव' इति ॥ [5]–पुरुषादीनां चिरकाले देहो यथा जीर्यति तथाऽग्नेः–[5] [6]संवत्सरे प्राप्तां जरां निवार्य

---

६. ब–°फलहेतुरिति। ७. तं.ति.ब–नैवम्। ८. ब–जीर्यते।

---

३–३. क–उपस्थानं विधत्ते; इ.उ.तं.ति.पा–विधत्ते। ४. ति–°दुत्तरषट्केनापि। ५–५ आ–पुरुषादीनां चिरकालेनेवाग्नेः। ६. तं.ति–संवत्सर°।

**पुनर्नवमेवैनमजरं करोत्यथो पुनात्येवोप तिष्ठते योग एवास्यैष उप तिष्ठते (३) दम एवास्यैष उप तिष्ठते याच्ञैवास्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव**

पुनर्नवमिति पुनः—नवम् । एव । एनम् । अजरम् । करोति । अथो इति । पुनाति । एव । उपेति । तिष्ठते । योगः । एव । अस्य । एषः । उपेति । तिष्ठते ( ३ ) । दमः । एव । अस्य । एषः । उपेति । तिष्ठते । याच्ञा । एव । अस्य । एषा । उपेति । तिष्ठते । यथा । पापीयान् । श्रेयसे । आहृत्येत्या—हृत्य । नमस्यति । तादृक् । एव । तत् ।

'पुनर्नवम्' इत्यादि ॥ आयुरादिलाभात् । अथो अपि च पुनाति एव अग्निं जरया नाभिभूयते, पवमानस्यायं महिमेति । 'उप तिष्ठते योग एवास्यैषः' । उप-तिष्ठते इति यत् एषः अग्निः योगः संश्लेषः संपद्यते, यत्रायुरादीनि स्वयमेव संपद्यन्त इति । उप तिष्ठते इति यत् इदमग्नेरुपस्थानम् इदं दमः एव अस्य एषः क्रियते, दमो निबद्धस्तुतिकरपदैर्विधेयीकरणम् । यथाऽस्मै अभीष्टमकृत्वा स्थातुमपि न शक्नोति तथैनं दमयति—"अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः" ( तैसं १.५.५ ) इत्यादि । 'उप तिष्ठते' इति । उपस्थानव्याजेन स्वाभिमतानि अग्निं याचते—'आयूꣳषि पवस्व, ऊर्जमिषं चासुव, दुच्छुनां दूरे बाधस्व' इति । 'उप तिष्ठते' इति । परस्पराश्रयः प्रकर्षः । यथा स्वल्पैश्वर्यो जनः प्रभूतैश्वर्याय फलादिकमुपहृत्य नमस्यति तादृक् इदमुपस्थानम्; आराध्यैश्वर्यव्यापनार्थत्वात् । ततः सुप्रसन्नः स्वामी फलेनाभिमतेन पुरुषम् आराधयितारं योजयतीति । "नमोवरिवश्चित्रङः क्यच्" ( पा ३.१.१९ ) ॥

नूतनशरीरं शोधयितुं संवत्सरादूर्ध्वमुपस्थानम् । [7]अग्निदेवतायाः पवमानदेवतायाश्च[7] संबन्धिन्य ऋच आग्निपावमान्यः । यद्यप्यग्निरेव शोधकत्वात् पवमानस्तथाऽपि शोधकत्वोपाधेरन्यत्वमभिप्रेत्य निर्देशभेदः ॥

उपेति ॥ विहितमुपस्थानं चतुर्वारमनूद्य प्रशंसति—'उप तिष्ठते योग एवास्यैषोप तिष्ठते दम एवास्यैष उप तिष्ठते याच्ञैवास्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तत्' इति ॥ उप तिष्ठते इति यत् एषः एव अस्य अग्नेः योगः यजमानेन सहानुग्राह्यानुग्राहकरूपः संबन्धः । तथा दम दाहादिलक्षणोपद्रवनिवारणम् । तथा धनादियाच्ञा । किंच यथा लोके कश्चिद्दरिद्रो धनिकाय[8] किंचिदुपायनमानीय नमस्कारं करोति तादृक् इदमुपस्थानम् । 'अयमिह प्रथमो धायि धातृभिः' ( तैसं १.५.५ ) इति योग उक्तः । 'आरे बाधस्व दुच्छुनाम्' ( तैसं १.५.५ ) इति अनिष्टनिवारणम् । 'अथा नो वर्धया रयिम्' ( तैसं १.५.५ ) इति याच्ञा । 'मन्त्रं वोचेमाग्नये' ( तैसं १.५.५ ) इत्युपायनम् ॥

९. ब—संयोगः ॥

७-७. इ.उ.पा—अग्निदेवताभ्यश्च पवमानदेवताभ्यश्च । ८. इ.उ.पा.हा—धनिष्ठाय ।

तदायुर्दा अग्नेस्यायुर्मे देहीत्याहायुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह (४) तनूपा ह्येषोऽग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आ पूरयेति वावैतदाह चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्ट्यै वा एतस्यै

आयुर्दा इत्यायुः—दाः । अग्ने । असि । आयुः । मे । देहि । इति । आह । आयुर्दा इत्यायुः—दाः । हि । एषः । वर्चोदा इति वर्चः—दाः । अग्ने । असि । वर्चः । मे । देहि । इति । आह । वर्चोदा इति वर्चः—दाः । हि । एषः । तनूपा इति तनू—पाः । अग्ने । असि । तनुवम् । मे । पाहि । इति । आह (४) । तनूपा इति तनू—पाः । हि । एषः । अग्ने । यत् । मे । तनुवाः । ऊनम् । तत् । मे । एति । पृण । इति । आह । यत् । मे । प्रजाया इति प्र—जायै । पशूनाम् । ऊनम् । तत् । मे । एति । पूरय । इति । वाव । एतत् । आह । चित्रावसो इति चित्र-वसो । स्वस्ति । ते । पारम् । अशीय । इति । आह । रात्रिः । वै । चित्रावसुरिति चित्र—वसुः । अव्युष्टया इत्यवि—उष्टै । वै । एतस्यै ।

'आयुर्दाः' इत्यादि ॥ गतम् (तैसं १·५·५) ॥

'यन्मे प्रजायै' इत्यादि ॥ तनुवत् प्रधानत्वात् प्रजाश्च तनुशब्देनोच्यन्त इति दर्शयति । 'आ पूरय' इति । [10]पृणतिरापूरणकर्मेत्याचष्टे ॥

'रात्रिर्वै' इति ॥ चित्रा नानारूपा वसवो वस्तारो [11]यस्यामिति चित्रा अप्येकरूपा वसन्त्यस्यामित्यर्थः । 'अव्युष्टयै वा' इत्यादि । रात्रेरवसानं व्युष्टिः । एतस्या रात्रेः [v]अव्युष्टयै [v]अभैषुः । यद्वा—अव्युष्टयै व्याप्तिरहिताया रात्रेरभैषुः अव्युष्ट्याशङ्कया अभैषुरिति यावत् । छान्दसोऽन्तोदात्तत्वाभावः । तस्मात् 'स्वस्ति ते पारमशीय' इति प्रार्थनया [v]व्युष्टिम् [v]अव [v]रुन्द्धे । "तादौ च°" (पा ६·२·५०) इति गतेः प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः°" (पा ८·२·४) इत्युकारः स्वर्यते ॥

**आयुर्देति** ॥ त्रयाणां यजुषामर्थसिद्धिं[९] दर्शयति—'आयुर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽयुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह तनूपा ह्येषः' इति ॥

**अग्न इति** ॥ तनुशब्देन प्रजाः पशवश्चोपलक्षिता इत्यभिप्रेत्य व्याचष्टे—'अग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आ पूरयेति वावैतदाह' इति ॥

**चित्रावसविति** ॥ चित्रावसु[illegible]र्थं वाक्यतात्पर्यं च दर्शयति—'चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवाव रुन्द्धे' इति ॥ नक्षत्रादिरूपं

१०. ब–पृणेति प्रा पूरणे इत्याचष्टे । ११. ब–अस्यामिति ।

९. आ–°मर्थप्रसिद्धिम्; ति–°मर्थे प्रसिद्धिम्; हा–अर्थसिद्धिम् ।

पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवाव रुन्द्ध इन्धानास्त्वा शत॰ (५) हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणा॰ शततर्हा॰ स्तृ॰हन्ति

पुरा । ब्राह्मणाः । अभैषुः । व्युष्टिमिति वि-उष्टिम् । एव । अवेति । रुन्द्धे । इन्धानाः । त्वा । शतम् ( ५ ) । हिमाः । इति । आह । शतायुरिति शत-आयुः । पुरुषः । शतेन्द्रिय इति शत-इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । एषा । वै । सूर्मी । कर्णकावतीति कर्णक-वती । एतया । ह । स्म । वै । देवाः । असुराणाम् । शततर्हानिति शत-तर्हान् । तृ॰हन्ति ।

'शतायुः' इति ॥ शतवर्षः शतवीर्यः [v]पुरुषः । हिमशब्देन संवत्सराभिधानं व्याख्यातम् ( तैसं १.५.५ ) । [v]आयुषि [v]इन्द्रिये च प्रतिष्ठितो भवति अनया समिधमाधाय ॥

'एषा वै' इत्यादि । ज्वलन्ती लोहमयी स्थूणा [v]सूर्मी । गौरादित्वात् ङीष् ( पा ४.१.४१ ) । [v]कर्णकावती अन्तःसुषिरवती अन्तर्बहिश्च ज्वलन्तीत्यर्थः । सांहितिकं दीर्घत्वम् । तत्सदृशा ऋगित्यर्थः। '[12-]एतया' इत्यादि[-12] । असुराणां मध्ये [v]शततर्हान् अनेकप्रहारेण शतस्य हन्तॄन् [v]तृंहन्ति घ्नन्ति स्म [13]एतयर्चा । तृह हिंसायां रौधादिकः । "लट् स्मे" ( पा ३.२.११८ ) इति लट् । तस्मात् [v]एतया ऋचा [v]समिधम् आदधानः [v]वज्रं [14]शतघ्न्याख्यम् इन्द्रायुधसदृशीं [v]शतघ्नीं पूर्वोक्तां सूर्मीमेव [v]भ्रातृव्याय प्रहिणोति । तच्च [v]स्तृत्यै विनाशाय भ्रातृव्याणां भवति । [v]अछम्बट्कारम् अनार्तत्वाय चात्मनः ॥

चित्रमभिव्यक्ततया वसति अस्यामिति [v]रात्रिः [v]चित्रावसुः । अव्युष्टिः प्रभाताभावः[10] । हेमन्तर्तौ रात्रेर्दीर्घत्वेन प्रभातं न भविष्यत्येवेति कदाचित् [v]ब्राह्मणाः भीताः; अतः 'पारमशीय' इति प्रार्थनया प्रभातं लभते ॥

इन्धाना इति ॥ शतसंख्यां प्रशंसति—'इन्धानास्त्वा शतं हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति' इति ॥ अस्य मन्त्रस्योपस्थाने समिदाधाने च विनियोगद्वयं सूत्रकार उदाजहार—"इन्धानास्त्वा शत॰ हिमा इत्युपस्थायेन्धानास्त्वा शत॰ हिमाः । अग्नेः समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि परस्पा म एधि यमस्य समिदसि मृत्योर्मा पाहीति चतस्रः समिध एकैकस्मिन्नाधाय" ( आपश्रौ ६.१६.१२ ) इति । तत्रोपस्थानाङ्गत्वप्रस्तावेन[11] मन्त्रो व्याख्यातः ॥

एषेति ॥ अथ तस्यैव समिदाधानाङ्गत्वं विधत्ते—'एषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणा॰ शततर्हा॰ स्तृ॰हन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति

१२-१२. ब-एतया ऋचा देवाः । १३. ब-'एतचर्या' नास्ति । १४. ब-एव; तं-'शतघ्न्याख्यम्' नास्ति; ति-शतघ्न्या ।

१०. आ.हा-प्रभातान्तः । ११. आ-°ङ्गप्रस्तावेन; ति-°ङ्गत्वेन प्रस्तावेन ।

आहवनीयोपस्थानमन्त्राणां व्याख्यानम् ]

यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अच्छम्बट्कारꣳ सं त्वमग्ने सूर्यस्य वर्चसाऽगथा इत्याहैतत् त्वमसीदमहं भूयासमिति वावैतदाह त्वमग्ने सूर्यवर्चा असीत्याहाशिषमेवैतामा शास्ते ॥ ७॥

[ मूर्धानꣳ षड्वा एष उप तिष्ठते पाहीत्याह शतमहꣳ षोडश च ]

यत् । एतया । समिधमिति सम्-इधम् । आदधातीत्या-दधाति । वज्रम् । एव । एतत् । शतघ्नीमिति शत-घ्नीम् । यजमानः । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । अच्छम्बट्कारमित्यच्छम्बट्-कारम् । समिति । त्वम् । अग्ने । सूर्यस्य । वर्चसा । अगथाः । इति । आह । एतत् । त्वम् । असि । इदम् । अहम् । भूयासम् । इति । वाव । एतत् । आह । त्वम् । अग्ने । सूर्यवर्चा इति सूर्य-वर्चाः । असि । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते ॥ ७ ॥

[ मैसं १·५·८–९; कासं ७·५–६; कपिसं ५·४–५ शब्रा २·३·४·१०–२४ ]

‘ एतत् ’ इत्यादि ॥ एतादृशः [v]त्वम् [v]असि एतादृशोऽहं भूयासमिति एतन्मन्त्रप्रतिपाद्यमित्यर्थः । इदं चास्त्विति लोपविषयत्वात् “ चादिलोपे विभाषा ” ( पा ८·१·६३ ) इत्यसीत्याख्यातं न निहन्यते ॥

‘ त्वमग्ने ’ इत्यादि ॥ यथा त्वं सूर्यतुल्यतेजाः एवं मामपि तादृशेन तेजसा आयुषा प्रजया च संसृजेत्येवम् [v]आशिषम् अनेन [v]आ [v]शास्ते ॥

॥ इति प्रथमकाण्डस्य पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥

स्तृत्या अच्छम्बट्कारम् ’ इति ॥ ज्वलन्ती लोहमयी स्थूणा [v]सूर्मी । सा च [v]कर्णकावती छिद्रवती । अन्तरपि ज्वलन्तीत्यर्थः । तत्समानेयमृक् । एकेन प्रहारेण शतसंख्याकान् मारयन्तः शूराः शततर्हाः । [v]असुराणां मध्ये तादृशान् [v]एतया ऋचा देवा हिंसन्ति । अनया समिदाधानेन [v]शतघ्नीम् एनामृचं [v]वज्रं कृत्वा वैरिणं हन्तुं [v]प्र [v]हरति । [v]अच्छम्बट्कारं स्वस्य विनाशो यथा न भवति तथेत्यर्थः । [१२]-[v]स्तृत्यै नाशाभावेन विस्तीर्णताया इत्यर्थः-[१२] ॥

**समिति** ॥ ‘ सं त्वमग्ने ’ इत्यर्धेनाग्नेर्गुणकथनं स्वस्यापि तत्प्रार्थनायेत्याह—‘ सं त्वमग्ने सूर्यस्य वर्चसाऽगथा इत्याहैतत्त्वमसीदमहं भूयासमिति वावैतदाह ’ इति ।

**त्वमिति** ॥ द्वितीयार्धे ‘ सं मामायुषा ’ इति प्रार्थनमिति दर्शयति—‘ त्वमग्ने सूर्यवर्चा असीत्याहाऽऽशिषमेवैतामा शास्ते ’ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

१२–१२. इ.उ.क.तं.ति.पा–‘ स्तृत्यै......इत्यर्थः ’ नास्ति ।

**सं पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्द्धेऽम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येताः सहः स्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जः स्थोर्जं वो भक्षीयेत्या(१)होर्जो ह्येता रेवती रमध्वमित्याह**

समिति । पश्यामि । प्रजा इति प्र–जाः । अहम् । इति । आह । यावन्तः । एव । ग्राम्याः । पशवः । तान् । एव । अवेति । रुन्द्धे । अम्भः । स्थ । अम्भः । वः । भक्षीय । इति । आह । अम्भः । हि । एताः । महः । स्थ । महः । वः । भक्षीय । इति । आह । महः । हि । एताः । सहः । स्थ । सहः । वः । भक्षीय । इति । आह । सहः । हि । एताः । ऊर्जः । स्थ । ऊर्जम् । वः । भक्षीय । इति ( १ ) । आह । ऊर्जः । हि । एताः । रेवतीः । रमध्वम् । इति । आह ।

---

अथ ग्रहपश्वाद्युपस्थानमन्त्राणां ब्राह्मणम् । " सं पश्यामि " ( तैसं १.५.६ ) इत्यादि ग्रहाणां पशूनां चोपस्थानमन्त्रः । [v]ग्राम्याः [v]पशवः गोऽश्वाजाविपुरुषगर्दभोष्ट्राः सप्त ॥

' अम्भोः ह्येताः ' इति ॥ अदनीयं क्षीराद्यन्नमम्भः । " अदेर्नुम् भश्च " ( द्र. उ ६५५; ६३८, ६५७, ६५९ ) इत्यसुन् । तत्साधनत्वात् ताच्छब्द्यं गवाम् । एवं सर्वत्र द्रष्टव्यम् ॥

[v]महः पूजा वा ब्रह्म वा, यागादिद्वारेण तत्साधनत्वात् ।

[v]सहः बलं, घृतादीनां बलहेतुत्वात् ॥

[v]ऊर्जः क्षीरादिरसः ॥

---

**समिति** ॥ अष्टमेऽनुवाके षष्ठानुवाकोक्ता मन्त्रा व्याख्यायन्ते । तत्र ' इडप्रजसः ' इत्यनेन पदेन गवाश्वादयो विवक्षिता इत्यभिप्रेत्याऽऽह—' सं पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्द्धे ' इति ॥

**अम्भ इति** ॥ अम्भोमहःसहऊर्जशब्दै[illegible]लक्षणं युक्तमित्याह—' अम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येताः सहः स्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जः स्थोर्जं वो भक्षीयेत्याहोर्जो ह्येताः ' इति ॥

**रेवतीरिति** ॥ [1]रेवतीशब्देन विवक्षितं क्षीरादिधनम् आसामस्तीति व्युत्पत्तिमभिप्रेत्य व्याचष्टे—' रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवाऽऽत्मन् रमयते ' इति ॥ आत्मन् स्वकीयगृह इत्यर्थः ॥

---

१. ति–रैशब्देन ।

पशवो वै रेवतीः पशूनेवात्मन् रमयत. इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुत इष्टकचिद्वा अन्योऽग्निः पशुचिदन्यः सꣳहिताऽसि विश्वरूपीरिति वत्समभि मृशत्युपैवैनं धत्ते पशुचितमेनं कुरुते

पशवः । वै । रेवतीः । पशून् । एव । आत्मन् । रमयते । इह । एव । स्त । इतः । मा । अपेति । गात । इति । आह । ध्रुवाः । एव । एनाः । अनपगा इत्यनप-गाः । कुरुते । इष्टकचिदितीष्टक-चित् । वै । अन्यः । अग्निः । पशुचिदिति पशु-चित् । अन्यः । सꣳहितेति सम्-हिता । असि । विश्वरूपीरिति विश्व-रूपीः । इति । वत्सम् । अभीति । मृशति । उपेति । एव । एनम् । धत्ते । पशुचितमिति पशु-चितम् । एनम् । कुरुते ।

---

[v]पशवः [v]वै [v]रेवतीः रेवत्यः, क्षीरादिसाधनेन तद्वत्त्वात् । "रयेर्मतौ बहुलम्" (पा ६.१.३७ वा ६) इति संप्रसारणम् । "वा छन्दसि" (पा ६.१.१०६) इति पूर्वसवर्णदीर्घत्वम् । रेवतीशब्दः पशूनां संज्ञात्वेनाजहत्स्वलिङ्ग एव पशुषु वर्तते ॥

[v]ध्रुवाः नित्याः [v]अनपगाः अनपाक्ताः ॥

'इष्टकचित्' इत्यादि ॥ इष्टकाभिश्चीयत एकः [v]अग्निः । "इष्टकेषीकामालानाम्" (पा ६.३.६५) इति ह्रस्वत्वम् । पशुभिरेकोऽग्निश्चीयते । तत्र "सꣳहिता" (तैसं १.५.६) इति मन्त्रेणाग्निहोत्रीवत्सस्याभिमर्शनेन उपधानस्थानीयेन एवं वत्सम् [v]उप [v]धत्ते । पशुचितम् एनम् अग्निं कुर्वाणो भवति ॥

---

इहेति ॥ 'स्त' इत्यनेन ध्रुवजीवनं, 'माऽप गात' इत्यनेन वियोगाभावश्च प्रार्थ्यत इत्याह— 'इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुते' इति ॥

इष्टकचिद्विति ॥ [2]वत्सस्पर्शं विधत्ते—'इष्टकचिद्वा अन्योऽग्निः पशुचिदन्यः सꣳहितासि विश्वरूपीरिति वत्समभि मृशत्युपैवैनं धत्ते पशुचितमेनं कुरुते' इति ॥ इष्टकामुपधाय यथा कश्चिदग्निः चीयते तथा पशुमुपधाय [v]अन्यः [v]अग्निः चीयत इत्युत्प्रेक्षते । तथा सति वत्सस्पर्शेन पशुमुपधायाग्निश्चितो भवति ॥

---

२. इ.उ.पा—वत्से स्पर्शम् ।

प्र (२) वा एषोऽस्माल्लोकाच्च्यवते य आहवनीयमुपतिष्ठते गार्हपत्यमुप तिष्ठतेऽस्मिन्नेव लोके प्रति तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते गायत्रीभिरुप तिष्ठते तेजो वै गायत्री तेज एवाऽऽत्मन् धत्तेऽथो यदेतं तृचमन्वाह संतत्यै

प्रेति (२) । वै । एषः । अस्मात् । लोकात् । च्यवते । यः । आहवनीयमित्या–हवनीयम् । उपतिष्ठत इत्युप–तिष्ठते । गार्हपत्यमिति गार्ह–पत्यम् । उपेति । तिष्ठते । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । अथो इति । गार्हपत्यायेति गार्ह–पत्याय । एव । नीति । ह्नुते । गायत्रीभिः । उपेति । तिष्ठते । तेजः । वै । गायत्री । तेजः । एव । आत्मन् । धत्ते । अथो इति । यत् । एतम् । तृचम् । अन्वाहेत्यनु–आह । संतत्या इति सम्–तत्यै ।

~~~~~~~~~~~~~~~~~~~~

‘ प्र वा एषः ’ इत्यादि ॥ “ सुवर्गो लोक आहवनीयः ” ( तैब्रा १·६·३ ) इत्यन्यत्र दर्शनात् । ‘ गार्हपत्यम् ’ इति । “ गृहपतिना संयुक्ते ञ्यः ” ( पा ४·४·९० ) [१-]इति ञ्यः[-१] । [v]अथो अपि च उपस्थानेन [v]गार्हपत्याय [v]नि [v]ह्नुते प्रह्वीभवति । यद्वा—आहवनीयं छादयति—‘ त्वमेवोपस्थेयः ’ इति ॥

‘ गायत्रीभिः ’ इति ॥ “ उप त्वाऽग्ने दिवेदिवे ” ( तैसं १·५·६ ) इत्येताभिस्तिसृभिः । ‘ तेजो वै ’ इति । पूर्ववत् ताच्छब्द्यम् । [v]अथो अपि च एतस्य तृचस्यानुवचनं [v]संतत्यै भवति । “ पितेव सूनवे ” ( तैसं १·५·६ ) इति च मन्त्रपदम् । “ तादौ च° ” ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरत्वम् । तिस्र ऋचः समाहिताः । “ ऋक्पूरब्धूः° ” ( पा ५·४·७४ ) इति समासान्तः, “ ऋचि त्रेरुत्तरपदादिलोपश्च ” ( पा ६·१·३७ वा ५ ) इति संप्रसारणम् ॥

~~~~~~~~~~~~~~~~~~~~

प्रेति ॥ गार्हपत्योपस्थानं विधत्ते—‘ प्र वा एषोऽस्माल्लोकाच्च्यवते य आहवनीयमुपतिष्ठतेऽस्मिन्नेव लोके प्रति तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते ’ इति ॥ “सुवर्गो लोक आहवनीयः” ( तैब्रा १·६·३ ) इति श्रुत्यन्तरात् तदुपस्थानादेतल्लोकप्रच्युतिः । सा च गार्हपत्योपस्थानेन समाधीयते । किं चाऽऽहवनीय एव तात्पर्योपेतं गार्हपत्यमुपतिष्ठमानः स्वप्रतिष्ठासिद्ध्यर्थं केवलं तम् अपलपति ॥

गायत्रीरिति ॥ ‘ उप त्वाऽग्ने ’ इत्याद्यास्तिस्र ऋचो विधत्ते—‘ गायत्रीभिरुप तिष्ठते तेजो वै गायत्री तेज एवाऽऽत्मन्धत्तेऽथो यदेतं तृचमन्वाह संतत्यै ’ इति । प्रजापतिमुखादग्निना सहोत्पन्नत्वात् गायत्र्यास्तेजस्त्वम् । तृचानुवचनमविच्छेदार्थम् ॥

~~~~~~~~~~~~~~~~~~~~

१–१. ब–‘ इति ञ्यः ’ नास्ति ।
~~~~~~~~~~~~~~~~~~~~

**गार्हपत्यं वा अनु द्विपादो वीराः प्र जायन्ते य एवं विद्वान् द्विपदाभिर्गार्हपत्यमुपतिष्ठत (३) आऽस्य वीरो जायत ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाऽऽशिषमेवैतामा शास्ते तत्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवाव रुन्द्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्द्धे**

गार्हपत्यमिति गार्ह–पत्यम् । वै । अन्विति । द्विपाद इति द्वि–पादः । वीराः । प्रेति । जायन्ते । यः । एवम् । विद्वान् । द्विपदाभिरिति द्वि–पदाभिः । गार्हपत्यमिति गार्ह–पत्यम् । उपतिष्ठत इत्युप–तिष्ठते ( ३ ) । एति । अस्य । वीरः । जायते । ऊर्जा । वः । पश्यामि । ऊर्जा । मा । पश्यत । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । तत् । सवितुः । वरेण्यम् । इति । आह । प्रसूत्या इति प्र–सूत्यै । सोमानम् । स्वरणम् । इति । आह । सोमपीथमिति सोम–पीथम् । एव । अवेति । रुन्द्धे । कृणुहि । ब्रह्मणः । पते । इति । आह । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । एव । अवेति । रुन्द्धे ।

‘ गार्हपत्यं वा ’ इत्यादि ॥ लक्षणेऽनोः कर्मप्रवचनीयत्वम् ( पा १·४·८४ ) । ‘ द्विपादः ’ इति । “ संख्या सुपूर्वस्य ” ( पा ५·४·१४० ) इति लोपः समासान्तः । ‘ द्विपदाभिः ’ इति । “ अग्ने त्वं नः ” ( तैसं १·५·६ ) इति तिसृभिर्द्विपदाभिर्विराड्गायत्रीभिरिति । पूर्ववत् समासान्तः ( पा ५·४·१४० ) । “ टाबृचि ” ( पा ४·१·९ ) इति टापि, “ पादः पत् ” ( पा ६·४·१३० ) इति पद्भावः । “ द्वित्रिभ्यां पाद्दन्” ( पा ६·२·१९७ ) इत्युभयत्राप्युत्तरपदान्तोदात्तत्वम् ॥

‘ ऊर्जा वः ’ इत्यादि ॥ अयमपि ग्रहपशूपस्थानमन्त्रः । ‘ पुष्यासम् ’, ‘ श्रयन्ताम् ’ इति ᵛएताम् ᵛआशिषम् ᵛआ ᵛशास्ते ॥

‘ तत्सवितुः ’ इति आहवनीयोपस्थानम् । ᵛप्रसूत्यै अनुज्ञानाय भवति । पूर्ववत् गतिस्वरः ( पा ६·२·४९,५० ) ॥

‘ सोमानम् ’ इत्याहवनीयोपस्थानमेव ॥

**गार्हपत्यमिति** ॥ ‘ अग्ने त्वं नः ’ इत्याद्यास्तिस्रो द्विपदा विधत्ते—‘ गार्हपत्यं वा अनु द्विपादो वीराः प्र जायन्ते य एवं विद्वान् द्विपदाभिर्गार्हपत्यमुपतिष्ठत आऽस्य वीरो जायते ’ इति ॥

**उर्जेति** ॥ ‘ पश्यत ’ इति लोट् आशीरर्थत्वं दर्शयति—“ ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाऽऽशिषमेवैतामा शास्ते ’ इति ॥

**तदिति** ॥ सवितृसोमब्रह्मशब्दानामभिप्रायमाह— तत्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ स्वरणमित्याह सोमपीथमेवाव रुन्द्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्द्धे ’ इति ॥

कदा चुन स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति (४) य एवं विद्वानग्निमुपतिष्ठते परि त्वाऽग्ने पुरं वयमित्याह परिधिमेवैतं परि दधात्यस्कन्दायाग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह

कदा । चन । स्तरीः । असि । इति । आह । न । स्तरीम् । रात्रिम् । वसति (४) । य । एवम् । विद्वान् । अग्निम् । उपतिष्ठत इत्युप-तिष्ठते । परीति । त्वा । अग्ने । पुरम् । वयम् । इति । आह । परिधिमिति परि-धिम् । एव । एतम् । परीति । दधाति । अस्कन्दाय । अग्ने । गृहपत इति गृह-पते । इति । आह । यथायजुरिति यथा-यजु । एव । एतत् । शतम् । हिमा । इति । आह । शतम । त्वा । हेमन्तान् । इन्धिषीय । इति । वाव । एतत् । आह ।

---

सोमपीथम् एव सोमपानमेव अनेन अव रुन्धे । पिबतेरौणादिकस्थक्प्रत्ययः ( उ १७२ ) ॥

'ब्रह्मवर्चसम्' इति ॥ "ब्रह्महस्तिभ्यां वर्चस" ( पा ५ ४ ७८ ) इत्यच् ॥

'कदा चन' इति रात्र्युपस्थानम् ॥ य एवम् अस्य मन्त्रस्यार्थं विद्वान् अग्न्यात्मिकां रात्रिम् उपतिष्ठते स स्तरीं छादयित्रीं विनाशयित्रीं रात्रिं न वसति, अपि तु सुखयित्रीमेवाधिवसति सुखहेतुरेव भवतीति यावत् । "अवितृस्तृतन्त्रिभ्य ई" ( उ ४४६ ) इतीप्रत्यय ॥

'परि त्वा' इति गार्हपत्योपस्थानम् ॥ इममेव मन्त्र परिध्यात्मक परित सर्वत दधाति । तच्चास्कन्दायाग्नेर्भवति ॥

'अग्ने गृहपते' इति गार्हपत्योपस्थानमेव ॥ अत्र सुगृहपतित्वादिफल यथा यजुर्वदति तथा भवत्येव ॥

---

कदेति ॥ 'स्तरीरसि न' इति निषेधस्याभिप्रायमाह—'कदा चन स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति य एवं विद्वानग्निमुपतिष्ठते' इति । अन्धकारयुक्ता रात्रिश्चोरव्याघ्रादिबाधयुक्तत्वात् स्तरीरित्युच्यते । विद्वानुपस्थाता तादृशीं रात्रिं नाधिवसति किंतु सुखकरीमित्यर्थः ॥

परीति ॥ 'परि धीमहि' इति लिङ्गात् मन्त्र एवाग्नेरस्कन्दनार्थः परिधिरित्याह—'परि त्वाऽग्ने पुरं वयमित्याह परिधिमेवैतं परि दधात्यस्कन्दाय' इति ॥

अग्नेरिति ॥ मन्त्रस्य स्पष्टार्थतां दर्शयति—'अग्ने गृहपत इत्याह यथायजुरेवैतत्' इति ॥

शतमिति ॥ हिमशब्दो हेमन्तवाचीत्याह—'शतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह' इति । एवं युग्मम् ॥

पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मती(५)मिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात् तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात् तेज एवास्मिन् ब्रह्मवर्चसं दधाति ॥ ८ ॥

[ ऊर्जं वो भक्षीयेति प्र गार्हपत्यमुप तिष्ठते वसति ज्योतिष्मतीमेकान्निंशच्च ]

पुत्रस्य । नाम । गृह्णाति । अन्नादमित्यन्न—अदम् । एव । एनम् । करोति । ताम् । आशिषमित्या—शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः । अजातः । स्यात् । तेजस्वी । एव । अस्य । ब्रह्मवर्चसीति ब्रह्म—वर्चसी । पुत्रः । जायते । ताम् । आशिषमित्या—शिषम् । एति । शासे । अमुष्मै । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः । जातः । स्यात् । तेजः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । दधाति ॥ ८ ॥

[ मैसं १·५·८–११; कासं ७·६–९; कपिसं ५·५; शब्रा २·३·४·२५–४१ ]

'शतं त्वा' इति ॥ हिमशब्देन संवत्सराभिधानमुक्तम् ( तैसं १·५·५ ) । 'इन्धिषीय' इति । इदमेव सुगृहपतित्वमिति ॥

'पुत्रस्य' इति ॥ 'अमुष्मै' इत्यत्र यथा 'नारायणाय केशवाय' इति । 'अन्नादम्' इति । इदमेव ज्योतिष्मत्त्वम् ।

'यस्य पुत्रः[2]' इति ॥ यस्य अजातः पुत्रः तस्य 'तन्तवे' इति ब्रूयात् असंनिहितत्वात् । '[3]अमुष्मै' इति अजातं निर्देष्टुं न शक्यते[3] इति तन्तव इत्युच्यते । 'अमुष्मै' इति जातपुत्रस्य अदःशब्दस्य संनिहितविषयत्वात् ॥

॥ इति पञ्चमप्रपाठके अष्टमोऽनुवाकः ॥

तामिति ॥ अनुत्पन्नपुत्रविषयस्तन्तुशब्दः, उत्पन्नपुत्रविषयोऽदःशब्द इति व्यवस्थां दर्शयति—'तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति' इति ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

"ऐन्द्र्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम् ।
समुच्चयो वोत शक्र[1] एकोऽग्निः केवलोऽथ वा ॥

२. 'पुत्रः' इत्यस्यानन्तरम् 'अजातः स्यात्' । ३–३. मै—अमुष्मा इति जातं निर्देष्टुं शक्यते ।

१. इ.उ.पा—शक्तः ।

विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः ।

श्रुतिः शक्त्यनुसारेति शङ्क एकोऽत्र लिङ्गतः ॥

शक्तिकॢप्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम् ।

नैराकाङ्क्ष्यात्मके बाधे श्रुत्याऽग्नौ केवले स्थितिः" ॥ (जैन्या ३ ३ १७-१९ ) इति ॥

"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" ( मैस १ २ ४ ) इति श्रूयते। "कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे" ( तैस १ ५ ८ ) इत्यसावृगैन्द्री, तत्रेन्द्रस्य प्रकाशनात्। हे इन्द्र, त्वं कदाचिदपि घातको न भवसि किंत्वाहुतिं दत्तवते यजमानाय प्रीयस इत्यर्थः । तत्रेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गात् मन्त्रस्येन्द्रविषयक्रियासाधनत्वं गम्यते । यद्यसौ मन्त्र इन्द्रप्रधानकक्रियायाः साधनं न भवेत् तदानीमनेन मन्त्रेणेन्द्रप्रकाशनं व्यर्थं स्यात्। तस्मादेतन्मन्त्रकरणकक्रियां प्रतीन्द्रः प्रधानमित्येतादृशबुद्धयुत्पादनं लिङ्ग-विनियोगः। काऽसौ क्रियेति विशेषजिज्ञासायाम् "ऐन्द्र्योपतिष्ठते" ( मैस १ २ ४ ) इत्यनेनाविरुद्धपदद्वय-रूपेण वाक्येनोपस्थानक्रियायां पर्यवसानं क्रियते। तथा सति ऐन्द्रमन्त्रेण इन्द्रमुपतिष्ठत इत्ययमर्थं पर्यव-स्यति । तथा 'गार्हपत्यम्' इत्यनया द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते। तच्च गुणभूतां यत्किंचित्करणकक्रियामन्तरेण न संभवति। ततस्तादृशीं कांचित् क्रियां प्रति गार्हपत्यप्राधान्य-मित्येतादृशबुद्धयुत्पादनं श्रुतिविनियोगः। 'ऐन्द्र्योपतिष्ठते' इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति। तथा सत्यैन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति। तदेवं श्रुतिलिङ्गयोर्विरोधे सति प्रमाणत्वाविशेषात् व्रीहियववद्विकल्प इत्येकः पूर्वपक्षः। इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषात् उपस्थानस्य गुणत्वात् 'प्रतिप्रधानं गुणावृत्तिः' ( द्र शाभा-जैसू ३ ३ १४ ) इति न्यायेनोपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चय इति द्वितीयः पूर्वपक्षः। श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते। अन्यथा 'वह्निना सिञ्चेत्, वारिणा दहेत्' इत्यपि विनियुञ्ज्येत। तत उपजीव्यत्वेन लिङ्गस्य प्रबलत्वादिन्द्र एव मन्त्रेणोपस्थेय इति तृतीयः पूर्वपक्षः। ऐन्द्रमन्त्रस्य गार्हपत्ये मुख्यवृत्त्या शक्त्यभावेऽपि गौणवृत्त्या शक्तिरस्तीति निवेशन* ( जैन्या ३ २ ३-४ ) इत्यस्मिन्नुदाहरणे पूर्वमेव दर्शितम्। तथा सति सामर्थ्या-भावकृतप्रतिबन्धाभावान्निर्विघ्ना श्रुतिः शीघ्रं विनियुङ्क्ते। लिङ्गं तु विलम्बते। मन्त्रपदान्यादौ स्वाभि-धेयमर्थं प्रतिपादयन्ति। तत ऊर्ध्वं मन्त्रस्य सामर्थ्यं निरूप्यते। पश्चात् सामर्थ्यवशात् साधनत्ववाचिनी प्राधान्यवाचिनी च श्रुतिः कल्प्यते[6]। सा च[7] श्रुतिर्मन्त्रेणेन्द्रमुपतिष्ठेतेति विनियुङ्क्ते। तथा सति प्रत्यक्षश्रुतौ स्वाभिधेयप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ न स्त इति प्राबल्यात्तया लिङ्गं बाध्यते। न च प्रत्यक्षश्रुतिविनियोगवेलायामलब्धात्मकत्वेन[8] अप्राप्तं लिङ्गं[9] कथं बाध्येतेति शङ्कनीयम्। भविष्यत्प्राप्तिप्रतिबन्धस्यैवात्र बाधत्वात् श्रुत्या विनियुक्तस्य मन्त्रस्य पुनर्विनि-योगाकाङ्क्षाया अनुदयाद्विनियोजकं[10] लिङ्गं कथं प्राप्स्यति। तस्माद्गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

४ ति–तत्र। ५ ति–पक्षः। ३* (द्र मैसं २ २४ 'निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्ह-पत्यमुपतिष्ठते', द्र शाबरभाष्य–जैसू ३ २ ३–४)। ६ आ हा–कल्पते। ७ आ–च। ८ तं–विलम्बा-त्मकत्वेन, ति–अविलम्बात्मकत्वेन। ९ इ उ पा–'लिङ्गम्' नास्ति। १० तं ति–'लिङ्गम्' नास्ति।

अभ्युपस्थानस्याग्निहोत्राङ्गता ]

अग्निहोत्रं जुहोति यदेव किं च यजमानस्य स्वं तस्यैव तद्रेतः सिञ्चति प्रजनने प्रजननꣳ हि वा अग्निरथौषधीरन्तगता दहति तास्ततो भूयसीः प्र जायन्ते

अग्निहोत्रमित्यग्नि-होत्रम् । जुहोति । यत् । एव । किम् । च । यजमानस्य । स्वम् । तस्य । एव । तत् । रेतः । सिञ्चति । प्रजनन इति प्र-जनने । प्रजननमिति प्र-जननम् । हि । वै । अग्निः । अथ । ओषधीः । अन्तगता इत्यन्त-गताः । दहति । ताः । ततः । भूयसीः । प्रेति । जायन्ते ।

अथाग्निहोत्रब्राह्मणमग्न्यार्षेयम् । तत्र 'अग्निहोत्रं जुहोति' इति विधिः । अस्त्ययमग्निहोत्रशब्दः कर्मणो नाम, हूयतेऽस्मिन्निति होत्रम् । "हुयामाश्रुवसि" (द्र. उ ६१७) इत्यादिना त्रन्प्रत्ययः[1] । षष्ठीसमासान्तोदात्तत्वम्[*] । यथा—"असंस्थितो वा एष यज्ञः । यदग्निहोत्रम्" (तैब्रा २·१·४) इति । अग्नेर्हविषो नाम, हूयते इति होत्रमिति, यथा—"अहरहर्यजमानः स्वयमग्निहोत्रं जुहुयात्" (द्र. आपश्रौ ६·१५·१४) इति । ब्राह्मणं च भवति "तुभ्यमेवेदं हूयातै" (तैब्रा २·१·२) इत्यादि । अस्ति गोर्नाम—यथा "अग्नेर्हुतादजनीति । तदग्निहोत्रस्य" (तैब्रा २·१·६) इत्यादि । अग्नेर्होमः अग्निहोत्रं, तदर्था गौरभेदेनोच्यते, "गौर्वा अग्निहोत्रम्" (तैब्रा २·१·६) इति 'अग्निहोत्री वत्सम्' इत्यादि । गौरादिलक्षणो ङीष् द्रष्टव्यः (पा ४·१·४१) । तत्र हविर्वाचिन इह ग्रहणम् । अयमर्थः —विशिष्टकालप्रयोज्यमग्निहोत्राख्यं हविर्जुहुयादिति । Vयत् Vएव Vकिं Vच यत्किंचिदपि पयो वा दधि वा यवागूं वा जुहोति द्रव्यं Vतत् Vतस्य Vएव Vयजमानस्य Vस्वम् अविनष्टमेव तिष्ठति तं च न मुञ्चति । ननु दग्धमविनष्टं तिष्ठतीत्यसमीचीनम् । तत्राह—'रेतः' इत्यादि । सदृशप्रधानो निर्देशः । यथा Vप्रजनने योनौ [2]सिक्तं Vरेतः शुक्रम्[2] अविनष्टं तिष्ठति तत्सदृशमिदमिति जानीयादित्यर्थः । प्रजायन्ते प्रजा अस्मिन्निति प्रजननम् । "करणाधिकरणयोश्च" (पा ३·३·११७) इत्यधिकरणे ल्युट् । अथाग्नेः प्रजननत्वं समर्थयते—'प्रजननं हि' इति । ताद्धर्म्यात्ताच्छब्द्यम् । प्रजननसदृशोऽयमग्निरिति । नन्वग्निर्नाम सर्वं दहति, तत् कीदृशमस्य प्रजननसामर्थ्यमिति

अग्निहोत्रमिति ॥ नवमेऽनुवाके पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गता प्रदर्श्यते । तत्र तावदग्निहोत्रं विधत्ते—'अग्निहोत्रं जुहोति यदेव किं च यजमानस्य स्वं तस्यैव तत्' इति ॥ वाक्यान्तरविहितेन पयोदधियवाग्वादिद्रव्येणाग्निहोत्रनामकं होमं कुर्यात् । Vयजमानस्य क्षीरप्रभृतिकं यत् Vस्वम् अग्नौ हुतं न तद्विनश्यति किंतु Vतस्य Vएव यजमानस्य Vतत् स्वं भूत्वा तिष्ठति ॥

रेत इति ॥ तदवस्थानं दृष्टान्तेनोपपादयति—'रेतः सिञ्चति प्रजनने प्रजननꣳ हि वा अग्निः' इति । यथा प्रजोत्पादके योनौ सिक्तं Vरेतः अवतिष्ठते तथाऽग्नेः प्रजननरूपत्वात् तस्मिन् हुतमवतिष्ठते ॥

१. शुक्लीकृतः; मै—ष्ट्रकप्रत्ययः; तं—ति—ष्ट्रन्प्रत्ययः । *(द्र. पा ६·१·२२३) । २-२. मै—रेतः सिक्तम्; ब—सिक्तं रेतः शुक्रम् ।

यत् सायं जुहोति रेत एव तत् सिञ्चति प्रैव प्रातस्तनेन जनयति तद्रेतः सिक्तं न त्वष्ट्राऽविकृतं प्र जायते यावच्छो वै रेतसः सिक्तस्य (१) त्वष्टा रूपाणि विकरोति

यत् । सायम् । जुहोति । रेत । एव । तत् । सिञ्चति । प्रेति । एव । प्रातस्तनेनेति प्रातः—तनेन । जनयति । तत् । रेत । सिक्तम् । न । त्वष्ट्रा । अविकृतमित्यवि—कृतम् । प्रेति । जायते । यावच्छ इति यावत्–श । वै । रेतस । सिक्तस्य ( १ ) । त्वष्टा । रूपाणि । विकरोतीति वि—करोति ।

पर्यनुयोगावसरे प्रजननसामर्थ्यं दर्शयितुमाह—'अथौषधीरन्तगता दहति' इति । अथ इति प्रस्तावे । अन्त समीप गता अन्तगता । "द्वितीया श्रित" (पा २ १ २४) इति समास । द्वितीयापूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २) । अयमग्निरेव समीपे निपतिता ओषधी दहति, ता यदृच्छानिपतिता अमन्त्रहुता अपि तत दग्धस्वरूपाभ्यो भूयसी भूयस्य बहुतरा: प्र जायन्ते । यदैवमिद पश्याम तदा किं पुनर्मन्त्रहुता इति । "धा छन्दसि" (पा ६ १·१०६) इति पूर्वसवर्णदीर्घत्वम् । तस्मादुपपन्नमग्ने प्रजननत्वम् । अतस्तत्र हुत तस्यैव स्वं भूयिष्ठ च प्रथते इति । उक्त च—"यावदेका देवता" (तैब्रा ३ २ ६) इत्यादि । तस्मात् 'अग्निहोत्र जुहोति' इति ॥

अथ साय प्रातश्च होम विधातुमाह—'यत्सायम्' इत्यादि ॥ गतम् ॥

अग्नेरुपस्थानं विधातुमाह—'तद्रेत' इत्यादि ॥ तदुक्तम्—"रेतः सिञ्चति प्रजनने" (तैस १ ५ ९) इति । तत् रेत सिक्तम् अपि यदि त्वष्ट्रा न विक्रियते नैव प्र जायते, 'त्वष्टा वै रूपाणि विकरोति' (द्र. तैस २ ४·६) इति । तद्विकुर्वन् त्वष्टा यावन्ति रूपाणि

---

अथेति ॥ ननु वह्निसमीपे प्राप्तानां तृणानां दाहः प्रत्यक्षेणोपलभ्यत इत्याशङ्क्याऽऽह[1]—'अथौषधीरन्तगता दहति तास्ततो भूयसीः प्र जायन्ते' इति ॥ यद्यपि घर्मकाले दावाग्निः स्वसमीपं प्राप्ताः ओषधीः दहति तथापि दग्धाः ताः ओषधयो वृष्टिकाले भूयस्यः प्र जायन्ते । तस्मात् प्रजननोऽग्निः ॥

यदिति ॥ कालद्वयं विधत्ते—'यत् सायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति तत्' इति ॥ सायंकालीनहोमेन सेचनम्[2] । प्रातःकालीनहोमेनोत्पादनम् । विहितस्याग्निहोत्रस्याङ्गमुपस्थानं विधत्ते—'रेतः सिक्तं न त्वष्ट्राऽविकृतं प्र जायते यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति

---

१ मै–पूर्वं दग्धस्वरूपेभ्यः; तं ति–आदग्धस्वरूपेभ्यः ।

---

१ इ स पा–इत्याह । २–२ इ उ क पा तं–'सायंकालीनहोमेन सेचनम्' नास्ति ।

तावच्छो वै तत् प्र जायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुप तिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि वि करोति स प्रैव जायते श्वःश्वो भूयान् भवति य एवं विद्वानग्निमुपतिष्ठतेऽहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत् तेन सह (२) रात्रिं प्राविशन् ते देवा हीना अमन्यन्त

तावच्छ इति तावत्–शः । वै । तत् । प्रेति । जायते । एषः । वै । दैव्यः । त्वष्टा । यः । यजते । बह्वीभिः । उपेति । तिष्ठते । रेतसः । एव । सिक्तस्य । बहुश इति बहु–शः । रूपाणि । वीति । करोति । सः । प्रेति । एव । जायते । श्वःश्व इति श्वः–श्वः । भूयान् । भवति । यः । एवम् । विद्वान् । अग्निम् । उपतिष्ठत इत्युप–तिष्ठते । अहः । देवानाम् । आसीत् । रात्रिः । असुराणाम् । ते । असुराः । यत् । देवानाम् । वित्तम् । वेद्यम् । आसीत् । तेन । सह ( २ ) । रात्रिम् । प्रेति । अविशन् । ते । देवाः । हीनाः । अमन्यन्त ।

[V]वि [V]करोति तावत् रूपं [V]तत् [V]प्र [V]जायते । "संख्यैकवचनाच्च वीप्सायाम्" (पा ५·४·४३) इति शस् । 'एष वै' इत्यादि । देवेषु भवो दैव्यः सामन्त इत्यर्थः । "देवाद्यञञौ" (पा ४·१·८५ वा ३) । 'बह्वीभिरुप तिष्ठते' इति विधिः । उत्तराहुत्यनन्तरम् "उपप्रयन्तः" (तैसं १·५·५) इत्येतत्प्रभृतिभिः ऋग्भिः बह्वीभिः [V]उप [V]तिष्ठते । "नित्यं छन्दसि" (पा ४·१·४६) इति ङीष् । "उपान्मन्त्रकरणे" (पा १·३·२५) इत्यात्मनेपदम् । 'रेतस एव' इत्यादि । [V]बहुशः बहूनि । "बह्वल्पार्थात्" (पा ५·४·४२) इति शस् । 'भूयान्' इति । अद्यतनापेक्षया श्वस्तनः प्रकृष्यते । पुनरप्युपस्थानगुणान् विधातुमाह—'अहः' इत्यादि । [V]वित्तं लब्धं [V]वेद्यं लब्धुं योग्यं धनं पशुलक्षणं [V]यत् [V]आसीत् तत् सर्वमादाय [V]तेन [V]सह [V]रात्रिं [V]प्र [V]अविशन्, [V]ततस्ते [V]देवाः

तावच्छो वै तत्प्र जायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुप तिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि वि करोति' इति । लोके योनौ सिक्तं [V]रेतः विश्वकर्मणा यदि [V]न विक्रियेत तदा नैव प्रजोत्पत्तिरस्ति । स च [V]त्वष्टा यावन्ति [V]रूपाणि उद्दिश्य रेतो विविधं करोति तावन्त्युत्पद्यन्ते । अत्रापि यजमानो देवैरनुगृहीतः [V]त्वष्टा ततो विविधरूपकरणाय [V]बह्वीभिः [V]उप [V]तिष्ठते । अयमुपस्थानकर्मविधिः । एतदनुवादेन षड्भिः उपतिष्ठते । इत्यादिमन्त्रविधिः ॥

स इति ॥ उपस्थानं प्रशंसति—'स प्रैव जायते श्वःश्वो भूयान् भवति य एवं विद्वानग्निमुपतिष्ठते' इति । उपस्थाता प्रजामुत्पाद्य प्रतिदिनमुत्तरोत्तरं धनादिभिर्वर्धते ॥

अहरिति ॥ प्रकारान्तरेण प्रशंसति—'अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन् ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निं स्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि

४. पं–ततः; तं.ति.मै–तत्र ।

तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून् निरार्जत् ते देवाः पशून् वित्त्वा कामाꣳ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान् भवत्या(३)दित्यो वा अस्माल्लोकादमुं लोकमैत् सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत् स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳ स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति

ते । अपश्यन् । आग्नेयी । रात्रिं । आग्नेया । पशवं । इमम् । एव । अग्निम् । स्तवाम । स । न । स्तुत । पशून् । पुनं । दास्यति । इति । ते । अग्निम् । अस्तुवन् । स । एभ्य । स्तुत । रात्रिया । अधीति । अह । अभीति । पशून् । निरिति । आर्जत् । ते । देवा । पशून् । वित्त्वा । कामान् । अकुर्वत । य । एवम् । विद्वान् । अग्निम् । उपतिष्ठत इत्युप–तिष्ठते । पशुमानिति पशु–मान् । भवति ( ३ ) । आदित्य । वै । अस्मात् । लोकात् । अमुम् । लोकम् । ऐत् । सः । अमुम् । लोकम् । गत्वा । पुनं । इमम् । लोकम् । अभीति । अध्यायत् । स । इमम् । लोकम् । आगत्येत्या–गत्य । मृत्यो । अबिभेत् । मृत्युसंयुत इति मृत्यु–सयुत । इव । हि । अयम् । लोक॰ । स । अमन्यत । इमम् । एव । अग्निम् । स्तवानि । स । मा । स्तुत । सुवर्गमिति सुव–गम् । लोकम् । गमयिष्यति । इति ।

अपहृतपशवो [v]हीना स्म इति [v]अमन्यन्त । ‘ तेऽपश्यन् ’ इत्यादि । [5]अग्नेरियम्, “ सर्वत्राग्नि-कलिभ्याम्° ” ( द्र पाभा ४ २ ८ वा २ ) इति ढक् । ‘ स एभ्य ’ इत्यादि[5] । [v]अधि अनर्थक । [v]अह [v]अभि अहर्लक्ष्यीकृत्य रात्र्या [v]पशून् [v]नि [v]आर्जत् निरगमयत् । ऋजु गत्यादिषु भौवादिक । “ अभिरभागे ” ( पा १ ४ ९१ ) इत्यभेर्लक्षणे कर्मप्रवचनीयत्वम् । ‘ ते देवा ’ इत्यादि । गतम् । ‘ आदित्यो वा ’ इत्यादि । [v]अस्मात् मनुष्यलोकात [v]अमु [v]लोकम्

पशून् निरार्जत् ते देवाः पशून् वित्त्वा कामाꣳ अकुर्वत य एव विद्वानग्निमुपतिष्ठते पशुमान् भवति ’ इति ॥ [v]वित्त पूर्वलब्धं पशुरूपं धनं, [v]वेदम् [3]अतः परं लब्धु योग्यं, तदुभय देवद्रव्यमपहृत्य तेन सहासुराः [v]रात्रिं [v]प्राविशन् अन्धकारे क्वापि गताः । ततः पशुहीना वयमिति [4]खिद्यन्तो देवा [4] उपायम् [v]अपश्यन् । रात्रावग्नेः प्रकाशाधिक्यात् [v]रात्रि [v]आग्नेयी । अग्नेः पशुस्वामित्वात् [v][5] पशव अपि [v]आग्नेयाः[5] । [v]स्तुत [v]सः अग्निः [v]एभ्य देवार्थं रात्रेरभ्याहृत्याहरभिलक्ष्य तान् [v]पशून् [v]निः आर्जत् निरगमयत् । [v]कामान् भोगान् ॥

आदित्य इति ॥ पुनः प्रकारान्तरेण प्रशंसति—‘ आदित्यो वा अस्माल्लोकादमुं लोकमैत् सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत् स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽ-

५ ५ मै–‘ अग्नेरियम् इत्यादि ’ नास्ति; अ–अग्नेरियमाग्नेयी रात्रिः । स एभ्य इत्यादि ।

३ त ति क–इतः । ४-४ क–खिद्यन्ते देवा । ते रात्रौ । ५-५ ति–पशूनामाग्नेयत्वम् ।

अग्न्युपस्थानस्याग्निहोत्राङ्गता ]

**सोऽग्निमस्तौत् स एनꣳ स्तुतः सुवर्गं लोकमगमयद्य (४) एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेत्यभि वा एषोऽग्नी आ रोहति य एनावुपतिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति नक्तमुप तिष्ठते न प्रातः सꣳ हि नक्तं व्रतानि सृज्यन्ते**

सः। अग्निम्। अस्तौत्। सः। एनम्। स्तुतः। सुवर्गमिति सुवः–गम्। लोकम्। अगमयत्। यः (४)। एवम्। विद्वान्। अग्निम्। उपतिष्ठत इत्युप–तिष्ठते। सुवर्गमिति सुवः–गम्। एव। लोकम्। एति। सर्वम्। आयुः। एति। अभीति। वै। एषः। अग्नी इति। एति। रोहति। यः। एनौ। उपतिष्ठत इत्युप–तिष्ठते। यथा। खलु। वै। श्रेयान्। अभ्यारूढ इत्यभि-आरूढः। कामयते। तथा। करोति। नक्तम्। उपेति। तिष्ठते। न। प्रातः। समिति। हि। नक्तम्। व्रतानि। सृज्यन्ते।

ऐत् अगच्छत्। गतमन्यत्। “अभि वा” (तैसं १·५·४) इत्यादि। अभ्यारोहणमभिमुखेन[6] रोहणमुच्छ्रिताधिष्ठानम्। यथा खलु श्रेयान् [7]श्रेयसाभिमुखमारूढो भवितुं[7] कामयते एवमयमुपस्थाता करोति। तथापि नक्तम् उपतिष्ठते प्रयोजनान्तरार्थमिति भावः। न एव प्रातः उपस्थानं कर्तव्यं तादृशस्य प्रयोजनस्याभावात्। किं पुनस्तत् प्रयोजनमित्याह—‘सꣳ हि’ इत्यादि। हिशब्दो यस्मादित्यर्थे वर्तते। यस्मात् नक्तं व्रतानि कर्माणि शुभाशुभलक्षणानि सꣳ सृज्यन्ते अविभक्तानि भवन्ति श्रेयसां पापीयसां च विशेषप्रतिपत्तिर्नास्ति, तस्मादेतत् दोषपरिहारार्थमुपस्थातव्यम्। उपस्थानेन [8]तमःस्वरूपां रात्रिं[8] ज्योतिषा संतरति। अथ पूर्वपक्षाव-

मन्यतेममेवाग्निꣳ स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत् स पुनꣳ स्तुतः सुवर्गं लोकमगमयद्य एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेति’ इति॥

अभीति॥ पुनरपि प्रकारान्तरेण प्रशंसति—‘अभि वा एषोऽग्नी आ रोहति य एनावुपतिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति’ इति॥ एनौ आहवनीयगार्हपत्यौ यः उपतिष्ठते एषः अग्नी उभौ अभि आ रोहति स्ववशौ करोति। यथा लोके कश्चित् पूर्वमधमः सन्नेवं कामयते अहं विद्याविना श्रेष्ठ उत्तमं पदम् अभ्यारूढो भविष्यामीति तथा अयं यजमान उपस्थानेन स्वस्योत्तमं पदं करोति। तस्मादुपस्थानं प्रशस्तमित्यर्थः॥

नक्तमिति॥ अत्र केचित्-‘प्रातरग्निर्नोपस्थेयः’ इत्याहुः। अन्ये तु—‘न कदाचिदप्युपस्थेयः’ इति। [6]सिद्धान्तिनस्तु—‘सर्वदाप्युपस्थेयः’ इति। तत्र प्रथमं पूर्वपक्षं दर्शयति—‘नक्तमुप तिष्ठते न प्रातः सꣳ हि नक्तं व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चाऽऽसाते ज्योतिर्वा अग्निस्तमो रात्रिर्यन्नक्तमुपतिष्ठते

६. तं.ति.ब-‘भिमुखे अग्ने। ७–७. ब–श्रेयसोऽभिमुखमारोढुम्। ८–८. ब–तां रात्रिं तमःस्वरूपाम्।

६. क–सिद्धान्तस्तु।

सह श्रेयाꣳश्च पापीयाꣳश्चासाते ज्योतिर्वा अग्निस्तमो रात्रिर्य(५)न्नक्तमुपतिष्ठते ज्योतिषैव तमस्तरत्युपस्थेयो॒ऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयो-

सह। श्रेयान्। च। पापीयान्। च। आसाते इति। ज्योतिः। वै। अग्निः। तमः। रात्रिः। यत् (५)। नक्तम्। उपतिष्ठत इत्युप—तिष्ठते। ज्योतिषा। एव। तमः। तरति। उपस्थेय इत्युप—स्थेयः। अग्नी३। न। उपस्थेया३ इत्युप—स्थेयाः३। इति। आहुः। मनुष्याय। इत्। नु। वै। यः। अहरहरित्यहः—अहः। आहृत्येत्या—हृत्य। अथ। एनम्। याचति। सः। इत्। नु। वै। तम्। उपेति। ऋच्छति। अथ। कः। देवान्। अहरहरित्यहः—अहः। याचिष्यति। इति। तस्मात्। न। उपस्थेय इत्युप—स्थेयः।

---

सारं संशयपूर्वं प्रस्तौति—'उपस्थेयः' इति। "विचार्यमाणानाम" (पा ८.२.९७) इत्युभयत्रोदात्तः प्लुतः। 'उपस्थेयाः३' इत्यत्र पूर्वं परत्वात् प्लुतोदात्तत्वं, ततस्तस्यासिद्धत्वात् कृदुत्तरपद-प्रकृतिस्वरत्वम् (पा ६.२.१३९)। "यतोऽनावः" (पा. ६.१.२१३) इत्याद्युदात्तत्वम्। तेन द्वयोरुदात्तयोः श्रवणं भवति। 'मनुष्याय' इत्यादि। इदित्यवधारणे। नु इति वितर्के। वै इति प्रसिद्धौ। [v]मनुष्याय [v]अहरहः फलादिकमाहृत्यैवाथैनं [v]यः [v]याचति [v]सः अपि [v]तम्

---

ज्योतिषैव तमस्तरति' इति॥ रात्रौ [v]व्रतानि अनुष्ठेयानि कर्माणि [v]सं [v]सृज्यन्ते संकीर्णानि भवन्ति। अन्धकारे केन कथमनुष्ठितमिति न ज्ञायते। यथाशास्त्रमनुष्ठितो व्रतविशेषः श्रेयान्, तद्विपरीतस्तेन पापीयान्। तावुभौ सहैव तिष्ठतः। तत्रानेनाग्न्युपस्थितेन सत्यग्निना ज्योतिषा रात्रिप्रयुक्तं तमोदोषं तरति। तस्मान्नक्तमुपस्थेयः, अहनि तु तमोदोषाभावान्नोपस्थेय इत्येकः पूर्वपक्षः॥

उपस्थेय इति॥ द्वितीयं पूर्वपक्षं विचारपुरःसरं दर्शयति—'उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयः' इति॥ प्लुतिर्विचारार्था। लोके [v]मनुष्याय एव तावत् राज्ञे [v]यः कोऽपि दरिद्रो यत्किंचिज्जम्बीरफलादिकमुपायनमाहृत्य ततः प्रतिदिनम् [v]एनं राजानं प्रति बहुक्षेत्रधनादिकं[7] यदि [v]याचति तदा [v]सः याचकः [v]तं राजानं पीडयत्येव॥ तथा सति [v]कः नाम महाप्रभावान् [v]देवान् प्रतिदिनं याचितुमर्हति। याच्ञारूपं चेदमुपस्थानम्। 'आयुर्दा अग्नेऽस्यायुर्मे देहि' (तैसं १.५.७) इत्यादिमन्त्रेषु तत्प्रतीतेः। [v]तस्मात् अग्निः कदाचिदपि [v]न [v]उपस्थेयः इति द्वितीयः पूर्वपक्षः[8]॥

---

७. आ.हा–क्षेत्रधनादिकम्। ८. इ.उ.पा.तं.ति.हा–पक्षः।

ऽथो॑ खल्वा॑हुरा॒शिषे॒ वै कं यज॑मानो यजत॒ इत्ये॒षा खलु॒ वा(६)आहि॑ताग्नेरा॒शी-र्यद॒ग्निमु॒पति॒ष्ठ॑ते॒ तस्मा॑दु॒पस्थेयः॑ प्र॒जाप॑तिः प॒शून॑सृजत॒ ते॑ सृ॒ष्टा अ॑होरा॒त्रे प्रावि॑श॒न् ताञ्छन्दो॑भि॒रन्व॑विन्द॒द्यच्छन्दो॑भिरुप॒तिष्ठ॑ते॒ स्वमे॒व तद॒न्वि॑च्छ॒ति

अथो॒ इति॑ । खलु॑ । आ॒हुः॒ । आ॒शिष॒ इत्या॑-शिषे॑ । वै । कम् । यज॑मानः । य॒ज॒ते॒ । इति॑ । ए॒षा । खलु॑ । वै (६) । आहि॑ताग्ने॒रित्याहि॑त-अ॒ग्नेः॒ । आ॒शीरित्या॑-शीः । यत् । अ॒ग्निम् । उ॒प॒तिष्ठ॑त॒ इत्यु॑प-तिष्ठ॑ते । तस्मा॑त् । उ॒प॒स्थेय॒ इत्यु॑प-स्थेयः॑ । प्र॒जाप॑ति॒रिति॑ प्र॒जा-प॑तिः । प॒शून् । अ॒सृ॒ज॒त॒ । ते । सृ॒ष्टाः । अ॒हो॒रा॒त्रे इत्य॑हः-रा॒त्रे । प्रेति॑ । अ॒वि॒श॒न् । तान् । छन्दो॑भि॒रिति॒ छन्दः॑-भिः॒ । अन्विति॑ । अ॒वि॒न्द॒त् । यत् । छन्दो॑भि॒रिति॒ छन्दः॑-भिः॒ । उ॒प॒तिष्ठ॑त॒ इत्यु॑प-तिष्ठ॑ते । स्वम् । ए॒व । तत् । अन्विति॑ । इ॒च्छ॒ति॒ ।

Vउपार्च्छति उपरुध्य पीडयत्येव । एवं खल्वेतत् । " उपसर्गादृति धातौ " ( पा ६·१·९१ ) इति वृद्धिः । " तुनुपूर्व उदात्तयोर्वकारः " ( तैप्रा ५·१२ ) इति वचनात् । यदा मनुष्यविषयेऽप्येवं भवति Vअथ इदानीं Vकः Vदेवान् महानुभावान् Vअहरहः Vयाचिष्यति, Vतस्मात् कदाचिदप्यग्निः Vन Vउपस्थेयः इति । अथ [9]समाधत्ते—' अथो खल्वाहुः ' इति, एवं प्राप्ते आहुर्वेदार्थविदः । कः प्रजापतिः, अत्र [10]सर्वदेवात्मत्वसामान्येनाग्निरुच्यते; पादपूरणो वा । अग्न्युपस्थानमेव यजमानस्य Vआशीः, नातः परमाशंसनीयमस्ति, Vतस्मात् अग्निः Vउपस्थेयः, कः [11]सामान्यान् याचेत इति । तस्मात् सायं प्रातश्चोपस्थेय इति । ' प्रजापतिः पशून् ' इत्यादि । पश्ववगमनमेव[12] यजमानोऽ

अथो खल्विति ॥ सिद्धान्तं दर्शयति—' अथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः ' इति ॥ अथोशब्दः पूर्वपक्षव्यावृत्त्यर्थः । Vआशिषे Vवै स्वापेक्षितं सर्वमाशासितुमेव Vकं प्रजापतिसदृशं सर्वदेवात्मकमग्निं प्रति Vयजमानः Vयजते Vइति अभिज्ञा आहुः । लोकेऽपि राज्ञश्चित्तवृत्तिमविज्ञायाकाण्डे देहि देहीत्युक्ते सत्युपरोधो भवति । यदा तु प्रशंसया विनोदेन वा परितोषमुत्पाद्य याचते तदानीमुत्साहयुक्तो याचितादत्यन्तमधिकमेव ददाति, तद्वत् Vआहिताग्नेः मन्त्रैरुपस्थानमेव याच्ञा सा च बहुविधप्रशंसापूर्वकत्वान्नोपरोधाय भवति किं त्वत्यन्तपरितोषायैव । तस्मात् सायं प्रातश्च वह्निः Vउपस्थेयः एव ॥

प्रजापतिरिति ॥ ऋग्भिरुपस्थानं प्रशंसति—' प्रजापतिः पशूनसृजत ते सृष्टा अहोरात्रे प्राविशन् ताञ्छन्दोभिरन्वविन्दद्यच्छन्दोभिरुपतिष्ठते स्वमेव तदन्विच्छति ' इति । अहोरात्रदेवताभ्यामन्तर्धापिताः पशवश्छन्दोयुक्तमन्त्रैरन्विष्टाः सन्तो लब्धाः । तस्माच्छन्दोभिरुपस्थानं [1]विनष्टवस्त्वन्वेषणाय भवति ॥

९. तं.ति.पं.ब–विधत्ते । १०. तं.ति.ब–सर्वदेवतात्मकत्व° । ११. ब–असमान् । १२. ब–तानेव पशूनेव ।

१. क–विनष्टस्यान्वे° ।

न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठत इति यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ् प्रजया पशुभिरेति कवातिर्यङ्ङिवोप तिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया पशुभिरेति ॥ ९ ॥

[ सिक्तमग्ने सह भवति यो यत्खलु वै पशुभिस्त्रयोदश च ]

न । तत्र । जामि । अस्ति । इति । आहुः । यः । अहरहरित्यहः–अहः । उपतिष्ठत इत्युप–तिष्ठते । इति । यः । वै । अग्निम् । प्रत्यङ् । उपतिष्ठत इत्युप–तिष्ठते । प्रतीति । एनम् । ओषति । यः । पराङ् । विष्वङ् । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । एति । कवातिर्यङ्ङिति कवा–तिर्यङ् । इव । उपेति । तिष्ठेत । न । एनम् । प्रत्योषतीति प्रति–ओषति । न । विष्वङ् । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । एति ॥ ९ ॥

[ मैसं १·५·१२; कासं ७·१०; कपिसं ५·६ ]

---

न्विच्छति । [V]जामि आलस्यम् । गतमन्यत् । ' यो वै ' इत्यादि । [V]प्रत्यङ् प्रातिमुख्येन । [V]ओषति दहति । [V]यः पराङ्मुख उपतिष्ठते इत्येष । [V]विष्वङ् नानागमनः । [V]प्रजया [V]पशुभिः च [V]विष्वङ्ङेति तस्मात् [V]कवातिर्यङ् ईषत्तिरश्चीन इव भूत्वा [V]उप [V]तिष्ठेत इति । छान्दसः कुशब्दस्य कवादेशः ॥

॥ इति पञ्चमप्रपाठके नवमोऽनुवाकः ॥

---

नेति ॥ तदुपस्थानस्य प्रतिदिनकर्तव्यतामुपन्यस्यति—' न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठत इति ' इति ॥ उपस्थातुरभीष्टप्रार्थनासद्भावादुपस्थेयस्य स्तुतिसद्भावाच्च तत्रोपस्थाने कस्यापि [V]जामि आलस्यं [V]न [V]अस्ति ॥

य इति ॥ उपस्थानवेलायामीषत्तिरश्चीनमुखत्वं विधत्ते—' यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ् विष्वङ् प्रजया पशुभिरेति कवातिर्यङ्ङिवोप तिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया पशुभिरेति ' इति ॥ [V]प्रत्यङ् संमुखः । तथा सत्यग्निः [V]एनं यजमानं [V]प्रति [V]ओषति प्रातिकूल्येन दहति । पराङ्मुखः । तथा सति यजमानः [V]प्रजया [V]पशुभिः च [V]विष्वङ् [V]एति वियुक्तो भवति । [V]कवातिर्यङ् [V]इव ईषत्तिरश्चीन इव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

मम॒ नाम॑ प्रथ॒मं जा॑तवेदः पि॒ता मा॒ता च॑ दध॒तुर्यद॑ग्रे॑ ।
तत् त्वं बि॑भृ॒हि पु॒नरा मदै॒तो॒स्तवा॒हं नाम॑ बिभराण्यग्ने ॥

मम॑ । नाम॑ । प्र॒थ॒मम् । जा॒त॒वे॒द॒ इति॑ जात—वे॒दः॒ । पि॒ता । मा॒ता । च॒ । द॒ध॒तुः॒ । यत् । अग्रे॑ ।
तत् । त्वम् । बि॒भृ॒हि । पुन॑ः । एति॑ । मत् । ऐ॒तो॒रित्या—ए॒तोः॒ ।
तव॑ । अ॒हम् । नाम॑ । बि॒भ॒रा॒णि॒ । अ॒ग्ने॒ ॥

---

अग्निभ्यः प्रवत्स्यन्नाहवनीयमुपतिष्ठते—‘ मम नाम ’ इति त्रिष्टुभा ॥ हे अग्ने [V]जातवेदः जातानां वेदितः[1], यद्वा—जातधनादिक । [V]मम यत् [V]प्रथमम् आद्यं गुह्यं, “ तस्माद्द्विनामा ब्राह्मणोऽर्धुकः ” ( तैसं ६·३·१ ) इति द्विनामत्वात् विशेष्यते । किं पुनस्तदित्याह—[V]पिता [V]माता [V]च [V]अग्रे जन्मकाले यत् [V]दधतुः [V]नाम मम चक्रतुः । सत्यपि यद्वृत्ते व्यत्ययेन निहन्यते । यद्वा—मम प्रथमं नाम माता च पिता दधतुः तस्मादेवं नाम विशिष्टम् । ततः किं पुनस्तदित्याह—यदग्रे यज्जन्मकाले एव ममाभूत् । प्रथमस्य नाम्नो द्वौ गुणौ, मातापितृकर्तृकत्वम्, अग्रे कृतत्वं च । ततो विशिष्टं मदीयं नाम त्वं बिभृहि । कुत इत्यत आह—[V]मत् मम । “ सुपां सुलुक्° ” ( पा ७·१·३९ ) इति षष्ठ्या लुक् । कुतः ? [V]आ पुनर् [V]एतोः आपुनरागमनात् । “ भावलक्षणे स्थेण्° ” ( पा ३·४·१६ ) इति तोसुन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा “ तादौ च° ” ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरत्वम् ।

---

दशमानुवाकस्य पूर्वभागे प्रवत्स्यतो यजमानस्याग्न्युपस्थानमन्त्राः, उत्तरभागे केचित् दर्शपूर्णमासाङ्गमन्त्राश्चाभिधीयन्ते ।

ममेति ॥ कल्पे—“ प्रवसथमेष्यन्नाहाग्नीन् समाधेहीति ज्वलत उपतिष्ठते ” इत्युपक्रम्योक्तं—“ पशून्मे शंस्य पाहि तान् मे गोपायास्माकं पुनरागमादित्याहवनीयम् । मम नाम प्रथमं जातवेदः इति च ” ( आपश्रौ ६·२४·५–६ ) इति । तत्र ‘ पशून् ’ ( मैसं १·५·१४ ) इत्यादिमन्त्रः शाखान्तरगतः ॥ मन्त्रान्तरपाठस्तु—‘ मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे । तत् त्वं बिभृहि पुनरा मदैतोस्तवाहं नाम बिभराण्यग्ने ’ इति । ब्राह्मणस्य नामद्वयं विद्यते । देवदत्तयज्ञदत्तादिकमेकम्, उपाध्यायदीक्षितादिकमपरम् । अत एव श्रूयते—“ तस्माद्द्विनामा ब्राह्मणोऽर्धुकः ” ( तैसं ६·३·१ ) इति । तत्राध्यापनादेरूर्ध्वं प्रवृत्तत्वादुपाध्यायादिकं चरमम् । अग्रे जन्मकाले मातापितृभ्यां कृतत्वाद्देवदत्तादिकं प्रथमम् । हे [V]जातवेदः, [V]मम यत् [V]प्रथमं नाम [V]तत् [V]त्वं धारय । कियन्तं कालम् ? [V]पुनः [V]आ [V]मत् [V]एतोः, आ मदीयपुनरागमात् । [V]अहम् अपि [V]तव [V]नाम धारयाणि । त्वमत्र वैकल्यं निर्हरन् मदीयं कार्यं कुरु । त्वन्नामधारिणो मम गन्तव्यदेशे वैकल्यमेव न संभवतीत्यर्थः ॥

---

१. ब—वेदयितः ।

मम॒ नाम॒ तव॑ च जातवेदो॒ वास॑सी इव वि॒वसा॑नौ॒ ये च॒रा॑वः ।
आयु॑षे॒ त्वं जी॒वसे॑ व॒यं य॑थाय॒थं वि परि॑ दधावहै॒ पु॒नस्ते॑ ॥

मम॑ । नाम॑ । तव॑ । च॒ । जा॒त॒वे॒द॒ इति॑ जात—वे॒दः॒ ।
वास॑सी इति॑ । इ॒व॒ । वि॒वसा॑नावि॒ति॑ वि—वसा॑नौ । ये इति॑ । चर॑वः ॥
आयु॑षे । त्वम् । जी॒वसे॑ । व॒यम् । य॒था॒य॒थमिति॑ य॒था—य॒थम् ।
वि । परीति॑ । द॒धा॒व॒है॒ । पुनः॑ । ते इति॑ ॥

यद्वा—आभिमुख्ये आङ् स्वीकर्तव्यः । कर्तरि तोसुन । मदिति पञ्चम्येव । आगन्तोः मत्, यावदहमागन्तास्मि तावदित्यर्थः । तव च नाम अहं बिभराणि । तावन्त कालं नामभरण [1]चावश्यकार्यप्रतिलम्भार्थम् । एतदुक्तं भवति—मयि प्रोषित उपसंनिहितस्त्वमहं भूत्वा मया कर्तव्यं सर्वं कुरु, [2]यथात्र न किंचित् परिहास्यते । अहमप्यन्यत्र त्वं भूत्वा त्वया कर्तव्यं करिष्यामि, यथा बहिर्न किंचित् परिहास्यते । एवमावाभ्यां परस्परस्योपकुर्वद्भ्यां वर्तितव्यमिति ॥

आगत्य प्रवासात् पुनस्समुपतिष्ठते—' मम नाम तव च ' इति । अयं च जगतीप्रकारो विवृद्धपादः । ' आयुषे त्वं जीवसे वयम् ' इति तृतीयः पादः ॥ हे जातवेदः, मम च तव च संबन्धिनी ये नामनी विवसानौ [4]विपरिवृत्य वसानौ मम नाम त्वं तव च नामाहमिति, अतोऽन्योन्यस्य विपरिवृत्ते इव[5] धारयन्तौ चरावः त्वं चाहं च वर्तावहे । ते नामनी पुनरिदानीं यथायथं यथास्वं वि परि दधावहै पुनः विवर्तावहै । तव नाम त्वमेव परिधत्स्व मम च नामाहमेव परिदधे । " यथास्वे यथायथम् " ( पा ८·१·१४ ) इति निपात्यते । किमर्थमित्याह—आयुषे अन्नाय हविर्लक्षणाय त्वमात्मीयं नाम गृहाण[6] । जीवसे [7]दीर्घमायुर्जीवितुं

ममेति ॥ कल्पे—" अग्न्येस्याहामीन् ममाग्नेहीति ज्वलत उपतिष्ठते " ( आपश्रौ ६·२४·५–६ ) इत्युपक्रम्योक्तं—" मम नाम तव च जातवेदः इति चतसृभिराहवनीयम् " ( आपश्रौ ६·२४·४ ) इति । तत्र प्रथमा–' मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः । आयुषे त्वं जीवसे वयं यथायथं वि परि दधावहै पुनस्ते ' इति ॥ हे जातवेदः, मम देवदत्तादि नाम तव च वह्न्यादि नाम इत्येवं ये नामनी विपरिवृत्यान्योन्यवाससी विपर्ययेण वसानौ इव इदानीमावां चरावः । [1]इत ऊर्ध्वं ते नामनी त्वं चाहं च पुनः अपि यथायथं त्वदीयं वह्न्यादि नाम तवैव मदीयं च देवदत्तादि नाम मदीयमेव यथा भवति तथा विपरिवृत्य परि दधावहै । एवं [2]सत्यायुर्वृद्धिर्धनादिसंपत्त्या प्रशस्तजीवनं च भवति ॥

२. तै–तन्नामाकारस्य प्रतिलम्भनार्थम ; ति–तन्नामाकारस्य प्रतिलम्भनमर्थं । ३. तं.ति–तथात्र । ४. तं.ति.ब–विपरिवर्त्यं । ५. ब–वाससी इव । ६. तं.ति–गृह्णेन । ७. मै–दीर्घायु° ।

१. आ–अतः । २. क. तं. ति–सत्यायुरभिवृद्धि° ।

नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे ।
अषाढो(१)अग्निर्बृहद्वया विश्वजित् सहन्त्यः श्रेष्ठो गन्धर्वः ॥

नमः । अग्नये । अप्रतिविद्धायेत्यप्रति–विद्धाय । नमः ।
अनाधृष्टायेत्यना–धृष्टाय । नमः । सम्राज इति सम्–राजे ।
अषाढः (१) । अग्निः । बृहद्वया इति बृहत्–वयाः ।
विश्वजिदिति विश्व–जित् । सहन्त्यः । श्रेष्ठः । गन्धर्वः ॥

---

वयमप्यात्मीयं नाम गृह्णीमः । " अस्मदो द्वयोश्च " ( पा १·२·५९ ) इत्येकस्मिन् बहुवचनम् । वचनव्यत्ययो वा । " तुमर्थे सेसेन् " ( पा ३·४·९ ) इत्यसेप्रत्ययः, आद्युदात्तत्वप्रसङ्गाद् सुन्नन्तो नेष्यते ॥

गार्हपत्यमुपतिष्ठते—' नमोऽग्नये ' इति त्रिष्टुभा ॥ [V]नमः [V]अग्नये पूजेयं क्रियते । [V]अप्रतिविद्धाय केनचिदप्यताडिताय । [V]नमः [V]अनाधृष्टाय केनचिदप्यपरिभूताय । [V]नमः [V]सम्राजे सर्वदा संगतदीप्तये । " मो राजि समः क्वौ " ( पा ८·३·२५ ) इति मकारः । इदानीं स एवाग्निः स्तूयते । अयं खलु [V]अग्निः [V]अषाढः केनचिदपि सोढुमशक्यः । " साढ्यै साढ्वा " ( पा ६·३·११३ ) इति निपात्यते । " सहेः साडः सः " ( पा ८·३·५६ ) इति षत्वम् । [V]बृहद्वयाः अपरिमितान्नः [V]विश्वजित् सर्वस्य जेता [V]सहन्त्यः अभिभवनशीलः शत्रूणाम् । "सहेरौणादिके झचि" स्वार्थिको यत् । अद्व्यचोऽपि व्यत्ययेन " यतोऽनावः " ( पा ६·१·२१३ ) इत्याद्युदात्तत्वम् । [V]श्रेष्ठः प्रशस्यतमः [V]गन्धर्वः गवां स्तुतिशब्दानां धारयिता स्वीकर्ता । स्वीकृत्य वा तदर्थस्य कर्ता । पृषोदरादिः ( पा ६·३·१०९ ) । योऽग्निरित्थंभूतस्तस्मै नमः इति ॥

---

नम इति ॥ अथ द्वितीया—' नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे । अषाढोऽग्निर्बृहद्वया विश्वजित् सहन्त्यः श्रेष्ठो गन्धर्वः ' इति ॥ [V]अप्रतिविद्धाय केनचिदताडिताय [V]अनाधृष्टाय केनाप्यतिरस्कृताय [V]सम्राजे संहतदीप्तये । [V]अषाढः शत्रूणां सोढुमशक्यः [V]बृहद्वयाः अपरिमितान्नः [V]विश्वजित् सर्वस्य जेता [V]सहन्त्यः स्वयं सहिष्णुः [V]श्रेष्ठः [V]गन्धर्वः संगीतादिकलाविद्यास्वतिकुशलः ॥

---

८–८. तं.ति–सहेः औणादिको झन् । ९–९. ब–श्रेष्ठतमः ।

त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः ।
सं मामायुषा सं गौपत्येन सुहिते मा धाः ॥

त्वत्पितार इति त्वत्-पितारः । अग्ने । देवाः ।
त्वामाहुतय इति त्वाम्-आहुतयः । त्वद्विवाचना इति त्वत्-विवाचनाः ।
समिति । माम् । आयुषा । समिति । गौपत्येन । सुहित इति सु-हिते । मा । धाः ॥

---

अन्वाहार्यपचनमुपतिष्ठते—'त्वत्पितारः' इति ॥ अथ [1] कश्चिद्गायत्रीप्रकारः । 'सं मामायुषा' इति तृतीय । हे [v]अग्ने, [v]त्वत्पितारः त्वत्पितृकाः त्वं पिता पाता वा येषां तादृशाः देवताः । छान्दसं दीर्घत्वम् । "ऋतश्छन्दसि" (पा ५ ४ १५८) इति कबभाव । [v]त्वामाहुतयः त्वां प्रति गन्तारः, त्वय्याहुतयो येषां ते त्वामाहुतयः । छान्दसो द्वितीयाया अलुक् । त्वय्याहुतयः देवाहुतय इत्यर्थः । [v]त्वद्विवाचनाः त्वं विवाचनः विवाचयिता विशेषेण ख्यापयिता येषां [11]-ते तादृशाः, त्वन्मुखत्वाद्देवानाम्-[11] । वचेर्ण्यन्तात् (पा ३ १ २६) नन्द्यादिलक्षणो ल्युः (पा ३ १ १३४) । स तादृशस्त्वम् [v]आयुषा अन्नेन जीवितेन वा [v]सुहिते सुष्ठु निहिते सुहितार्थं मां [v]सं [v]धाः संधेहि संयोजय । [v]गौपत्येन गवां स्वामित्वेन च मां संधेहि । पत्यन्तलक्षणो यक् (पा ५ १ १२८) । दधातेर्लेटि शपो लुक् । छान्दसे वा लिङि "गातिस्था°" (पा २ ४ ७७) इति सिचो लुक् । यद्वा—सुहिते सम्यक् स्थापय । सुहित इति प्रादिसमासे (पा २ २ १८ वा ३०) अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २) ॥

---

त्वत्पितार इति ॥ अथ तृतीया—'त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचना । सं मामायुषा सं गौपत्येन सुहिते मा धाः' इति ॥ त्वमेव पिता पालको येषां देवानां ते [v]त्वत्पितारः । त्वां प्राप्ता आहुतयो येषां देवानां ते [v]त्वामाहुतयः, त्वयि हुताः सत्यो देवास्तर्पयन्तीत्यर्थः । त्वमेव विशेषेण [1]वाचनः प्रख्यापयिता येषां ते [v]त्वद्विवाचनाः । हे [v]अग्ने, [v]मां दीर्घायुषा [v]सं [v]धाः संयोजय । [v]गौपत्येन गवां स्वामित्वेन संयोजय । [v]सुहिते सुष्ठु हिते पुरुषार्थे मा धाः । मां स्थापय ॥

---

१०. तं, ट्रि-कश्चिदृग्विनः हृष्टप्रकाशान्तः । ११-११ तं-तादृशाः त्वमुखा देवाः, भ-ते तादृशाः त्वंमुखा देवाः ।

---

१ आ-वाचन ; क-वाचः ; तं-वचिनाः ॥

प्रवत्स्यतो यजमानस्याग्न्युपस्थानमन्त्राः दर्शपूर्णमासाङ्गमन्त्राश्च ]

अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽय१ं सहस्रसातमः ।

अस्मा अस्तु सुवीर्यम् ॥

अयम् । अग्निः । श्रेष्ठतम इति श्रेष्ठ-तमः । अयम् । भगवत्तम इति भगवत्-तमः ।

अयम् । सहस्रसातम इति सहस्र-सातमः ।

अस्मै । अस्तु । सुवीर्यमिति सु-वीर्यम् ॥

---

आहवनीयमुपतिष्ठते—' अयम् ' इत्यनुष्टुभा ॥ अयम् अग्निः आहवनीयः श्रेष्ठतमः अतिशयेन प्रशस्यतमः प्रशस्तानामपि प्रशस्ततमः । प्रकर्षवतामप्यतिशयविवक्षया द्वितीय *आतिशायनिको भवत्येव, यथा—" श्रेष्ठतमाय कर्मणे " ( तैसं १·१·१ ) इति । अयं भगवत्तमः अतिशयेन धनवान् । [12]तथा अयं सहस्रसातमः सहस्रस्य [13]बहुनो धनस्य ये सनितारः संभक्तारो दातारो वा तानतिशेते । " जनसन° " ( पा ३·२·६७ ) इति विट्, " विड्वनोरनुनासिकस्यात् " ( पा ६·४·४१ ) इत्यात्वम् । ईदृशोऽयमग्निः अस्मै यजमानाय मह्यं सुवीर्यम् अस्तु शोभनवीर्यं धनम् अस्तु । ईदृशधनहेतुर्ममास्त्विति यावत् । " वीरवीर्यौ च " ( पा ६·२·१२० ) इत्युत्तरपदाद्युदात्तत्वम् । एवं सहस्रपदोपात्तं धनं सुवीर्यशब्देन विशेष्यते ॥

---

अयमिति ॥ अथ चतुर्थी—' अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽय१ं सहस्रसातमः । अस्मा अस्तु सुवीर्यम् ' इति ॥ प्रशस्यानां मध्येऽतिशयेन श्रेष्ठः । पुनरपि तादृशानां[4] मध्येऽतिशयेन श्रेष्ठः श्रेष्ठतमः । भगवच्छब्दः पौराणिकैर्व्याख्यातः—" ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ " ( विष्णु ६·५·७४ ) इति । " उत्पत्तिं प्रलयं चैव भूतानामागतिं[5] गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ " ( विष्णु ६·५·७८ ) इति ॥ अतिशयेन भगवान् भगवत्तमः । सहस्रसंख्याकस्य धनस्य सनितारो दातारः तेष्वतिशयेन दाता सहस्रसातमः । तादृशस्याग्नेः प्रसादात् अस्मै यजमानाय मह्यं शोभनं सामर्थ्यम् अस्तु ॥

---

*[ द्र. पा ५·३·५५ वा २—' तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति '। ] । १२. ब—अथ । १३. पे—बहुधः ।

---

४. कृति—' तादृशानाम् ' इत्यस्यानन्तरं ' श्रेष्ठानाम् ' । ५. आ—'नामगतिम् ।

मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञ९ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः सं दधामि हविषा घृतेन ॥

मनः । ज्योतिः । जुषताम् । आज्यम् ।
विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु ।
या । इष्टाः । उषसः । निम्रुच इति नि-म्रुचः । च ।
ताः । समिति । दधामि । हविषा । घृतेन ॥

विच्छिन्ननिमित्तो होम —'मनो ज्योति' इति । त्रिष्टुबिय[14], विराड्वा ॥ पूर्वार्धर्चो व्याख्यात ( तैस १ ५ ३ ) । सर्वस्य Vमन. द्योतमानोऽयमग्निरिदम् Vआज्य Vजुषतां, जुषमाणश्च Vइम Vविच्छिन्न Vयज्ञ Vस Vदधातु इति । 'या' इष्टा ता स दधामि' इति वचनात् मयि प्रोषिते प्रमत्ते वा Vया Vउषस अन्यै यजमानै Vइष्टा', मया अनिष्टा इत्यर्थसिद्धम् । यद्वा— इष्टा यागार्हा मया अनिष्टा संधातुं या इष्टाः । इच्छतेर्निष्ठा ( पा ३ २ १०२ ), इषेर्वा गतिकर्मण' । इष्टा गता विना यागेनातिवाहिता । उषस अहरारम्भा प्रातश्च, [15-]Vनिम्रुच Vच[-15] साय चेति यावत् । [M]म्रुचु म्लुचु स्तेयकरणे । सपदादिलक्षण क्विप् ( पा ३ ३ १०८ वा ९ ) । Vता Vस Vदधामि, अनेन Vघृतेन एव Vहविषा चरुणा सगताः करोमि, अनेन हविषा यागवती करोमि । अथापरम्—या इष्टा पूर्वं मया यागवत्य कृता या उषस उदया दिवसा इत्यर्थ , याश्च निम्रुच लुप्तयागा उषसस्ता उभयीरुषस अनेन हविषा स दधामि संयोजयामि, यागवतीरेव सर्वा करोमि, इष्टानिष्टविभागरहिता करोमीत्यर्थ' ॥

मन इति ॥ कल्पः—"नवमीं चेदति प्रवसेत् मित्रो जनान् यातयति प्रजानन्निति मैत्र्योपस्थाय मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्" (आपश्रौ ६ २६ ७) इति । निर्गमनतिथिमारभ्य नवमीं तिथिमतिक्रम्य प्रवासे सत्येतदवगन्तव्यम् । तत्र 'मित्रो जनान्' (तैस ३ ४ ११) इति मन्त्रोऽन्यत्राऽऽम्नात ॥ मन्त्रान्तरपाठस्तु—'मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञ९ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः सं दधामि हविषा घृतेन' इति ॥ पूर्वार्धं 'भूमिर्भूम्ना' (तैस १ ५ ३) इत्यनुवाके व्याख्यातम् । Vयाः Vउषसः प्रातःकालोपलक्षिता आहुतयः, याश्च Vनिम्रुचः अस्तमयकालोपलक्षिता आहुतय Vइष्टाः इतरैर्यजमानैरनुष्ठिता मया त्वन्तरिताः Vताः सर्वा आहुतीरनेन Vघृतेन Vहविषा Vसं Vदधामि अविच्छिन्नाः करोमि ॥

१४ ब-त्रिष्टुगियम् । १५ मै-'निम्रुचः च' नास्ति । M[ धातुपाठमनुसृत्य म्रुचुम्लुचू गत्यर्थौ त्त ; ग्रुचुग्लुचू तु स्तेयकरणे भवतः । द्र काशिका—पा ३ १ ५८ ] ।

पय॑स्वती॒रोष॑धयः (२) पय॑स्वद्वी॒रुधां॒ पयः॑ ।

अ॒पां पय॑सो॒ यत् पय॒स्तेन॒ मामि॑न्द्र॒ सꣳ सृ॑ज ॥

अग्ने॑ व्रतपते व्र॒तं च॑रिष्या॒मि तच्छ॑केयं॒ तन्मे॑ राध्यताम् ॥

पय॑स्वतीः । ओष॑धयः ( २ ) । पय॑स्वत् । वी॒रुधा॑म् । पयः॑ ।

अ॒पाम् । पय॑सः । यत् । पयः॑ । तेन॑ । माम् । इ॒न्द्र॒ । समिति॑ । सृ॒ज ॥

अग्ने॑ । व्र॒त॒प॒त॒ इति॑ व्रत-प॒ते॒ । व्र॒तम् । च॒रि॒ष्या॒मि॒ । तत् । श॒के॒य॒म् । तत् । मे॒ । रा॒ध्य॒ता॒म् ।

---

अतःपरम् इष्टियाजमानकाण्डं प्राजापत्यम् । तत्राप आचामति—'पयस्वतीः' इत्यनुष्टुभा ॥ पयस्वतीः पयस्वत्यः क्षीरवत्यः सारवत्यो वा । पानरसेन तद्वत्यः ओषधयः। 'ओषध्यः फलपाकान्ताः' (अमरकोश २·४·६ )। "वा छन्दसि" (पा ६·१·१०६ ) पूर्वसवर्णदीर्घत्वम् । वीरुधां तु पयः पयस्वत् ओषधीनां पयोऽपि पयस्वत् सारवत् पेयत्व-गुणवत्[16] । विविधं रोहन्तीति वीरुधः लतादयः । पृषोदरादिः ( पा ३·३·१०९ ) । अपां वा संबन्धि यत् पयः ईदृशं पयसः अपि पयः यत्किंचित्पय ओषधीनां वीरुधां वा तस्यापि पयस्त-तोऽपि सारवत् । तेन मां सं सृज योजय हे इन्द्र । एतदुक्तं भवति—ओषधयो न केवलं पयस्वत्यः, वीरुधां तु पयोऽपि पयस्वत्, अपां तु ततोऽपि पयस्वत् पय इति ॥

व्रतमुपैति—'अग्ने व्रतपते' इति यजुषा । हे अग्ने, व्रतानां [17]ब्रह्मचर्यसत्यवचना-दीनां पते पालयितः । "नामन्त्रिते समानाधिकरणे सामान्यवचनम्" ( पा ८·१·७३ ) इति पूर्वस्याविद्यमानवत्त्वनिषेधात् द्वितीयं निहन्यते । व्रतं यथोक्तं चरिष्यामि तत् व्रतमहं शकेयं चरितुं[18] समर्थो भूयासम् । "लिङ्याशिष्यङ्" ( पा ३·१·८६ ) । तत् व्रतं त्वत्प्रसादाच्चरितं मे मम राध्यतां सिध्यतु । राध हिंसासिद्ध्योः दैवादिकः ॥

---

पयस्वतीरिति ॥ अग्न्युपस्थानमन्त्रविषयः पूर्वभागो गतः । अथ दार्शिकयाजमानमन्त्रादि-विषय उत्तरभाग उच्यते । कल्पः—"पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वा" (आपश्रौ ४·२·९) इति । पाठस्तु—'पयस्वतीरोषधयः पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सꣳ सृज' इति ॥ सारवाची पयःशब्दः । ओषधयः पयस्वत्यः सारस्वत्यः । वीरुधां लतानां संबन्धि यत् पयः निर्गतं क्षीरं तदपि पयस्वत् सारवत् । अपां मध्ये यत् पयः सारं यच्च पयसो गवादिक्षीरस्य पयः सारं तेन सारेण सर्वेण [6]-हे इन्द्र-[6], मां सं सृज संयोजय ॥

---

१६. मै-'पेयत्वगुणवत्' नास्ति। १७. मै—ब्रह्मचर्यादीनाम् । १८. ब–कर्तुम् ।

---

६–६. इ,उ,पा-' हे इन्द्र ' नास्ति ।

[ प्रवत्स्यतो यजमानस्याग्न्युपस्थानमन्त्राः दर्शपूर्णमासाङ्गमन्त्राश्च

अ॒ग्निꣳ होता॑रमि॒ह तꣳ हु॑वे दे॒वान् य॒ज्ञिया॑नि॒ह यान् हवा॑महे ।
आ य॑न्तु दे॒वाः सु॑मन॒स्यमा॑ना वि॒यन्तु॑ दे॒वा ह॒विषो॑ मे अ॒स्य ॥

अ॒ग्निम् । होता॑रम् । इ॒ह । तम् । हु॒वे । दे॒वान् । य॒ज्ञिया॑न् । इ॒ह । यान् । हवा॑महे ।
एति॑ । य॒न्तु॒ । दे॒वाः । सु॒म॒न॒स्यमा॑ना॒ इति॑ सु॒-म॒न॒स्यमा॑नाः । वि॒यन्तु॑ । दे॒वाः । ह॒विषः॑ । मे॒ । अ॒स्य ॥

---

हविर्निरुप्यमाणमभिमन्त्रयते—' अग्निꣳ होतारम ' इति । अत्र वृत्तिद्वययोगात् संशये संख्यया त्रिष्टुबित्येके । " आद्यात संदेहे । देवतादिभ्यश्च " ( पिसू ३·६१–६२ ) इति जगतीत्यन्ये ॥ [V]इह अस्मिन कर्मणि [V]होतारं देवानामाह्वातारम [V]अग्निं [V]हुवे आह्वयामि । शपो लुक् ( पा २·४·७३ ) । [V]देवान [V]यज्ञियान् यज्ञार्हान् [V]हवामहे आह्वयामः, ये आह्वातव्यास्तान-प्याह्वयामि । " बहुलं छन्दसि " ( पा ६·१·३४ ) इति ह्वयतेः सम्प्रसारणम् । " यज्ञर्त्विग्भ्याम° " ( पा ५·१·७१ ) इति यज्ञशब्दाद्घः । यद्वा—यान् हवामहे ये होतव्याः तानाह्वयामि । जुहोतेर्व्यत्ययेन शप्, आत्मनेपदं च । ते च हुताः [V]सुमनस्यमानाः सुमनसः सन्त आह्वानापराधं सोढ्वा तुष्यन्तु, [V]आ [V]यन्तु आगच्छन्तु । भृशादिलक्षणः क्यङ् ( पा ३·१·१२ ) । आगत्य च देवा हविषोऽस्य [V]वियन्तु भक्षयन्तु । वी गत्यादिषु । " क्रियाग्रहणं कर्तव्यम् " ( व्र. पाभा १·४·३२ ) इति सम्प्रदानत्वात् " चतुर्थ्यर्थे बहुलं छन्दसि " ( पा २·३·६२ ) इति षष्ठी ॥

---

**अग्न इति** ।। कल्पः—" दक्षिणेनाहवनीयमवस्थाय प्राङ्मुखोऽपन् समुद्रं मनसा ध्यायति । [7]अथ जपत्यग्ने[7] व्रतपते व्रतं चरिष्यामीति ब्राह्मणः " ( आपश्रौ ४·३·१–२ ) इति । मन्त्रशेषस्तु—' तच्छकेयं तन्मे राध्यताम् ' इति ॥ [V]तत व्रतमनुष्ठातुं शक्तो भूयासम्, मदीयं [V]तत व्रतं समृद्धं भवतु ॥

**अग्निमिति** ।। कल्पः—" अग्निꣳ होतारमिह तꣳ हुव इति हविर्निरुप्यमाणमभिमन्त्रयते । हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते " ( आपश्रौ ४·४·५–६ ) इति ॥ मन्त्रशेषस्तु—' देवान यज्ञियानिह यान हवामहे । आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य ' इति । [V]इह कर्मणि देवानामाह्वातारं [V]तम् [V]अग्निम् अहमाह्वयामि । [V]इह कर्मणि [V]यान् [V]देवान् उद्दिश्य जुहुमस्तानपि [V]यज्ञियान देवानाह्वयामि । आहूताश्च ते [V]देवाः सौमनस्यं प्राप्ता आगच्छन्तु । आगत्य च [V]मे [V]अस्य [V]हविषः मदीयमिदं हविः [V]वियन्तु भक्षयन्तु ॥

---

७–७. क–' अथ जपति ' नास्ति ।

कस्त्वा युनक्ति स त्वा युनक्तु
यानि घर्मे कपालान्युपचिन्वन्ति (३) वेधसः ।
पूष्णस्तान्यपि व्रत इन्द्रवायू वि मुञ्चताम् ।

क । त्वा । युनक्ति । सः । त्वा । युनक्तु ।
यानि । घर्मे । कपालानि । उपचिन्वन्तीत्युप–चिन्वन्ति ( ३ ) । वेधसः ॥
पूष्णः । तानि । अपीति । व्रते । इन्द्रवायू इतीन्द्र–वायू । वीति । मुञ्चताम् ॥

---

यज्ञ [19]यज्ञयोगेन युनक्ति—'कस्त्वा' इति यजुषा ॥ क प्रजापतिरेव हि त्वां युनक्ति योक्तुमर्हति, तस्मात् स त्वां युनक्तु हे यज्ञ, युक्तारमान त्वां करोतु ॥

कपालानि विमुञ्चति—'यानि घर्म' इत्यनुष्टुभा ॥ इय चाध्वर्यवे व्याख्याता ( तैस १ १ ७ ) 'धृष्टिरसि' इत्यत्र । यानि कपालानि घर्मे अग्नौ वेधस अध्वर्यव उपचिन्वन्ति उपदधति तानि पूष्ण [20]पुष्टिकारणस्याग्ने व्रते कर्मणि अपि[21] समाप्ते । इदानीम् इन्द्रवायू वि मुञ्चताम्, न हि अन्यस्तानि विमोक्तुं शक्नोतीति ॥

भिन्न कपालमुत्कर उदस्यति—'अभिन्न' इति । पङ्क्तिरिय चतुष्पदा ॥ अभिन्न अविगुणोऽस्तु घर्म यज्ञ, सत्यपि कपालभेदे तन्निमित्त यज्ञस्य वैगुण्य मा भूदित्यर्थ । अथवा[22] घर्मार्थं कपाल घर्म स भिन्नोऽप्यभिन्नोऽस्तु अविनष्ट एवास्तु । अत एव जीरदानु याग कपाल वा भवतु वैगुण्याभावात्, जीरमुदक तस्य दाता वर्षादिद्वारेण । यद्वा—जीरं जीवित प्रजानां तस्य दाता । जीवेरौणादिको रक्प्रत्यय ( द्र उ १७८ ) । ददातेर्नु, दासीभारादित्वात्

---

क इति ॥ कल्पः—"अथ यज्ञ युनक्ति । कस्त्वा युनक्ति स त्वा युनक्त्वित्ति सर्वं विहारम नुवीक्षते" ( आपश्रौ ४ ४ ८–९ ) इति । हे यज्ञ, कः प्रजापतिः सर्वत्र त्वां युनक्ति योग्यं करोति । तस्मादत्रापि सः एव त्वां युनक्तु ॥

यानिति ॥ कल्प—"उभौ कपालविमोचन जपतः" ( आपश्रौ ४ १४ ५ ) इति । उभौ अध्वर्युयजमानौ ॥ मन्त्रपाठस्तु—'यानि घर्मे कपालान्युपचिन्वन्ति वेधस । पूष्णस्तान्यपि व्रत इन्द्रवायू वि मुञ्चताम्' इति । अयं मन्त्र अध्वर्युकाण्डेऽपि ( तैस १ १ ७ ) आम्नातत्वात् प्रथमप्रपाठके व्याख्यातः । वेधसः ब्रह्मसमा पूष्णः पोषका ऋत्विज यानि कपालानि वह्नावुपस्थापयन्ति तानि सर्वाणि अपि व्रते समाप्ते सति इन्द्रवायू वि मुञ्चताम् ॥

---

१९. म–योगेन । २० म–पुष्टिकरस्या° । २१ मै–अपीते । २२ म–यद्वा ।

अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः ।
इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनु सं चरन्ति ॥

अभिन्नः । घर्मः । जीरदानुरिति जीर–दानुः । यतः । आत्तः । तत् । अगन् । पुनः । इध्मः । वेदिः । परिधय इति परि–धयः । च । सर्वे । यज्ञस्य । आयुः । अनु । समिति । चरन्ति ॥

पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·४२ ) । ' जीवे रदानुक् जीरदानुः* ' इति निर्वचनं पदकारा न सहन्ते । किंच — अयं घर्मो यज्ञात्मा कपालात्मा वा ᵛयतः पृथिव्या ᵛआत्तः गृहीतः ᵛतत् एव ᵛपुनः ᵛअगन् गच्छतु पृथिव्यां गृहीतं पृथिवीमेव गच्छतु । गमेश्छान्दसे लिङि " मन्त्रे घस " ( पा २·४·८० ) इत्यादिना च्लेर्लुक् । " मो नो धातोः " ( पा ८·२·६४ ) ॥

आहवनीये ²³संततीं जुहोति—' इध्मो वेदिः ' इत्युत्तरेणार्धर्चेन ' त्रयस्त्रिंशत् ' इति त्रिष्टुभा च ॥ ᵛइध्मः ᵛवेदिः ᵛपरिधयः ᵛच । चशब्दादन्येऽप्येवजातीयाः ᵛसर्वे ᵛयज्ञस्य आयुःस्थानीयमिमम् ᵛअनु ᵛसं ᵛचरन्ति अनुक्रमेण प्रत्यासन्ना भूत्वा चरन्ति इमं सेवमाना वर्तन्ते । ᵛये च ᵛत्रयस्त्रिंशत् ᵛतन्तवः तन्तुस्थानीयाः पटमिव सूत्राणि इमं यज्ञं ᵛवितत्निरे विस्तारयन्ति । के पुनस्ते ? ये " प्रजापतिर्मनसान्धोच्छेतः " ( तैसं ४·४·९ ) इति आकूतिप्रभृतियज्ञस्य तनितारः प्रजापत्यादयः ते वेदितव्याः । आकूत्यादयो वा यज्ञावयवाः । त्रयश्च त्रिंशच्च । " त्रेस्त्रयः " ( पा ७·१·५३ ) इति सूत्रेण त्रेस्त्रयसादेशः, " सख्या " ( पा ६·२·३५ ) इति पूर्वपदप्रकृतिस्वरत्वम् । विपूर्वात्तनोतेश्छान्दसे लिटि " तनिपत्योश्छन्दसि " ( पा ६·४·९९ ) इत्युपधालोपः । अथ ᵛये च ᵛइमं ᵛयज्ञं ᵛस्वधया अन्नेन हविरात्मना ᵛददन्ते उत्पादयन्ति, उत्पाद्य च²⁴ देवेभ्यो ददति । ददतिर्भौवादिकः । ᵛतेषां सर्वेषां यत् ᵛछिन्नं भेदननिमित्तेन प्राप्तं वैगुण्यं एतत्

**अभिन्न इति ॥ अथ प्रायश्चित्तम् । तत्र कल्पः—" यदि कपालं भिद्येत ⁸गायत्र्या त्वा शताक्षरया संदधामीति तत्संधायोपरि गार्हपत्ये धार्यमाणमभिजुहुयान्मनो ज्योतिर्जुषतामिति । अथैनदपोऽभ्यवहरेदभिन्नो घर्मो जीरदानुरिति " ( आपश्रौ ९·१३·८-९ ) ॥ मन्त्रशेषस्तु—' यत आत्तस्तदगन् पुनः । इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनु सं चरन्ति " इति ॥ ᵛघर्मः दीप्तः संतप्तोऽयं कपालविशेषः स्वयं भिन्नत्वेन प्रतीयमानोऽपि मन्त्रसामर्थ्यात् ᵛअभिन्नः एव भिन्नत्वदोषं नावहति । यस्मादयं ᵛजीरदानुः । जीरं जीवनं पुरोडाशद्वारेण यज्ञस्य ददातीति जीरदानुः । यो यज्ञं जीवयति स कथं स्वयं भिन्नो भवेत् । अभिन्नस्य तथाकारः कुतो न भातीत्याशङ्क्योत्तरमुच्यते । ᵛयतः यस्मात् मृत्पात् कारणात् ᵛआत्तः उत्पन्नः पुनस्तत्कारणम् ᵛअगन् ᵛआप्नोत अतः कारणरूपस्तदाकार एव प्रतीयते न तु कार्याकारः । तदप्रतीतौ अपि इध्मादयः स्वस्वाकारेण प्रतीयमाना यज्ञपुरुषस्य ᵛआयुः ⁹अनुक्रम्य ᵛसं ᵛचरन्ति ॥**

*[ द्र. पाभा—माहेश्वरसूत्र ५, पाभा १·१·४ वा ⁵६ ] । २३. शुद्धीकृतोऽयं पाठः ( द्र. बौश्रौ ३·१५... ' आहवनीये संततीं जुहोति ' ); स—सामिधेनीम्, मै—सम्मीननीम् । २४. मै—वा ।

८. भा—गायत्रिया । ९. इ.उ.सं.पा.हा—अनुक्रम्या (?) ।

त्र॒यास्त्रि॑ꣳश॒त् तन्त॑वो॒ ये वि॑तत्नि॒रे य इ॒मं य॒ज्ञꣳ स्व॒धया॒ ददं॑न्ते॒
तेषां॑ छि॒न्नं प्रत्ये॒तद्द॑धामि॒ स्वाहा॑ घ॒र्मो दे॒वाꣳ अप्ये॑तु ॥ १० ॥

[ अषा॑ढ ओष॑धय उपचि॒न्वन्ति पञ्च॑चत्वारिꣳशच्च ]

त्र॒यस्त्रि॑ꣳश॒दिति॑ त्र॒य–त्रि॒ꣳश॒त् । तन्त॑य । ये । वि॒त॒त्नि॒र इति॑ वि–त॒त्नि॒रे ।
ये । इ॒मम् । य॒ज्ञम् । स्व॒धयेति॑ स्व–धया॑ । ददं॑न्ते ।
तेषा॑म् । छि॒न्नम् । प्रतीति॑ । ए॒तत् । द॒धा॒मि॒ । स्वाहा॑ । घ॒र्म । दे॒वान् । अपीति॑ । ए॒तु॒ ॥ १० ॥

[ मैस १ ५ ४, कासं ७ ३, ४ १४, वासं १ ५६ ]

[V]प्रति [V]दधामि अनयाऽऽहुत्या प्रतिविहित करोमि । यद्वा—[25]सम्–अर्थे प्रतिशब्द , यच्छिन्नमेतत् सदधामि सततमविच्छिन्नमनयाऽऽहुत्या करोमि, स्वाहुत चेदमस्तु ॥

अन्य कपाल तेषु विसृजति—' घर्म ' इति ॥ [V]घर्म यज्ञ' कपाल वा [V]देवान् [V]अपि [V]एतु अनुप्रविशतु [26]अन्वितगुणो भवतु ॥

॥ इति पञ्चमप्रपाठके दशमोऽनुवाक ॥

त्रयस्त्रिꣳशदिति ॥ कल्पः—" अथान्यत् संस्कृत्य [10]कपालेष्वपि सृजेत् त्रयस्त्रिꣳशत्तन्तव इति " ( आपश्रौ ९ १३ १० ) इति । मन्त्रशेषस्तु—" ये वितत्निरे य इम यज्ञꣳ स्वधया ददन्ते तेषां छिन्न प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु " इति ।

चतुर्थकाण्डे— " प्रजापतिर्मनसाऽन्धोऽच्छेत " ( तैस ४ ४ ९ ) इत्यस्मिन्ननुवाक इष्टकोपधानार्था यज्ञतनुनामकास्त्रयस्त्रिंशत् मन्त्रा आम्नाता । तन्मन्त्रप्रतिपाद्या यज्ञतनव इह तन्तुस्थानीयाः । यथा तन्तुभि पटो निष्पाद्यते तथा ता तनवो यज्ञ विस्तारयन्ति । ते तन्तवो यज्ञनिष्पादका [V]ये अप्यृत्विगादयः [V]स्वधया हविषा [V]इम [V]यज्ञं [V]ददन्ते अनुतिष्ठन्ति [V]तेषा प्राजापत्यादीनां यज्ञाभिमानिदेवानाम् ऋत्विगादि यज्ञाङ्गानां च मध्ये यत् स्वरूपं विच्छिन्न [V]तत् [V]एतत् [V]प्रति सं [V]दधामि । [11]अत [V]स्वाहा सुष्ठु प्रतिसंहितो [V]घर्मः दीप्तो यज्ञाङ्गविशेषो [V]देवान् [V]अप्येतु प्राप्नोतु ॥

अत्र विनियोगसग्रहः—

" मम प्रवत्स्यन् पूर्वाग्निं मन्त्रयेत् पुनरागत ।
ममेत्याद्यैश्चतुर्मन्त्रैर्मनस्तत्र जुहोति हि ॥ १ ॥
गतमग्नेरुपस्थानं मन्त्रा प्रासङ्गिका अथ ।
पयेत्याचामति स्वामी दर्शपूर्णिमयोरपः ॥ २ ॥
अग्ने प्रागग्निपार्श्वस्थो जपेदग्निं हविस्तथा ।
निरुप्यमाणं समन्व्य कस्त्वा यज्ञ युनक्ति हि ॥ ३ ॥
यानीति मुच्यमानानि कपालान्यनुमन्त्रयेत् ।
अभिक्तोऽप्सु क्षिपेन्निक्ष[12] कपालं त्रय इत्यतः ।
कपालान्तरमादध्यादिति प्रासङ्गिका गता " ॥ ४ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

२५ ब–समत्वे । २६ तं ति ब–अनगुण:। –

१० आ ड्ड–कपालेष्वति' । ११ क तं ति–तत । १२ इ उ पा–क्षिपेद्रमम् ।

वै॒श्वा॒न॒रो न॑ ऊ॒त्याऽऽ प्र या॑तु परा॒वतः॑ ।
अ॒ग्निरु॒क्थेन॒ वाह॑सा ॥

वै॒श्वा॒न॒रः । नः॒ । ऊ॒त्या । आ । प्रेति॑ । या॒तु॒ । प॒रा॒वत॒ इति॑ परा—वतः॑ ।
अ॒ग्निः । उ॒क्थेन॑ । वाह॑सा ॥

अथ प्राजापत्यकाण्डमध्ये याज्याकाण्डं वैश्वदेवम् । तत्र " वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमानः " ( तैसं २·२·५ ) इति त्रिहविष्को यो वैश्वानरो द्वादशकपालः तस्य पुरोनुवाक्या—' वैश्वानरो नः ' इति गायत्री ।। प्रायेण पञ्चम-षष्ठयोः सर्ववैश्वानराणामियमेव पुरोनुवाक्या वेदितव्या[1] । वैश्वानरः विश्वेषां नराणां स्वामित्वेन संबन्धी अग्निः । " नरे संज्ञायाम " ( पा ६·३·१२९ ) इति पूर्वपदस्य दीर्घत्वम । ऊत्या मार्गेण करणेन अस्मद्रक्षणेन वा हेतुना, आत्मनो वा तर्पणेन प्रयोजनेन । " ऊतियूति° " ( पा ३·३·९७ ) इति क्तिन उदात्तत्वं निपात्यते । " उदात्तयणः° " ( पा ६·१·१७४ ) इति विभक्तेरुदात्तत्वम् । " ज्वरत्वर° " ( पा ६·४·२० ) इत्यादिना ऊठ् । स नः अस्मान् आ प्र यातु आभिमुख्येनान्येभ्यश्च प्रकर्षेणास्मान प्राप्नोतु परावतः दूरादप्यायातु । " उप-सर्गाच्छन्दसि° " ( पा ५·१·११८ ) इति वतिः । उक्थेन स्तोत्रेण वाहसा वहनसमर्थेन

अथाग्निम एकादशानुवाके काम्येष्टियाज्या[1] उच्यन्ते । इष्टिकाण्डे त्रिहविष्का काचिदिष्टिराम्नायते—" वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेणैवैनꣳ स्वदयत्यप पापं वर्णꣳ हते वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति " ( तैसं २·२·५ ) इति । अभिशस्यमानः [2]पातकारोपेण दूष्यमाणः । वैश्वानरशब्देन संवत्सराभिमानी कश्चिदग्निरुच्यते । तेनैव संवत्सराभिमानिनैनमभिशस्तं स्वात्मानं स्वदयति बन्धुभ्यो रोचयति । वर्णं वर्ण्यमानमारोप्यमाणं पापमपहते विनाशयति । पापिनं मत्वा नेतुं प्रसारितो यो वरुणपाशः तस्मादेनं स्वात्मानं वारुणयागेन मोचयति । दधिक्रावदेवत्येन यागेन स्वात्मानं पूतं करोति ॥ चोदकप्राप्ताम् अन्वाहार्यदक्षिणां[3] बाधितुं दक्षिणान्तरं विधत्ते—" हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवति " ( तैसं २·२·५ ) इति । आद्यमत्तुं योग्यं शुद्धमन्नम् । अस्यामिष्टौ प्रथमहविषो याज्यापुरोनुवाक्या-युग्मानि चत्वारि विकल्पितानि ।

वैश्वानर इति ॥ तत्र प्रथमयुग्मे पुरोनुवाक्यामाह—' वैश्वानरो न ऊत्याऽऽ प्र यातु परावतः । अग्निरुक्थेन वाहसा ' इति ॥ विश्वेषां नराणामुपकारी वैश्वानरः अग्निः ऊत्या रक्षणनिमित्तं परावतः दूरादपि देशात् वाहसा प्रापणसमर्थेन उक्थेन उत्थानपूर्वकेणाऽऽगमनेन नः अस्मान् आ प्र यातु प्रागच्छतु ॥

१. घ-वेदितव्या ।

१. आ.इा-काम्या याज्याः । २. क-पातकरूपेण । ३. आ-चोदकप्राप्तां दक्षिणाम ।

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं घर्ममीमहे ॥
वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥

ऋतावानमित्यृत-वानम् । वैश्वानरम् । ऋतस्य । ज्योतिषः । पतिम् ।
अजस्रम् । घर्मम् । ईमहे ॥
वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । स्वपस्ययेति सु-अपस्यया । कविः ।
उभा । पितरा । महयन् । अजायत ।
अग्निः । द्यावापृथिवी इति द्यावा-पृथिवी । भूरिरेतसेति भूरि-रेतसा ॥

अभीष्टार्थवहनसमर्थेनेत्यर्थ । यद्वा—प्रापणसमर्थेन मार्गेण । "वहिहाधाञ्भ्यश्छन्दसि" (उ ६७०) इत्यसुन् । 'णित्' इति हि तत्रानुवर्तते । आगत्य चास्मानभिशस्तेर्मुञ्चन् पापवर्णमपहन्त्विति शेष ॥

"वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा" (तैस २ २ ६) इत्यस्य याज्या—'ऋतावानम्' इति गायत्री ॥ ऋतावान सत्यवन्त यज्ञवन्त वा वैश्वानरम् । "छन्दसीवनिपौ" (पा ५ २ १०९ वा २) इति वनिप् । "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घत्वम् । ऋतस्य सत्यस्य सूर्यादे ज्योतिष पतिं पातारम् ईमहे याचामहे । किम् ? अजस्रम् अविच्छिन्नम् घर्मं यज्ञ, तेन अविच्छिन्ना स्यामेति । तेन नास्मिन् मृजाते विद्विषाणौ इति ॥

"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" (तैस २ २ ५) इत्यस्य पुरोनुवाक्या—'वैश्वानरस्य दंसनाभ्य' इति जगती ॥ बृहदिति प्रथमपादान्त । तेन अरिणादिति पादादि-

ऋतावानमिति ॥ याज्यामाह—'ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे' इति ॥ वैश्वानरम् ईमहे वयं प्राप्नुम । कीदृशम् ? ऋतावानं सत्यवन्तम् । ऋतस्य यज्ञस्य ज्योतिष अभीष्टफलप्रकाशकस्य पतिं पालकम् । अजस्रं घर्मं निरन्तर दीप्यमानम् ॥

वैश्वानरस्येति ॥ द्वितीययुग्मे पुरोनुवाक्यामाह – 'वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कवि । उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा' इति ॥ कविः बुद्धिमान् एक यजमान वैश्वानरसम्बन्धिनीभ्य दंसनाभ्यः क्रियाभ्यः बृहत् महाफलम् अरिणात् प्राप्नोत् । अप शब्द कर्मवाची* । शोभनमपः स्वपः । स्वपसो भावः स्वपस्य, तेन स्वपस्येन वैश्वानरयागस्य शोभनकर्मत्वेनेत्यर्थः । छान्दसो लिङ्गव्यत्यय । अयम् अग्निः द्युभूमिरूपौ प्रभूतरेतस्कौ स्वकीयमातापितरावुभौ महयन् लोकपूज्यौ कुर्वन् स्वयम् अजायत । तस्मादेतदीयकर्मणो महाफलं युक्तमित्यर्थ ॥

२ मै–अभीष्टार्थवाहन°

* [द्र निघण्टु २ १ १]।

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स (१) रिषः पातु नक्तम्॥

पृष्टः। दिवि। पृष्टः। अग्निः। पृथिव्याम्। पृष्टः। विश्वाः। ओषधीः। एति। विवेश। वैश्वानरः। सहसा। पृष्टः। अग्निः। सः। नः। दिवा। सः (१)। रिषः। पातु। नक्तम॥

त्वान्न निह्नूयते। वैश्वानरस्य दसनाभ्यः कर्मभ्यः बृहत महत् एकः कविः मेधावी किम् अरिणात् अधिगच्छति? किमिति सामर्थ्यात् लभ्यते। इतोऽन्यन्महदस्तीति कविर्मेधावी कश्चिदवबुध्यते किम? न कश्चिदित्यर्थः। यो मेधावी न भवति स कामं मिथ्यावबुध्यतां मेधावी नैव बोद्धुमर्हतीति। री गतिरेषणयोः क्रैयादिकः। छान्दसो लुङ् ( पा ३·४·६ )। "प्वादीनां ह्रस्वः" ( पा ७·३·८० ) इति ह्रस्वत्वम्। कीदृशं महत्त्वमित्याह—स्वपस्यया शोभनकर्मतया महद्वाभ्योऽन्यत्कार्म्यैवेत्यर्थः। वैश्वानरस्य कर्मसदृशमन्यच्छोभनत्वेन महत्कर्म कश्चिदपि मेधावी जनो न जानातीत्युक्तं भवति। अप इति कर्मनाम, शोभनकर्म स्वपः तस्य भावः स्वपस्यम्। छान्दसो यत्। "सुपां सुलुक्" ( पा ७·१·३९ ) इति तृतीयाया यादेशः। तर्हि तेषामस्य कर्मणां मध्ये शोभनमेकं कर्मोदाह्रियतामित्याह—अयं खल्वग्निः उभा उभौ पितरा पितरौ मातृपितृस्थानीयौ वा। उभयत्राऽपि "सुपां सुलुक्" ( पा ७·१·३९ ) इत्याकारः। द्यावापृथिवी द्यावापृथिव्यौ। द्विवचनस्य पूर्वसवर्ण ईकारः। "दिवो द्यावा" ( पा ६·३·२९ ) इति द्यावादेशः, "देवताद्वन्द्वे च" ( पा ६·२·१४१ ) इति पूर्वोत्तर-पदयोर्युगपत् प्रकृतिस्वरत्वम्। भूरिरेतसा भूरिरेतसौ स्थावरजङ्गमात्मकबहुविकारौ महयन् पूजयन् प्रकाशयन् अजायत जायते। छान्दसो लङ् ( पा ३·४·६ )। यथा खलु कश्चित् सुजातः पुत्रः मातापितरौ भूरिरेतसौ युवानौ निजजन्मनाऽलंकुर्वन् जायते एवमसौ जायते। इत्थं जन्मकाल एवास्य कुर्वाणस्य किं नाम कर्म महच्छोभनं न भवतीति भावः। तस्मादीदृशोऽयमग्निरस्माकं जातं तमिमं पुत्रं पुतत्वतेजस्वित्यादिगुणं करोतु॥

"वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य" ( तैसं २·२·५ ) इत्यस्य याज्या—'पृष्टो दिवि' इति त्रिष्टुप्॥ अयं वैश्वानरः अग्निः दिवि आदित्यात्मना

पृष्ट इति॥ याज्यामाह—'पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम्' इति। पृष्टः इत्यत्र सकारलोपश्छान्दसः। अयम् अग्निः दिवि स्पृष्ट आदित्यरूपेणावस्थितः पृथिव्यां पाकप्रकाशकारित्वेनावस्थितः तथा फलपाक-कारी सन् स्पृष्टः संबद्धः सर्वा अपि ओषधीः आ विवेश। वैश्वानरः अग्निः सहसा बलेन स्पृष्टः संबद्धः। सः तादृशः नः अस्मान् दिवा रिषः हिंसकान पापान नक्तं रात्रावपि सोऽस्मान् पातु॥

काम्येष्टियाज्यापुरोनुवाक्याः ]

जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा ।
वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः ॥

जात । यत । अग्ने । भुवना । व्यख्य इति वि–अख्य ।
पशुम् । न । गोपा इति गो–पा । इर्य । परिज्मेति परि–ज्मा ।
वैश्वानर । ब्रह्मणे । विन्द । गातुम् । यूयम् । पात । स्वस्तिभिरिति स्वस्ति–भि । सदा । न ॥

---

पृष्ट स्पृष्ट । छान्दसो व्यञ्जनलोप । यद्वा—पृष्टो निषिक्त निहित दिव्यादित्यात्मना । पृषु सेचने । पृथिव्यां च पार्थिवेषु । "उदात्तयणः" (पा ६ १ १७४) इति विभक्तेरुदात्तत्वमुक्तम् । पृष्ट एव भूत्वा विश्वा ओषधी आ विवेश, पक्तिस्थितिहेतुत्वेन सर्वं व्याप्य स्थित । स एवभूतो वैश्वानर अग्नि सहसा बलेन पृष्ट सबद्ध न अस्मान् रिष रेष्टुर्हिंसितु दिवा पातु रक्षतु । नोऽस्मान् नक्त च पातु अतिपत्तिदोषात् पात्विति ॥

जातेष्ट्या याज्या—'जातो यदग्ने' इति त्रिष्टुप् ॥ हे अग्ने वैश्वानर, जात जातमात्र एव भुवना भुवनानि भूतजातानि सर्वान् लोकान् व्यख्य विशेषेण पश्यसि पशु न पशुमिव गोपा गवां पालयिता । चक्षे छान्दसे लुङि (पा ३ ४ ६) "अस्यति-वक्तिख्यातिभ्योऽङ्" (पा ३ १ ५२) इत्यङ् । इर्य इराऽन्न हविरात्मकं तत्र साधुस्तदर्हो वा । परिज्मा सर्वतो गन्ता । निपातोऽय मनिन्प्रत्ययान्त । यद्यस्मादेव तस्मात ब्रह्मणे हविरात्मनेऽन्नाय यागात्मने वा परिवृढाय कर्मणे गातु मार्ग विद लभस्व हवि प्राप्तु मार्गानाप्नुहि, पुन पुनर्जातेष्टिं प्रवर्तयेति भाव । किञ्च—युष्माकमेवार्थे सदा न अस्मान्

---

जात इति ॥ तृतीययुग्मे पुरोनुवाक्यामाह—'जातो यदग्ने भुवना व्यख्य पशु न गोपा इर्य परिज्मा । वैश्वानर ब्रह्मणे विन्द गातु यूयं पात स्वस्तिभि सदा न' इति ॥ हे अग्ने, त्व जात-मात्र एव भुवनानि व्यख्य स्वतेजसा विशेषेण ख्यापितवानसि । गोपा पशु न पशुमिव । यथा गोपालकोऽनायासेनैव पशुरेतदीय इति ख्यापयति तद्वत् । कीदृशस्त्वम्? इर्यः इरामन्नमर्हसि । परिज्मा परितो गन्ता । यद्यस्मादेवविधस्त्वं ततो हे वैश्वानर, ब्रह्मणे परिवृढायास्मै कर्मणे गातु मार्गं विन्द लभस्व । यूय स्वस्तिभि श्रेयोभि सदा न अस्मान पात रक्षत । यूयमिति बहुवचनं पूजार्थम् ॥

---

३ त ति–पार्थिवः । आदित्याद्यात्मकत्वमुक्तम् । ४–४ तं ति–मनिन्प्रत्ययान्तो निपात्यते ।
५–५ तं ति–हविःप्राप्तिमार्गानाप्नुहि ।

त्वम॑ग्ने शो॒चिषा॒ शोशु॑चान॒ आ रोद॑सी अपृ॒णा जाय॑मानः ।
त्वं दे॒वाꣳ अ॒भिश॑स्तेरमु॒ञ्चो वै॑श्वा॑नर जातवेदो महि॒त्वा ॥

त्वम् । अ॒ग्ने॒ । शो॒चिषा॑ । शोशु॑चानः । एति॑ । रोद॑सी॒ इति॑ । अ॒पृ॒णाः । जाय॑मानः ।
त्वम् । दे॒वान् । अ॒भिश॑स्ते॒रित्य॒भि-श॒स्तेः । अ॒मु॒ञ्चः । वैश्वा॑नर ।
जा॒त॒वे॒द॒ इति॑ जात-वे॒दः॒ । म॒हि॒त्वेति॑ महि-त्वा ॥

---

यूयं पात रक्षत स्वस्तिभिः अविनाशैः[※] अविनाशान् प्रापय्यास्मान् पातेति । पूजार्थमेकस्मिन् बहुवचनम् ॥

त्रिहविष्याद्यस्य वैश्वानरस्य याज्या—'त्वमग्ने' इति त्रिष्टुप् ॥ हे अग्ने वैश्वानर जातवेदः जातानां वेदितः*, त्वं शोचिषा दीप्त्या शोशुचानः भृशं दीप्यमानः अत एव रोदसी द्यावापृथिव्यौ जायमानः एव अपृणाः आपूरयसि, शोचिषा आपालयसि वा । पॄ पालनपूरणयोः । छान्दसे लुङि प्वादित्वात् ह्रस्वः ( पा ७·३·८० ) । शुचेर्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम् । "अभ्यस्तानामादिः" ( पा ६·१·१८९ ) इत्याद्युदात्तत्वम् । किंच—त्वम् एव देवान् ऋत्विजः अभिशस्तेः पापात् अमुञ्चः मुञ्चसि महित्वा महत्त्वेन माहात्म्येन । तृतीयाया आकारदेशः । यद्वा—महिम्नः मकारनकारयोः तकारवकारौ वाऽऽदेशौ भवतः, उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वम् । शंस स्तुतौ, अभिपूर्वोऽवद्यवदने वर्तते । क्तिनि "तादौ च°" ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरत्वम् । स च "उपसर्गाश्चाभिवर्जम्" ( फि ८१ ) इत्यन्तोदात्तः । स त्वम् [६]अस्मान् अभिशस्तेर्मुञ्चेति ॥

---

**त्वमिति** ॥ याज्यामाह—'त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः । त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा' इति ॥ हे अग्ने, त्वं शोशुचानः भृशं दीप्यमानः जायमानः एव रोदसी द्यावापृथिव्यौ शोचिषा दीप्त्या आ अपृणाः सर्वतः पूरितवानसि । हे जातवेदः उत्पन्नजगद्वेदिन् वैश्वानर, त्वं महित्वा स्वमहिम्ना देवान् ऋत्विजः अभिशस्तेः पापात् अमुञ्चः मोचितवानसि ॥

---

※[ द्र. निरुक्त ३·२१ ' स्वस्ति इत्यविनाशनाम ] । *[ द्र. निरुक्त ७·१९ ] । ६. मै– 'अस्मान्' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्या। ]

अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं॑ सुवीर्यम् ।
वयं जयेम शतिनं॑ सहस्रिणं वैश्वानर (२) वाजमग्ने तवोतिभिः ॥
वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥

अस्माकम् । अग्ने । मघवत्स्विति मघवत्—सु । धारय । अनामि ।
क्षत्रम् । अजरम् । सुवीर्यमिति सु—वीर्यम् ।
वयम् । जयेम । शतिनम् । सहस्रिणम् । वैश्वानर ( २ ) ।
वाजम् । अग्ने । तव । ऊतिभिरित्यूति—भि ॥
वैश्वानरस्य । सुमताविति सु—मतौ । स्याम । राजा । हिकम् । भुवनानाम् । अभिश्रीरित्यभि श्रीः ।
इत । जात । विश्वम् । इदम् । वीति । चष्टे । वैश्वानर । यतते । सूर्येण ॥

" वैश्वानरं द्वादशकपाळं निर्वपेदायतनं गत्वा " ( तैस २ २ ६ ) इत्यस्य याज्या—'अस्माकम्' इति जगती ॥ हे अग्ने वैश्वानर, अस्माक पुत्रादीन् प्रथम तावद्धनवत कुरु, ततः मघवत्सु धनवत्सु कृतेषु धारय स्थापय क्षत्र बलम् अनामि अनमनशीलम् । ग्रह्यादिलक्षणो णिनि ( पा ३ १ १३४ ) । अजरम् अविनाशं सुवीर्यम् अनभिभवनीयपुत्रादिपुरुषकर्मकम् । " नञो जरमरमित्रमृता " ( पा ६ २ ११६ ), " वीरवीर्यौ च " ( पा ६ २ १२० ) इत्येतयोरुत्तरपदाद्युदात्तत्वम् । किंच—वय जयेम शतिन शतपोषवन्त सहस्रिण सहस्रपोषवन्त च वाजम् अन्न तव ऊतिभि रक्षणै रक्षाविशेषै तृप्तिविशेषैर्वा । क्तिन उदात्तत्वमुक्तम् ( पा ३ ३ ९७ ) । हे अग्ने अङ्गनादिगुण[७] ॥

" वैश्वानर द्वादशकपाळं निर्वपेत् सनिमेष्यन् " ( तैस २ २ ६ ) इत्यस्य याज्या—'वैश्वानरस्य सुमतौ' इति त्रिष्टुप् ॥ वैश्वानरस्य सुमतौ कल्याणानुग्रहबुद्धौ स्याम भवेम ।

अस्माकमिति ॥ चतुर्थयुग्मे पुरोनुवाक्यामाह—'अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं॑ सुवीर्यम् । वयं जयेम शतिनं॑ सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः' इति ॥ हे अग्ने, अस्माकं क्षत्रं पालकं पुत्रं मघवत्सु धारय इन्द्रेषु स्थापयेन्द्रसमानं कुरु । कीदृशं क्षत्रम् ? अनामि अनमनशीलं कस्यचिदपि नमस्कारं न करोतीत्यर्थः । अजर जरारहितम् । सुवीर्यम् अभग्नसामर्थ्यम् । हे वैश्वानर, तव ऊतिभिः त्वदीयैः पालनैः वयम्[४] अपि शतसहस्रसंख्योपेतं वाजम् अन्न जयेम ॥

वैश्वानरस्येति ॥ याज्यामाह—'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः । इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण' इति ॥ वय वैश्वानरस्य सुमतौ अनुग्रहबुद्धौ स्याम तिष्ठेम । अभिप्राप्तश्रीरयं वैश्वानरः सर्वेषां भुवनानां राजा हिकं प्रकाशक खलु । इतः एव

७ मै—अङ्गनादिगुण ।

४ तं ति—भूयः ।

अवं ते हेडो वरुण नमोभिरवं यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि ॥

अवेति । ते । हेडः । वरुण । नमोभिरिति नमः-भिः ।
अवेति । यज्ञेभिः । ईमहे । हविर्भिरिति हविः-भिः ।
क्षयन् । अस्मभ्यमित्यस्म-भ्यम् । असुर । प्रचेत इति प्र-चेतः ।
राजन् । एनाꣳसि । शिश्रथः । कृतानि ॥

"मन्क्तिन्व्याख्यान°" ( पा ६.२.१५१ ) इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—शोभनमननके मनसि स्याम । "नञ्सुभ्याम्" ( पा ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । वैश्वानरो विशेष्यते—'हिकम्' इति । हेरर्थे पादपूरणार्थे वा । राजा यः सर्वभुवनानां भूतजातानाम् अभिश्रीः आभिमुख्येनाश्रयणीयः अभिमतश्रीर्वा । इतः हेतोर्जातमात्र एवायं विश्वं भुवनम् इदं वि चष्टे विशेषेण पश्यति । सूर्येण च यतते, सूर्येण संगतो वर्तते । "उद्यन्तं वावाऽऽदित्यमग्निरनु समारोहति" ( तैब्रा २.१.२ ) इति दिवाऽऽदित्येन संगच्छते । य इत्थं महात्मा तस्य सुमतौ स्याम यथाऽस्मभ्यं दानकामाः प्रजाः स्युरिति ॥

अथ निहविषि मध्यमस्य वारुणस्य पुरोनुवाक्या—'अव ते हेडः' इति त्रिष्टुप् ॥ हे वरुण, ते तव हेडः क्रोधमभिशास्त्यादिहेतुं नमोभिः नमस्कारैः अव ईमहे अपनयामः । ई गतौ । शपो लुक् । यज्ञैश्च पूजामन्त्रैश्च हविर्भिः पुरोडाशादिभिश्चावेमहे अपनयामः । ततस्त्वम् अस्मभ्यम् अस्मदर्थमेव हे क्षयन् निवसन् अस्मदुपकारायैव यतमान । क्षियतेर्व्यत्ययेन शप् । क्षयतिरेव वा निवासकर्मा । षाष्ठिकमामन्त्रिताद्युदात्तत्वम् ( पा ६.१.१९८ ) । अस्मदीयानि कृतानि एनांसि पापानि शिश्रथः श्रथय हे असुर रक्षसां निरसितः प्रचेतः प्रकृष्टमते राजन् सदा दीप्यमान ॥

**कारणाज्जातमात्र एव इदं विश्वं चष्टे विशेषेण प्रख्यापयति । अयं वैश्वानरः सूर्यरूपेण यतते दिवा प्रवर्तते । अत एवाऽन्यत्राऽऽम्नातम्—"उद्यन्तं वावाऽऽदित्यमग्निरनु समारोहति" ( तैब्रा २.१.२ ) इति । तान्येतानि चत्वारि युग्मानि श्रूयमाणेषु सर्वेष्वपि वैश्वानरयागेषु इच्छया विकल्प्यन्ते । वैश्वानरलिङ्गस्य साधारणत्वाद्विशेषलिङ्गानां च स्पष्टानामदर्शनात् । यदि कश्चित् स्वबुद्ध्या विशेषलिङ्गं सूक्ष्ममुत्प्रेक्षेत तदा तदनुसारेण व्यवस्थाऽस्तु ॥**

**अवेति ॥ द्वितीयहविषः पुरोनुवाक्यामाह— 'अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि' इति ॥ हे वरुण, ते हेडः तव क्रोधं नमस्कारैः अव ईमहे शमयामः । यज्ञेभिः [5]यज्ञविशेषैः हविर्भिः च पुरोडाशादिभिः अव ईमहे शमयामः । हे असुर शत्रुनिरसनक्षम[6] हे प्रचेतः प्रकृष्टचित्त, हे राजन् दीप्यमान, अस्मभ्यम् [7]अस्मदनुग्रहार्थं क्षयन् इह निवसन्नस्माभिः कृतानि एनांसि शिश्रथः श्लथय ॥**

५. क.तं.ति–पूजाविशेषैः । ६. ति–°निबर्हणक्षम । ७. इ.उ.पा.हा–अनुग्रहार्थम् ।

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय ।
अथा वयमादित्य (३) व्रते तवानागसो अदितये स्याम ॥

उदिति । उत्तममित्युत्-तमम् । वरुण । पाशम् । अस्मत् ।
अवेति । अधमम् । वीति । मध्यमम् । श्रथाय ।
अथ । वयम् । आदित्य ( ३ ) । व्रते ।
तव । अनागस । अदितये । स्याम ॥

---

तत्रैव याज्या—'उदुत्तमम्' इति त्रिष्टुप् ॥ हे वरुण उत्तम पाशम् अस्मत्सकाशात् उत् श्रथाय ऊर्ध्वमुच्छ्रथय, अधमम् अव श्रथय अधस्तादवकृष्य[8] नाशय । मध्यम वि श्रथय विष्वक्कृत्य नाशय । श्रथ दौर्बल्ये चुरादिरदन्तः । वर्णव्यत्ययेनोपान्त्यस्य दीर्घत्वम् । अत्र केचित्—[9]उद्भूताभिभूतमध्यमस्थशक्तितया धर्मपाशानां त्रैविध्यमाहुः । उत्तमाधममध्यमदेहप्रभवतया त्वन्ये । ऊर्ध्वाधोमध्यमगतिहेतुत्वेनापरे । अथ अनन्तर वयम् अनागस विमुक्तसर्वपापा तव व्रते कर्मणि स्याम योग्या भवेम । अदितये अखण्डितत्वाय अदीनत्वाय वा स्याम इति । हे आदित्य अदितेः पुत्र । यद्वा—इत्थमनागस सन्तो वयमदितये अनभिशस्तये स्याम । किमर्थम् ? तव व्रते कर्मणि कर्मार्थं योग्यतार्थमिति । अनागस इति बहुव्रीहौ व्यत्ययेन "नञ्सुभ्याम्" (पा ६ २ १७२) इति न प्रवर्तते । लुप्तमत्वर्थीयो वा अनागस्विन इति ॥

अथ तत्रैव त्रिहविष उत्तमस्य "दधिक्राव्णे चरुम्" (तैसं २ २ ५) इत्यस्य पुरोनुवाक्या—'दधिक्राव्ण' इत्यनुष्टुप् ॥ दधीनि धारणसमर्थानि हवींषि काष्ठानि वा । दधाते "आदृगमहन" (पा ३.२.१७१) इति किन्प्रत्ययः । तानि क्रामति गच्छतीति

---

उदिति ॥ याज्यामाह—'उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम' इति ॥ हे वरुण, उत्तमम् उत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशम् उत्कृष्य श्रथाय विनाशय, अधमम् अधमाङ्गे पादप्रदेशे स्थापितं पाशमवकृष्य विनाशय, मध्यम मध्यप्रदेशे स्थापितं पाशं विच्छेदय । अथ पाशत्रयविनाशानन्तरं हे आदित्य सूर्यसदृश वरुण, वयम् अनागसः पापरहिताः सन्तः तव व्रते [8]स्वदीयकर्मणि अदितये अखण्डितत्वाय स्याम योग्या भवेम ॥

---

८ भ–अधस्तादाकृष्य । ९ भै–उद्भूतादिभूतमध्यस्थ° ।

---

८ आ पा हा–स्वकीयकर्मणि ।

[ काम्येष्टियाज्यापुरोनुवाक्याः

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ॥

दधिक्राव्ण इति दधि–क्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।
सुरभि । नः । मुखा । करत् । प्रेति । नः । आयूꣳषि । तारिषत् ॥

---

दधिक्रावा अग्निः । " अन्येभ्योऽपि दृश्यन्ते " ( पा ३.२.७५ ) इति क्रमेर्वनिप् । " विड्वनोरनुनासिकस्यात् " ( पा ६.४.४१ ) इत्यात्त्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । vजिष्णोः जयशीलस्य vअश्वस्य व्यापकस्याश्वरूपस्य वा, " अश्वो रूपं कृत्वा " ( तैब्रा ३.८.१२ ) इति दर्शनात् । vवाजिनः अन्नवतो वेगवतो वा । ईदृशस्याग्नेरहम् vअकार्षम् करोमि, कर्मकरः स्यामिति यावत् । करोतेश्छान्दसो लुङ् । छान्दस इकारोपजनः । स च vनः अस्माकं vमुखा मुखानि vसुरभि सुरभीणि अस्मत्सुकृतसमृद्ध्या समासादितसौरभ्याणि vकरत् करोतु । करोतेर्लेटि व्यत्ययेन शप् । शपो वा लुकि ( पा २.४.७३ ) लेटोऽडागमः ( पा ३.४.९४ ) । छान्दसे वा लिङि " कृमृदृरुहिभ्यः° " ( पा ३.१.५९ ) इत्यङ् । " ऋदृशोऽङि गुणः " ( पा ७.४.१६ ) । " °अमाङ्योगेऽपि " ( पा ६.४.७५ ) इत्यडभावः । द्वितीयाबहुवचनस्य " सुपां सुलुक्° " ( पा ७.१.३९ ) इति लुगाकारौ । vनः अस्माकम् vआयूंषि च vप्र vतारिषत् प्रवर्धयतु । तारयतेर्लेटि अडागमः । " सिब्बहुलं लेटि " ( पा ३.१.३४ ) इति सिप् । " उपसर्गाद्बहुलम् " ( पा ८.४.२८ ) इति नसो णत्वम् ॥

---

**दधिक्राव्ण इति** ॥ तृतीयस्य हविषः पुरोनुवाक्यामाह—' दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ' इति । दधि क्रामति प्राप्नोतीति दधिक्रावा, एतन्नामको दधिप्रियः कश्चिद्देवविशेषः । अग्निरित्यन्ये । तस्य देवस्य vअकारिषम् अहं कर्म कृतवानस्मि । कीदृशस्य ? vजिष्णोः जयशीलस्य vअश्वस्य व्यापिनः vवाजिनः अन्नवतः । स देवः vनः अस्माकं मुखं vसुरभि vकरत् कर्पूरादिद्रव्यसमृद्धिप्रदानेन सुगन्धोपेतं करोतु । अस्माकम् vआयूंषि च vप्र vतारिषत् प्रवर्धयतु ॥

काम्येष्टियाज्यापुरोनुवाक्याः ]

आ द॒धि॒क्राः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इ॒व ज्योति॑षा॒ऽपस्त॑तान ।
स॒ह॒स्र॒साः श॑त॒सा वा॒ज्यर्वा॑ पृ॒णक्तु॒ मध्वा॒ समि॒मा वचां॑सि ॥

एति॑ । द॒धि॒क्रा इति॑ दधि-क्रा । शव॑सा । पञ्च॑ । कृ॒ष्टी ।
सूर्यः॑ । इ॒व । ज्योति॑षा । अ॒प । त॒ता॒न॒ ।
स॒ह॒स्र॒सा इति॑ सहस्र-सा । श॒त॒सा इति॑ शत-सा । वा॒जी ।
अर्वा॑ । पृ॒णक्तु॑ । मध्वा॑ । समिति॑ । इ॒मा । वचां॑सि ॥

---

तत्रैव याज्या —' आ दधिक्रा ' इति त्रिष्टुप् ॥ दधीनि क्रामतीति " जनसनखन° " ( पा ३ २ ६७ ) इति विट् । पूर्ववदात्त्वम् ( पा ६ ४ ४१ ) । ईदृशोऽग्नि $^{v}$पञ्च $^{v}$कृष्टीः मनुष्यान् चतुरो वर्णान् निषादपञ्चमान् $^{v}$शवसा $^{v}$आ $^{v}$ततान अन्नवत्त्वेन बलवत्त्वेन वा सुखवतीः करोति । छान्दसो लिट् । किंच—$^{v}$सूर्य $^{v}$इव $^{v}$ज्योतिषा दीप्त्या $^{v}$अप कर्माणि प्रजानामाततान व्यक्तीचकार । अप एव वा ज्योतिषा दीप्त्या ततान । " ऊडिदम्° " ( पा ६ १ १७१ ) इत्यन्नयो विभक्तिरुदात्ता । किंच $^{v}$सहस्रसा $^{v}$शतसा च बहुतरस्य प्रधानस्य सविभक्ता दाता वा भक्तेभ्य सहस्र शत वा सनोति ददातीति । तेनैव विट् ( पा ३ २ ६७ ), तेनैव चात्त्वम् ( पा ६ ४ ४१ ) । $^{v}$वाजी वेगवान् अन्नवान् वा । $^{v}$अर्वा अरणशील । अर्ते " अन्येभ्योऽपि दृश्यन्ते " ( पा ३ २ ७५ ) इति वनिप् । एव महाभागोऽग्नि $^{v}$इमा इमान्यस्मदीयानि $^{v}$वचांसि $^{v}$मध्वा मधुसदृशेन शवसा रसेन $^{v}$सं $^{v}$पृणक्तु ससृजतु । ततो मधुराणि शवसा सुखानि स्वयमेव श्रोष्यतीति भाव । अस्माक श्रोतव्यानि वचनानि श्रुत्वा वचनार्थान् करोतु । अयं चाभिशासनादस्माद् मुञ्चत्वित्याशास्महे ॥

---

एति ॥ याज्यामाह—' आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषाऽपस्ततान । सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ' इति ॥ अय $^{v}$दधिक्राः $^{v}$पञ्च $^{v}$कृष्टीः निषादपञ्चमैः चतुर्भिर्वर्णैः पञ्चविधान् मनुष्यान् $^{v}$आ $^{v}$ततान सर्वतो विस्तारयति । किं कृत्वा ? शवसा अन्नेन संयोज्य । यथा $^{v}$सूर्यः $^{v}$ज्योतिषा रश्मिना भूरसमादाय वर्षतौ $^{v}$अपः विस्तारयति तद्वत् । कीदृशो दधिक्राः ? सहस्रसंख्याकं धन सनोति ददातीति $^{v}$सहस्रसाः । तथा $^{v}$शतसाः । $^{v}$वाजी अन्नवान् । $^{v}$अर्वा कर्मभूमौ गमनवान् । तादृशो देवः $^{v}$मध्वा मधुराणि मदीयानीमानि स्तुतिरूपाणि $^{v}$वचांसि $^{v}$सं $^{v}$पृणक्तु अङ्गीकरोतु ॥

पूर्वोक्तामेव त्रिहविष्कामिष्टिं फलान्तराय विधत्ते—" एतामेव निर्वपेत् प्रजाकामः संवत्सरो वा एतस्याशान्तो योनिं प्रजायै पशूनां निर्दहति योऽलं प्रजायै सन् प्रजां न विन्दते यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव भागधेयेन शमयति सोऽस्मै शान्तः स्वाद्योनेः प्रजां प्र जनयति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनं विन्दते प्रजाम् " ( तैसं २·२·५ ) इति ॥ यौवनादिसंपन्नो[९] प्रजामुत्पादयितुं योग्योऽपि[१०] यः प्रजां न लभते, एतस्य प्रजार्थं प्रवृत्तां योनिं गर्भधारणस्थानमशान्तः संवत्सरो देवो वैश्वानरोऽग्निः निःशेषेण दहति । एवं पशुष्वपि योज्यम् । द्वादशकपालेन तु शान्तो योनिं समाधाय प्रजामुत्पादयति ॥

[११]उत्पन्नपुत्रस्य पूतत्वादिफलार्थमेकहविष्कामिष्टिं विधत्ते—" वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालः त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति " (तैसं २·२·५) इति ॥ द्वादशत्वसंख्यान्तर्गताभिरष्टत्वादिसंख्याभिर्गायत्र्यादिसाम्यमापाद्य[१२] प्रशंसति ॥

[१३]तामेवेष्टिं दर्शाद्यत्ययप्रायश्चित्तार्थं विधत्ते—" अव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्या अथो देवता एवान्वारभ्य सुवर्गं लोकमेति " ( तैसं २·२·५ ) इति ॥ यदा संवत्सरमेवोपदधाति [१४]विच्छेदरहितं करोति तदा संवत्सरस्यावयवयोर्दर्शपूर्णिमादिनयोरनुष्ठानस्य कुतोऽत्ययः ? किंच संवत्सरे प्रीते सर्वदेवतानां प्रीतत्वात् ता देवता आश्रित्य तदनुग्रहेण स्वर्गं प्राप्नोति ॥

आधानेन समृद्धिरहितो योऽग्निमुद्वासयिष्यति तस्य द्विहविष्कामिष्टिं विधत्ते—" वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्नाग्नेयमष्टाकपालं निर्वपेत् वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन् यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यथो यथा जनं यतेऽवसं करोति तादृगेव तद्द्वादशकपालो वैश्वानरो भवति द्वादशमासाः संवत्सरः संवत्सरः खलु वा अग्नेर्योनिः स्वामेवैनं योनिं गमयत्याद्यमस्यान्नं भवति " (तैसं २·२·५) इति । अष्टत्वसंख्यया गायत्रीद्वारा [१५]तत्सहोदरस्याग्नेः सर्वस्याप्यातिथ्यं कृतं भवति । किंच यथा लोके दूरदेशवर्तिनं पितृभ्रात्रादिरूपं जनं प्रति यते गच्छते [१६]-पुरुषायावसं रक्षकं-[१६] पाथेयं करोति तादृशमिदमुद्वासयिष्यमाणायाग्नये [१७]पुरोडाशप्रदानम् । द्वादशसंख्यया मासद्वारा संवत्सररूपां स्वयोनिमेवाग्निं गमयति । अग्नेरनुग्रहेणास्य समीचीनमन्नं भवति ॥

९. आ.क.हा–°संपत्त्या । १०. आ.ति.हा–योग्यः । ११. आ–तस्य । १२. क–°साम्यमनूद्य । १३. आ.क–एतामे° । १४. तं.ति–अवच्छेद° । १५. क–वत्सरसोदर° । १६–१६. ति–पुरुषाय यावत् संरक्षकम् । १७. तं–पुनरादेयप्र°; ति–पुनराधेयप्र° ।

अ॒ग्निर्मू॒र्धा* भु॒वः* ॥

अ॒ग्नि । मू॒र्धा ॥

भुवं ॥

" आग्नेयमष्टाकपाल निर्वपेद्वैश्वानर द्वादशकपालमुद्ग्रामयिष्यन् " ( तैस २ २ ५ ) इति ' द्विहविष्कस्याग्नेयस्य याज्यानुवाक्ये—' अग्निर्मूर्धा दिव ककुत् ', ' भुवो यज्ञस्य ' इति गायत्रीत्रिष्टुभौ ॥ एतयोराद्या ' उपप्रयन्त ' ( तैस १ ५ ५ ) इत्यत्र व्याख्याता । अन्या त्वग्निकाण्डे ( तैस ४ ४ ४ ) व्याख्यास्यते यत्राम्नायते, ' अग्निर्मूर्धा ' "इत्यत्रानुवाके । इह तु प्रतीके अनयोर्गृह्येते । [v]अयम् [v]अग्नि देव [v]दिव· [v]मूर्धा प्रधानभुत [v]पृथिव्या च [v]ककुत् प्रधान [v]पति [v]अपां [v]रेतांसि कार्यभूतानि भुवनानि [v]जिन्वति प्रीणयतीति प्रथमा ॥

[v]भुव [v]यज्ञस्य [v]रजस उदकस्य [v]च नेता प्रापयिता भवसि तदानीम् । कदा ? [v]यत्र शिवाभि [v]नियुद्भि अश्वै [v]सचसे सम्बध्यसे । मरुतामश्वा नियुतस्तद्वन्तो वायव* इह गृह्यन्ते । तदानीं यज्ञ च प्रवर्तयसि, उदक चावपातयसि, [v]दिवि च मूर्धान प्रधानभूत यज्ञ च [v]दधिषे स्थापयसि [v]सुवर्षां स्वर्गिणां सभक्तारम् । स त्व हे [v]अग्ने, तव जिह्वां हविषो वोढ्रीं चकृषे कुरुष्वेति द्वितीया ॥

अग्निरिति ॥ अत्राऽऽग्नेये हविषि याज्यापुरोनुवाक्ययोः प्रतीकद्वयमाह—' अग्निर्मूर्धा ', ' भुवः ' इति । अनयोः ' अग्निर्मूर्धा ' इत्यसौ पुरोनुवाक्या । सा च ' उपप्रयन्तः ' ( तैसं १ ५ ५ ) इत्य नुवाके व्याख्याता । ' भुवो यज्ञस्य ' इत्यसौ याज्या । सा तु चतुर्थकाण्डे ( तैसं ४ ४ ४ ) आम्नातत्वात् तत्रैव व्याख्यास्यते ॥

प्रजाभिः समृद्धं ग्राम कामयमानस्य द्विहविष्कामिष्टिं विधत्ते—" वैश्वानरं द्वादशकपाल निर्वपेत् मारुत॰ सप्तकपालं ग्रामकामः " ( तैस २ २ ५ ) इति ॥ प्रकृतावष्टाकपालैकादशकपालयो र्हविषोरेकस्मिन्नेवाग्नावधिश्रितत्वादत्रापि तत्प्राप्तावपवदति—" आहवनीये वैश्वानरमधिश्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै " ( तैस २ २ ५ ) इति । वसीयोऽत्यधिकं यत् पापं तत् पापवस्यसं तस्य ग्रामप्राप्तिप्रतिबन्धकपापस्य विधृत्यै "वियोजनायेत्यर्थः ॥ द्वादशत्वसंख्यां प्रशंसति—" द्वादशकपालो

१० ब द्विहविष्यस्या॰ । ११ तं ति–इत्यत्र । *[ द्र निघण्टु १ १५ १० ] ।

१८ ति–प्रगोज॰ ।

मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे ।
आ तू न (४) उप गन्तन ॥
मरुतः । यत् । ह । वः । दिवः ।
सुम्नायन्त इति सुम्न-यन्तः । हवामहे ।
एति । तु । नः ( ४ ) । उपेति । गन्तन ॥

---

"वैश्वानरं द्वादशकपालं निर्वपेत् मारुतं सप्तकपालं ग्रामकामः" (तैसं २.२.५) इति द्विहविषो मारुतस्य पुरोनुवाक्या—'मरुतो यद्ध वो दिवः' इति गायत्री ॥ हे मरुतः, [V]यत् [V]वः युष्मान् [V]सुम्नायन्तः सुखमिच्छन्तः । "देवसुम्नयोः°" (पा ७.४.३८) इत्यात्वम् । [V]दिवः द्युलोकात् [V]हवामहे आह्वयामः । पूर्ववत् संप्रसारणम् । हूयमाना यूयं[१२] [V]नः अस्मान् [V]उप [V]गन्तन आत्मनो विशेषवत्त्वं ख्यापयन्तु । तुशब्दो विनिवर्तकः । तिष्ठन्त्वन्ये अस्मांस्तूपागच्छतेति । "अन्येषामपि दृश्यते" (पा ६.३.१३७) इति सांहितिको दीर्घः ।

---

वैश्वानरो भवति द्वादशमासाः संवत्सरः संवत्सरेणैवास्मै सजाताꣳश्च्यावयति—" (तैसं २.२.५) इति । अस्मै यजमानार्थं सजातान् समानकुले समुत्पन्नान् मनुष्यांश्च्यावयति प्रह्वीभूतान् करोति ॥ मरुद्देवतां प्रशंसति—"मारुतो भवति मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविशमव रुन्द्धे" (तैसं २.२.५) इति । विशः करप्रदाः प्रजाः । दैविकप्रजानुग्रहेण मानुषप्रजासमृद्धिं संपादयति ॥ सप्तसंख्यां प्रशंसति—"सप्तकपालो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्द्धे" (तैसं २.२.५) इति । ईदृङ्चान्यादृङ्चेत्यादिनामधारिणां सप्तानां समूहः प्रथमो गणः । शुक्रज्योतिश्चेत्यादिको द्वितीयः । ऋतजिच्चेत्यादिकस्तृतीयः । ऋतश्चेत्यादिकश्चतुर्थः । ईदृक्षास इत्यादिकः पञ्चमः । [१९]मितासश्चेत्यादिकः षष्ठः (तैसं ४.६.५) । *गणान्तरं शाखान्तरे द्रष्टव्यम् (मैसं ४.९.१७) । वैदिकगणानुग्रहेणैव ज्ञातिगणान् बहून् संपादयति ॥ प्रकृतौ हविःष्वासादितेषु पश्चात् सामिधेनीप्रेषणे कृते ताः सामिधेन्योऽनूच्यन्ते तद्वदत्रापि सामिधेनीभ्यः प्रागेवाऽऽसादनं वैश्वानरस्य क्रियते । मारुतासादनस्य तु सामिधेन्यनुवचनकालीनत्वं विधत्ते—"अनूच्यमान आ सादयति विशमेवास्मा अनुवर्त्मानं करोति" (तैसं २.२.५) इति । प्रजां यजमानानुगामिनीं करोतीत्यर्थः ॥

मरुत इति ॥ अत्र मारुतयागे[२०] पुरोनुवाक्यामाह—'मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू न उप गन्तन' इति ॥ हे [V]मरुतः, यदि अस्मात् कारणात् वयं [V]सुम्नायन्तः सुखम् इच्छन्तः [V]दिवः द्युलोकात् [V]वः युष्मान् [V]हवामहे आह्वयामस्तस्मादाहूता यूयं [V]नः अस्मान् [V]उप [V]गन्तन प्राप्नुत ॥

---

१२. मै—'यूयम्' नास्ति ।

---

१९. इ.उ.पा—धुनिश्चे° । *[द्र. तैआ ४.२४–२५] । २०. तं.ति—°यागेषु ।

या वः शर्म॑ शशमा॒नाय॒ सन्ति॑ त्रि॒धातू॑नि दा॒शुषे॑ यच्छ॒ताधि॑ ।
अ॒स्मभ्यं॒ तानि॑ मरुतो॒ वि य॑न्त र॒यिं नो॑ धत्त वृषणः सु॒वीर॑म् ॥

या । व॒ । शर्म॑ । श॒श॒मा॒नाय॑ । सन्ति॑ ।
त्रि॒धातू॒नीति॑ त्रि-धातू॑नि । दा॒शुषे॑ । य॒च्छ॒त॒ । अधि॑ ।
अ॒स्मभ्य॒मित्य॒स्म-भ्य॒म् । तानि॑ । म॒रु॒त॒ । वीति॑ । य॒न्त॒ ।
र॒यिम् । न॒ । ध॒त्त॒ । वृ॒ष॒ण॒ । सु॒वीर॒मिति॑ सु-वीर॑म् ॥

---

गमेर्लेटि शपो लुक् । " तप्तनप्तनथनाश्च " ( पा ७ १ ४५ ) इति तनादेश । ह इति पादपूरणे निश्चये वा ॥

तत्रैव याज्या—' या व ' इति त्रिष्टुप् ॥ हे मरुत, व युष्माक या यानि शर्म शर्माणि सुखानि गृहाणि वा । पूर्वत्र " शेश्छन्दसि " ( पा ६ १ ७० ) इति शेर्लोप । उत्तरत्र " सुपां सुलुक् " ( पा ७ १ ३९ ) इति लुक् । त्रिधातूनि पृथिव्यादित्रिस्थानस्थितानि शशमानाय युष्मान् भजमानाय तदर्थं तस्मै दातु सपादितानि यानि सन्ति । शश प्लुतगतौ । ताच्छीलिकश्चानश् ( पा ३ २ १२९ ) । यानि च दाशुषे हविर्दत्तवते ददते वा यजमानाय अधि यच्छत अधिक प्रयच्छत । यच्छतेश्छान्दसे लङि ( पा ३ ४ ६ ) अडभाव ।

---

येति ॥ याज्यामाह—' या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि । अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ' इति ॥ हे मरुतः, वः युष्मान् शशमानाय यजमानाय दातुं या शर्म यानि सुखानि सन्ति संपादितानि विद्यन्ते, त्रिधातूनि त्रिस्थानानि लोकत्रयवर्तीनि यानि सुखानि दाशुषे हविर्दत्तवते अधि यच्छत, अधिकं यथा भवति तथा भवन्तः प्रयच्छन्ति तानि सर्वाणि अस्मभ्यं वि यन्त प्रयच्छत । किंच हे वृषणः अभिमतफलस्य वर्षितारः, रयिं धन नः अस्मभ्यं धत्त संपादयत, सुवीरं शोभनपुत्रं च संपादयत ॥

अदि॑तिर्न उरुष्य॒त्वदि॑ति॒ः शर्म॑ यच्छतु ।
अदि॑तिः पा॒त्वꣳह॑सः ॥
अदि॑तिः । नः॒ । उ॒रु॒ष्य॒तु॒ ।
अदि॑तिः । शर्म॑ । य॒च्छ॒तु॒ ।
अदि॑तिः । पा॒तु॒ । अꣳह॑सः ॥

---

"दाश्वान् साह्वान्" (पा ६·१·१२) इति दाश्वान् निपात्यते । हे मरुतः, तानि शर्माणि अस्मभ्यं वि यन्त विशेषेण यच्छत विविधा वा दत्त । यच्छतेर्लेटि शपो लुक् । किंच—रयिं धनं च नः अस्मभ्यं धत्त दत्त सुवीरं शोभनापत्यादिकम्[13] । "वीरवीर्यौ च" (पा ६·२·१२०) इत्युत्तरपदाद्युदात्तत्वम् । हे वृषणः कामानां वर्षितारः । "कनिन् युवृषि°" (उ १६२) इति निपात्यते । "वा षपूर्वस्य निगमे" (पा ६·४·९) इति दीर्घाभावः ॥

"आदित्यं चरुं निर्वपेत् संग्राममुपप्रयास्यन्" (तैसं २·२·६) [14]इत्यस्य पुरोनुवाक्या—'अदितिर्नः' इति गायत्री ॥ अदितिः अस्मान् उरुष्यतु शर्म सुखं चादितिर्नो यच्छतु ददातु । अंहसः बुद्ध्यबुद्धिकृतात् पापाच्चास्मान् अदितिः पातु निवारयतु ॥

---

इष्ट्यन्तरं विधत्ते—"आदित्यं चरुं निर्वपेत् संग्राममुपप्रयास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रति तिष्ठन्ति" (तैसं २·२·६) इति । उपप्रयास्यन्निगमिषुः । अनयेष्ट्या जितसंग्रामाः पूर्वे पुरुषा भूमावेव प्रतितिष्ठन्ति । तद्वदयमपीत्यर्थः ॥

अदितिरिति ॥ अत्र युग्मद्वयमाम्नातम् । तत्र प्रथमयुग्मे पुरोनुवाक्यामाह—'अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु । अदितिः पात्वꣳहसः' इति ॥ उरुष्यतु शत्रुभ्यो रक्षतु[*] । स्पष्टमन्यत् ॥

---

१३. तं.ति.ब–शोभनपुत्रादिकम् । १४. मै–इत्यत्र ।

---

[*][ द्र. निरुक्त ५·२३ 'उरुष्यतिः रक्षाकर्मा' ] ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम।
तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ॥

महीम्। उ। स्विति। मातरम्। सुव्रतानामिति सु-व्रतानाम्।
ऋतस्य। पत्नीम्। अवसे। हुवेम।
तुविक्षत्रामिति तुवि-क्षत्राम्। अजरन्तीम्। उरूचीम्।
सुशर्माणमिति सु-शर्माणम्। अदितिम्। सुप्रणीतिमिति सु-प्रणीतिम् ॥

---

तत्रैव याज्या—'महिमू षु' इति त्रिष्टुप् ॥ मही महती महनीयां वा मातर मातृस्थानीयां वा सुव्रतानां शोभनकर्मणां पुरुषाणाम्। "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम्। ऋतस्य सत्यस्य यज्ञस्य वा पत्नीं पालयित्रीं तुविक्षत्रां बहु(ब)लां बहुधनां वा। त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् (पा ६ २ १९९ वा १)। अजरन्तीम् अविनाशाम् उरूचीम् उरु महतोऽञ्चतीं, बहुप्रकारगतिं वा। "चौ" (पा ६ ३ १३८) इति पूर्वपदस्य दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण (पा ६ १ १६१) ङीप उदात्तत्वम्। सुशर्माणं सुसुखाम्। "सोर्मनसी°" (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम्। अदितिम् अखण्डनीयां सुप्रणीतिं [15]सुखेन शर्मणां प्रणेत्रीम्। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९)। तत्र च "तादौ च°" (पा ६ २ ५०) इति गते प्रकृतिस्वरत्वम्। ईदृशीं महीं देवीम् अवसे रक्षणाय तस्यास्तर्पणाय वा हुवेम सुष्ठु आह्वयाम। व्यत्ययेन श। पूर्ववत् सम्प्रसारणम्। "सुञः" (पा ८ ३ १०७) इति सो संहितायां षत्वम्। उ इति पादपूरणे। "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति तस्य संहितायां दीर्घत्वम् ॥

---

महीमिति ॥ याज्यामाह—'महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम्' इति ॥ अदितिम् उ अदितिदेवतामेव अवसे अस्मद्रक्षार्थं सु हुवेम सुष्ठु[21] आह्वयामः। कीदृशीम्? महीं महनीयां, सुव्रतानां मातरं शोभनकर्मणां पुरुषाणां मातृवद्धितकारिणीम्, ऋतस्य पत्नीं सत्यस्य पालयित्रीं तुविक्षत्रां बहुराजपालिताम्[22], अजरन्तीं सदा जरारहिताम्, उरूचीं विस्तीर्णगतिं सुशर्माणं समीचीनसुखोपेतां, सुप्रणीतिं सुखेन कर्मणां प्रणेत्रीम् ॥

---

१५ ब-सुखैक°।

---

२१ इ च पा हा-'सुष्ठु' नास्ति। २२ क-°पालयित्रीम्।

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणम(५)दितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥

सुत्रामाणमिति सु–त्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् ।
सुशर्माणमिति सु–शर्माणम् । अदितिम् । सुप्रणीतिमिति सु–प्रणीतिम् ।
दैवीम् । नावम् । स्वरित्रामिति सु–अरित्राम् । अनागसम् ।
अस्रवन्तीम् । एति । रुहेम । स्वस्तये ॥

पुनरपि तत्रैव याज्याविकल्पः—‘ सुत्रामाणम् ’ इति त्रिष्टुप् ॥ सुत्रामाणं सुष्ठु त्रात्रीं रक्षित्रीम् । “ आतो मनिन्° ” ( पा ३·२·७४ ) इति मनिन् । पृथिवीं विस्तीर्णाम् । “ प्रथेः षिवन् संप्रसारणम्° ” ( उ १५६ ) । द्यां द्युमतीम् अनेहसम् अपापाम् । पूर्ववदन्तोदात्तत्वम् ( पा ६·२·१७२ ) । ‘ सुशर्माणम् ’ इत्यादि गतम् । दैवीं देवानामियम्, “ देवाद्यञञौ ” ( पा ४·१·८५ वा ३ ) इत्यञ् । नावं नौसदृशीं स्वरित्रां शोभनारित्राम् । पूर्ववदन्तोदात्तत्वम् ( पा ६·२·१७२ ) । अरित्रं नाम नौस्तम्भनदण्डः । अनागसम् आगो दोषः । पूर्ववत् प्रकृतिस्वरत्वम्* । अस्रवन्तीम् अच्छिद्रां स्वस्तये अविनाशाय आ रुहेम आरुह्याम । “ लिङयाशिष्यङ् ” ( पा ३·१·८६ ) । “ अन्येषामपि दृश्यते ” ( पा ६·३·१३७ ) इति संहितायां दीर्घत्वम् ॥

**सुत्रामाणमिति** ॥ द्वितीययुग्मे पुरोनुवाक्यामाह— ‘ सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् । दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ’ इति ॥ स्वस्तये क्षेमाय अदितिम् आ रुहेम प्राप्नुयाम ॥ कीदृशीम् ? सुत्रामाणं सुष्ठु त्रात्रीं पृथिवीं विस्तीर्णां द्यां द्योतमानाम् अनेहसं कालात्मिकां चिरकालस्थायिनीमित्यर्थः । [23]-सुशर्माणं शोभननाम्नीं सुप्रणीतिं सुष्ठु प्रापणकर्त्रीम्-[23] दैवीं नावम् । यथा मनुष्यनिर्मिता भूमिर्महाजलस्योपरि वर्तत इत्यर्थः । स्वरित्रां सुष्ठु शत्रुभ्यः पालयित्रीम् अनागसं पापरहिताम् अस्रवन्तीं छिद्ररहिताम् ॥

*[ द्र. भट्टभास्करभाष्यम् पृष्ठम् ८९ पङ्क्तिः १४ ] ।

**२३–२३.** आ.क–‘ सुशर्माणं......प्रापणकर्त्रीम् ’ नास्ति ।

इमाꣳ सु नावमाऽरुहꣳ शतारित्राꣳ शतस्फ्याम् ।
अच्छिद्रां पारयिष्णुम् ॥ ११ ॥

[ दिवा स सहस्रिणं वैश्वानराऽऽदित्या त् नोऽनेहसꣳ सुशर्माणमेकान्नविꣳ शतिश्च ]

इमाम् । स्विति । नावम् । एति । अरुहम् ।
शतारित्रामिति शत-अरित्राम् । शतस्फ्यामिति शत-स्फ्याम् ।
अच्छिद्राम् । पारयिष्णुम् ॥ ११ ॥

[ देवासुरा परा भूमिर्भूमिरुपप्रयन्त स पश्याम्ययज्ञः
स पश्याम्यग्निहोत्र मम नाम वैश्वानर एकादश ]

[ देवासुरा क्रुद्ध स पश्यामि स पश्यामि नक्तमुप गन्तनैकपञ्चाशत् ]

[ देवासुरा पारयिष्णुम् ]

पुनरपि तत्रैव गायत्रीत्वात् पुरोनुवाक्याविकल्प —'इमाम्' इति ॥ [v]इमा पृथिवीं [v]नाव नौस्थानीयां [v]शतारित्रां [१६]बहुरित्रा [v]शतस्फ्या बहुतरणदण्डा [v]अच्छिद्राम् अरन्ध्राम् । अच्छिद्रामिति तत्पुरुष * । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ २ ) । [v]पारयिष्णु पारप्रापण-समर्थाम् । पार तीर कर्मसमासौ । "णेश्छन्दसि" ( पा ३ २ १३७ ) इतीष्णुच् । ईदृशीं पृथिवीं देवीं [v]सु [v]आ [v]अरुह सुष्ठु आरोहामि । छान्दसे लुङि ( पा ३ ४ ६ ) "कृमृदृरुहिभ्य°" ( पा ३ १ ५९ ) इत्यङ् ॥

॥ इति पञ्चमे प्रपाठके एकादशोऽनुवाक ॥

॥ इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमकाण्डे पञ्चमप्रपाठक ॥

इमामिति ॥ याज्यामाह— 'इमाꣳ सु नावमाऽरुहꣳ, शतारित्राꣳ शतस्फ्याम् । अच्छिद्रा पारयिष्णुम्' इति ॥ [v]इमां भूमिं [v]नावं नौसदृशीं सुष्ठु [v]आ [v]अरुह प्राप्तवानस्मि । कीदृशीम् ? शतसंख्याकान्यरित्राणि चारिभ्यो[२४] रक्षकाण्यायुधानि यस्यां सा शतारित्रा तां, [२५] दिक्पालकैः पालिता मित्यर्थः । शतसंख्याकाः स्फ्यसदृशास्तरणदण्डा यस्यां सा शतस्फ्या ताम् । [२६]-मण्डूककूर्मादिभिर्जलस्योपरि धारितामित्यर्थः-[२६] । [v]अच्छिद्राम् [२७]-अधोभागे जलस्य[२८] प्रवेशच्छिद्ररहिताम्-[२७] । [v]पारयिष्णुम् अभीष्ट फलस्य पारं नेतुं समर्थाम् ॥

१६ मै–'बहुरित्राम्' नास्ति । *[ बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६ २ १७२ ) इत्यनेनान्तो दात्तत्वप्रसक्तौ तन्निवारणाय तत्पुरुषस्वीकारः इति वेदितव्यम् । द्र तैसं १ १ ५ 'अच्छिद्रेण पवित्रेण' इत्यत्र भट्टभास्करीय भाष्यम् । ] ।

२४ आ–चोरेभ्यः । २५ क–ताम्कपालकै । २६–२६ 'मण्डूक मित्यर्थः' नास्ति । २७–२७ क–दोषरहिताम् । २८ तै ति–जल° ।

युद्धभूमिं प्राप्तस्य [२९]जयार्थिन इष्टिं विधत्ते—"वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आयतनाद्देवा असुरानजयन् यद्वैश्वानरं द्वादशकपालं निर्वपति देवानामेवाऽऽयतने यतते जयति तꣳ संग्रामम्" (तैसं २·२·६) इति। यस्मिन्नायतने युद्धं भविष्यति तत्प्राप्य तस्मिन् [३०]भूप्रदेशे निर्वपेत्। संवत्सरदेवताया [३१]भूबलस्य स्वामित्वात् तया पालिते देशे देवानां जयस्तद्वद्वयमपि प्रयतते तस्माज्जयति॥ मारणादिपापार्थं प्रवृत्तयोः परस्परवैरिणोरन्नं यो भुङ्क्ते तस्य प्रायश्चित्तरूपामिष्टिं विधत्ते—"एतस्मिन् वा एतौ मृजाते यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेवात्ति नास्मिन् मृजाते" (तैसं २·२·६) इति। [३२]अभिचारादिना परस्परमारणोद्युक्तौ विद्विषाणौ तावेतौ स्वकीयान्नभुजि स्वकीयं पापं मृजाते लेपयतः। संवत्सरदेवेन स्वदितं निर्दोषीकृतमेवान्नमसावत्ति। अतस्तौ नास्मिँल्लेपयतः॥

यावुभौ परस्परमद्रोहाय शपथं कुरुतस्तयोर्मध्ये प्रथमं द्रुह्यतः प्रायश्चित्तायेष्टिं विधत्ते—"संवत्सराय वा एतौ सममाते यौ सममाते तयोर्यः पूर्वोऽभिद्रुह्यति तं वरुणो गृह्णाति वैश्वानरं द्वादशकपालं निर्वपेत् सममानयोः पूर्वोऽभिद्रुह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेवाऽऽप्त्वा निर्वरुणं परस्तादभि द्रुह्यति नैनं वरुणो गृह्णाति" (तैसं २·२·६) इति। संवत्सराय संवत्सरदेवं साक्षिणं कृत्वेत्यर्थः। सममाते सम्यक् शपथं कुरुतः। वरुणग्रहणं नाम रोगोत्पत्तिः। निर्वरुणं रोगनिवारकं संवत्सरदेवमेव प्रथमतः प्राप्य पश्चात् तद्बलेन युक्तो द्रोहं कृतवान् भवति। ततो नास्य वरुणग्रहणं भवति॥

अविं प्रतिगृहीतवतः पापपरिहारायेष्टिं विधत्ते—"आर्व्यं वा एष प्रति गृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरं द्वादशकपालं निर्वपेदविं प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितामेव प्रति गृह्णाति नाऽऽर्व्यं प्रति गृह्णाति" (तैसं २·२·६) इति। अवत्यस्मादित्यार्व्यं पापम्। श्लेष्मरोग इति केचित्। संवत्सरेण स्वदितां निर्दोषीकृताम्॥

अधस्तादुपरिष्टाच्चोभयतोदन्तैर्युक्तं प्राणिस्वरूपं प्रतिगृहीतवतः पापपरिहारायेष्टिं विधत्ते—"आत्मनो वा एष मात्रामाप्नोति य उभयादत् प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेदुभयादत् प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेव प्रति गृह्णाति नाऽऽत्मनो मात्रामाप्नोति" (तैसं २·२·६) इति। मात्रां हिंसाम्। [३३]उभयतो दन्ता[३३] यस्य तत् स्वरूपमुभयादत्॥ धनलाभमुद्दिश्य दातृसमीपं गमिष्यत इष्टिं विधत्ते—"वैश्वानरं द्वादशकपालं निर्वपेत् सनिमेष्यन्त्संवत्सरो वा अग्निर्वैश्वानरो यदा खलु वै संवत्सरं जनतायां चरत्यथ स धनार्घो भवति यद्वैश्वानरं द्वादशकपालं सनिं निर्वपति संवत्सरसातामेव सनिमभि प्रच्यवते दानकामा अस्मै प्रजा भवन्ति" (तैसं २·२·६) इति। धनलाभम्। लोके यो याचको दातृजनसमूहे संवत्सरं चरति तदानीमसौ धनसमृद्धो भवति संवत्सरदेवेन सातां दत्तामेव सनिं धनलब्धिमभिप्राप्नोति, अस्य प्रजाश्च दानशीला भवन्ति॥

तयेष्ट्या दातृसमीपे धनं लब्ध्वा [३४]गृहमागतस्य नैमित्तिकीमिष्टिं विधत्ते—"यो वै संवत्सरं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन विमुञ्चति प्रतिष्ठित्यै" (तैसं २·२·६) इति। संवत्सररूपं वैश्वानरं प्रयुज्य धनलाभार्थमिष्ट्या निर्बध्य यो न मुञ्चेत् सोऽप्रतिष्ठितो भवति। पुनरिष्ट्या तदीयभागं दत्त्वा तं विमुञ्चति विसर्जितवान् भवति॥ तत्रेतिकर्तव्यतां कांचिद्विधत्ते—"यया रज्ज्वोत्तमां गामाजेत् तां भ्रातृव्याय प्रहिणुयान्निर्ऋतिमेवास्मै प्रहिणोति" (तैसं २·२·६) इति। दातृभ्यो लब्धासु गोषूत्तमां गां यया रज्ज्वा बद्ध्वा समानयति तां रज्जुं भ्रातृव्यविनाशार्थं तदीयगोष्ठे प्रक्षिपेत्। तथा सति निर्ऋतिं दारिद्र्यरूपां राक्षसीमेव भ्रातृव्यार्थं प्रेषयति॥

२९. क–बलार्थिनः। ३०. आ.हा–प्रदेशे; तं.ति–भूदेशे। ३१. तं.ति–भूबल°; क–भूमिबल°। ३२. आ–अविचारादिना। ३३. इ.उ.पा–उभये दन्ताः; तं.ति–उभयदन्ताः। ३४. आ.क–गृहे समागतस्य।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अत्र विनियोगसङ्ग्रहः —

" अस्यानुवाकगा याज्या यागे वैश्वानराभिधे ।
वैश्वेत्यष्टौ विकल्पाः स्युरवन्ते वारुणे चरौ ॥ १ ॥
दधीति दध्यादिधरावग्न्युद्वासनयागके ।
अग्निर्भुव इति द्वे स्तः प्रतीके ते उभे मते ॥ २ ॥
मरुत्सप्तकपालेष्टावदीत्यादित्यके चरौ ।
चतस्रः स्युर्विकल्पार्था इति प्रश्नोऽत्र पञ्चमः ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" यद्द्वादशकपालेष्टेर्वैश्वानर्या अनन्तरम् ।
श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः ॥
अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत् ।
द्रव्यं द्रव्यान्तरे नो चेद्गुणस्तर्हि [३४]फलत्यसौ ॥
वाक्यैक्यमुपसंहाराद्विस्पष्टं तत्तु बाध्यते ।
नानागुणविधौ तस्मादष्टाद्वारांशिर्संस्तुतिः ॥ " (जैन्या १ ४ ३२–३४) इति ॥

काम्येष्टिकाण्डे श्रूयते—" वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति " (तैस २ २ ५) इति ।

अत्राष्टत्वादिसङ्ख्यासामान्यात् पुरोडाशानां गायत्र्यादिरूपत्वकल्पना[३५] कृता । इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वादिसङ्ख्यानामन्तर्भावात् तां संख्यां निमित्तीकृत्याग्निहोत्रशब्दवत्[३६] अष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः पक्षः । नात्र द्वादशकपालशब्दः सङ्ख्यापरः किंतु पुरोडाशद्रव्यपरः । द्वादशसु कपालेषु संस्कृत इति व्युत्पत्तेः । एवमष्टाकपालादिशब्दा अपि । तथा सति द्रव्यान्तरे अनन्तर्भावान्नामधेयस्य निमित्तं नास्तीति चेदेवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयताम् । न [३७]चोत्पत्तिशिष्टद्वादशकपालपुरोडाशावरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यम् । ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः । अयमप्यनुपपन्नः । बहूनां गुणानां विधौ वाक्यभेदापत्तेः । न च भिन्नान्येवैतानि वाक्यानीति वाच्यम् । 'वैश्वानरं द्वादशकपालं निर्वपेत्' (तैस २ २ ५) इति विहितस्य 'यस्मिञ्जात एताम्' इत्युपसंहारेण वाक्यैकत्वावगमात् । तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते ॥

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वाऽग्रिमः ।
कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि ॥
जाते यस्मिन्निष्टिमेतां निर्वपेत्तस्य पूतता ।
तच्चेप्सितं पितुस्तेन पिता तत्र प्रवर्तते ॥ " (जैन्या ४ ३ २६–२७) इति ॥

काम्येष्टिकाण्डे—" वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते " इति प्रकृत्य श्रूयते— " यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति " (तैस २ २ ५) इति । तत्र पितुः प्रबुद्धस्य कर्तृत्वं न तु मुग्धस्य पुत्रस्य । ततोऽनुष्ठानफलयोर्वैयधिकरण्यपरिहाराय पितुरेव

[३४] [जैन्या—' फले त्वसौ ' इति पाठः ।] । ३५ इ.उ पा—°रूपकल्पना । ३६. इ उ पा—°होत्रादिशब्दवत् । ३७ इ उ क—चोत्पत्तिविशिष्ट° ।

पूतत्वादिफलमिति चेत् । नैवम् । 'यस्मिञ्जाते निर्वपति स पूत' इति वाक्येन फलस्य पुत्रसंबन्धावगमात् । न चात्र निष्फलस्य पितु (अ)प्रवृत्तिरिति वाच्यम् पुत्रनिष्ठपूतत्वादेरीप्सिततरत्वेन स्वफलबुद्ध्या प्रवृत्तिसंभवात् पुत्रस्य पूतत्वादिकम् ॥

तत्रैवान्यच्चिन्तितम्—

"जन्मानन्तरमेवेष्टिर्जातकर्मणि वा कृते ।
निमित्तानन्तरं कार्यं नैमित्तिकमतोऽग्रिमः ॥
जातकर्मणि निर्वृत्ते स्तनप्राशनदर्शनात् ।
प्रागेवेष्टौ कुमारस्य विपत्तेरूर्ध्वमस्तु सा ॥" (जैन्या ४ ३ २८–२९) इति ॥

पुत्रजन्मनो वैश्वानरेष्टिनिमित्तत्वान्नैमित्तिकस्य कालविलम्बायोगाज्जन्मानन्तरमेवेष्टिरिति चेत् । नैवम् । स्तनप्राशनं तावज्जातकर्मानन्तरं विहितम् । यदि जातकर्मणः प्रागेव वैश्वानरेष्टिर्निरुप्येत तदा स्तनप्राशनस्यात्यन्तविलम्बनात् पुत्रो विपद्येत । तथा सति पूतत्वादिकमिष्टिफलं कस्य स्यात् । तस्मान्न जन्मानन्तरं किंतु जातकर्मण ऊर्ध्वं सेष्टिः ॥

तत्रैवान्यच्चिन्तितम्—

"जातकर्मानन्तरं स्यादाशौचेऽपगतेऽथवा ।
निमित्तसंनिधेराद्यः कर्तृशुद्ध्यर्थमुत्तर[38] ॥" (जैन्या ४ ३ ३०) इति ॥

यद्यपि जातकर्मानन्तरमेव तदनुष्ठाने निमित्तभूतं जन्म संनिहितं भवति तथाऽप्यशुचिना पित्राऽनुष्ठीयमानमङ्गविकलं भवेत् । जातकर्मणि तु विपत्तिपरिहाराय तात्कालिकी शुद्धिः शास्त्रेण दर्शिता । ततो मुख्यसंनिधेरवश्यबाधितत्वाच्छुद्धिलक्षणाङ्गवैकल्यं वारयितुमाशौचादूर्ध्वमिष्टिं कुर्यात् ॥

द्वादशाध्यायस्य तृतीयपादे चिन्तितम्—

"वैश्वानरे पाथिकृते साहित्यं वा विकल्पनम् ।
साहित्यं स्याददृष्टाय विकल्पः स्यात् समाधये ॥" (जैन्या १२–३.६) इति ॥

विहितयोर्दर्शपूर्णमासयोः कदाचिदननुष्ठाने प्रायश्चित्तं श्रूयते—"वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य" (तैस २ २ ५) इति "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्" (तैसं २ २ २) इति च । अत्र पूर्वदृष्टप्रयोजनाभावाददृष्टार्थमुभयं समुच्चित्यानुष्ठेयमिति चेत् । न । यज्ञवैगुण्यसमाधेः दृष्टप्रयोजनत्वात् । अन्योन्यनिरपेक्षयोर्द्वयोर्व्रीहियववद्विकल्पः । एवमृग्यजुःसामवेदेषु विहितस्याननुष्ठानान्निषिद्धस्याऽऽचरणाद्वा यज्ञवैगुण्यं तस्य वैगुण्यमात्रस्य सर्वस्य समाधानाय निरपेक्षाणि प्रायश्चित्तानि[39] विहितानि—"भूः स्वाहेति गार्हपत्ये जुहुयात्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, भूर्भुवः सुवः स्वाहेत्याहवनीये जुहुयात्" (द्र बौश्रौ २७ ४ आपश्रौ ९ १६ ४) इति । तान्येतानि[39] विकल्प्यन्ते । प्रत्येकं वैगुण्यसमाधानक्षमत्वात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति [40]श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे
[41]कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठकः[42] ॥

---

३८ आ–कर्तृशुद्ध्यर्थ उत्तर; त ति–कर्तुः शुद्ध्यर्थमुत्तर । ३९–३९. इ उ पा–' विहितानि तान्येतानि ' नास्ति । ४० इ उ तं ति पा–श्रीमद्दिव्ययोगीन्द्रश्रीविद्या° । ४१ इ उ त पा–' कृष्ण भाष्ये ' नास्ति । ४२ इ उ पा–°प्रपाठकः समाप्तिमगमत्, तं–°प्रपाठकः समाप्तः ।

## ( अथ प्रथमकाण्डे षष्ठः प्रपाठकः )

हरिः ॐ ॥　　सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ।
बृहस्पतिप्रसूतो यजमान इह मा रिषत् ॥

समिति । त्वा । सिञ्चामि । यजुषा । प्रजामिति प्र–जाम् । आयुः । धनम् । च ।
बृहस्पतिप्रसूत इति बृहस्पति–प्रसूत । यजमान । इह । मा । रिषत् ।

---

अथ प्राजापत्यमेव[1] काण्डं याजमानम् । [2]तत्राज्यसांनाय्ययोः स्कन्नस्य स्वधा सभरति—' स त्वा ' इत्यनुष्टुभा । [v]सम् [v]सिञ्चामि सह सिञ्चामि हे स्कन्न, त्वां [v]प्रजाम् [v]आयुः [v]धनं [v]च प्रजादिभिः सह त्वामेकत्र सिञ्चामि [v]यजुषा अनेन मन्त्रेण । यजनसाधनं यजुः । अपेतस्कन्नत्वदोषं प्रजादिसाधनं त्वामनेन सेचनेन करोमीत्यर्थः । [v]बृहस्पतिप्रसूतः स्वयमेव बृहस्पतिना [3]प्रेरितोऽनुज्ञातोऽहं करोमि, न पुनर्यथारुचि[4] । तस्मात् [v]यजमान [v]इह अस्मिन् स्कन्नापराधे [v]मा [v]रिषत् मा बाधि । रिष्यतेश्छान्दसोऽङ् पुषादिर्वा [5]कर्तव्यः । बृहतां पतिः

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षष्ठे प्रपाठके पैष्टिकयाजमानमन्त्राः [1]तद्ब्राह्मणानि चाऽऽम्नायन्ते । [2]तद्विशेषस्तु विनियोगमन्त्रे दर्शितः —

" षष्ठे प्रश्ने याजमानकाण्डे द्वादश वर्णिताः ।
अनुवाकाः षट्सु मन्त्रा ब्राह्मणं पञ्चसु स्थितम् ॥
अन्ते याज्याः क्रमेणाऽऽज्यग्रहणाद्यनुमन्त्रणम् ।
आज्यग्रहो मुख्यहोमो भक्ष्यः शेषाहुतिस्तथा ॥
एतेऽनुमन्त्रणार्थीया मन्त्रा आप्यायनादिकाः ।
सूर्योपस्थित्यादिमन्त्राः, ब्राह्मणे तु विभज्यते ॥
परिग्रहो देवतानामायुधानां च सम्भृतिः ।
द्वादशद्वन्द्वसंपत्तिर्हविषां सादने विधिः ॥
विधिराश्रावणादीनां याज्या इत्यनुवाकगाः ॥ " इति ॥

तत्र प्रथमानुवाके आज्यग्रहणानुमन्त्रणमन्त्राः प्राधान्येनाऽभिधीयन्ते ।

**समिति** ॥ कल्पः —" सं त्वा सिञ्चामीति तस्सं सिञ्चेदभि धा मन्त्रयेत " ( आपश्रौ ९ १३ ४ ) इति । [3]तदिति स्कन्नमाज्यमुच्यते । " यस्याऽऽज्यमनुत्पूतं स्कन्देत् " ( आपश्रौ ९ १३ १ ) इत्यादिना

---

१ तं– एव ' नास्ति । २ तं ति–' तत्र ' नास्ति । ३ मै–प्रसूतो° । ४. त्रि पं–°थाकुपितः । ५ मै २–वक्तव्यः ।

---

१ आ–तद्वत् ब्राह्मणानि । २ क म ३–तद्विशेषविनियोगस्तु । ३ इ उ ना,पा म १ हा–तदिदम् ।

आज्यमसि सुत्यमसि सुत्यस्याध्यक्षमसि हुविरसि
वैश्वानुरं वैश्वदेुयमुत्पूतशुष्मँ सुत्यौजाः

आज्यम् । असि । सुत्यम् । असि । सुत्यस्य । अध्यक्षुमित्यधि-अक्षम् । असि । हुविः । असि । वैश्वानरम् । वैश्वदेवमिति वैश्व-देवम् । उत्पूतशुष्ममित्युत्पूत-शुष्मम् । सुत्यौजा इति सुत्य-ओजा ।

बृहस्पति । "तद्बृहतो करपत्यो " (पाभा ६ १ १५७) इति सुट् । तेन प्रसूत इति । "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र च "उभे वनस्पत्यादिषु युगपत्" (पा ६ २ १४०) इति पूर्वोत्तरयो युगपत् प्रकृतिस्वरत्वम् । बृहच्छन्द प्रायेण समासे आद्युदात्त., अन्यत्रान्तोदात्त ॥

आज्यमवेक्ष्यते—'आज्यमसि' इति यजुर्भि ॥ अजेरञ्जेर्वा [आङ्पूर्वादजेरञ्जेर्वा क्यप्*] । अग्ने प्राप्पणमसि प्रियतममिति यावत् । vसत्यम् vअसि सत्यस्य फलमसि । सत् विद्यमान फल मसि । "तदर्हति" (पा ५ १ ६३), "छन्दसि च" (पा ५ १ ६७) इति य । अमोघत्वमुच्यते । ब्रह्म वा सत्यम् । तदेवासि, विश्वमूलत्वात् । vसत्यस्य vअध्यक्षम् vअसि सत्य त्वयाध्यक्ष्यते । सत्यं ब्रह्म अध्यक्ष. स्वामी । सत्यस्य वा प्रत्यक्षरूप त्वमसि । अक्षेष्वधि अध्यक्षम्, अक्षाणीन्द्रियाणि । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । vहवि vअसि हविषां प्रधानमसि । सर्वप्रियतमत्वेन प्राधान्य दर्शयितुमाह—vवैश्वानरम् विश्वेषां नराणां सबन्धीष्टसाधनत्वेन । vवैश्वदेव विश्वेषां देवानां संबन्धि भोज्यत्वेन होम्यत्वेन च । vउत्पूतशुष्मम् उत्पवनेनोद्दीपितबल उद्भूतबल वा । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ १), तत्रापि "गतिरनन्तर" (पा ६ २.४९) इति गते प्रकृतिस्वरत्वम् । vसत्यौजा सत्यबल, न केवलं त्वमेव सत्यम् अपि तु त्वद्बलमपि सत्यमिति भाव । छान्दसो लिङ्गव्यत्यय । ईदृश हविस्त्वमसीति vहविष प्राधान्य गम्यते ॥

स्कन्दनस्य प्रकृतत्वात् । यदि स्रुचप्रवेशो स्कन्देत् तदानीमनेन मन्त्रेण पुनः पात्रे प्रक्षिपेत् । अस्रुचिप्रवेशे स्कन्दने त्वभिमन्त्रणम् ॥ पाठस्तु—'स त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च । बृहस्पतिप्रसूतो यजमान इह मा रिषत्' इति ॥ हे स्कन्नाज्य, बृहस्पतिप्रेरितोऽहम् प्रजादीन् संपादयेयम् । त्वामनेन vयजुषा मन्त्रेण पात्रे सम्यक् vसिञ्चामि । vइह कर्मणि vयजमानः स्कन्दनापराधेन vमा vरिषत् मा हिंस्यताम् । अयं मन्त्र आध्वर्यव । अतो यजमानस्यान्यत्वेनोक्तिरविरुद्धा ॥

आज्यमिति ॥ कल्पः—"आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्च निमील्य vवीक्ष्यानुष्टुभसन्ताआज्यमवेक्षेते" (आपश्रौ २ ६ १) इति ॥ पाठस्तु—'आज्यमसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मँ सत्यौजाः सहोऽसि सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः

*[द्र पा ३ १ १०९ वा २] । ६. त्रि मै-अमोघमुच्यते । ७ त्रि पं.हविर्भिः, मै २-हविर्भ्यः ।

४ तं सि त्रि ४-म. १-°प्रवेशा° । ५ तं-सि-अत एव । ६. आ क मा.पा हा-आनिमील्य । ७ आ क म ३-अवेक्ष्या° ।

आज्यग्रहणानुमन्त्रणमन्त्राः ]

सहो॑ऽसि सह॑मानमसि सह॒स्वारा॑तीः सह॑स्वारातीय॒तः
सह॑स्व॒ पृत॑नाः सह॑स्व पृतन्य॒तः । स॒हस्र॑वीर्यमसि

सहः॑ । अ॒सि॒ । सह॑मानम् । अ॒सि॒ । सह॑स्व । अरा॑तीः । सह॑स्व । अ॒रा॒ती॒य॒त ।
सह॑स्व । पृत॑नाः । सह॑स्व । पृ॒त॒न्य॒तः ॥ स॒हस्र॑वीर्य॒मिति॑ स॒हस्र॑–वी॒र्य॑म् । अ॒सि॒ ।

'सहोऽसि' इत्यादिके त्रिपदे गायत्र्यौ । 'सहस्वारातीयत' इति तृतीय पाद । 'सहस्रवीर्यमसि' इत्यपरस्या तृतीय पाद । तत्र पूर्वा निरवसाना, अपरा सावसाना 'पृतन्यत' इति ॥ [v]सह [v]असि अभिभवनमसि शत्रूणाम् । [v]सहमानम् [v]असि सदा शत्रूनभिभूय वर्तमानमसि । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (पा ६ १ १८६) धातुस्वर । तादृक् त्व [v]सहस्व [v]अराती अस्मदमित्रानभिभव ये धनानां दातारो न भवन्ति । राते कर्तरि क्तिन् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २ वा ३ ) । [v]अरातीयत च [v]सहस्व येऽस्माकमरातिमात्मानमिच्छन्ति अस्मान् वारातिभूतानात्मन इच्छन्ति तानपि सर्वानभिभव बलात्कृत्य नाशय । प्रथमे पक्षे "छन्दसि परेच्छायामपि" (द्र पाभा ३ १ ८ ) इति क्यच् । सर्वत्र "शतुरनुम°" (पा ६ १ १७३ ) इति विभक्तेरुदात्तत्वम् । आख्यातस्य पादादित्वान्निघाताभाव, समानवाक्ये पदात् परत्वाभावाद्वा (द्र पा ८ १ १८,२८) । राति दाता । [v]सहस्व [v]पृतना अस्मद्विरोधिन सर्वान् सग्रामानभिभव । [v]पृतन्यत सग्राम कर्तुमिच्छतश्च सर्वानभिभव । क्यचि "कव्यध्वरपृतनस्य°" (पा ७ ४ ३९) इति लोप, पूर्ववद्विभक्त्युदात्तत्वम् (पा ६ १ १७३ ) । [८]युयुत्सव सेना पृतना[८] । किं बहुना— [v]सहस्रवीर्यं बहुप्रकारशक्तिकम् [v]असि, अत सत्कर्तुमर्हसि इति ॥

सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाऽभि घारयामि तस्य ते भक्षीय' इति ॥ अत्र 'वैश्वानरम्' इत्यादिभिश्चतुर्भि पदैः प्रत्येकमन्वेतुम् 'असि' इति पदमनुवर्तनीयम् । तथा सति तान्येतानि द्वाविंशतिवाक्यानि सपद्यन्ते । तैरेतैर्वाक्यैराज्य प्रशस्यते । अजिधातोर्गत्यर्थादुत्पन्न आज्यशब्दः । [v]आज्यम् [v]असि प्रापकमसि । घृतेन हि होमाधारो ज्वलन्नग्निः प्राप्यते । सद्विद्यमानं कर्मफलं, तदर्हतीति [v]सत्यम् । प्रसिद्धं ह्याज्यस्य [८]कर्मफलसाधनत्वम् । [v]सत्यस्य [v]अध्यक्षम् [v]असि, सतां कर्म [v]सत्यं, ज्योतिष्टोमे प्रवर्तमाना यजमानसप्तदशा ऋत्विजः [९]सन्तः । ते हि परस्परं द्रोहशङ्कामपनेतुं तानूनप्त्रसंज्ञकमाज्यं संस्पृशन्ति । सोऽयं स्पर्शः सतां कर्म, तस्य कर्मणः अध्यक्षं स्वामि । [v]हविः [v]असि प्राधान्येन हूयमानमसि । पुरोडाशादीनां हविषां नाशेऽप्याज्येनैव तत्कर्म शेषसमापनात् प्राधान्यं द्रष्टव्यम् । विश्वेषां नराणां सबन्धि [v]वैश्वानरम् । विश्वेषां देवानां सबन्धि [v]वैश्वदेवम् । प्रसिद्धो ह्याज्यस्य भोज्यत्वेन हविर्द्रव्येन चोभयसबन्ध । [v]उत्पूतशुष्मम् उत्पवनेनोद्दीपितबलम्[१०] । [v]सत्यौजाः सत्यबलम् । आज्यस्य हि बलमवितथम् । [११]अग्न्युद्दीपनस्य प्रत्यक्षत एव दृश्यमानत्वात् ।

८–८ तं ति–आख्यातस्य ।

८ क–कर्मफलदानत्वम् । ९ म ३–सन्ति । १० क–°नोपेतबलम् । ११. इ उ पा– अभ्युद्दी°,–तस्योद्दी° ।

[ आज्यग्रहणानुमन्त्रणमन्त्राः

तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि सत्यायु( १ )रसि सत्यशुष्ममसि सत्येन त्वाऽभि घारयामि तस्य ते भक्षीय

तत् । मा । जिन्व । आज्यस्य । आज्यम् । असि ।
सत्यस्य । सत्यम् । असि । सत्यायुरिति सत्य—आयुः ( १ ) । असि ।
सत्यशुष्ममिति सत्य—शुष्मम् । असि । सत्येन । त्वा । अभीति । घारयामि । तस्य । ते । भक्षीय ।

अतः पराणि यजूंषि—तत् तादृक्स्वभावः त्वं मां जिन्व प्रीणय । हे आज्य, आज्यस्य अपि आज्यम् असि, यल्लौकिकमाज्यं तस्मादपि त्वमिष्टसाधनमाज्यं वैदिकमसि, त्वमिव यजमानस्य, त्वत्तो हि सर्वमाज्यमुत्पाद्यते वर्षादिद्वारेण । सत्यादपि सत्यम् असि, कदाचिदपि फलव्यभिचाराभावात्; यद्वा—सत्यान्तरस्यापि सत्यापयितृत्वात् यागद्वारेण; त्वत्तोऽधिको नास्तीति भावः । सत्यायुः असि सत्यभूतमस्मिन्नायुरिति सत्यायुः । सत्यस्य वा आयुस्त्वमसि, त्वया सत्यं जीवतीति । दासीभारादिर्द्रष्टव्यः ( पा ६.२.४२ ) । सत्यशुष्मं सत्यस्य शुष्मं बलम् असि । तत् त्वां सत्येन चक्षुषा अभि घारयामि उपरि सिञ्चामि, ईषत् दृष्ट्यावेक्षे इति । "चक्षुर्वै सत्यम्" ( तैब्रा ३.३.५ ) इति ब्राह्मणम् । "ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवींष्यभिघारयति" ( तैब्रा ३.३.५ ) इत्यादि च । तस्य ते तथा ईक्षितस्य तव भक्षीय अहं भजे, त्वया वियुक्तो मा भूवम् । पूर्ववत् कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ( पा २.३.६२ ) ॥

सहः शत्रूणामभिभवनसमर्थम् । सहमानं निरन्तरं तदभिभवेनैव वर्तमानम् । तादृक् त्वं सहस्व अरातीः अस्मदमित्रान् अभिभव । सहस्व अरातीयतः, ये तु [12]प्रत्यक्षतः शात्रवं कर्तुमशक्ताः[13] मनसा शात्रवं कर्तुमिच्छन्ति तानप्यभिभव । सहस्व पृतनाः शत्रुसेना अभिभव । सहस्व पृतन्यतः सेनाः[14] संपादयितुमिच्छतः शत्रूनप्यभिभव । सहस्रवीर्यम् असि यथोक्ताभिभवविशेषान् कर्तुं बहुप्रकारसामर्थ्योपेतं त्वमसि । तत् मा जिन्व तत् तादृक्स्वभाव[15], त्वं मां यागद्वारेण प्रीणय । आज्यस्य आज्यम् असि लौकिकं यदाज्यं तदुत्पूतशुष्मं न भवति त्वं तूत्पूतशुष्मत्वात् मुख्यमाज्यमसि । सत्यस्य सत्यम् असि लौकिकफलसाधनं कृष्यादिकं सत्यं तत्कदाचित् वृष्ट्याद्यभावेन व्यभिचाराद्य मुख्यं सत्यं, त्वं तु कदाचिदप्यव्यभिचारात् मुख्यं सत्यमसि । सत्यायुः असि सत्यभूतमायुरस्मिन्निति सत्यायुः । आज्यनिष्पन्नेन कर्मणा भाविदेहे यदायुः प्राप्यते तन्न व्यभिचरतीत्यायुषः सत्यत्वम् । सत्यशुष्मम् असि सत्यबलमसि । अग्न्युद्दीपनबलं सत्यौजःशब्देन पूर्वमुक्तम् । इह तु फलप्रदानबलमुच्यते । सत्येन त्वा अभि घारयामि तादृशं त्वां चक्षुषा पश्यामीत्यर्थः । तथा च पौरोडाशिककाण्डे समाम्नायते—"ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवींष्यभिघारयति । अथ केनाऽऽज्यमिति । सत्येनेति ब्रूयात् । चक्षुर्वै सत्यम् । सत्येनैवैनदभिघारयति" ( तैब्रा ३.३.५ ) इति । चक्षुषः सत्यत्वमाधानब्राह्मणे प्रतिपादितम्[16]—"अनृतं वै

१२. आ. क-प्रत्यक्षम् । १३. म-°मसमर्थाः । १४. क.नं.ति.त्रि४.म.म१.म३-सेनाम् । १५. क-°स्वभावम् । १६. क-समाम्नातम् ।

**पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि**

पञ्चानाम् । त्वा । वातानाम् । यन्त्राय । धर्त्राय । गृह्णामि । पञ्चानाम् । त्वा । ऋतूनाम् । यन्त्राय । धर्त्राय । गृह्णामि । पञ्चानाम् । त्वा । दिशाम् । यन्त्राय । धर्त्राय । गृह्णामि । पञ्चानाम् । त्वा । पञ्चजनानामिति पञ्च-जनानाम् । यन्त्राय । धर्त्राय । गृह्णामि ।

अथाज्यग्रहानुग्रहणमन्त्रा' यजूंषि, तत्र चतुर्भि जौहवमनुमन्त्रयते— 'पञ्चानां त्वा' इति ॥ [V]पञ्चानां प्राच्याद्यूर्ध्वपर्यन्तपञ्चदिक्प्रभवाणां पुरोवातादीनां [V]वातानां [V]यन्त्राय यमनाय स्वस्वाधारेष्वविचलनस्थापनाय [V]धर्त्राय जगद्धारणाय जगद्धारणकुशलाय वा त्वां [V]गृह्णामि हे आज्य । एव सर्वत्र । पञ्चानामित्यत्र "नामन्यतरस्याम्" (पा ६ १ १७७) इति नाम उदात्तत्वम् । [V]पञ्चानाम् [V]ऋतूनां, हेमन्तशिशिरयो शीतत्वसामान्यादेकत्व विवक्षितत्वोष्यते । ब्राह्मण च भवति "पञ्च वा ऋतव आर्तवा पञ्च" (तैस ७ २ ६) इति । पूर्ववदुभयत्रापि नाम उदात्तत्वम् । [V]पञ्चानां [V]त्वा [V]दिशां प्राच्यादीनामूर्ध्वान्तानाम् । "सावेकाच°" (पा ६ १ १६८) इति दिग्भ्यो विभक्तेरुदात्तत्वम् । [V]पञ्चानां [V]पञ्चजनानां देवमनुष्यासुररक्षोगन्धर्वाणां पञ्चजना इत्याख्या (द्र निरुक्त ३ ८) । "दिक्सङ्ख्ये सञ्ज्ञायाम्" (पा २ १ ५०) इति समास । सप्तर्षिवत् प्रत्येक सञ्ज्ञात्वात् पञ्चानामिति विशेष्यते ॥

वाचा वदति । अमूलं मनसा ध्यायति । चक्षुर्वै सत्यम् । अद्रा३गित्याह । अदर्शमिति । तत्सत्यम्" (तैब्रा १ १ ४) इति । [V]तस्य [V]ते [V]भक्षीय तादृशं त्वां [17]भक्षयानि ॥

पञ्चानामिति ॥ कल्पः—"[18]आज्यग्रहाणाम् । गृहीतंगृहीतमनुमन्त्रयते पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति चतुर्भिर्जुह्वाम् । अष्टाभिरुपभृति चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामीति । चतुर्भिर्ध्रुवायां भूरस्माकं हविर्देवानामाशिषो यजमानस्य देवानां त्वा देवताभ्यो गृह्णामीति । अभिपूर्यमाणामनुमन्त्रयते कामाय त्वा गृह्णामीति" (बौश्रौ ३ १६) इति ॥ प्राच्यादिषु ऊर्ध्वान्तासु [19]पञ्चसु दिक्षु वर्तमाना वायवः पञ्चसङ्ख्याकाः । ते चाऽग्निचयनाङ्गेषु मन्त्रेष्वेवसमाम्नायन्ते—"यत्ते रुद्र पुरो धनुस्तद्वातो अनु वातु ते", "यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते", "यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते", "यत्ते रुद्रोत्तराद्धनुस्तद्वातो अनु वातु ते", "यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते" (तैसं ५ ५ ७) इति ।

१७ आ भजानि, ना—भजामि, म१—भक्षयामि । १८ आ त्रि—आज्यग्रहणम्; तं ति—आज्यग्रहणात् । १९ इ ङ ना पा हा—'पञ्चसु' नास्ति । —

[ आज्यग्रहणानुमन्त्रणम्

चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय (२) धर्त्राय गृह्णामि विशे त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा गृह्णामि रायस्पोषाय गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामि

चरो । त्वा । पञ्चबिलस्येति पञ्च–बिलस्य । यन्त्राय । धर्त्राय । गृह्णामि । ब्रह्मण । त्वा तेजसे । यन्त्राय । धर्त्राय । गृह्णामि । क्षत्रस्य । त्वा । ओजसे । यन्त्राय (२) । धर्त्राय गृह्णामि । विशे । त्वा । यन्त्राय । धर्त्राय । गृह्णामि । सुवीर्यायेति सु–वीर्याय । त्वा । गृह्णामि सुप्रजास्त्वायेति सुप्रजा –त्वाय । त्वा । गृह्णामि । रायः । पोषाय । त्वा । गृह्णामि । ब्रह्मवर्चसायेति ब्रह्म--वर्चसाय । त्वा । गृह्णामि ।

उत्तरैरष्टाभिरौपभृतमनुमन्त्रयते—ᵛचरोः ᵛपञ्चबिलस्य आकाशस्य, सर्वेषां चरणाधारत्वात् चरुः, दिशोऽस्य बिलानि पञ्च । ᵛब्रह्मण ब्रह्मणां, जातावेकवचनम् । ᵛतेजसे तेजसः "षष्ठ्यर्थे चतुर्थी वक्तव्या" (पा २ ३ ६२ वा १) इति चतुर्थी । ब्राह्मणानां तेजसः ᵛयन्त्राय यᵛधर्त्राय धृत्यै ᵛगृह्णामि । ᵛक्षत्रस्य क्षत्रियाणाम् ᵛओजसे ओजसो बलस्य । ᵛविशे विशां वैश्यानां पुष्ट्या इति शेषः, नृणां वा । 'यन्त्राय' इत्यादि गतम् । ᵛसुवीर्याय सुष्ठु वीर्यत्वाय । "वीरवीर्यौ च" (पा ६ २ १२०) इति बहुव्रीहिस्वरः प्रवर्तते, तत्पुरुषो वा "परादिश्छन्दसि बहुलम्" (पा ६ २ १९९) इति । ᵛसुप्रजास्त्वाय यजमानस्य सर्वस्यैव वा शोभनापत्यत्वाय । "नित्यमसिच् प्रजामेधयोः" (पा ५ ४ १२२) इत्यसिच् समासान्तः । "ऊडिदम्॰" (पा ६ १ १७१) इति षष्ठ्या उदात्तत्वम् । "षष्ठ्याः पतिपुत्र॰" (पा ८ ३ ५३) इति सत्वम् । ᵛ[10]रायः धनस्य ᵛपोषाय पुष्ट्यै[10] । ᵛब्रह्मवर्चसाय ब्रह्मबलाय । "ब्रह्महस्तिभ्यां वर्चसः" (पा ५ ४ ७८) इत्यच् समासान्तः ॥

यद्वा शरीरमध्ये वर्तमाना प्राणापानव्यानोदानसमानरूपाः पञ्च वाताः, तेषां ᵛवातानां ᵛयन्त्राय स्वस्वव्यापारेषु नियमनाय ᵛधर्त्राय जगद्विधारणकुशलाय हे आज्य, त्वां ᵛगृह्णामि । ऋतूनां पञ्चत्वम् ऐतरेयब्राह्मणे प्रतिपादितम्—"द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन" (ऐब्रा १ १) इति प्राच्यादीनामूर्ध्वान्तानां दिशां पञ्चत्वं प्रसिद्धम् । पञ्चजनशब्दः समस्तो देवमनुष्यासुररक्षोगन्धर्वेषु* रूढः । ते च देवादयः पञ्चसंख्याकाः । चरुशब्दः पाकाधारभूतां स्थालीमाचष्टे, सा च क्वचित् [20]पञ्चबिले युज्यते । तच्च पुरुषमेधावसाने कल्पसूत्रकार उदाजहार—"पञ्चबिलस्य चरोर्विज्ञायते । आज्य

९ त्रि–तेजसे । १०–१०, ति–रायो धनं तस्य पोषः पुष्टिः; त्रि–रायस्पोषाय धनपुष्ट्यै ।

*[द्र निरुक्त ३ ८ 'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णाः निषादः पञ्चम इत्यौपमन्यवः । ]। २० आ क ना हा–पञ्चबिलैः ।

भूरस्माकꣳ ह॒विर्दे॒वाना॑मा॒शिषो॒ यज॑मानस्य

दे॒वानां॑ त्वा दे॒वता॑भ्यो गृह्णा॒मि कामा॑य त्वा गृह्णामि ॥ १ ॥

[ स॒त्याय॑ुरोज॑से य॒न्त्राय॒ त्र्यस्त्रिꣳशच्च ]

भूः । अ॒स्माक॑म् । ह॒विः । दे॒वाना॑म् । आ॒शिष॒ इत्या॑-शिषः॑ । यज॑मानस्य ।

दे॒वाना॑म् । त्वा॒ । दे॒वता॑भ्यः । गृ॒ह्णा॒मि॒ । कामा॑य । त्वा॒ । गृ॒ह्णा॒मि॒ ॥ १ ॥

[ मैसं १४४, कासं ५६ ]

शेषेण ध्रौवमनुमन्त्रयते—' भूरस्माकम् ' इति ॥ [v]अस्माकम् एव सबन्धी भव, मास्मान् हासी, अस्माकमेव श्रेयसे भव । भवतेर्लेटि शपो लुक् । " इतश्च लोप " ( पा ३ ४ ९७ ), " भूसुवोस्तिङि " ( पा ७ ३ ८८ ) इति गुणाभाव । [v]हवि [v]देवानां देवानां हवि भोज्यं भव पर्याप्नुहि । ब्राह्मण च " यावदेका देवता कामयते " ( तैब्रा ३ २ ६ ) इत्यादि । [v]आशिष [v]यजमानस्य या यजमानस्याशिष प्रार्थना ता सर्वा भव सर्वासां सपादनसमर्थं भव । [v]देवानां [v]त्वा देवानामेव स्वभूत त्वा [v]देवताभ्य [v]गृह्णामि । [v]कामाय [v]त्वा गृह्णामि हविर्भागिन्यो देवता यथा यथा कामयन्ते तत्तदनुरूप गृह्णामि ॥

॥ इति षष्ठे प्रथमोऽनुवाक ॥

आग्नेयः पूर्वस्मिन् बिले । दध्न्यैन्द्रो दक्षिणे । शृते प्रतिदुहि मीतमिश्रे वा वैश्वदेवः पश्चिमे । अप्सु मैत्रावरुण उत्तरे । पयसि बार्हस्पत्यो मध्यमे " ( आपश्रौ २० २५ २ ) इति । तस्य पञ्चबिलस्य चरोर्नियमनायेति योज्यम् । [v]ब्रह्मणः ब्राह्मणजातेः । तेजो ब्रह्मवर्चस तस्य [v]यन्त्राय । क्षत्रियजातेरोजो युद्धसामर्थ्यम् । वैश्यजातेः कृषिवाणिज्यादिषु नियमनम् । सुवीर्यं सर्वेषां स्वस्वव्यापारेषु सामर्थ्यातिशयः । सुप्रजास्त्वं शोभनापत्यत्वम् । रायस्पोषो धनपुष्टिः । ब्रह्मवर्चस श्रुताध्ययनसपत्तिः ' ब्रह्मणस्त्वा तेजसे ' इत्यत्र । [21]शिष्टाङ्गीकृतसाधुवेषरूप [ तेजो ] द्रष्टव्यम् । ' भूरस्माकम् ' इत्याद्यो मन्त्रः । ' हविर्देवानाम् ' इति द्वितीयः । ' आशिषो यजमानस्य ' इति तृतीयः । अवशिष्टश्चतुर्थः । हे आज्य, त्वम् [v]अस्माकं श्रेयसे भव । [v]देवानां हविः भव । [v]देवानां तर्पकं त्वा देवार्थं [v]गृह्णामि । आपस्तम्बस्य तु ' भूरस्माकम् ' ( द्र. आपश्रौ २ ७ ९ ) इत्यादिरेक एव मन्त्रः । हे आज्य, हविर्भागिभ्यो देवतास्त्वां यथा यथा कामयन्ते तथाविभक्तामाय त्वां [v]गृह्णामि ॥

अत्र विनियोगसंग्रह :—

" स्याद्दर्शपूर्णमासस्थ काण्डं तु यजमानगम् ।
षष्ठः प्रश्नस्तत्र स त्वा स्कन्नाज्यं प्रक्षिपेत् स्रुचि ॥ १ ॥
आज्यमाज्यमवेक्षेत पञ्चानां त्वा चतुर्दश ।
स्रुक्ष्वाज्यमन्त्रणे मन्त्रा इति मन्त्रास्तु षोडश " ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

२१ तं ति पिष्टैरङ्गी°, ना हा—पिष्टाङ्गीकृतं साधु° ।

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविदुग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविदभिभूरस्यभिभूरहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुविद्

ध्रुव । असि । ध्रुव । अहम् । सजातेष्विति स-जातेषु । भूयासम् । धीर । चेत्ता । वसुविदिति वसु-वित् । उग्र । असि । उग्र । अहम् । सजातेष्विति स-जातेषु । भूयासम् । उग्र । चेत्ता । वसुविदिति वसु-वित् । अभिभूरित्यभि-भू । असि । अभिभूरित्यभि-भू । अहम् । सजातेष्विति स-जातेषु । भूयासम् । अभिभूरित्यभि-भू । चेत्ता । वसुविदिति वसु-वित् ।

परिधीन् परिधीयमानाननुमन्त्रयते—' ध्रुवोऽसि ' इति यजुर्भि ॥ तत्र मध्यमम्—ध्रुवः असि स्थिरोऽसि मध्यमत्वाद्वा परिधित्वे विभाया(गा)च्च (?) । अहम् अपि सजातेषु ध्रुव भूयासम् । समानजन्मान सजाता । " समानस्य छन्दसि " ( पा ६ ३ ८४ ) इति सभाव । " था जाते " ( पा ६ २ १७१ ) इत्युत्तरपदान्तोदात्तत्वम् । धीर चेत्ता वसुवित् च भूयासम् इत्येव । धीरो धृष्ट सर्वसमर्थ । चेत्ता चेतिता ज्ञाता । छान्दस इडभाव । रधादिर्वा (पा ७ २ ४५) द्रष्टव्य । वसुवित् धनानां लब्धा । दक्षिणम्—उग्र उद्गूर्ण असि, उपरिष्टात् स्थितत्वात्, रुद्राणां सबन्धित्वाद्वा । अधृष्य इति केचित् । अहम् अपि सजातेषु उग्र भूयास यथा ते ममाप्रतिवादिनो विधेया भवन्ति । उग्र चेत्ता वसुवित् भूयास, य उग्रश्चेत्ता वसुविच्च भवति स उग्रो भूयास, न केवलमुग्र एव । उत्तरम्—अभिभू असि

प्रथमानुवाके [1]आज्यग्रहणानुमन्त्रणमुक्तं, द्वितीयानुवाके हविर्होमानुमन्त्रणं वक्तव्यम् । तत्र हूयमानस्य[2] हविषो बहिःस्कन्दननिवारणाय परिधीयमानानां परिधीनामनुमन्त्रणमनुवाकादावुपवर्ण्यते ॥

ध्रुव इति ॥ कल्प:— " परिधीन् परिधीयमानाननुमन्त्रयते ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयास धीरश्चेत्ता वसुविदिति मध्यममुग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुवित् इति दक्षिणम् । अभिभूरस्यभिभूरहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुविदित्युत्तरम् " ( बौश्रौ १·११ ) इति ॥ हे मध्यमपरिधे, त्वं ध्रुवः स्थिर असि । रक्षोभिरविचाल्यमानत्वात् । अत एवाऽऽम्नायते— " परिधीन् परिदधाति रक्षसामपहत्यै " ( तैसं २ ६ ६ ) इति । तस्य ध्रुवस्य तवानुमन्त्रणेन अहम् अपि सजातेषु ज्ञातिषु ध्रुवः स्थिरो भूयासम् । किंच धीर धैर्यवान् । चेत्ता रक्षोपहननस्य ज्ञाता, वसुवित् वसुनो लब्धा भूयासम् । हे दक्षिणपरिधे, त्वं रक्षांस्यपहन्तुम् उग्रः असि । तवानुमन्त्रणेन अहम् अपि उग्रः भूयासम् । ज्ञातयो यथा [3]ममाप्रतिवादिनो भवन्ति तथा सपादनमुग्रत्वम् । [4]किंच वैरिणोऽपहन्तुमप्युग्रो[5] भूयासम् । हे उत्तरपरिधे, त्वं रक्षसामभिभविताऽसि । तवानुमन्त्रणेनाहमपि ज्ञातीनां वैरिणां चाभिभविता भूयासम् । एतदीयस्य ब्राह्मणस्य समीपवर्तित्वेन [6]अत्यन्तविच्छेदाभावात्तात्र ब्राह्मणमुदाहृत्य व्याक्रियते । किंतु पाठक्रमेणैवोदाहृत्य दशमानुवाके[7] व्याकरिष्यते ॥

१ आ—हविर्प्र° । २ तं.ति—ह यजमानस्य । ३ क भि४—मम प्रतिवादिनो म, ति—मम परिवादिनो न । ४ इ उ पा—तथा । ५ तं तिं—वैरिणो । हन्तुमप्युग्रो । ६ आ—अत्यन्तशुद्धिवि° । ७ आ—' दशमानुवाके ' नास्ति ।

युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः ॥
इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥

युनज्मि । त्वा । ब्रह्मणा । दैव्येन ।
हव्याय । अस्मै । वोढवे । जातवेद इति जात–वेद ॥
इन्धाना । त्वा । सुप्रजस इति सु–प्रजसः । सुवीरा इति सु–वीरा ।
ज्योक् । जीवेम । बलिहृत इति बलि–हृत । वयम् । ते ॥

---

उत्तरकालभावित्वान्नान्येन परिह्वास्यो भव, अभिभूरेवासि नात परं किंचित् परिधीयत इति । vअहम् अपि vसजातेषु अभिभविता vभूयास शत्रूणां तेषामेव वा । किंच––य vअभिभू vचेत्ता vवसुवित् च भवति स एव vभूयास न केवलमभिभवितृत्वमात्रेण ॥

अग्निं योगेन युनक्ति––'युनज्मि' इति द्विपदया त्रिष्टुभा ॥ हे vजातवेद जातानां वेदित, vब्रह्मणा मन्त्रेण vदैव्येन देवयोग्येन । "देवाद्यञञौ" (द्र पा ४ १ ८५ वा ३)। त्वां vयुनज्मि अस्मिन् कर्मणि युक्त करोमि । प्रयोजनमाह––vअस्मै vहव्याय vवोढवे, इद हवि वोढुम् । पूर्ववत् कर्मण सप्रदानत्वम् (द्र पाभा १ ४ ३२) । "तुमर्थे सेसेन्°" (पा ३ ४ ९) इति तवेन्प्रत्यय । "अन्तश्च तवै युगपत्" (पा ६ १ २००) इत्याद्यन्तयो युगपदुदात्तत्वम्, अस्यापि उपलक्षणत्वात् । "ऊडिदम्°" (पा ६ १ १७१) इतीदमश्चतुर्थ्या उदात्तत्वम् ॥

समिधोरभ्याधीयमानयोर्जपति––'इन्धानास्त्वा' इति ॥ इयमपि पूर्ववद्द्विपदा त्रिष्टुप् ॥ हे अग्ने, त्वाम् vइन्धाना ज्वलयन्त परिचरन्तो वयम् । "विभाषा वेण्विन्धानयो" (पा ६ १ २१५) इत्याद्युदात्तत्वम् । vसुप्रजस शोभनापत्या । पूर्ववदसिच् । सुवीरा शोभनसर्ववीरपुरुषा । vज्योक् चिर vजीवेम त्वत्प्रसादात् । यस्मात् vवयम् vते तव vबलिहृत अविच्छिन्न बलिमुपहराम, तस्माज्जीवेम चिरम् । यद्वा––बलिहृतस्तव भविष्याम इत्येवमर्थं चिर जीवेम । बलिर्हविर्दानम् ॥

---

युनज्मीति ॥ कल्पः–– "अथाऽग्निं योगेन युनक्ति युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेद इति" (बौश्रौ ३ १६) इति ॥ हे vजातवेदः, vदैव्येन देवयोग्येन vब्रह्मणा मन्त्रेण त्वां vयुनज्मि अस्मिन् कर्मणि युक्तं करोमि । किमर्थम् ? इदं हविर्वोढुम् ॥

इन्धाना इति ॥ कल्पः–– "समिधोरभ्याधीयमानयोर्जपतीन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं त इति" (बौश्रौ ३ १६) इति ॥ हे जातवेदः, त्वाम् vइन्धानाः ज्वलयन्तः vवयं vसुप्रजसः शोभनापत्योपेताः vसुवीराः शोभनभृत्योपेताः vज्योक् चिर vजीवेम । किं कुर्वन्तः ? तव बलिं पूजामुपहरन्तः[८] ॥

---

८ क-पूजामाहरन्तः ।

यन्मे अग्ने अस्य यज्ञस्य रिष्याद्(१)-
यद्वा स्कन्दादाज्यस्योत विष्णो।
तेन हन्मि सपत्नं दुर्मरायुमैनं
दधामि निर्ऋत्या उपस्थे ॥

यत्। मे। अग्ने। अस्य। यज्ञस्य। रिष्यात् (१)।
यत्। वा। स्कन्दात्। आज्यस्य। उत। विष्णो इति ॥
तेन। हन्मि। सपत्नम्। दुर्मरायुमिति दुः-मरायुम्।
एति। एनम्। दधामि। निर्ऋत्या इति निः-ऋत्या। उपस्थ इत्युप-स्थे ॥

---

हवींष्यासन्नान्यभिमन्त्रयते—'यन्मे अग्ने' इति त्रिष्टुभा ॥ हे अग्ने, अस्य मम यज्ञस्य यत् बर्हिरादिकं रिष्यात् नश्येत् रक्षःप्रभृतिभिर्विनाशितं स्यात्। लेटधाडागमः (पा ३ ४ ९४)। "प्रकृत्यान्तःपादम्" (पा ६ १ ११५) इति 'मे' इत्यस्य प्रकृतिभावः। किंच—आज्यस्य उत आज्यस्य अपि च सबन्धि जौहवादिकं तदेकदेशभूतं यत् रिष्यात् यत् वा स्कन्दात्। पूर्ववदाडागमः[1]। हे विष्णो व्यापक, तेन हन्मि मारयामि सपत्नं शत्रुम्। अथ यो मारयितुं न शक्यते एनं दुर्मरायुं मारयितुमशक्यं निर्ऋत्याः पापदेवतायाः उपस्थे उत्सङ्गे आ दधामि स्थापयामि। दुर्मरमात्मन इच्छतीति क्यजन्तात् "क्याच्छन्दसि" (पा ३ २ १७०) इत्युप्रत्ययः। निर्गता ऋतेः निर्ऋतिः निर्दया। "ऋतिः सौत्रो धातुः घृणायां वर्तते" (काशिका ३ १ २९) इत्युक्ते। निर्ऋतिरिति प्रादिसमासे (पा २ २ १८) अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २), गतिसमासे "तादौ च" (पा ६ २ ५०) इति ॥

---

यदिति ॥ कल्पः— "अथान्तर्वेदि हवींष्यासन्नान्यभिमन्त्रयते यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो। तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थ इति" (बौश्रौ २ १६) इति ॥ हे अग्ने, अस्य मम यज्ञस्य सबन्धि यत् बर्हिरादिकं रिष्यात् नश्येत् रक्षःप्रभृतिभिर्विनाशितं स्यात्। आज्यस्य उत आज्यस्यापि संबन्धि यत् वा यदल्पं बिन्दुजातं जौहवादिकं स्कन्दात् अधः पतेत्। हे विष्णो व्यापक, तेन नष्टेन स्कन्नेन च वैरिणं हन्मि। यः सपत्नो मारयितुमशक्यः एनं दुर्मरायुं सपत्नं निर्ऋत्याः पापदेवतायाः उपस्थे उत्सङ्गे आ दधामि स्थापयामि ॥

---

१ सं ति—पूर्ववदसंगम्य। २ सं ति—ऋति।

भूर्भुवः सुवरुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध

भू । भुवं । सुवं । उच्छुष्म इत्युत्–शुष्म । अग्ने । यजमानाय । एधि । निशुष्म इति नि–शुष्म । अभिदासत इत्यभि–दासते । अग्ने । देवेद्धेति देव–इद्ध । मन्विद्धेति मनु–इद्ध ।

हवींष्यासादयति—‘ भूर्भुव सुव ’ इति व्याहृतिभि ॥ “ ब्रह्मैता व्याहृतय ” ( तैस १ ६ १० ) इति ब्राह्मणम् । एतानि रूपाणि लोकत्रयात्मकानि, लोकत्रयस्थितिहेतुत्वात्, लोकत्रयात्मकव्याहृतित्रयरूपेण हवींषि स्तूयन्ते ॥

इध्ममभ्याधीयमानमनुमन्त्रयते—‘ उच्छुष्म ’ इति पिपीलिकामध्यया त्रिपदया यजुरन्तयानुष्टुभा । तत्र द्वादशाक्षरौ प्रथमतृतीयौ पादौ, मध्यमोऽष्टाक्षर । ‘ अमर्त्यस्य ते ’ इत्यादि यजु ॥ हे अग्ने, यजमानाय उच्छुष्म उद्भूतबल एधि भव, यजमानकार्येष्वाविष्कृतबलो भव । अभिदासते उपक्षयते शत्रवे निशुष्म न्यग्भूतबलो भव । दसु उपक्षये । व्यत्ययेन शप् । धातोरकारस्य च्छान्दसो दीर्घ । यद्वा—दासृ दाने अभिपूर्व उपक्षयकर्मा द्रष्टव्य । हे अग्ने अर्चनादिगुण देवेद्ध देवैरिद्ध दीप्त मन्विद्ध मनुष्यै इद्ध । उभयत्रापि “ तृतीया कर्मणि ” ( पा ६ २ ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । मन्द्रजिह्व, मदनी मदयित्री तर्पणी जिह्वा यस्य । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । “ मन्दिवाशि° ” ( उ ३८ ) इत्यादिना रक्प्रत्यय । “ आमन्त्रित पूर्वमविद्यमानवत् ” ( पा ८ १ ७२ ) इत्यविद्यमानवत्त्वात् चतुर्णामप्यामन्त्रितानामाद्युदात्तत्वमेव । होत देवानामाह्वात । अमर्त्यस्य अमर्त्यात्मन ते तव मूर्धन् मूर्ध्नि । “ सुपां सुलुक्° ” ( पा ७ १ ३९ ) इति ङेर्लुक् । आ जिघर्मि आभिमुख्येन

भूरिति ॥ कल्पः—“ अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेत् । । अथ वै भवति दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवींष्यासादयेत् । । अथ वै भवति चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवींष्यासादयेत ” (बौश्रौ ३ १७) इति ॥ भूरादयस्त्रयः शब्दा लोकत्रयवाचिनः । एतानि हवींषि लोकत्रयरूपाणीति श्रूयते[9] । इदं व्याहृतित्रय यद्यपि याजमानकाण्डे पठित तथापि प्रत्यक्षेण ब्राह्मणवाक्येनाऽऽध्वर्यवक्रियायां विनियुक्तत्वादुत्कृष्टव्यम् ॥

उदिति ॥ कल्पः—“ इध्ममभ्याधीयमानमनुमन्त्रयते । उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्वेति ” ( बौश्रौ ३ १७ १८ ) इति ॥ हे अग्ने, यजमानाय उच्छुष्मः एधि उद्भूतबलो भव, यजमानकार्येष्वाविष्कृतबलो भव । अभिदासते उपक्षयते शत्रवे निशुष्मः एधि न्यग्भूतबलो भव । उक्तक्रमेण यजमानमनुग्रहीतुं [10]शत्रुं च निग्रहीतु चतुर्भिः [11]संबोधनैरग्निं प्रोत्साहयति । हे अग्ने अङ्गनादिगुणयुक्त, देवेद्ध देवैर्दीप्त मन्विद्ध मनुना दीप्त । एतच्च पदद्वय निविद्ब्राह्मणे[12] व्याख्यातम्—“ देवेद्ध इत्याह देवा ह्येतमैन्धत मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्द्ध ” ( तैसं २ ५ ९ ) इति । मन्द्रजिह्व, मन्द्रा हर्षहेतुर्जिह्वा यस्येति विग्रहः ॥

९ आ क ना हा–स्तूयन्ते । १० तं ति–शत्रून् । ११, क–विशेषणैरग्निम् । १२ आ–'ब्राह्मणेन ।

मन्द्रजिह्वामर्त्यस्य ते होतर्मूर्धन्ना जिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय

मनोऽसि प्राजापत्यं मनसा मा भूतेना विश वागस्यैन्द्री

सपत्नक्षयणी (२) वाचा मेन्द्रियेणा विश

मन्द्रजिह्वेति मन्द्र–जिह्व । अमर्त्यस्य । ते । होत । मूर्धन् । एति । जिघर्मि । राय. । पोषाय सुप्रजास्त्वायेति सुप्रजा–त्वाय । सुवीर्यायेति सु–वीर्याय । मनः । असि । प्राजापत्यमिति प्राजा–पत्यम् । मनसा । मा । भूतेन । एति । विश । वाक् । असि । ऐन्द्री सपत्नक्षयणीति सपत्न–क्षयणी ( २ )। वाचा । मा । इन्द्रियेण । एति । विश ।

क्षारयामि आदधामि । घृ क्षरणदीप्त्योः जौहोत्यादिकः । "बहुलं छन्दसि" ( पा ७ ४ ७८ इत्यभ्यासस्येत्वम् । राय धनस्य पोषाय पुष्ट्यै । पूर्ववत् षष्ठ्या सवस्वरौ । सुप्रजास्त्व शोभनापत्यत्वाय । पूर्ववदसिच् । सुवीर्याय शोभनवीर्यत्वाय ॥

स्रौवमाधारमभिमन्त्रयते—'मनोऽसि' इति यजुषा ॥ मन असि मनसा निर्वर्ति त्वात् त्वं मन एवासि । प्राजापत्यं प्रजापतिदेवत्यम् । यद्वा—प्रजापतेरिदं प्राजापत्यम्, अत तदेवासि । तेन निर्वर्तितत्वात् तत्त्वम् । तेन मनसा भूतेन च । जातावेकवचनम् । तेन प्रज पतिना सृष्टैर्देहारम्भकैः भूतजातैश्च सह माम् आ विश मया सह सुखं निर्वर्तय । "देवा सामिधेनी" ( तैस ६ ३ ७, २ ५ ११ ) इत्यादि षष्ठद्वितीयकाण्डीय ब्राह्मणम् ॥

अमर्त्यस्य इति ॥ कल्पः— "प्रवरं प्रव्रियमाणमनुमन्त्रयतेऽमर्त्यस्य ते होतर्मूर्धन्ना जिघ रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति" ( बौश्रौ ३ १८ ) इति ॥ हे होतः देवानामाह्वातः, मरणरहितस तव मूर्धनि घृतादिकं क्षारयामि । किमर्थम् ? यजमानस्य धनपुष्टिशोभनापत्यशोभनवीर्यार्थम् ॥

मन इति ॥ कल्पः— "[१३]स्रौवमाधारमाघार्यमाणमनुमन्त्रयते मनोऽसि प्राजापत्यं मनर मा भूतेनाविशेति" ( बौश्रौ ३ १८ ) इति ॥ हे स्रौवाधार, त्वं मनः असि प्रजापतिसंबन्धि चासि मनसा प्रजापतिं ध्यायताऽध्वर्युणा निष्पाद्यमानत्वात् । अत्र भूतशब्दः प्रजापतिसृष्टं यज्ञमाचष्टे "प्राजापत्यो यज्ञः" (तैस १ ६ १० ) इति ब्राह्मणेन व्याख्यास्यमानत्वात् । तेन भूतेन प्रजापतिसृष्टे यज्ञेन [१४]तत्साधनेन मनसा च सह हे स्रौवाधार, माम् आ विश ॥

वागिति ॥ कल्प —"स्रुच्यमाधारमाघार्यमाणमनुमन्त्रयते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रि येणा विशेति" ( बौश्रौ ३ १८ ) इति ॥ हे स्रुच्याधार, त्वं वाक् असि । वाचा मन्त्रमुच्चारयता ध्वर्युणा निष्पाद्यमानत्वात् । कीदृशी वाक् ? ऐन्द्री इन्द्रेण व्याकृतत्वात् । तच्चैन्द्रवायवग्रहब्राह्मणे सम म्नातम्—"तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्" ( तैस ६ ४ ७ ) इति । सा च वाक् सपत्नक्षयणी वैरिघातिनी । स्रुच्याधारमन्त्ररूपाया वाचः सपत्नघातित्वं तद्ब्राह्मणेन सूचितम्—"अ[?]तो यज्ञो यज्ञपरे

३ मैर–मतः । ४ तं ति पं मैर–भूतैश्च ।

१३ इ उ ना हा–स्रौवमाघार्य°, [ बौश्रौसूत्रे तु 'स्रुवेणाघार°' इत्यादि । ] १४. क.तं.ति त्रि४. तत्साधकेन° ।

**वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु**

वसन्तम् । ऋतूनाम् । प्रीणामि । स । मा । प्रीत । प्रीणातु । ग्रीष्मम् । ऋतूनाम् । प्रीणामि । स । मा । प्रीत । प्रीणातु । वर्षा । ऋतूनाम् । प्रीणामि । ता । मा । प्रीता । प्रीणन्तु ।

स्रुच्यमभिमन्त्रयते[५]—'वागसि' इति यजुषा ॥ [V]वाक् [V]असि वाचा [६]निर्वृत्तत्वात् वागेवासि त्वम् । [V]ऐन्द्री इन्द्रदेवत्या । यद्वा—इन्द्रस्येयमैन्द्री वाक्, सैवासि । [V]सपत्नक्षयणी शत्रूणा क्षयकरी । तत्त्वया [V]वाचा [V]इन्द्रियेण च । जातावेकवचनम् । तेनैवेन्द्रेण सृष्टैरिन्द्रियै च क्षुरादिभिश्च सह सुखं माम् [V]आ [V]विश । "इन्द्रियमिन्द्रलिङ्गम्°" ( पा ५ २ ९३ ) इत्यादौ निपात्यते । "सावेकाच°" ( पा ६ १ १६८ ) इति वाचस्तृतीयोदात्ता ॥

प्रयाजाननुमन्त्रयते—'वसन्तमृतूनां प्रीणामि' इति यजुर्भि क्रमेण च । तत्र समिध — "वसन्तम्" इति ॥ वसन्ति प्रजा सुखिता अस्मिन्निति वसन्त । औणादिको झच्प्रत्यय *। ऋतूनां मध्ये [V]वसन्तम् [V]ऋतूना [V]प्रीणामि तर्पयामि । निर्धारणस्वभावान्निर्धार्यमाण ऋतुरेव भवति, यथा—ब्राह्मणानां स्थविरमानयेति स्थविरो ब्राह्मण एवानीयते नान्य । "नामन्यतरस्याम्" ( पा ६ १ १७७ ) इति नाम उदात्तत्वम् । प्रीञ् तर्पणे क्रैयादिक सकर्मक, तर्पयामीत्यर्थः । [V]स च वसन्त [V]प्रीत तया तर्पितो मां [V]प्रीणातु तर्पयतु प्रजादिभिरभिमतै । "ऋतवो वै प्रजाकामाः" ( तैस ७ २ ६ ) इत्यादि ब्राह्मण, "समिधो यजति" ( तैसं २ ६ १ ) इत्याद्यनुवाकश्च ॥

तनूनपातम्—'ग्रीष्मम्' इति ॥ गीर्यन्तेऽस्मिन्नापो रविकिरणैरिति ग्रीष्म । गिरतेर्मप्रत्यय **, षुगागम इकारश्च निपात्यते ॥

इडाम्—'वर्षा' इति ॥ वर्षत्यासु पर्जन्य इति वर्षा । एकस्मिन्नपि ऋतौ लिङ्ग बहुवचन च स्वाभाविकम् ॥

---

रित्याह्वानार्थैं" ( तैब्रा ३ ३ ७ ) इति । तादृश्या [V]वाचा इन्द्रसृष्टेन चक्षुरादीन्द्रियेण च सह हे स्रुच्याधार, माम् [V]आ [V]विश ॥

वसन्तमिति ॥ कल्पः—"प्रयाजानामिष्टमिष्टमनुमन्त्रयते वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामिति" ( बौश्रौ ३ १८ ) इति ॥ ऋतुवाचकैर्वसन्तादिशब्दैः समिद्यागादिपञ्चप्रयाजाभिमानिदेवता विवक्ष्यन्ते । तांश्च वसन्तादीनहं तोषयामि । ते च तुष्टा मां तोषयन्तु ॥

---

५ मै–'अभिमन्त्रयते' नास्ति । ६ मैर–निर्वर्तितत्वात् । *[ द्र उ ४१५ ] । **[ द्र उ १५१, १५५ ] ।

'शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतामग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमग्नेरहं देवयज्ययाऽन्नादो भूयासं (३)

शरदम् । ऋतुनाम् । प्रीणामि । सा । मा । प्रीता । प्रीणातु । हेमन्तशिशिराविति हेमन्त-शिशिरौ । ऋतुनाम् । प्रीणामि । तौ । मा । प्रीतौ । प्रीणीताम् अग्नीषोमयोरित्यग्नी-सोमयो । अहम् । देवयज्ययेति देव-यज्यया । चक्षुष्मान् । भूयासम् अग्ने । अहम् । देवयज्ययेति देव-यज्यया । अन्नाद इत्यन्न-अद । भूयासम् ( ३ ) ।

बर्हिष—' शरदम् ' इति ॥ शीर्यन्ते पच्यन्ते ओषधयोऽस्यामिति शरद् " शृदृभसोऽदि " ( उ १२५ ) इत्यदिप्रत्यय । अत्रापि स्वाभाविकं स्त्रीत्वम् ॥

स्वाहाकारस्य—हेमन्तशिशिरौ इति ॥ शैत्यसामान्येन द्वयो समस्तयो उपादान प्रयाजानां पञ्चत्वात् । " पञ्च वा ऋतव " ( तैस १ ५ १ ) इत्यादिवचन चोपपद्यते । हन्ति हिमेन जन्तून् इति हेमन्त । " हन्तेर्मुट् हि च " ( उ ४१६ ) इति झच्प्रत्यय । श्यति तनूकरोति हिमपीडया सकोचयति भूतानीति शिशिर । श्यते किरच्प्रत्यय ( ग्र उ ५१, ५२ ) द्विर्वचनमभ्यासस्येत्व च निपात्यते ॥

आज्यभागावनुमन्त्रयते—' अग्नीषोमयो ' इति ॥ अग्निश्च सोमश्चाग्नीषोमौ । " ईदग्ने सोमवरुणयो " ( पा ६ ३ २७ ) इतीत्त्वम् । " अग्ने स्तुत्स्तोमसोमा " ( पा ८ ३ ८२ ) इति षत्वम् । " देवताद्वन्द्वे च " ( पा ६ २ १४१ ) इति पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम् " छन्दसि निष्टर्क्य " ( पा ३ १ १२३ ) इत्यत्र देवयज्याशब्दो निपातित । देवार्हो याग देवयज्या । [v]अग्नीषोमयो [v]देवयज्यया अनेन देवार्हेण यागेन [v]अहम् [v]चक्षुष्मान् [v]भूयासम् यथा यज्ञोऽग्नीषोमाभ्यां [7]चक्षुष्मान् भवति एवमहमपि[7] ताभ्यां चक्षुष्मान् भूयासमिति भाव ।

आग्नेयस्य—' अग्ने ' इति ॥ [v]अन्नाद अन्नानामत्ता [v]भूयासं, देवानामग्नेरन्नादत्वात् ।

अग्नीषोमयोरिति ॥ कल्प: —" आज्यभागाविष्टावनुमन्त्रयतेऽग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमिति " ( बौश्रौ ३ १८ ) इति ॥ " उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमाय " ( तैस २ ६ २ ) इति श्रवणादग्नीषोमावाज्यभागयोर्देवौ, तयो: संबन्धिनी देवयज्या समन्त्रकाज्यभागाहुतिस्तयाऽध्वर्युनिष्पादितया यजमानोऽहं [v]चक्षुष्मान् [15]चक्षु:पाटवयुक्त: [v]भूयासम् । युक्तं चैतत् । " चक्षुषी वा एते यज्ञस्य यदाज्य भागौ " ( तैसं २·६ २ ) इति ब्राह्मणे चक्षुष्ट्वेन निरूपितत्वात् ॥

अग्नेरिति ॥ कल्प:—" अग्निमिष्टमनुमन्त्रयतेऽग्नेरहं देवयज्ययाऽन्नादो भूयासमिति " ( बौश्रौ ३ १८ ) इति ॥ दर्शपूर्णमासयोराद्यस्य प्रधानयागस्याग्निर्देवता । स चान्नभक्षक: । " अग्निर्वै देवानामन्नाद: " ( तैब्रा ३ १ ४, कासं २० ६ ) इति श्रुते: । अतस्तद्यागेन यजमानस्यान्नादत्वमुचितम् ॥

७-७ मै. ति-चक्षुष्मानेवमहमपि, पै-चक्षुष्मान् भवति एवमपि ।

१५ आ ना हा-चक्षुर्युक्तो ।

**दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासं**

दब्धिः । असि । अदब्धः । भूयासम् । अमुम् । दभेयम् । अग्नीषोमयोरित्यग्नी-सोमयोः । अहम् । देवयज्ययेति देव-यज्यया । वृत्रहेति वृत्र-हा । भूयासम् । इन्द्राग्नियोरितीन्द्र-अग्नियोः । अहम् । देवयज्ययेति देव-यज्यया । इन्द्रियावी । अन्नाद इत्यन्न-अद । भूयासम् । इन्द्रस्य । अहम् । देवयज्ययेति देव-यज्यया । इन्द्रियावी । भूयासम् ।

---

उपांशुयाजस्य—' दब्धि ' इति ॥ Vदब्धि दमन मरण, दम्भिता वा त्वम् Vअसि असुराणाम्, अहमपि त्वया Vअदब्ध Vभूयास शत्रुभिर्हिंसितो मा भूवम् । अपि तु Vअमु शत्रुं पाप्मान Vदभेय मारयेयम् । " लिङ्याशिष्यङ् " ( पा ३ १ ८६ ) । अमुमिति शत्रुनाम निर्दिशेत् ॥

अग्नीषोमीयस्य—' अग्नीषोमयो ' इति ॥ वृत्रस्य पाप्मनो हन्ता Vवृत्रहा । " ब्रह्मभ्रूण-वृत्रेषु " ( पा ३ २ ८७ ) इति क्विप् भविष्यत्यपि धातुसबन्धे भवति । अग्नीषोमाभ्यामिन्द्रो वृत्रमहन् तद्वदहमप्याभ्या भ्रातृव्यस्य हन्ता Vभूयासम् ॥

ऐन्द्राग्नस्य—' इन्द्राग्नियो ' इति ॥ " नोत्तरपदेऽनुदात्तादौ " ( पा ६ २ १४२ ) इति देवताद्वन्द्वलक्षणे पदद्वयप्रकृतिस्वरत्वे प्रतिषिद्धे समासान्तोदात्तत्वे च कृते " उदात्तयणो हल्पूर्वात् " ( पा ६ १ १७४ ) इति विभक्तेरुदात्तत्वम् । Vइन्द्रियावी Vअन्नाद च Vभूयासम्, इन्द्रियेण

---

दब्धिरिति ॥ कल्पः—" उपांशुयाजमिष्टमनुमन्त्रयते दब्धिरस्यदब्धो भूयासममुं दभेयमिति " ( बौश्रौ ३ १८ ) इति । ' अमुम् ' इत्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायतीति । उपांशुयाजस्य प्रजापतिर्विष्णुरग्नीषोमौ वा विकल्पेन देवताः । हे उपांशुयाजदेव, त्वं Vदब्धिः Vअसि अस्माभिर्द्वेष्यस्य त्वं हिंसकोऽसि । त्वत्प्रसादादहं वैरिभिरहिंसितः Vभूयासम् । Vअमुं वैरिणं Vदभेयं मारयेयम् ॥

अग्नीषोमयोरिति ॥ कल्पः—" अग्नीषोमाविष्टावनुमन्त्रयतेऽग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमिति " ( बौश्रौ ३·१८ ) इति ॥ पौर्णमास्यां तृतीययागस्याग्नीषोमौ देवते । तयोश्च वृत्रहत्यानिमित्त "त्वष्टा हतपुत्रः" ( तैसं २ ४ १२ ) इत्यस्मिन्ननुवाके" प्रपञ्चितम् । अतस्तद्यागेन यजमानस्य वैरिहन्तृत्वं युक्तम् ॥

इन्द्राग्नियोरिति ॥ कल्प — " इन्द्राग्नी इष्टावनुमन्त्रयत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिति " ( बौश्रौ ३ १८ ) इति ॥ अमावास्यायामसोमयाजिन सांनाय्याभावे द्वितीयपुरोडाशस्येन्द्राग्नी देवते, तत्रेन्द्रानुग्रहाद्यजमानस्येन्द्रियोपेतत्वमग्न्यनुग्रहादन्नादत्वम् ॥

इन्द्रस्येति ॥ कल्पः— " इन्द्रमिष्टमनुमन्त्रयत इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासमिति " ( बौश्रौ ३ १८ ) इति ॥ सांनाय्यस्येन्द्रो देवता तत्प्रसादादिन्द्रियावित्वम् ॥

---

८ शुद्धीकृतः, तै ति मै मे२-शत्रूणामुपहिंसितः, पं-शत्रूणामहिंसितः ।

---

१६ आ क ति-इत्यमु° ।

महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमग्नेः स्विष्टकृतोऽहं
देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम् ॥ (२) ॥
[ रिष्यात् सपत्नक्षयंण्यन्नादो भूयासं षट्त्रिंशच्च ]

महेन्द्रस्येति महा—इन्द्रस्य । अहम् । देवयज्ययेति देव-यज्यया । जेमानम् । महिमानम् । गमेयम् । अग्नेः । स्विष्टकृत इति स्विष्ट—कृतः । अहम् । देवयज्ययेति देव-यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति—स्थाम् । गमेयम् ॥ २ ॥
[ भैसं १४१; कासं ४१४, ५१ ]

---

इन्द्रियावी अग्निनान्नाद । इन्द्रियशब्दान्मत्वर्थीयो विनि (पा ५ २ १२२)। "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घत्वम् ॥

ऐन्द्रस्य सांनाय्यस्य—'इन्द्रस्य' इति ॥ इन्द्रियवान्, इन्द्रो हीन्द्रियस्य दाता भवति, इन्द्रेण हि दत्तम् इन्द्रियमिति (द्र पा ५ २ ९३) ॥

माहेन्द्रस्य—'महेन्द्रस्य' इति ॥ "स महत्" (पा २ १ ६१) इति समास । [v]जेमान [v]महिमानं च [v]गमेयम् । जेमा जेतृत्वम् । "तुश्छन्दसि" (पा ५ ३ ५९) इती मनिच् । छान्दस इकारलोप. । "तुरिष्ठेमेय सु" (पा ६.४ १५४) इति तृलोप । जनयितृत्व वा । [९]जनेश्छान्दसो जाभाव । महत्त्व महिमा ॥

स्विष्टकृत —'अग्ने स्विष्टकृत' इति ॥ स्विष्ट करोति इति स्विष्टकृत्, तस्य [v]देवयज्यया [v]अहम् [v]आयुष्मान् भूत्वा [v]यज्ञेन [v]प्रतिष्ठां [v]गमेयम् । यज्ञेन [१०]"या प्रतिष्ठा"[१०] भवति, "यो यतो यज्ञ प्रयुङ्क्ते । तदेन प्रतिष्ठापयतीति । प्रति तिष्ठति प्रजया पशुभिर्यजमान" (तैब्रा ३ ३ ९) इति, तामपि प्रतिष्ठां गमेयम् । "छिन्द्याशिष्यङ्" (पा ३ १ ८६) ॥

इति षष्ठे द्वितीयोऽनुवाक ॥

---

महेन्द्रस्येति ॥ कल्पः—"महेन्द्रमिष्टमनुमन्त्रयते महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमिति" (बौश्रौ ३ १८) इति ॥ केषांचित् सांनाय्यस्य महेन्द्रो देवता । तथा चाऽऽम्नायते—"त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता" (तैसं २ ५ ४) इति । तत्रेन्द्र-शब्दार्थप्रयुक्त्या यजमानस्य जेतृत्वप्राप्तिः । महत्-शब्दार्थप्रयुक्त्या [१७]यजमानस्य विशेषणीयाविगुणैर्महत्त्व-प्राप्तिः ॥

अग्नेरिति ॥ कल्पः—"स्विष्टकृतमिष्टमनुमन्त्रयतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमिति" (बौश्रौ ३.१८) इति ॥ कश्चिदग्निः केनचिन्निमित्तेन स्वनामधेयमलभत । स

---

९ मै-'जनेश्छान्दसो' नास्ति । १०-१० तं ति पं-या प्रतिष्ठितो ।

---

१७ क त ति त्रि४-'यजमानस्य' नास्ति ।

च कदाचिद्देवैराहुत्या तोषितः पूर्वमिष्टानां यागानां वैगुण्यं परिहृत्य स्विष्टत्वं[18] कृतवान्। तथा च ब्राह्मणमाम्नायते—"देवा वै यज्ञादुद्रमन्तरायन्स यज्ञमविध्यत्तं देवा अभिसमागच्छन्त कल्पतां न इदमिति तेऽब्रुवन्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वम्" (तैस २ ६ ८) इति, "यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति" (तैस २ ६ ६) इति च। स्विष्टकृच्छब्दस्य निर्वचनं सौत्रामण्यां मैत्रावरुणप्रैषमन्त्रे विस्पष्टमाम्नायते—"देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत्। स्विष्टं कुर्वन्स्विष्टकृत्। स्विष्टमद्य करोतु नः" (तैब्रा २ ६ १०) इति। तत्राग्निशब्दार्थप्रयुक्तं यजमानस्याऽऽयुष्मत्त्वम्। अत एव मन्त्रान्तरमेवमाम्नायते—"अग्निरायुष्मान्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि" (तैस २ ३ १०) इति। स्विष्टकृच्छब्दार्थप्रयुक्त्या[19] यज्ञप्रतिष्ठाप्राप्तिः। यदायमग्निः स्विष्टं करोति तदा यजमानः सगुणेन सपूर्णेन यज्ञेन प्रतिष्ठां[20] फलप्राप्तिलक्षणां लभते॥

अत्र विनियोगसंग्रहः—

"ध्रुवोऽसीति त्रिभिर्मन्त्रैः परिधित्रयमन्त्रणम्।
युनाग्नियोग इन्धानाः समिधोरनुमन्त्रणम्॥ १॥
यन्मे हविर्मन्त्रयेत भूस्त्रिभिः भावयेत्स्रुचिः।
उच्छुष्मो मन्त्रयेतेध्ममसत्यं प्रवरं[21] तथा॥ २॥
स्रौवाघारं मनोऽसीति स्रुच्याघारं तु वागिति।
वसन्तपञ्चभिर्मन्त्रैः प्रयाजान्पञ्च मन्त्रयेत्॥ ३॥
अग्नीषोमेत्याज्यभागावग्नेरित्यग्नियागकम्।
[22]दब्धीरुपांशुयाजाख्य स्पष्टमग्नीति पञ्चकम्[23]॥
अनुवाके द्वितीयेऽस्मिन्मन्त्राः षड्विंशतिर्गताः[24]"॥ ४॥ इति॥

अथ मीमांसा॥ पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

"स्याद्वसन्तादिमन्त्राणां क्रमो नो वाऽन्यवच्चेत्।
शाखान्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि॥" (जैन्या ५ १ ८) इति॥

दर्शपूर्णमासयोर्याजमानकाण्डे प्रयाजानुमन्त्रणमन्त्रा आम्नाताः—"वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि" इत्यादयः। तेषां नियतः क्रमोऽभ्युपगन्तव्यः। कुत? अन्येष्वाग्नेयोपांशुयाजाद्यनुमन्त्रणमन्त्रेषु नियतक्रमदर्शनेनात्रापि क्रमनियमस्य युक्तत्वादिति चेत्। नैवम्। अत्र नियामकाभावात्। न तावदत्र पाठो नियामकः। वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेन क्रमेण तैत्तिरीयशाखायां[25] पठितानां शाखान्तरे व्यत्ययेन पाठदर्शनात्। नाऽत्र यवागूपाकवदर्थो नियामकः। वसन्तमन्त्रेण यस्य कस्यचित्

~~~~~~~~~~~~~~~~~~~~

१८ क—स्विष्टकृत्त्वम्। १९ त्रि४—°प्रयुक्ता; ति—°प्रयुक्त°। २० क—फलप्राप्तिम्। २१. आ. ह्रा—प्रवृतिम्। २२ आ मा ह्रा—दब्धिरुपांशुयाजस्य। २३ तं ति—पञ्चके। २४ त ति त्रि४—°तिर्मताः। २५ आ—°शाखा°।
~~~~~~~~~~~~~~~~~~~~

प्रयाजस्यानुमन्त्रणेऽप्यनुपपत्त्यभावात्। नाप्यत्र लिङ्गं नियामकम्। वसन्तमन्त्रे समिधादिकविषयस्य विशेषसामर्थ्यस्यादर्शनात्। तस्मादत्र नास्ति [२६]नियतः क्रमः[२६] ॥

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

" [२७]उपांशुयजतेनाङ्गं दब्धिमन्त्रोऽङ्गताऽथवा[२७] ।
साधारणत्वाल्लिङ्गादेर्मानाभावादनङ्गता ॥
मन्त्राणां कर्मणां चात्र क्रमेणाऽऽम्नानमीक्ष्यते ।
प्रक्रियावत् क्रमो मानं यथासंख्यं ततोऽङ्गता ॥
क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः ।
यथासंख्यं संनिधिश्च यथासंख्यमुदाहृतम् ॥
शुन्धध्वमिति सांनाय्यपात्राङ्गं संनिधेर्मतम् ।
पशुधर्मोऽर्थसादेश्यादग्नीषोमीययगो भवेत् ॥ " ( जैन्या ३ ३ ११-१४ ) इति ॥

दर्शपूर्णमासयोर्याजमाने मन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते—" दब्धिरस्यदब्धो भूयासममुं दभेयम् " इति। अस्य मन्त्रस्योपांशुयाजाङ्गतायां श्रुतिवाक्ये न विद्येते। [२८]ब्राह्मणे[२८] विनियोगमनाम्नायार्थविवरणस्यैवाऽऽम्नातत्वात्। " एतया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नोति " ( तैसं १ ६ ११ ) इति ब्राह्मणम्। दब्धिर्घातकमायुधम्। आग्नेयाग्नीषोमीययोरप्यभिचारकत्वाल्लिङ्गं साधारणम्। प्रकरणं च त्रयाणामेकमेव। ततो मानाभावादयं मन्त्रो नोपांशुयाजाङ्गमिति प्राप्ते ब्रूमः— आध्वर्यवकाण्ड आग्नेयोपांशुयाजाग्नीषोमीयकर्माणि क्रमेणाम्नातानि। याजमाने च काण्डे तद्विषया मन्त्राः क्रमेणाम्नाताः— " अग्नेरहं देवयज्ययान्नादो भूयासं दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् " ( तैसं १ ६ २ ) इति। तत्र यथा वाक्यद्वयानुसंधानसपेक्षं प्रकरणं पृथक् प्रमाणं तथा प्रकरणद्वयानुसंधानसपेक्षः क्रमः कुतो न मानं स्यात्? न चास्य प्रकरणेऽन्तर्भावः। द्वयोर्वाक्ययोरिव प्रकरणयोरेकवाक्यत्वाभावात्। तस्मात् क्रमप्रमाणेन[३०] मध्यवर्तिन उपांशुयाजस्य मध्यवर्ती मन्त्रोऽङ्गम्। समानदेशत्व क्रम इति क्रमस्य स्वरूपम्। तच्च द्विविधं पाठकृतमर्थकृतं च। तत्र पाठकृतमपि द्विविधं यथासंख्यं संनिधिश्चेति। तयोराद्यस्य दब्धिमन्त्र उदाहरणम्। " शुन्धध्वं दैव्याय कर्मणे " ( तैसं १ १ ३ ) इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते। तत्र सांनाय्यपात्राणि कुम्भीशाखापवित्रादीन्यनन्तरेषु " मातरिश्वनः " ( तैसं १ १ ३ ) इत्यादिमन्त्रेष्ववभासन्त इति संनिधिना तत्पात्रप्रोक्षणे 'शुन्धध्वम्' इति मन्त्रो विनियुज्यते। अनुष्ठानसादेश्यात्[३१] पशुधर्माणामग्नीषोमीयाङ्गत्वम्। तदेवं [३२]क्रमस्य त्रैविध्यं[३२] द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

२६-२६ तं ति–नियामकः। २७-२७, क–उपांशुयजने नाङ्गं दब्धिमन्त्रो गतोऽथवा। २८ त्रि४–ब्राह्मणे। २९- जैमिनीयन्यायमालाविस्तरमनुसृत्य शुद्धीकृतः; आ.इ मा.पा.हा विनियोग आम्ना°, क–विनियोग आम्नाय अर्थान्तरेणास्ये°; तं ति त्रि४–विनियोगमाम्ना°। ३०. इ उ.पा मा.हा–क्रमप्रकरणेन। ३१ ति–°सादृश्यात्। ३२-३२ त्रि४–क्रमस्य द्वैविध्यम्; इ उ पा–क्रमत्रैविध्यम्।

अग्निर्मा दुरिष्टात् पातु सविताऽघशꣳसाद्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषꣳ

अग्नि । मा । दुरिष्टादिति दु—इष्टात् । पातु । सविता ।
अघशꣳसादित्यघ—शꣳसात् । य । मे । अन्ति । दूरे । अरातीयति । तम् । एतेन । जेषम् ।

---

प्राशित्रेऽवदीयमाने जपति—'अग्निर्मा' इति ॥ vदुरिष्टात् दुष्टात् यागात् विषमगुणात् माम् vअग्नि vपातु तन्निमित्तदोषापनोदनेन मां रक्षतु । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २)। कर्मणि निष्ठायां वा "गतिरनन्तर" (पा ६ २ ४९) इति गते प्रकृतिस्वरत्वम् । किंच—दुरिष्टम् अयुक्तरूपं प्रयाजादि ततो मा पातु । यद्वा—दुरिष्ट यथा न भवति तथा पातु दुरिष्टाद्विनिवार्य मां रक्षतु । vसविता च vअघशꣳसात् पापरुचे रक्षःप्रभृतेश्च पातु ॥

[१]यजमानभागेऽवदीयमाने जपति—'यो मे' इति । vय, vमे मम vअन्ति अन्तिके vदूरे वा vअरातीयति अरातित्वमिच्छति, अरातिमात्मनो वा अस्माकमिच्छति vत राक्षसादिमनेन vजेष जयेयम् । जयतेर्लेटि "सिब्बहुलं लेटि" (पा ३ १ ३४), शपो लुक् (पा २ ४ ७२), "लेटोऽडाटौ" (पा ३ ४·९४), "इतश्च लोपः" (पा ३ ४ ९७)। "कादिलोपो बहुलम्" (द्र पा ६ ४·१४९ वा ८) इत्यन्तिकस्य कलोप ॥

---

द्वितीयानुवाके हविरनुमन्त्रणमुक्तम् । तृतीयानुवाके भक्षस्येडादिभागस्यानुमन्त्रणमुच्यते ॥

अग्निरिति ॥ कल्पः—"प्राशित्रेऽवदीयमाने जपत्यग्निर्मा दुरिष्टात् पातु सविताऽघशꣳसादिति" (बौश्रौ ३ १८) इति ॥ मन्त्रवैकल्येन क्रियावैकल्येन वा [१]यदिष्टं दुरिष्टं तत् । तस्मात् दुरिष्टात् vअग्निः मां vपातु । vअघशꣳसात् पापरुचेरसुरादे vसविता मां पातु ॥

य इति ॥ कल्पः—"यजमानभागे यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषमिति" (बौश्रौ ३ १८) इति ॥ 'यजमानभागे' इत्यस्य 'अवदीयमाने जपति' इति शेषोऽनुवर्तते । यो राक्षसादिर्ममान्तिके vदूरे वा vअरातीयति शत्रुत्वमिच्छति vतं राक्षसादिकम् vएतेन यजमानभागेन vजेषं जयेयम् ॥

---

१ मै–यजमानोऽव° ।

---

१, इ,ल–यदि दुष्टम्,; क ना,हा–यदरिष्टम् ।

सुरूपवर्षवर्ण एहीमान् भद्रान् दुर्याꣳ अभ्येहि मामनुव्रता
न्यु शीर्षाणि मृड्ढ्वमिड एह्यदित एहि सरस्वत्येहि

सुरूपवर्षवर्ण इति सुरूप-वर्षवर्णे । एति । इहि । इमान् । भद्रान् । दुर्यान् । अभि । एति । इहि । माम् । अनुव्रतेत्यनु-व्रता । नीति । उ । शीर्षाणि । मृड्ढ्वम् । इडे । एति । इहि । अदिते एति । इहि । सरस्वति । एति । इहि ।

इडामाह्रियमाणामनुमन्त्रयते—'सुरूपवर्षवर्णे' इति ॥ शोभनरूपौ शोभनस्वभावौ वर्षवर्णौ यस्या सा तथोक्ता । "पशवो वा इडा" (तैस १ ७.१), "वृष्टिर्वा इडा" (तैस १ ७ २) इति पशुवृष्टिहेतुत्वादिडाया एवमुच्यते । पूर्वपदस्याद्युदात्तत्वं छान्दसम् । ईदृशीवे [V]एहि आगच्छ [V]इमान् मदीयान् [V]भद्रान् कल्याणान् भजनीयान् [V]दुर्यान् यज्ञगृहान्, "गृहा वै दुर्याः" (तैस ६ २ ९) इत्युक्तम् । किंच—[V]माम् [V]अनुव्रता अनुगुणा अभिप्रेतानि साधयन्ती [V]अभि [V]आ [V]इहि आभिमुख्येनागच्छ । असमानपदेऽपि रुर्दृश्यते[M] । अस्माकं [V]शीर्षाणि [V]नि [V]मृड्ढ्वं निर्दोषानस्मान् कुरुध्वमिति यावत्, यथास्माकं शिर क्षालितमनेनेति दोषाशङ्काया वक्तारो भवन्ति । निमृड्ढ्वमिति च एकवचनस्य स्थाने व्यत्ययेन बहुवचनम्, पूजार्थं वा वक्ष्यमाणगोभेदापेक्षम् । [V]उ इति समुच्चयेऽवधारणार्थे वा । इडादय शब्दा गवां नामानि, यथा—"इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि" (तैस ७ १ ६) इति । तच्छब्देनेडा स्तूयते । तत्र गवां भेदात् निमृड्ढ्वमिति बहुवचनमुपपद्यते, हे इडादय, यूयमागत्य मां निमृड्ढ्वमिति । यद्वा गोभिरभेदेनेडोच्यते 'हे इडादिरूपे इडे'

सुरूपवर्षवर्ण इति ॥ कल्पः—"[2]इडामाह्रियमाणामनुमन्त्रयते सुरूपवर्षवर्ण एहीति मघोनीस्यन्तः" (बौश्रौ ३ १८) इति ॥ सुरूपेति मन्त्रादिः । मघोनीति मन्त्रान्तः । पाठस्तु—'सुरूपवर्षवर्ण एहीमान् भद्रान् दुर्याꣳ अभ्येहि मामनुव्रता न्यु शीर्षाणि मृड्ढ्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहव तेऽशीय सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः सचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी' इति ॥ [3]गोशरीरधारिण्या इडाख्याया देवताया सम्बोधनं [V]सुरूपवर्षवर्णे इति । शुक्लपुच्छादिकं रूपम् । वर्षं वृष्टिः । वर्णः शुक्लकृष्णकपिलत्वादिः । शोभना रूपवर्षवर्णा यस्याः सा तथोक्ता । शृङ्गादीनामतिदीर्घत्ववक्रत्वादिपरिहारेण दर्शनीयत्वं रूपस्य शोभनत्वम् । वर्षं द्विविधमुदकरूपं घृतरूपं च । तत्रेडा स्वकीयात् पदात् घृतं वर्षति । तथा च मन्त्र आम्नायते—"इडाया पदे घृतवति स्वाहा" (तैसं १ २ ५) इति, "मानवी घृतपदी मैत्रावरुणी" (तैब्रा ३ ५ ८) इति, "इडायाः पदं घृतवच्चराचरम्" (आपश्रौ ४ ५ ७) इति च । तथा

२ मै–ईदृशी । [M][ द्र पा ८ ३ ९,२ ] ।

२–२ क–इडामवदीयमानामनुमन्त्रयते सुरूपवर्षादिर्मघोनीरन्तः । [3] आ.मा.ही–गोशरीरधारिण्या ; क–गोशरीरधारिण्याः ।

रन्तिरसि रमतिरसि सूनर्य॑सि जुष्टे॑ जुष्टिं॑ ते॒ऽशी॒योप॑हूत उपह॒वं ( १ ) ते॒ऽशीय
सा मे॑ स॒त्याऽऽशीर॒स्य य॒ज्ञस्य॑ भूया॒दरे॑डता

रन्ति॑ । अ॒सि॒ । रम॑ति । अ॒सि॒ । सू॒नरी॑ । अ॒सि॒ । जुष्टे॑ । जुष्टि॑म् । ते॒ । अ॒शी॒य॒ ।
उप॑हूत॒ इत्युप॑—हू॒ते॒ । उ॒प॒ह॒वमित्यु॑प—ह॒वम् ( १ ) । ते॒ । अ॒शी॒य॒ । सा । मे॒ । स॒त्या ।
आ॒शीरित्या॑ शी । अ॒स्य । य॒ज्ञस्य॑ । भू॒या॒त् । अरे॑डता ।

इति तदा त्वेकवचनमेव न्याय्यम् । इडा पशुसाधनीड्या वा । अदितिरदीना अखण्डनीया । सरस्वती सरणवती सरस्वतीसदृशा वा । [V]रन्ति रतिहेतु [V]असि इहामुत्र च । क्तिचि "न क्तिचि दीर्घश्च" ( पा ६ ४ ३९ ) इति टिलोपाभाव, वृषादिर्द्रष्टव्य ( पा ६ १ २०३ ) । [V]रमति रमणीया । "रमेर्नित्" ( उ ५१२ ) इत्यतिप्रत्यय । [V]सूनरी शोभनमनुष्या, मनुष्याणां [3]सुख-हेतुत्वात् । पृषोदरादि ( पा ६ ३ १०९ ) । यद्वा—सुष्ठु नेत्री सूनरी । नृ नये । सुपूर्वात् , अच इ ' ( उ ५८८ ) इतीप्रत्यय । "कृदिकारादक्तिन " ( द्र गणसूत्र पा ४ १ ४५ ) इति ङीष्[4] । [M]उपसर्गविकार[M]छान्दस , सर्वथानवधारणान्नावगृह्यते । यद्वा—रन्त्यादीन्यपि त्रीणि गवां नामधेयानि । हे [V]जुष्टे प्रिये सर्वस्य सर्वेण वा सेविते, [V]ते [V]जुष्टिं त्वया दत्तां प्रीतिम् [V]अशीय व्याप्नुयाम् । अश्नोतेर्लिङि शपो लुक ( पा २ ४ ७३ ) । हे [V]उपहूते अनुज्ञाते, [V]ते तव [V]उपह्वम् अनुज्ञाम् [V]अशीय । "ह्व संप्रसारण च न्यभ्युपविषु ' ( पा ३ ३ ७२ ) इत्यप् । थाथादिनोत्तरपदान्तोदात्तत्वम् ( पा ६ २ १४४ ) । सा [V]अस्य [V]यज्ञस्य [V]आशी अस्य [V]यज्ञस्य फल मम [V]सत्या यथाश्रुतिसिद्धि [V]भूयात् । "ऊडिदम्° " ( पा ६ १ १७१ )

ब्राह्मणमप्याम्नायते—"सा यत्र यत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते" ( तैसं २ ६ ७ ) इति, "यूष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः सजीवन्तीः पिबन्ति" ( तैसं १ ७ २ ) इति च । तदिदं घृतरूपत्वं वर्षस्य शोभनत्वम् । कर्बुरादिसङ्कीर्णत्वपरिहारेण विस्पष्टं शुक्लकृष्णकपिलत्वादिकं वर्णस्य शोभनत्वम् । तथाविधे हे इडे, [V]इमान् अस्मदीयान् [V]भद्रान् शास्त्रोक्तयज्ञसाधनसम्पूर्णान् [V]दुर्यान् यज्ञगृहान् प्रत्यागच्छ । "गृहा वै दुर्याः" ( तैसं २ ६ ९ ) इति हि श्रूयते । किंच [V]माम् अभिलक्ष्य [V]अनुमता अस्मिन् यज्ञमतेऽनुकूला सती, एहि आगच्छ । उशब्दः समुच्चये । अपि च हे इडाविशेषा , यूयमस्मदी-यानि शिरांसि [V]नि [V]मृड्ढ्वं नितरा स्नेहपूर्वकाघ्राणादिना शोधयध्वम् । त एवेडाविशेषा इडादिभि सूनर्यन्तै षड्भिर्नामविशेषैः स्पष्टीक्रियन्ते । इडादीनां गोनामविशेषत्व सप्तमकाण्डे समाम्नातम्—"इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि" ( तैसं ७ १ ६ ) इति ॥ एतेषां प्रदर्शनार्थत्वात् रमत्यादिकमपि द्रष्टव्यम् । हे [V]जुष्टे प्रिये सेव्ये वा, [V]ते [V]जुष्टिं त्वदीयां प्रीतिम् [V]अशीय प्राप्नुयाम् । हे [V]उपहूते इडे एहि, इत्येवमागमनायास्माभिरनुज्ञातेऽहमपि [V]ते [V]उपहवं त्वदीयामनुज्ञाम् [V]अशीय प्राप्नुयाम् । [V]अस्य [V]यज्ञस्य येयम् [V]आशीः फलप्रार्थना [V]सा [V]मे [V]सत्या [V]भूयात् । [V]अरेडता

३ ति-शुभहेतु° । ४ पं-दीर्घः । [M][ द्र पा ६ ३ १२६, द्र॰ सायणीये भाष्यम्-ऋ १।४७४ ]।

मन॑सा तच्छ॑केयं॒ य॒ज्ञो दिवं॑ रोहतु य॒ज्ञो दिवं॑ गच्छतु यो दे॑व॒यान॒ः पन्था॒स्तेन य॒ज्ञो दे॒वाँ अप्ये॑त्व॒स्मास्विन्द्र॑ इन्द्रि॒यं द॑धात्व॒स्मान् राय॑ उ॒त य॒ज्ञाः स॑चन्ताम॒स्मासु॑ सन्त्वा॒शिष॒ः सा नः॑ प्रि॒या सु॒प्रतू॑र्तिर्म॒घोनी॑

मन॑सा । तत् । श॒के॒य॒म् । य॒ज्ञः । दिव॑म् । रो॒ह॒तु॒ । य॒ज्ञः । दिव॑म् । ग॒च्छ॒तु॒ । यः । दे॒व॒यान॒ इति॑ देव—यानः॑ । पन्थाः॑ । तेन॑ । य॒ज्ञः । दे॒वान् । अपीति॑ । ए॒तु॒ । अ॒स्मासु॑ । इन्द्रः॑ । इ॒न्द्रि॒यम् । द॒धा॒तु॒ । अ॒स्मान् । राय॑ः । उ॒त । य॒ज्ञाः । स॒च॒न्ता॒म् । अ॒स्मासु॑ । स॒न्तु॒ । आ॒शिष॒ इत्या॑—शिष॑ः । सा । न॒ः । प्रि॒या । सु॒प्रतू॑र्ति॒रिति॑ सु—प्रतू॑र्तिः । म॒घोनी॑ ।

इतीदमः षष्ठ्या विभक्तेरुदात्तत्वम् । ' अरेडता ' इत्येकपदा त्रिष्टुप् यजुरादि यजुरन्ता । उक्तैर्वक्ष्यमाणैश्च अरेडता अनादरमकुर्वता मनसा । *रेडृ अनादरे । तत् फलं शकेय त्वत्प्रसादात् साधयितु शक्तो भूयासम् । " लिङ्याशिष्यङ् " ( पा ३ १ ८६ ) । यज्ञः अयम् अस्मदीय दिव रोहतु दिवौकसां तृप्तये भवतु । किंच—अयं यज्ञः अस्मानपि दिव गच्छतु गमयतु देहपातोत्तरकालमस्मान् दिवमारोहयतु । " बहुलमन्यत्रापि " ( उ १९० ) इति णिलुक् । यद्वा—"हेतुकर्तरि कर्तृनिर्देश," *षड्भिर्हलैः कृषतीति यथा । सामर्थ्यात् तत्रेति चेदिहापि पूर्वेण गतत्वात् आनर्थक्याद्धेतु प्रत्येष्यते । इदानीं यज्ञस्य मार्ग उपदिश्यते—यः देवयान पन्थाः येन पथा देवान् गच्छति देवत्वं वा प्राप्यते तेन पथाय यज्ञ देवान् अपि एतु तेन मार्गेण गत्वा देवाननुप्रविशतु ॥

' अस्मासु ' इति त्रिपदोष्णिक्, त्रिष्टुप् तत. परा । यद्वा—मध्येज्योतिस्त्रिष्टुप् ॥ अस्मासु त्वत्प्रसादभाक्षु इन्द्र इद्रियं वीर्यं दधातु । अस्मान् राय धनानि पश्वादीनि अपि च यज्ञा उत्तरे च क्रतव सचन्ताम् । षच समवाये । अस्मासु आशिष अभिप्रेतान्यपि फलानि सन्तु भूतानि सन्तु । सा च त्वमस्माक प्रिया तृप्तिहेतु सुप्रतूर्ति सुष्ठु प्रतरणिर्दु खानाम् ।

अनादरमकुर्वता मनसा तत्फलं साधयितुं शकेयं त्वत्प्रसादाच्छक्तो भूयासम् । मयाऽनुष्ठितोऽयं यज्ञो निःश्रेणीमिव क्रमेण दिवम् आरोहतु । केनापि वैकल्यप्रतिबन्धेन भ्रंशो यज्ञस्यानारोहणं, भ्रंशाभावे तु यज्ञ आरोहत्येव । आरुह्य च यस्यां दिवि यज्ञहविर्भोजो निवसन्ति तां दिवं स्वर्गप्रदेशविशेषं गच्छतु । तस्मिन् प्रदेशे गत्वा सभायामुपविष्टा देवा येन मार्गेण हविर्भोजनशालां गच्छन्ति तेनैव मार्गेणायं यज्ञः यज्ञसंबद्धहविर्देवान् अप्येतु प्राप्नोतु । तेन यज्ञेन तुष्टः इन्द्रः अस्मासु इन्द्रियं यज्ञान्तरानुष्ठानाय चक्षुरादिपाटवं दधातु स्थापयतु । तादृशान् अस्मान् रायः यज्ञसाधनानि धनानि यज्ञाः उत करिष्यमाणा यज्ञा अपि सचन्ताम् आश्रयन्ताम् । आशिषः तद्यज्ञफलानि अस्मासु सन्तु । सा तादृशी त्वं नः अस्मान् प्रति सुप्रतूर्तिः सुष्ठु प्रकर्षेण शत्रूणां हिंसिका मघोनी धनवती च भव ॥

*[ धातुपाठे ' रीडृ अनादरे ' ( ३५५ ) इत्यस्ति, निघण्टौ हि ( २ १२ १ ) ' रेळते ' इति क्रुध्यतिकर्मसु पठितः । ] । १—१ सि ते मै—हेतुकर्मनिर्देशः । **[ द्र पाभा ३ १·२६ वा २ ] ।

४ क—देवा निवसन्ति । ५ इ उ—'शालायाम् ६ इ उ ना पा हा—' प्राप्नोतु ' नास्ति ।

ब्रह्मभागाद्यनुमन्त्रणमन्त्राः ]

जुष्टिरसि जुषस्व नो जुष्टा नो(२)ऽसि जुष्टिं ते गमेयं
मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञँ समिमं दधातु ।
बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥
अध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसत्

जुष्टिः । असि । जुषस्व । नः । जुष्टा । नः (२)। असि । जुष्टिम् । ते । गमेयम् । मनः । ज्योतिः । जुषताम् । आज्यम् । विच्छिन्नमिति वि–छिन्नम् । यज्ञम् । समिति । इमम् । दधातु ॥
बृहस्पतिः । तनुताम् । इमम् । नः । विश्वे । देवाः । इह । मादयन्ताम् ॥
अध्न । पिन्वस्व । ददतः । मे । मा । क्षायि । कुर्वतः । मे । मा । उपेति । दसत् ।

यद्वा—सुष्ठु प्रकर्षेण च हिंसिका शत्रूणाम् । "नसत्तनिषत्त°" (पा ८.२ ६१) इति निपातने निष्ठावद्भावात् क्तिनोऽपि भवति । "क्त्वादयश्च" (पा ६ २ ११८) इत्युत्तरपदाद्युदात्तत्वम् । [V]मघोनी धनवती । "छन्दसीवनिपौ°" (पा ५.२ १०९ वा २) इति मत्वर्थीयो वनि । "ऋन्नेभ्य°" (पा ४ १ ५) इति ङीप् । "श्वयुवमघोनाम्°" (पा ६ ४ १३३) इति सम्प्रसारणम् । एवंगुणोऽस्माकं भव ॥

अथान्तरेडां प्राश्यमानामनुमन्त्रयते—+ + + + +

+ + + + + 'अध्न' इति ॥ हे [V]अध्न बन्धक मनसां, त्वय्येव हि मनोऽस्माकं सर्वदा बद्धम् । "बन्धेर्ब्रधिबुधी च" (उ २९२) इति नक्प्रत्ययः । परिवृढस्यैवेयं सञ्ज्ञा । [V]पिन्वस्व प्रीणय अस्मानृत्विजश्च । [V]ददतः [V]मे [V]मा [V]क्षायि देयेन धनेन

जुष्टिरिति ॥ कल्पः—"अवान्तरेडां प्राश्यमानामनुमन्त्रयते जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयमिति" (बौश्रौ ३ १८) इति ॥ हेऽवान्तरेडे, त्वं [V]जुष्टिः [V]असि प्रीतिरूपाऽसि । [V]नः अस्मान् [V]जुषस्व प्रीणय । [V]नः अस्माभिः [V]जुष्टा [V]असि सेविताऽसि । [V]ते [V]जुष्टिं त्वदीयां प्रीतिं [V]गमेयं प्राप्नुयाम् ॥

मन इति ॥ कल्पः—"अथाऽन्तर्वेद्यग्निमौर्जयते मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञँ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तामिति" (बौश्रौ ३ १८) इति ॥ [V]मनः [V]ज्योतिः मननीयोऽयमग्निस्तत्तदाहुतिषु [V]आज्यं सेवताम् । केनापि वैकल्येन [V]विच्छिन्नम् [V]इमम् [V]यज्ञं वैकल्यपरिहारेण [V]सं [V]दधातु । [V]बृहस्पतिः स्वयमेव [V]नः अस्मदीयम् [V]इमम् यज्ञं [V]तनुताम् । [V]विश्वे [V]देवाः [V]इह यज्ञे [V]मादयन्तां तृप्यन्तु ॥

अध्नेति ॥ कल्पः—"बर्हिषदं पुरोडाशमनुमन्त्रयते अध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसदिति" (बौश्रौ ३ १८) इति ॥ यज्ञपुरुषवाची अध्नशब्दः । "यज्ञो वै अध्नः" (तैस १ ७ १)

++अत्रत्यं भाष्यं त्रुटितमिति प्रतीयते ।

प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदान व्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा (३) मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके ॥ ३ ॥

[ उपहूय जुष्टो नस्त्वा षट् च ]

प्रजापतेरिति प्रजा-पते । भागः । असि । ऊर्जस्वान् । पयस्वान् । प्राणापानाविति प्राण-अपानौ । मे । पाहि । समानव्यानाविति समान-व्यानौ । मे । पाहि । उदानव्यानावित्युदान-व्यानौ । मे । पाहि । अक्षितः । असि । अक्षित्यै । त्वा । मा । मे । क्षेष्ठाः । अमुत्र । अमुष्मिन् । लोके ॥ ३ ॥

[ मैसं १ ४ १, १२, कासं ५ २-४, मासं २ १०,१३ ]

क्षयो मा गामि, अपि तूपचीयताम् । कुर्वत मे मा उप दसत् । सामर्थ्यं श्रद्धा वा मोपक्षय गमत्, अपि तु पुनः पुनर्वर्धताम् । दसु उपक्षये । लुङि पुषादित्वादङ् ( पा ३ १ ५५ )॥

अन्वाहार्यमासन्नमभिमन्त्रयते[6]—' प्रजापते ' इति ॥ प्रजापते भागः असि । " स वा एष प्राजापत्यो यदन्वाहार्य " ( तैसं १ ७ ३ ) इति [7]ब्राह्मणम् । " पत्यावैश्वर्ये " ( पा ६ २ १८ ) इति पतिशब्दे पूर्वपदप्रकृतिस्वरत्वम् । " कर्षात्वत " " ( पा ६ १ १५९ ) इति भागशब्दोऽन्तोदात्त । " स्वरितो वाऽनुदात्ते पदादौ " ( पा ८.२ ६ ) इत्येकादेशस्य संहितायां स्वरितत्वम् । ऊर्जस्वान् अन्नवान् पयस्वान् रसवान्, स त्व प्राणापानौ मम पाहि । मुखनासिकाभ्यां यो वायुर्निर्गच्छति स प्राण', स च वायोस्तिर्यग्गमनशीलस्योर्ध्वगमनहेतु जीवव्यापारविशेषो वेदितव्य । अपानो नामावागमनो वायु । समानो नाम सर्वसाधारणो हृदये स्थितो वायु । व्यानो नाम मनो व्याप्य स्थितो नाडीभिरन्नादिरसस्य नेता । उदान ऊर्ध्वगमन

इति श्रुतेः। हे अश्म, पिन्वस्व अस्मानृत्विजश्च प्रीणय। ददतः धनं प्रयच्छतः मम देयं धनं मा क्षीयतामपि तूपचीयताम्। यागं कुर्वतो मम सामर्थ्यं मा उप दसत् मोपक्षीयतामपि तु पुनः पुनर्वर्धताम् ॥

प्रजापतेरिति ॥ कल्पः —" अथाऽन्वाहार्यं याचति । तमन्तर्वेद्यासन्नमभिमन्त्रयते प्रजापते भागोऽस्यूर्जस्वान् *-पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोके इति * " ( अ बौश्रौ ३ १८ ) इति ॥ यद्यप्यन्वाहार्य ऋत्विजां भागस्तथाऽपि तेन प्रजापतेः परितोषात् तद्भागत्वमप्यविरुद्धम् । स च भागः ऊर्जस्वान् बलवान्, तद्भोजिनां बलप्रद-

६. पं—अनुमन्त्रयते । ७ मै—' ब्राह्मणम् ' नास्ति ।

७ क—पचति । * -*[ बौश्रौसूत्रे—' पयस्वानित्यान्तावमुष्याकल्प ' इत्येव वर्तते ।] ।

शब्दस्योत्पादयिता । पुनर्व्यानग्रहणमनुक्तजीववृत्तिप्रकारोपसंग्रहार्थम्, विविधाननात्मकत्वात् तेषाम् । Vअक्षित' अक्षीण Vअसि । Vअक्षित्यै इह चामुत्र चाक्षयाय त्वां ददामीति सामर्थ्यात् । स त्वम् Vअमुत्र परलोके अस्मि[मुष्मि]न्नैन्द्रे ब्राह्मे प्राजापत्ये वा Vमा Vक्षेष्ठा परलोके क्षय मा गमः । यद्वा— मे ममामुष्मिन् लोके यदाहं परलोके भविष्यामि तदा तत्र ममोपभोगार्थम् । इह हि कृत्वा परत्र भुङ्क्ते । "क्षीयते वा अमुष्मिन् लोके" ( तैस १ ७ ३ ) इत्यादि ब्राह्मणम् ॥

॥ इति षष्ठे तृतीयोऽनुवाकः ॥

~~~~~~~~~~~~~~~~~~~~

त्वात् । Vपयस्वान् क्षीरवत् स्वादुतमः । यद्वा—क्षीरे पच्यमानत्वात् [8]पयस्वत्वम् । अत एव सूत्रकार आह— "क्षीरे भवतीत्येके" ( आपश्रौ ३ ३ १३ ) इति । हेऽन्वाहार्य, स त्वं शरीरगतान् प्राणादिवायुभेदान् Vपाहि । एक एव वायुः शरीरगतः स्थानभेदात् कार्यभेदाच्च प्राणादिनामभिरभिधीयते । स्थानभेदं कैश्चिदुक्तः – "हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः" इति ॥ उच्छ्वासनिःश्वासौ प्राणव्यापारः । मलमूत्रयोरधःपातनमपानव्यापारः । भुक्तस्यान्नरसस्य शरीरे साम्येन नयनं समानव्यापारः । [9]उद्गारहिक्कादिरुदानव्यापारः । कृत्स्नासु शरीरनाडीषु व्याप्य प्राणापानवृत्त्योः संधिकाले शरीरस्य बलप्रदानं व्यानव्यापारः । अत एव छन्दोगा आमनन्ति—"यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः । अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरति । अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति" ( छांउ १ ३ ) इति । एवं बहुविधव्यापारहेतुत्वात् प्राधान्यं द्योतयितुं व्यानस्य द्विरुक्तिः । यद्वा—नागकूर्मादिवायुविशेषाणामत्रान्तर्भावमभिप्रेत्य पुनरप्युक्तिः । हेऽन्वाहार्य, त्वम् Vअक्षितः[10] [11]अक्षीणः Vअसि । "अपरिमितो निरुप्यः" ( तैसं १ ७ ३ ) इति ब्राह्मणोक्तेः, "दक्षिणाग्नावन्वाहार्यं[12] महान्तमपरिमितमोदनं पचति ( आपश्रौ ३ ३ १२ ) इति सूत्रकारोक्तेश्च । तस्मात् परलोकेऽपि Vअक्षित्यै त्वां ददामीति शेषः । तेनाभिप्रायेण दीयमानत्वात् Vअमुत्र परलोके Vमे मम भोगाय Vमा Vक्षेष्ठाः क्षयं मा प्राप्नुहि । तस्मात् अहमपि Vअमुष्मिन्[13] Vलोके त्वा यथेच्छमनुभवामीति शेषः ॥

अत्र विनियोगसंग्रहः —

"अग्नि प्राशित्रावदानं यो मेऽन्ति स्वामिभागकम् ।
इडाद्वयं सुरूपेति शुचिरित्यनुमन्त्रयेत् ॥ १ ॥
मनोऽग्निमौर्जिं भक्ष्न पुरोडाशं प्रजापतेः ।
अन्वाहार्यं मन्त्रयेत मन्त्राः सप्तेह वर्णिताः ॥ २ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

~~~~~~~~~~~~~~~~~~~~

८ आ ना हा-पयस्वान् । ९ आ—उद्गारादिः ° १० इ उ त ति ना पा हा—'अक्षित ' ना स्ति । ११ क—' अक्षीणः ' नास्ति । १२ इ उ ते ति ना पा हा—'हार्यपचनम् । १३ क—अस्मिन्

बर्हिषोऽहं देवयज्यया प्रजावान् भूयासं नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमग्नेरहमुज्जितिमनूज्जेषम्

बर्हिषः । अहम् । देवयज्ययेति देव-यज्यया । प्रजावानिति प्रजा-वान् । भूयासम् । नराशꣳसस्य । अहम् । देवयज्ययेति देव-यज्यया । पशुमानिति पशु-मान् । भूयासम् । अग्नेः । स्विष्टकृत इति स्विष्ट-कृतः । अहम् । देवयज्ययेति देव-यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति-स्थाम् । गमेयम् । अग्नेः । अहम् । उज्जितिमित्युत्-जितिम् । अनु । उदिति । जेषम्

अनूयाजान् क्रमेणानुमन्त्रयते—'बर्हिष' इति ॥ ᵛबर्हिषः देवताया देवयज्यया देवार्हेण यागेन ᵛअहम् ᵛप्रजावान् बहुपत्यो जीवदपत्यश्च ᵛभूयासम् ॥

ᵛनराशꣳसस्य नरैः शसनीयस्य । गतमन्यत्[1] । ᵛपशुमान् बहुपशुः । "ह्रस्वनुड्भ्यां मतुप्" ( पा ६ १ १७६ ) इति मतुप उदात्तत्वम् ॥

"अग्ने स्विष्टकृत" इति ॥ व्याख्यातमेव ( तैसं १ ६ २ ) ।

सूक्तवाके "अग्निरिदं हविरजुषत" ( तैब्रा ३.५ १० ) इत्यादिक्रमेण उज्जितीः वाचयति—'अग्नेरहम्' इत्याद्या ॥ दर्शपूर्णमासाभ्यां पूर्वं देवता इष्ट्वा तयोः ᵛउज्जितिः उच्छ्रितम् ऊर्ध्वलोकविषयं वा जयं नः अनूदजयन् तदेतत्कामुज्जितिमकभन्त । "दर्शपूर्णमासयोर्वै देवाः" ( तैस १ ७ ४ ) इत्यादि ब्राह्मणम् । तत्राग्नेर्या उज्जितिरभूत् पूर्वं तासह

तृतीये भक्षस्येडादिभागस्यानुमन्त्रणमुक्तम् । चतुर्थे शेषाहुतीनामनुयाजादीनामनुमन्त्रणमुच्यते बर्हिष इति ॥ कल्पः—"अनूयाजानामिष्टमिष्टमनुमन्त्रयते[2] बर्हिषोऽहं देवयज्यया प्रजावान् भूयासं नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमिति" ( बौश्रौ ३ १९ ) इति ॥ बर्हिर्नराशंसस्विष्टकृच्छब्दाः अनुयाजदेवतानामभिविशेषाणां वाचकाः बर्हिर्नराशंसयागाभ्यां प्रजापतिः क्रमेण प्रजाः पशूंश्च ससर्जेति यजमानस्य तत्प्रार्थना युक्ता[3] । स्विष्टकृन्मन्त्रस्तु व्याख्यातः ॥

अग्नेरिति ॥ कल्पः—"अथ यत्र होतुरभिजानात्यग्निरिदं हविरजुषतेति [3]तद्यजमानमुज्जितीर्वाचयत्यग्नेरहमुज्जितिमनूज्जेषमिति[4] "यथेतम्" ( बौश्रौ ३ १९ ) इति ॥ यस्मिन् काले होता सूक्तवाकं पठन् "अग्निरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत" ( तैब्रा ३ ५.१० ) इत्यादीनि तत्तद्देवतास्मारकाणि वाक्यानि पठति तस्मिन् कालेऽध्वर्युर्यजमानं तत्तद्देवताविषयाण्युज्जितिवाक्यानि वाचयेत् । अमावास्यायां पौर्णमास्यां वा यां यां देवतां यजति तद्विषयमनतिक्रम्य तदनुसारेण सूक्तवाकभागा उज्जितिभागाश्च प्रयोक्तव्याः ॥ पाठस्तु–'अग्नेरहमुज्जितिमनूज्जेषम्[5] सोमस्याहमुज्जितिमनूज्जेषमग्नेरहमुज्जितिमनूज्जेषमग्नी

१ मै–'अन्यत्' नास्ति ।

१ क–[illegible] । २ [illegible] । ३ क–तद्यजमानमुज्जितिं वाच° । ४. क–'इति' नास्ति । ५ क–सोमस्याहमुज्जितिमनूज्जेषमग्नेरहमुज्जितिमनूज्जेषमग्नीषोमयोरहमुज्जितिमनूज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेषमिन्द्रस्याहमुज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जितिमनूज्जेषमग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषम् ।

सोमस्याहमुज्जितिमनूज्जेषमग्नेरहमुज्जितिमनूज्जेषमग्नीषोमयो-
रहमुज्जितिमनूज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेष-
मिन्द्रस्याह(१)मुज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जिति-
मनूज्जेषमग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषं

सोमस्य । अहम् । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जेषम् । अग्नेः । अहम् । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जेषम् । अग्नीषोमयोरित्यग्नी–सोमयोः । अहम् । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जेषम् । इन्द्राग्नियोरितीन्द्र–अग्नियोः । अहम् । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जेषम् । इन्द्रस्य । अहम् (१) । उज्जिति-मित्युत्–जितिम् । अनु । उदिति । जेषम् । महेन्द्रस्येति महा–इन्द्रस्य । अहम् । उज्जिति-मित्युत्–जितिम् । अनु । उदिति । जेषम् । अग्नेः । स्विष्टकृत इति स्विष्ट–कृतः । अहम् । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जेषम् ।

[v]अनूज्जेष, यथाग्निरुदजयत्, तद्वदहमप्यनेनाग्नेर्यागेन [v]उज्जेषम् उज्जयेय तादृशमैश्वर्यं ममा-मुत्र भूयादिति । “ दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूजयति ” ( तैस १ ७ ४ ) इत्यादि ब्राह्मणम् । जयतेर्लेटि “ सिब्बहुलं लेटि ” ( पा ३ १ ३४ ) अडागम । “ इतश्च लोप.° ” ( पा ३ ४ ९७ ) शपो लुक् । “ तादौ च° ” ( पा ६.२ ५० ) इत्युज्जितिशब्दे गते प्रकृतिस्वरत्वम् । लक्षणेऽनो कर्मप्रवचनीयत्वम् ( पा १.४ ८४ ) । एतेन सर्वा उज्जितयो व्याख्याता ॥

स्रुग्व्यूहनमन्त्रौ ‘ वाजस्य ’ इत्यनुष्टुभौ । व्याख्याते चैते ( तैस १ १ १३ ) । [v]वाजस्य अन्नस्य प्रसूतिनिमित्तेन स्रुच उद्ग्रहणेन मामुदग्रहीदिन्द्रः । [v]अध [v]मे [v]सपत्नान् स्रुच

सोमयोरहमुज्जितिमनूज्जेषमिन्द्राग्नियोरहमुज्जितिमनूज्जेषमिन्द्रस्याहमुज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जिति-मनूज्जेषमग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषम् ’ इति ॥ आज्यभागदेवोऽग्निर्हविः सेवित्वा तेन हविषा पुष्टो यज्ञविरोधिनोऽसुरादीनभिभवन्नुत्कृष्टं जयं प्राप्तवान् । तदीयां तामुज्जितिमनु यजमानोऽहं पापरूपं वैरिणमभिभवन्नुत्कृष्टं जयं प्राप्तोऽस्मि । एवं सर्वत्र योज्यम् ॥

वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् ।
अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः ॥
उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥
एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो (२) वनामहे धुक्षीमहि प्रजामिषम् ॥

वाजस्य । मा । प्रसवेनेति प्र-सवेन । उद्ग्राभेणेत्युत्-ग्राभेण । उदिति । अग्रभीत् ॥
अथ । सपत्नान् । इन्द्रः । मे । निग्राभेणेति नि-ग्राभेण । अधरान् । अकः ॥
उद्ग्राभमित्युत्-ग्राभम् । च । निग्राभमिति नि-ग्राभम् । च । ब्रह्म । देवाः । अवीवृधन् ॥
अथ । सपत्नान् । इन्द्राग्नी इतीन्द्र-अग्नी । मे । विषूचीनान् । वीति । अस्यताम् ॥
एति । इमाः । अग्मन् । आशिषः इत्या-शिषः । दोहकामा इति दोह-कामाः । इन्द्रवन्त इतीन्द्र-वन्तः (२) । वनामहे । धुक्षीमहि । प्रजामिति प्र-जाम् । इषम् ॥

^v^निग्राभेण ^v^अधरान् अकार्षीत्, तस्मात् ^v^उद्ग्राभं ^v^निग्राभं ^v^च ^v^ब्रह्म परिवृढं कर्म ^v^देवा वर्धयन्तु । ^v^अथ मम ^v^सपत्नान् ^v^इन्द्राग्नी ^v^विषूचीनान् 'विष्वग्गतीन् ^v^व्यस्यतां विनाशयेतामिति ॥

यज्ञस्य दोहं वाचयति—'एमा' इति । इयं पुरउष्णिक्*, प्रथमस्य द्वादशाक्षरत्वात्[M] ॥ अत्र "यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा" (तैसं १ ७ ४) इति ब्राह्मणदर्शनात् । "आशास्तेऽयं यजमानोऽसौ" (तैब्रा ३ ५ १०) इत्यत्र यजमानेनाशासनीयं "आयुराशास्ते" (तैब्रा ३ ५ १०) इत्यायुरादाय इमा आशिषः

वाजस्येति ॥ कल्पः—"[1]-उक्तं वाजवत्योर्न्यूहनम्" (बौश्रौ १ १९) इति-[1] ॥ वाजशब्दोऽस्ति ययोर्ऋचोस्ते ऋचौ वाजवत्यौ, तयोर्ऋचोर्यजमानेन जप्यमानयोरध्वर्युर्जुहूपभृतौ द्वे स्रुचौ न्यूहेत् परस्परं विपर्यासेनापसारयेत् । तत्प्रकारस्त्वस्माभिराध्वर्यवकाण्डे वर्णित इत्यर्थः[7] । पाठस्तु—'वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्' इति । ^v^इन्द्रः ^v^वाजस्य अन्नस्य प्रसूतिनिमित्तेन स्रुच ऊर्ध्वग्रहणेन ^v^माम् ^v^उदग्रभीत् उत्कर्षं प्रापितवान् । अथ स्रुचो न्यक्कारेण मम ^v^सपत्नान् ^v^अधरान् न्यक्कृतानकरोत् । देवाः ^v^ब्रह्म परिवृढं स्रुचोरुद्ग्राहनिग्राहरूपं कर्मद्वयमवर्धयन् । अथ ^v^इन्द्राग्नी मम ^v^सपत्नान् ^v^विषूचीनान् सर्वतः पलायमानान् ^v^व्यस्यतां विनाशयेताम् ॥

एति ॥ कल्पः—"अथ यत्र होतुरभिजानात्याशास्तेऽयं यजमानोऽसाविति तद्यजमानं यज्ञस्य दोहं वाचयत्येमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषमिति" (बौश्रौ १ १९)

२ मैर-विसर्गवर्तिनः । *[ द्र पिंसू ३ २० ] । [M] [ इत्यादिपूरणवशात् द्वादशाक्षरत्वमिति ध्येयम् । ] ।

१-६ क-वाजवतीभ्यां व्यूहत्युभौ वाजवत्यौ जपेत् । ७ क-'इत्यर्थः' नास्ति ।

**रोहितेन त्वाऽग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयतु**

रोहितेन । त्वा । अग्निः । देवताम् । गमयतु । हरिभ्यामिति हरि-भ्याम् । त्वा । इन्द्रः । देवताम् । गमयतु । एतशेन । त्वा । सूर्यः । देवताम् । गमयतु ॥

---

उच्यन्ते । [V]इमा [V]आशिष [V]आ [V]अग्मन् आगच्छन्तु । छान्दसे लुङि " मन्त्रे घस° " ( पा २ ४ ८० ) इत्यादिना च्लेर्लुक् । " गमहन° " ( पा ६ ४ ९८ ) इत्युपधालोप । लङि वा शपो लुक् । [V]दोहकामा, मया दुह्यमान कामयमाना । " शीलिकामिभक्ष्याचरिभ्यो ण पूर्वपदप्रकृतिस्वरत्व च " ( पा ३ २ १ वा ७ ) इत्यणोऽपवादो ण । अत आगता वयमपि [V]इन्द्रवन्तः इन्द्रेण स्वामिना सहिता [V]वनामहे । वन षण संभक्तौ । व्यत्ययेन आत्मनेपदम् । यद्वा—वनु याचने, अनुदात्तेत् तानादिक । विकरणव्यत्ययेन शप् । इन्द्रवन्तो वय याचामहे [V]प्रजाम् [V]इषम् अन्न च वो [V]धुक्षीमहि । यद्वा—दोहकामा वय वनामहे प्रजामिष च धुक्षीमहीति । " लिङ्सिचावात्मनेपदेषु " ( पा १ २ ११ ) इति सिच कित्त्वम् । पादादित्वात् न निहन्यते ( द्र पा ८ १ १८,२८ ) ॥

प्रस्तरं प्रह्रियमाणमनुमन्त्रयते—' रोहितेन ' इति ॥ ' देवताम् ' अग्न्यादीनां सामान्येन अभिधानम् । [V]अग्निः त्वामात्मीयेन [V]रोहितेन अश्वेन [V]देवतां गमयतु । याभ्यस्त्व हूयसे ता अग्न्यादिदेवता गमयत्वित्यर्थ । [V]हरिभ्याम् आत्मीयाभ्यामश्वाभ्याम् [V]इन्द्र त्वां देवानां सकाश प्रापयतु । [V]सूर्य चात्मीयेन [V]एतशेन श्वेताश्वेन[V] त्वां देवतापार्श्व प्रापयतु । *रोहितादयोऽग्न्यादीनामश्वा , " एते वै देवाश्वा " ( तैस १ ७ ४ ) इति च ब्राह्मणम् ॥

---

इति ॥ यस्मिन् काले होता सूक्तवाकं पठन्नाशास्ते, " अयं [8]यजमानोऽसौ " ( तैब्रा ३ ५·१० ) इत्यादिवाक्यमुच्चारयति तस्मिन् कालेऽध्वर्युर्यजमानम् ' एमा अग्मन् ' इत्यादियज्ञदोहमन्त्रं [9]वाचयति । सूक्तवाके " आयुराशास्ते । सुप्रजास्त्वमाशास्ते " ( तैब्रा ३ ५ १० ) इत्यादय आयुराद्याशिषः [10]समाम्नाताः । [V]इमाः [V]आशिषः [V]अग्मन् मां प्रत्यागच्छन्तु । वयमप्यायुरादिदोहं कामयमानास्तत्फलप्रदेनेन्द्रेण युक्तत्वात् [V]इन्द्रवन्तः तमिन्द्रं [V]वनामहे भजामहे । तेन च[11] भजनेन पुत्रपौत्रादिप्रजाम् [V]इषम् इष्यमाणमायुरादिकं [V]धुक्षीमहि कामधेनुसदृशीमिन्द्रदेवतां दुह्यास्म ॥

रोहितेनेति ॥ कल्पः—" प्रस्तरं प्रह्रियमाणमनुमन्त्रयते रोहितेन त्वाऽग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयत्विति " ( बौश्रौ ३ १९ ) इति । [M]रोहितहर्येतशशब्दा अग्नीन्द्रसूर्याणामश्वानभिदधते । हे प्रस्तर, तैरश्वैरग्न्यादयस्त्वां सूक्तवाकोक्तां तां तां[12] देवतां गमयन्तु ॥

---

३ तं ति–परत्वात् । ४ मै–अश्वेन । *[ द्र निघण्टु १ १५ १,२ ] ।

---

८ आ तै–' यजमानोऽसौ ' नास्ति । ९ तं–वाचयेत् । १० इ उ ना पा हा–तत्राम्नाताः । ११ आ क–' च ' नास्ति; इ उ ना.पा.हा–अत्र । [M][ द्र निघण्टु १ १५ १,२ ] । १२ आ–' तां ताम् ' नास्ति ।

**वि तें मुञ्चामि रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि**
**धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान् देवतासु ॥**

वीति । ते । मुञ्चामि । रशनाः । वीति । रश्मीन् ।
वीति । योक्त्रा । यानि । परिचर्तनानीति परि—चर्तनानि ॥
धत्तात् । अस्मासु । द्रविणम् । यत् । च । भद्रम् ।
प्रेति । नः । ब्रूतात् । भागधानिति भाग—धान् । देवतासु ॥

~~~~~~~~~~~~~~~~

परिधीन् विमुच्यमानाननुमन्त्रयते—‘ वि ते मुञ्चामि ’ इति ॥ त्रिष्टुभा अश्वत्वेनाग्निः स्तूयते । हे अग्ने, अनेन परिधिविमोकेन [v]ते तव यानि यन्त्रणानि तानि सर्वाण्यपि [v]वि [v]मुञ्चामि इति प्रतिपाद्यते । तत्रैकश्येनाहं (?) [v]रशनाः तव विमुञ्चामि । रशना व्यापिकाः । “ अशे रश च ” ( उ २४३ ) इति युच् । कक्ष्यावस्थिताः शरीरपरिकर्मविशेषा उच्यन्ते । [v]रश्मीन् प्रग्रहांश्च विमुञ्चामि, योक्त्राणि योजनोपयुक्ता रज्जुविशेषाः तानि विमुञ्चामि । [v]यानि चान्यानि तव [v]परिचर्तनानि उरोवध्रादीनि परितो देहस्य पीडनानि । चृती हिंसादौ । तानि च मुञ्चामि । यथाऽश्व एतैर्युक्तः कार्यं करोति, तथा त्वं परिधिभिः परिहित एतैरेव युक्तः कार्यमकार्षीः । अधुना कार्ये समाप्ते परिधिविमोकेन एतैरेव विमुक्तो निर्यन्त्रणो भव, यथाऽश्वः कार्यसमाप्तौ विमुक्तरशनादिकः स्वैरं धावति । ततश्च त्वम् [v]अस्मासु [v]द्रविणं धनं [v]यत् [v]च अन्यत् [v]भद्रं कल्याणमभीष्टं तत्तत् सर्वं [v]धत्तात् धेहि स्थापय । किंच—[v]नः अस्मान् [v]देवतासु [v]प्र [v]ब्रूतात् प्रब्रूहि । [v]भागधान् भागस्य धातॄन् दातॄन् युष्मभ्यमेतैर्भागा दत्ता भुङ्ग्ध्वमिति देवतासु ख्यापयेति । “ उपसर्गाद्बहुलम् ” ( पा ८·४·२८ ) इति नसो णत्वम् ॥

~~~~~~~~~~~~~~~~

**वीति ॥ कल्पः—“ परिधीन् विमुच्यमानाननुमन्त्रयते वि ते मुञ्चामि रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान् देवतास्विति ” ( बौश्रौ ३·१९ ) इति ॥ लोके ह्यारुरुक्षुरारोहणीयमश्वं रशनादिभिः सर्वतो बध्नाति । तत्र रशनाशब्देन [१३]पल्ययनदार्ढ्यायोदरे बध्यमाना तन्तुमयी चर्ममयी वा कक्ष्याऽभिधीयते । रश्मिशब्देनाश्वमुखे संलग्नो हस्तेनाश्वनियमनार्थो रज्जुविशेष उच्यते । योक्त्रशब्देनाश्वं स्तम्भे बन्द्धुमुपयुक्तो रज्जुविशेषः । [१४]पल्ययनस्य पुरतः पृष्ठतश्चापसरणं वारयितुमुरःपुच्छादौ बन्धनोपयुक्ता रज्जुविशेषाः परिचर्तनशब्देनोच्यन्ते । अश्ववदग्नेश्च रशनादिस्थानीयाः परिधयः । हेऽग्ने, तव बन्धनहेतून् परिधिरूपान् रशनादीन् [v]वि [v]मुञ्चामि । तद्विमोकेन संतुष्टस्त्वम् [v]अस्मासु [v]द्रविणं धेहि । [v]यच्च अन्यत् [v]भद्रम् अन्नपानादिकं तदप्यस्मासु धेहि । अस्मदीयहविर्भुक्षु [v]देवतासु [v]भागधान् हविष्प्रदानस्मान् प्रकर्षेण ब्रूहि ॥**

~~~~~~~~~~~~~~~~

१३. इ.उ.क.ति.ना.पा.हा—पलायन° । १४. इ.क.ति.ना.पा.हा—पलायनस्य ।
~~~~~~~~~~~~~~~~

अनूयाजाद्यनुमन्त्रणम् ]

विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयꣳ सोमस्याहं देवयज्यया (३) सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयं देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासं

विष्णो. । शयोरिति श–यो. । अहम् । देवयज्ययेति देव–यज्यया । यज्ञेन । प्रतिष्ठामिति प्रति–स्थाम् । गमेयम् । सोमस्य । अहम् । देवयज्ययेति देव–यज्यया (३) । सुरेता इति[4] सु–रेता । रेत । धिषीय । त्वष्टु । अहम् । देवयज्ययेति देव–यज्यया । पशूनाम् । रूपम् । पुषेयम् । देवानाम् । पत्नी । अग्नि । गृहपतिरिति गृह–पति । यज्ञस्य । मिथुनम् । तयो । अहम् । देवयज्ययेति देव–यज्यया । मिथुनेन । प्रेति । भूयासम् ।

---

शयुवाकमुक्तमनुमन्त्रयते—‘विष्णो’ इति ॥ विष्णुर्व्यापनवान्, शमनयावनकद्रोगभयाना, शाम्यतियौतिभ्यां गुणाद्यभाव[5] छान्दस । “कशाभ्याम्” (पा ५ २ १३८) इति वा मत्वर्थीयो युस्प्रत्यय । बृहस्पते पुत्र उच्यते । “देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शंयु बार्हस्पत्यम्” (तैसं २ ६ १०) इत्यादि ब्राह्मणम् । विष्णुत्वेन वा बार्हस्पत्य स्तूयते । “यज्ञो वै विष्णु” (तैस १ ७ ४) इति ब्राह्मणम् । तस्य अह देवयज्यया यज्ञेन प्रतिष्ठा गमेयम् । गतम् ॥

पत्नीसंयाजाननुमन्त्रयते—‘सोमस्याहम्’ इत्यादिभि ॥ सुरेता अमोघबीज. । “सोमनसी” (पा ६ २ ११७) इत्युत्तरपदाद्युदात्तत्वम् । रेत धिषीय आत्मनि धारयेयम् । “सुधितवसुधित” (पा ७ ४ ४५) इत्यादौ दधातेरिकारांशो निपात्यते । “सोमो वै रेतोधा” (तैस १ ७ ४) इत्यादि ब्राह्मणम् । ‘त्वष्टुरहम्’ इति ॥ “त्वष्टा वै पशूनां मिथुनानां रूपकृत्” (तैस १ ७ ४) इति ब्राह्मणम् । पशूनां रूप पुषेय पोषयेयम् । “लिङ्याशिष्यङ्” (पा ३ १ ८६) ॥ “नामन्यतरस्याम्” (पा ६ १ १७७) इति नाम उदात्तत्वम् ॥

अथान्ययो[6] सह्यानुमन्त्रणम्—‘देवानाम्’ इति ॥ देवानां पत्नी पत्न्य अग्नि च गृहपति इति यज्ञस्य मिथुनम् एव तत् । तयो अह देवयज्यया मिथुनेन पुत्रादिमिथुनेन

---

विष्णोरिति ॥ कल्पः—“शंयुवाकमुक्तमनुमन्त्रयते विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमिति” (बौश्रौ ३ १९) इति ॥ शंयुशब्दः सुखमिम बृहस्पतिपुत्रे मूते । “ते शंयुं बार्हस्पत्यम्” (तैसं २ ६.१०) इति ब्राह्मणोक्तेः । स च बहुषु कार्येषु व्याप्नुवन् विष्णुरित्युच्यते । तस्य परितोषहेतुत्वात परिधिप्रहरण तदीया देवयज्या तया यजमानोऽहं कृत्स्नयज्ञेन निष्पन्नां प्रतिष्ठां फलं गमेयं प्राप्नुयाम् ॥

सोमस्येति ॥ कल्पः—“पत्नीसंयाजानामिष्टमनुमन्त्रयते सोमस्याहं देवयज्यया सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमिति” (बौश्रौ ३ १९–२०) इति, “अथेतरावुपसमस्यति

---

५ ति मै–गुणाभावः । ६ मै२–अथान्ययोः ।

वेदो॑ऽसि॒ वित्ति॑रसि वि॒देय॒ कर्मा॑सि कर॒णम॑सि क्रि॒यास॑ꣳ स॒निर॑सि सनि॒ताऽसि॑ स॒नेयं॑ घृ॒तव॑न्तं कुला॒यिन॑ꣳ रा॒यस्पोष॑ꣳ सह॒स्रिणं॑ वे॒दो द॑दातु वा॒जिन॑म् ॥ ४ ॥

[ इन्द्र॒स्याहमिन्द्र॒वन्त॒ सोम॒स्याह दे॒वय॒ज्यया॒ चतु॑श्चत्वारिꣳशच्च ]

वे॒द । अ॒सि॒ । वित्तिः॑ । अ॒सि॒ । वि॒देय॑ । कर्म॑ । अ॒सि॒ । क॒रुण॑म् । अ॒सि॒ । क्रि॒यास॑म् । स॒नि॒ । अ॒सि॒ । स॒नि॒ता । अ॒सि॒ । स॒नेय॑म् । घृ॒तव॑न्त॒मिति॑ घृ॒त–व॒न्त॒म् । कु॒ला॒यिन॑म् । रा॒य । पोष॑म् । स॒ह॒स्रिण॑म् । वे॒दः । द॒दा॒तु॒ । वा॒जिन॑म् ॥ ४ ॥

[ मैसं १ ४ १; कासं ५.१, १–४, वासं १७ ६३–२४ ]

---

[v]प्र [v]भूयास प्रकर्षेण युक्तो भूयासम् । मिथुनापेक्षया तयोरिति द्विवचनम् । " एतस्माद्वै मिथुनात् प्रजापति " ( तैस १ ७ ४ ) इत्यादि ब्राह्मणम् ॥

वेदेऽन्तर्वेदि निधीयमाने यजमान वाचयति—' वेदोऽसि ' इति [v]षट्पदया शक्वर्या ॥ ' विदेय ', ' क्रियासम् ', ' सनेयम् ' इति त्रयाणां पादानामन्ता , एते च तिङः परत्वान्न निहन्यन्ते (द्र पा ८ १ २८)। हे वेद, [v]वेद [v]असि यद्वित्तं वेद्यात्मकं वेत्तव्य लब्धव्यं धनं तदेव त्वमसि,

---

देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमिति " ( बौश्री १.२० ) इति च ॥ चतुर्णां पत्नीसंयाजानां क्रमेण सोमस्त्वष्टा देवपत्न्यो गृहपत्यग्निरिति चतस्रो देवताः । तत्र सोमस्य रेतोधारणाभिमानित्वात् तदीययागेनाहं [v]रेतः [v]धिषीय धारयेयम् । द्विविधं हि रेतः वन्ध्यमुत्पादकं च । तत्र वन्ध्यव्यावृत्तये [v]सुरेताः इति विशेष्यते । [v]त्वष्टा तु निषिक्तं रेतः पश्वादिरूपेण विकारमति । अतस्तद्यागेन पशुरूपं [v]पुषेयं पुष्यासम् । मिथुनत्वसिद्ध्यर्थमेकस्मिन्नेव मन्त्रे तृतीयचतुर्थदेवते समस्येते । या देवपत्न्यो यश्च गृहपतिरग्निस्तदुभयं मिलित्वा यज्ञसंबन्धि मिथुनम् । तदीययागेनाहमपि [v]मिथुनेन पुत्रपुत्रीरूपेण प्रकृष्टो भूयासम् ॥

वेद इति ॥ कल्पः—" वेदे यजमानं वाचयति वेदोऽसि वित्तिरसि विदेयेत्याऽन्तादनुवाकस्य " ( बौश्री ३ २१ ) इति ॥ वेदे निहिते सतीति शेषः । " अन्तर्वेदि वेदं निधाय " ( आपश्री ४ १३.५ ) इति सूत्रान्तरे दर्शनात् । पाठस्तु—' वेदोऽसि वित्तिरसि विदेय कर्मासि करुणमसि क्रियासꣳ सनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनम् ' इति ॥ ' वेदोऽसि ' इत्यस्य

---

७ पै–पञ्चसप्तपदया ।

लाभहेतुत्वात् । अत्र[८] " वेदेन वै देवा असुराणां वित्तं वेद्यम् " ( तैस १ ७ ४ ) इत्यादि ब्राह्मणम् । विन्दते कर्मणि घञ् । Vवित्तिः लाभ लाभसाधन वा त्वम् Vअसि धनस्य । तस्मादेव भावे करणे वा क्तिन् । तादृशेन त्वयाऽह Vविदेय अभिमत धन लप्सीय[९] । विन्दतिः स्वरितेत् । " लिङ्याशिष्यङ् " ( पा ३ १ ८६ ) । Vकर्म अनुष्ठान त्वम् Vअसि, त्वदधीनत्वात् । Vकरुणम्[१०] अनुष्ठापकश्च Vअसि । Mकरोते उनन्प्रत्यय ( उ ३४० ) । तादृशेन त्वयाऽह Vक्रियास कर्ता भूयासम् । Vसनि संविभाग त्वम् Vअसि Vसनिता Vअसि संविभक्ता चासि, तादृशेन त्वयाऽह Vसनेय विन्देय संविभजेयम् । अधुना परोक्षमुच्यते---Vघृतवन्तम् आज्यवन्त Vकुलायिन नीडवन्त गृहवन्त Vसहस्रिण सहस्रवन्त भूयिष्ठवन्त पुत्रपश्वादिभि , Vवाजिनम् अन्नवन्त Vराय Vपोष क्षेत्रपश्वादेर्धनस्य पुष्टिमस्मभ्य Vवेद Vददातु रायस्पोष धनवृद्धिं वाजिनमन्न च ददातु ॥

॥ इति षष्ठे चतुर्थोऽनुवाक ॥

---

वाक्यस्यार्थो ' वित्तिरसि ' इत्यनेन स्पष्टीक्रियते । हे दर्भमय, त्वं वेदनामा Vअसि । तस्य नाम्नोऽयमर्थ -- Vवित्तिः द्रव्यलाभसाधनमिति, अतः [१५] त्वत्प्रसादेनाऽहं धनं Vविदेय लभेय । तथैवोपरि व्याख्येयम् । Vकर्म Vअसि कर्मनामकम(कोऽ)सि । तस्य व्याख्यानं ' करुणमसि ' इति । क्रियतेऽनेनेति Vकरुण वेदिसमार्जनभस्माद्यूहनादिसाधनमित्यर्थः । अतस्त्वयाऽहं संमार्जनादिकं Vक्रियासम् । तथा त्वं [१६] Vसनिः Vअसि-[१६] सनिनामाऽसि । तद्व्याख्याने ' सनिताऽसि ' इति । धनस्य दाता Vअसि इत्यर्थः । अतस्त्वत्प्रसादेन Vसनेय धनमृत्विगादिभ्यो देयासम् । किंच Vवेदः भवान् मह्य Vरायः Vपोषं धने पुष्टिं Vददातु । कीदृशं रायस्पोषम्[१७] ? घृतवन्तं घृतादिभोजनसाधनसमृद्धम् । Vकुलायिनं निवासहेतुबहुगृहोपेतम् । Vसहस्रिणं सहस्रलक्षादिसंख्योपेतम् । Vवाजिनं भोज्यान्नसमृद्धम् ॥

अत्र विनियोगसंग्रह :--

" बर्हिस्त्रिभिरनूयाजान् मन्त्रयेत् सूक्तवाककम् ।
अग्नेरित्यष्टभिर्योजद्वाभ्यां व्यूहेत् [१८]स्रुचौ तथा ॥ १ ॥
पुमाः स्वनामग्रहणे[१९] रोहीति प्रस्तरं त्रिभिः ।
वि ते परिधिमोकं तु विष्णोः शं शंयुवाककम् ॥ २ ॥
त्रिभिः सोमादिसंयाजान् वेदो वेदाभिमर्शनम् ।
अनुवाके चतुर्थेऽस्मिंस्त्रयोविंशतिरीरिताः ॥ ३ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

८ मै-' अत्र ' नास्ति । ९ मै२-लभेय । १० मै-अनुष्ठानपरः । M( ' किरतेः ' इति संभाव्यते । ) ।

---

१५ आ ना हा-तत्प्रसा° । १६-१६ इ उ त ति ना पा हा-' सनिः असि ' नास्ति । १७ इ. उ तै ति पा-पोषम् ; क-' रायस्पोषम् ' नास्ति । १८ त.ति-स्रुवौ । १९ क तै सि-'ग्रहणम् ।

आ प्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ॥

एति । प्यायताम् । ध्रुवा । घृतेन ।
यज्ञंयज्ञमिति यज्ञम्—यज्ञम् । प्रतीति । देवयद्भ्य इति देवयत्—भ्यः ॥
सूर्यायाः । ऊधः । अदित्याः । उपस्थ इत्युप-स्थे । उरुधारेत्युरु-धारा । पृथिवी । यज्ञे । अस्मिन् ॥

ध्रुवामाप्यायमानामनुमन्त्रयते—'आ प्यायताम्' इति । इयं विराट् त्रिष्टुप् ॥ आ प्यायतां वर्धतां सदा पूर्यतां घृतेन ध्रुवा । यज्ञयज्ञम् प्रति सर्वेषु यज्ञेषु । वीप्सायां प्रतेः कर्मप्रवचनीयत्वम्* । देवयद्भ्यः देवानात्मन इच्छद्भ्यः । "न च्छन्दस्यपुत्रस्य" (पा ७ ४ ३५) इतीत्वाभावः । देवान् वा देवयद्भ्यः तृप्तान् कुर्वद्भ्यः ऋत्विग्भ्यः । यथा तेभ्यः पर्याप्ता भवति तथा आप्यायताम् । द्वितीयपक्षे क्यसार्वधातुकानुदात्तत्वाभावश्छान्दसः । सैव ध्रुवा विशेष्यते—सूर्यायाः सूर्यवत्याः द्योस्तिष्ठद्गोः स्थानीयायाः ऊधः अधोगतापीनभागस्थानीया[1] । "सूर्यादेवतायां चाप्" (व्र पाभा ४ १ ४८ वा ९) । अदित्याः अदीनायाः पृथिव्या उत्तानाया उत्सङ्गस्थानीया, सर्वोपजीव्यत्वात् । देवमातुरेव वोपस्थ उत्सङ्गः[2], देवाना-मुपलालनस्थानत्वात् । किंच—उरुधारा महाधारा सततप्रस्रवनी पृथिवी विस्तीर्णा । यद्वा—उरुधारा पृथिवी महार्थसाधनपृथिवीस्थानीया । तादृशी ध्रुवा अस्मिन् यज्ञे सर्वयज्ञार्थमाप्यायतामिति ॥

चतुर्थेऽनूयाजाविशेषहोमानुमन्त्रणमुक्तम् । पञ्चमे त्वाप्यायनादिमन्त्रा उच्यन्ते ॥

एति ॥ कल्पः —"ध्रुवामाप्यायमानामनुमन्त्रयत आ प्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्निति" (बौश्रौ १·२०) इति ॥ यज्ञंयज्ञं प्रति तां तामाहुतिं प्रति देवयद्भ्यः देवान् होतुमिच्छद्भ्य ऋत्विग्भ्यः । पर्याप्तेन घृतेन इयं ध्रुवा आ प्यायतां पुनः पुनः पूर्यताम् । ऊधःशब्देन पयःपूर्णस्तनसंघोऽभिधीयते । सूर्याशब्देनोषा आदित्यपत्नी विवक्ष्यते । तत्पत्नीत्वं च नक्षत्रेष्टावाम्नायते—"उषा वा अकामयत । प्रियाऽऽदित्यस्य सुभगा स्यामिति" (तैब्रा ३·१, ४) इति । इवशब्दोऽत्राध्याहर्तव्यः । यथा सूर्यायाः गोरूपधारिण्याः ऊधः पयःपूर्णं तथा ध्रुवा घृतेनाऽऽप्यायताम् । किं च । अदित्याः वेदिरूपायाः पृथिव्याः उपस्थे[1] उत्सङ्गे वर्तमाना[2] सेयं ध्रुवा उरुधारा महाधारा पुनः पुनः सिच्यमानाभिराज्यधाराभिरुपेताऽत एव पृथिवी विस्तीर्णा सती अस्मिन् सर्वस्मिन् यज्ञे सम्यगाप्यायताम् ॥

*(व्र पा १४९०) । १. पं—अधोगतासिन(?)भारस्थानीयायाः; ति—अधोगतापीनभार-स्थानीयायाः; तं—अधोगतप्रीतभा(र)स्थानीया । २ मै—उत्सङ्गस्थाना ।

१ इ त. ति—'उपस्थे' नास्ति । २. क—'वर्तमाना' नास्ति ।

आप्यायनाद्यनुमन्त्रणम् ]

**प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेन सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः**

प्रजापतेरिति प्रजा–पतेः । विभानिति वि–भान् । नाम । लोकः । तस्मिन् । त्वा । दधामि । सह । यजमानेन । सत् । असि । सत् । मे । भयाः । सर्वम् । असि । सर्वम् । मे । भूयाः । पूर्णम् । असि । पूर्णम् । मे । भूयाः । अक्षितम् । असि । मा । मे । क्षेष्ठाः ।

यजमानभागं प्राश्नाति—' प्रजापतेः ' इति ॥ vप्रजापतेः vलोकः vविभान् सूर्यादिभिः यो विविधं भाति, सूर्यादिरहितं स्वतेजसा वा, स पुनरयं लोकः । " अयं वै प्रजापतेः " ( तैसं १·७·५ ) इत्यादि ब्राह्मणम् । vतस्मिन् लोके त्वां vदधामि स्थापयामि vयजमानेन मया vसह हे यजमानभाग ॥

पूर्णपात्र आनीयमाने यजमानं वाचयति—' सदसि ' इत्यादि ॥ vसत् सत्ताविष्टं यावत् किंचित् तत् vसर्वम् त्वम् vअसि । तस्मात् त्वं सत्ताविष्टं सर्वं vमे मम vभूयाः भव, सर्वस्य सत्तासाधनं भूयाः, न किंचिदप्यसन्मे भूयात् । यद्वा—सत् शोभनमसि; तस्माद्यावत् किंचिच्छोभनं नः तत्सर्वं मे भूयाः, सर्वं सर्वात्मकमसि, त्वत्तोऽन्यत् न किंचिदस्ति; तस्मात् vसर्वम् इष्टं मम त्वं vभूयाः, vपूर्णं पर्याप्तं सर्वसमृद्धिभिः आप्यायितम् vअसि । " वा दान्तशान्त° " ( पा ७·२·२७ ) इति निष्ठान्तो निपात्यते । तस्मात् त्वं मम पर्याप्तमभिमतं vभूयाः । vशोभनं च कृत्स्नं च पर्याप्तं च ममाभिमतं संपादयेति भावः । vअक्षितम् अनुपक्षीणम् vअसि, तस्मात् मद्विषये vमा vक्षेष्टाः क्षयं मा गाः, मित्रमिव वर्तस्वेति ॥

**प्रजापतेरिति** ॥ कल्पः—" अथ यजमानभागं प्राश्नाति प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेनेति " ( बौश्रौ ३·२० ) इति ॥ यद्यपि स्वर्गादिलोकाः सर्वे प्रजापतिना सृष्टत्वात् तत्संबन्धिनस्तथाऽप्यकर्मभूमित्वेन यजमानान् प्रति विशेषेण न भान्तीति नास्ति [३]तेषां विभाञ्छब्दवाच्यत्वम् । भूलोकस्तु कर्मभूमित्वेन यजमानानां विशेषेण भासमानत्वात् विभाञ्छब्दवाच्यः । विभान्नामके प्रजापतिसंबन्धिनि तस्मिन् भूलोके हविर्भागभक्षकेण vयजमानेन मया vसह त्वां स्थापयामि ॥

**सदसीति** ॥ कल्पः—" पूर्णपात्रे यजमानं वाचयति सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठा इति " ( बौश्रौ ३·२० ) इति ॥ पूर्णपात्र आनीयमाने अध्वर्युणेति शेषः । हे पूर्णपात्र, त्वं vसत् vअसि संयवनादिकार्यकारितया शोभनमसि । अतो मम फलप्रदानेन vसत् vभूयाः शोभनं भूयाः । vसर्वम् vअसि न्युत्सेकेन वक्ष्यमाणेन प्राच्यादिसर्वदिग्व्याप्तमसि । अतो ममापेक्षितं vसर्वं कार्यं कर्तुं क्षमं vभूयाः । अद्भिः vपूर्णम् vअसि । अतो मम प्रयोजनं संपूर्णं कर्तुमुद्युक्तं vभूयाः । vअक्षितम् vअसि पूर्णत्वादेव त्वं क्षयरहितमसि । अतो मम कार्यकरणे vमा vक्षेष्ठाः क्षयं मा प्राप्नुहि ॥

३. आ.ना.हा–एतेषाम् ।

प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां(१)दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तां विष्णोः क्रमोऽस्यभिमातिहा

प्राच्याम् । दिशि । देवा । ऋत्विजं । मार्जयन्ताम् । दक्षिणायाम् ( १ ) । दिशि । मासा । पितर । मार्जयन्ताम् । प्रतीच्याम् । दिशि । गृहा । पशव । मार्जयन्ताम् । उदीच्याम् । दिशि । आप. । ओषधय । वनस्पतयः । मार्जयन्ताम् । ऊर्ध्वायाम् । दिशि । यज्ञ । संवत्सर इति सं–वत्सरः । यज्ञपतिरिति यज्ञ–पतिः । मार्जयन्ताम् । विष्णो । क्रमः । असि । अभिमातिहेत्यभिमाति–हा ।

दिशो व्युत्सिञ्चति—' प्राच्याम् ' इत्यादि ॥ अत्र ब्राह्मणम् । " सर्वाणि वै भूतानि व्रतमुपयन्तमनूपयन्ति " ( तैसं १ ७ ५ ) इति । ततः प्राच्यां दिशि व्यवस्थिता ये देवाः ऋत्विजः च ते इदानीं मार्जयन्ताम् आत्मानं मां च शोधयन्ताम् । " एष वै दर्शपूर्णमासयोरवभृथ " ( तैस १ ७ ५ ) इत्यादि ब्राह्मणम् । एतेन ' दक्षिणायाम् ' इत्यादयो व्याख्याताः । मासाः त्रिंशदहोरात्रात्मकाः पितरः स्वपित्रादयः, सोमपितृमदादयश्च । गृहाः आवसथाः, येषु निवसन्ति जन्तवः । पशवः द्विविधा ग्राम्या आरण्याश्च द्विचतुष्पादात्मकाः दोहनवहनादिकार्यक्षमाः । यज्ञः दर्शपूर्णमासादि । संवत्सरः द्वादशमासात्मकः । यज्ञपतिः यजमानः, सृष्ट्यादिकृत् प्रजापतिर्वा । शिष्टं स्पष्टम् ॥

विष्णुक्रमान् क्रामति—' विष्णोः क्रमोऽसि ' इति ॥ " विष्णुमुखा वै देवा " ( तैसं १ ७ ५ ) इत्यादि ब्राह्मणम् । विष्णो भगवतस्त्रीन् लोकान् क्रामतः यः क्रमः पदविक्षेपः स

प्राच्यामिति ॥ कल्पः—" दिशो *व्यूहति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामिति " ( बौश्रौ १ २० ) इति ॥ ऋत्विग्देवाद्यभिमानिनः सर्वे प्राणिनो यागं द्रष्टुं प्राच्यादिदिक्षु निवसन्ति । अत एव ब्राह्मणमाम्नायते—" सर्वाणि वै भूतानि व्रतमुपयन्तमनूपयन्ति " ( तैस १ ७ ५ ) इति । मासगृहादीनामचेतनत्वेऽपि तदभिमानिनः पुरुषा इह विवक्षिताः । अन्तर्धानादिशक्तियोगादेतेषामदर्शनमविरुद्धम् । त एते देवादयस्तस्यां दिशि मार्जयन्तां शोधयन्ताम् ॥

विष्णोरिति ॥ कल्पः—" अथोपोत्थाय दक्षिणेन पदा विष्णुक्रमान् क्रमते । विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु वि क्रमे निर्भक्तः स यं द्विष्म इति चतुर्भिरनुष्टुप्छन्दसम् । तृतीये चतुर्थमनुवर्तयति । न चतुर्थाय प्रक्रामति । आऽऽहवनीयमुपास्येति " ( बौश्रौ १·२०–२१ ) इति ॥

*[ बौश्रौसूत्रे–' व्युदयति ' इति पाठः । ]। ४ क.स तिं–माम् । ५. क–विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसान्तरिक्षमनु वि क्रमे निर्भक्तः स यं द्विष्मः । विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु वि क्रमे निर्भक्तः स यं द्विष्मः । विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभेन छन्दसा दिशोऽनु वि क्रमे निर्भक्तः स यं द्विष्मः इति ।

आप्यायनाद्यनुमन्त्रणम् ]

**गायत्रेण छन्दसा पृथिवीमनु वि क्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसान्तरिक्षमनु वि क्रमे निर्भक्तः स यं द्विष्मो**

गायत्रेण । छन्दसा । पृथिवीम् । अनु । वीति । क्रमे । निर्भक्त इति निः–भक्तः । सः । यम् । द्विष्मः । विष्णोः । क्रमः । असि । अभिशस्तिहेत्यभिशस्ति–हा । त्रैष्टुभेन । छन्दसा । अन्तरिक्षम् । अनु । वीति । क्रमे । निर्भक्त इति निः–भक्तः । सः । यम् । द्विष्मः ।

एव त्वम् [v]असि यो ममासि । विष्णोरात्मनश्चाभेदोपचारादेवमुच्यते । ब्राह्मणं च भवति— " विष्णुरेव भूत्वा यजमानः " ( तैसं १·७·५ ) इत्यादि । " नोदात्तोपदेशस्य° " ( पा ७·३·३४ ) इति वृद्ध्यभावः । क्रमो विशेष्यते—[v]अभिमातिहा ; अभिमातिः पाप्मा तस्य हन्ता त्वमसि, यतो विष्णोः क्रमोऽसि । यद्वा—यो विष्णोः क्रमोऽस्यभिमातिहा त्रिविक्रमरूपस्य भगवतः विष्णोः सर्वलोकाक्रमणक्षमः क्रमः पदविक्षेपः सर्वानिष्टहन्ता स एव त्वमसि यो मदीयः क्रमः, अतः तादृशेन त्वयानुक्रमेण विक्रमणेनाभिजयामि सर्वमप्रतिबन्धेन । " वृत्तिसर्गतायनेषु क्रमः " ( पा १·३·३८ ) इत्यात्मनेपदम् । पूर्वं देवा गायत्र्यादिभिश्छन्दोभिः पृथिव्यादीन् लोकानभ्यजयन् ; अत इदमुच्यते—' गायत्रेण छन्दसा ' इति । गायत्र्याद्यात्मकत्वाच्च पृथिव्यादीनाम् । यथोक्तं—" गायत्री वै पृथिवी " ( तैसं १·७·५ ) इत्यादि । तद्वदहमपि [v]गायत्रेण [v]छन्दसा [v]पृथिवीम् [v]अनु [v]वि [v]क्रमे इति । गायत्र्येव गायत्रम् । " छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम् " ( पा ४·२·५५ वा १ ) इत्यण्प्रत्ययः । पूर्वं विष्णुना क्रान्तां पृथिवीं पश्चादिदानीमहं विक्रम इत्यनोरर्थः । इत्थं यस्माद्विष्णुरेव भूत्वाऽहं विक्रमे त्वं च यथा विष्णोः क्रमोऽसि अतो निर्भक्तः स मया क्रान्तया इतः पृथिव्या [v]सः [v]निर्भक्तः निर्वासितो विनाशितोऽस्तु [v]यं [v]द्विष्मः । उपक्रमे श्रुतत्वादभिमातिर्गम्यते । " गतिरनन्तरः " ( पा ६·२·४९ ) इति गतेः प्रकृतिस्वरत्वम् । एतेनोत्तरे व्याख्याताः । अभिशस्तिरभिशंसनम् अकृतगर्होक्तिः । त्रिष्टुब्जगत्यनुष्टुप्शब्देभ्य उत्सादित्वादञ् ( पा ४·१·८६ ), ' छन्दसः प्रत्यय-

**तृतीये पदेऽवस्थाय चतुर्थं मन्त्रं पठेत् । चतुर्थमन्त्राय प्रक्रमं न कुर्यात् किं तु मन्त्रमन्तरेण तूष्णीमेव चतुर्थं प्रक्रमं कुर्यात् । तं प्रक्रमं कुर्वन्नाहवनीयं नातिक्रामेत् किं त्वाहवनीयात् पश्चादेव वेदिमध्ये चतुरः प्रक्रमान् समापयेत् ॥**

**विष्णोरिति ॥ द्वितीयादिमन्त्रपाठस्तु[६]—" विष्णोः क्रमोऽस्येभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु वि क्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु वि क्रमे निर्भक्तः स यं द्विष्मो विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु वि क्रमे निर्भक्तः स यं द्विष्मः " इति ॥ अत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत् । [७]चतुर्णां [८]प्रक्रमाणां प्रदेशान्**

६. क–मन्त्रार्थस्तु । ७. तं.ति–न चतुर्णाम् ; क.म.४–चतुरः । ८. क.म४–प्रक्रमणः ।

विष्णो॒(२)क्रमो॑ऽस्यरातीय॒तो ह॒न्ता जाग॑तेन॒ छन्द॑सा॒ दिव॒मनु॒ वि क्र॑मे॒ निर्भ॑क्त॒ः स यं द्वि॒ष्मो विष्णो॒ः क्रमो॑ऽसि शत्रूय॒तो ह॒न्ताऽऽनुष्टुभेन॒ छन्द॑सा॒ दिशोऽनु॒ वि क्र॑मे॒ निर्भ॑क्त॒ः स यं द्वि॒ष्मः ॥ ५ ॥

[ दाक्षिणायाम॒ तारिक्ष॒मनु॒ वि क्र॑मे॒ निर्भ॑क्त॒ स य द्वि॒ष्मो विष्णोरेक॒ान्नत्रिं९शच्च ]

विष्णो (२) । क्रम॑ । अ॒सि॒ । अ॒रा॒ती॒य॒त । ह॒न्ता । जाग॑तेन । छन्द॑सा । दिव॑म् । अनु॑ । वीति॑ । क्र॒मे॒ । निर्भ॑क्त इ॒ति॒ नि—भ॒क्त॒ । सः । यम् । द्वि॒ष्म । विष्णो॑ । क्रम॑ । अ॒सि॒ । श॒त्रु॒यत इति॑ शत्रु—य॒तः । ह॒न्ता । आनु॑ष्टु॒भेनेत्यानु॑—स्तु॒भेन॒ । छन्द॑सा । दिश॑ । अनु॑ । वीति॑ । क्र॒मे॒ । निर्भ॑क्त॒ इ॒ति॒ निः—भ॒क्त॒ । स । यम । द्वि॒ष्म ॥ ५ ॥

[ मैसं १४२, कासं ५५, वासं २५ ]

विधाने' इत्यस्य प्राग्दीव्यतीयत्वात् । ᵛअरातीयत अरातित्वमस्माकमिच्छत', अरातिं चाऽऽत्मन इच्छत ᵛहन्ता हन्तुमर्हः । "अर्हे कृत्यतृचश्च" (पा ३ ३ १६९) इति तृच् । "शतुरनुम" (पा ६ १ १७३) इति षष्ठ्या उदात्तत्वम् । हननशीलो वा हन्ता । ताच्छीलिकस्तृन् (पा ३ २ १३५) । छान्दसम तोदात्तत्वम् । अरातीयत इति द्वितीयाबहुवचनम् । एव ᵛशत्रूयतः इत्यत्रापि वेदितव्यम् ॥

इति षष्ठे पञ्चमोऽनुवाक ॥

पृथिव्यादित्रिलोकरूपत्वेन[9] भावयेत् । गायत्र्यादिच्छन्दोभिमानिदेवतास्तेषां प्रक्रमाणामनुग्राहिका । अभिमाति शब्दो नरकप्रदं पापमाचष्टे । "पाप्मा वा अभिमातिः" (तैसं २.१ ३) इति श्रुतेः । हे प्रथमप्रक्रम, त्वं पापघाती ᵛविष्णोः ᵛक्रमः ᵛअसि । गायत्रीछन्दोदेवतयाऽनुगृहीतोऽहमेतत्प्रदेशरूपा[10] पृथिवीमनुसृत्य[11] ᵛवि ᵛक्रमे पादं प्रक्षिपामि । ᵛयम् अभिमातिं वयं ᵛद्विष्मः ᵛसः अभिमातिः ᵛनिर्भक्तः अस्मात् प्रदेशात् निःसारितः । एवमुत्तरत्र योज्यम् । अभिशस्तिरन्यैरापादितोऽपवादः । रातिर्दानं द्रव्यलाभः । तन्निवारणमराति तदिच्छन्तो[12] विरोधिनोऽरातीयन्तः । तृतीयप्रक्रमस्तान् हन्ति । शत्रुत्वं हिंसकत्वं, तदिच्छन्तो वैरिणः[13]शत्रूयन्तः । चतुर्थप्रक्रमस्तान् हन्ति ॥

अत्र विनियोगसंग्रहः—

"आप्यां ध्रुवाप्यायमं स्यात्प्रजा स्वाम्यंशभक्षणम् ।
सवसीर्ति प्रणीतानां धारायां अभिमन्त्रणम् ॥ १ ॥
प्राच्यां तु पञ्चभिः सिञ्चेत्क्रमेद्विष्णोश्चतुष्टयात् ।
अनुवाके पञ्चमेऽस्मिन् मन्त्रा द्वादश वर्णिताः ॥ २ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

९ म४.-°लोकमयरूपत्वेन । १०, इ,उ पा,हा-°मेतत्पदे शत्रूणाम् । ११ तं-°मनुधृत्य ।
१२ इ उ ना पा हा-°तस्य विरो°; तं ति -स्वस्य विरो°, म४-स्वस्वविरो° । १३. आ क मा हा-शत्रूयतः ।

अगन्म सुवः सुवरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽ वृक्षि सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेही-

अगन्म। सुवः। सुवः। अगन्म। संदृश इति सम्–दृशः। ते। मा। छित्सि। यत्। ते। तपः। तस्मै। ते। मा। एति। वृक्षि। सुभूरिति सु–भूः। असि। श्रेष्ठः। रश्मीनाम्। आयुर्धा इत्यायुः–धाः। असि। आयुः। मे। धेहि। वर्चोधा इति वर्चः–धाः। असि। वर्चः। मयि। धेहि।

आहवनीयमुपतिष्ठते—‘अगन्म’ इति॥ ^v^सुवः स्वर्गम् ^v^अगन्म गमिष्याम, गम्यास्म वा, सर्वेऽपि वयं सपुत्रपौत्राः। छान्दसो लुङ्। “मन्त्रे घस॰” (पा २ ४ ८०) इति च्लेर्लुक्। स्वर्गे भोक्तव्यानि भुक्त्वा पश्चात् ^v^सुवः सुष्ठु अरणीयम् आदित्यान्तरपुरुषं मुक्तिस्थानम् ^v^अगन्म गमिष्यामः गम्यास्म वा। स एव लुङ्। पूर्वाभिधानेन पूर्वस्मादस्याभ्यर्हितत्वं द्योतयति। तदर्थमहं तव ^v^संदृशः संदर्शनात् अनुध्यानलक्षणात् ^v^मा ^v^छित्सि आच्छेद्यो मा भूवम्। आत्माभिप्रायमेकवचनम्। आत्मनोऽच्छेदनस्य सर्वार्थसाधनत्वात्। किंच—^v^यत् ^v^ते त्वदर्थं तपः कर्म यागादि ^v^तस्मै तदर्थं ^v^ते तव प्रसादात् तत एव वा संदृशः ^v^मा ^v^वृक्षि मा विवर्ज्यो भूयासम्। वृजी वर्जने। यद्वा—अश्रवणीयो मा भूवं, त्वत्परिचरणव्यापारो यथा मा विच्छेदि तथानुध्यातुमर्हसीति॥

आदित्यमुपतिष्ठते—‘सुभूः’ इति॥ सुष्ठु भवति उदेतीति ^v^सुभूः शोभनभवनः ^v^असि सर्वबोधकामाभिमतत्वात्। सुष्ठु भावयतीति वा सुभूः। “बहुलं संज्ञाछन्दसोः” (उ १९०) इति णिलुक्। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९)। बहुव्रीहित्वेन “नञ्सुभ्याम्”

पञ्चमे आप्यायनादिमन्त्रा वर्णिताः। षष्ठे सूर्योपस्थानादिमन्त्रा उच्यन्ते॥

अगन्मेति॥ कल्पः—“अथात्रैव तिष्ठन्नाहवनीयमुपतिष्ठतेऽगन्म सुवः सुवरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽ वृक्षीति” (बौश्रौ ३ २१) इति॥ आद्येन सुवःशब्देन कर्मफलभोगभूमिरभिधीयते, द्वितीयेन सुवःशब्देन मोक्षद्वारभूत आदित्यलोकः। हे आहवनीय, त्वत्प्रसादात् प्रथमं फलभोगस्थानं सपुत्रपौत्रा वयम् ^v^अगन्म[1]। ततो मोक्षद्वारमादित्यलोकं गम्यास्म। तदर्थमहं तव ^v^संदृशः कटाक्षात् ^v^मा ^v^छित्सि विच्छिन्नो मा भूवम्। ^v^ते त्वदर्थं ^v^यत् ^v^तपः अस्माभिरनुष्ठास्यते ^v^तस्मै तपसे ^v^ते तवानुग्रहान् ^v^मा ^v^आ ^v^वृक्षि आ समन्तात् वृक्णो[2] विच्छिन्नो मा भूवम्॥

सुभूरसीति॥ कल्पः—“अथाऽऽदित्यमुपतिष्ठते सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीति” (बौश्रौ ३ २१) इति॥ हे आदित्य, त्वं ^v^सुभूः ^v^असि। सुष्ठु भवत्युदेतीति सुभूः। ^v^रश्मीनां रश्मियुक्तानां चन्द्रादीनां मध्ये ^v^श्रेष्ठः असि। आयुषः स्थापयिता ^v^असि। अतो मयि ^v^आयुः स्थापय। [3]एवं ब्रह्मवर्चसेऽपि योज्यम्[3]॥

१ आ हा–गम्यास्म। २ आ.क हा–वृक्तः। ३–३ क–वर्चोधा असि वर्चः ब्रह्मवर्चसं मयि धेहि ब्रह्मवर्चसं मयि स्थापयेति तस्यार्थः।

दमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्या-
न्निर्भजामि निर्भक्तः स यं द्विष्मः (१)॥

इदम् । अहम् । अमुम् । भ्रातृव्यम् । आभ्यः । दिग्भ्य इति दिक्–भ्यः । अस्यै । दिवः । अस्मात् । अन्तरिक्षात् । अस्यै । पृथिव्याः । अस्मात् । अन्नाद्यादित्यन्न–अद्यात् । निरिति । भजामि । निर्भक्त इति निः–भक्तः । सः । यम् । द्विष्मः (१) ।

---

(पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम् । ईदृशोऽसि हे भगवन्निति । किंच—श्रेष्ठः प्रशस्यतरः(म) । श्रेष्ठ रश्मीनां रश्मिमतामग्निच-द्रतारादीनां मध्ये, तेषामपि वा प्रशस्यतमः । " नामन्यतरस्याम् " (पा ६ १ १७७) इति नाम उदात्तत्वम् । आयुर्धा आयुषो धाता दाता असि । स त्वं मे मम आयु धेहि देहि । वर्चोधा वर्चसो बलस्य धाता स्थापयिता च असि त्वं मयि वर्चं धेहि स्थापय ॥

सर्वतो भ्रातृव्यं निर्भजति—'इदमहम्' इति ॥ इदमिति क्रियाविशेषणम् । इदं निर्भजामि । अमुमिति भ्रातृव्याणां सामान्येन निर्देशः । विशेषनामानि च तदन्तादीन्यत्र निर्देष्टव्यानि । अमुं भ्रातृव्यं सपत्नम् । " व्यन् सपत्ने " (पा ४ १ १४५) । आभ्यः सर्वाभ्योऽपि दिग्भ्यः निर्भजामीति भविष्यति । " ऊडिदम्° " (पा ६ १ १७१) इतीदमः पञ्चम्युदात्ता । " सावेकाचः° " (पा ६ १ १६८) इति दिग्भ्यः, अस्यास्तु " स्वरितो वाऽनुदात्ते पदादौ " (पा ८ २ ६) इति संहितायामेकादेशस्य स्वरितत्वम् । अस्यै अस्याः दिवः द्युलोकात् । पञ्चम्यर्थे चतुर्थी । पूर्ववद्विभक्तेरुदात्तत्वम्, अन्वादेशाभावात् । सर्वत्र इदमो विभक्त्युदात्तत्वमेव । अस्मात् अन्तरिक्षात् । गतम् । अस्यै पृथिव्या इति । " उदात्तयण° " (पा ६ १ १७४) इति पञ्चम्युदात्ता । अस्मात् प्रसिद्धात् अन्नाद्यात्, अन्नस्यादनम् अन्नाद्यम् । अन्नमेव वाऽत्तव्यम् अन्नाद्यम् । छान्दसो यत् । निर्भजामि निर्वासयामि । ततश्च सः निर्भक्तः दूरीकृतः । यं च वयं द्विष्मः इति । गतम् ॥

---

इदमिति ॥ कल्पः—" अथैभ्यो लोकेभ्यो भ्रातृव्यं निर्भजतीदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्म इति " (बौश्रौ १ २१) इति ॥ यो भ्रातृव्यो मदीयो वैरी पृथिव्यादिलोकत्रये प्राच्यादिदिक्षु मम विरोधमाचरति मदीयमन्नाद्यं चापजिहीर्षति अमुं भ्रातृव्यं ततः पृथिव्यादेः इदं निर्भजामि शीघ्रमेव निःसारयामि । इदानीं विरोधमनाचरन्तमपि कालान्तरे तदाचरणशङ्कया यं भ्रातृव्यं वयं द्विष्मः सः अपि निःसारितः ॥

---

१ ति–पर्वतादीनि (?) । २ मै–पूर्वत्र ।

**सं ज्योतिषाऽभूवमैन्द्रीमावृतमन्वावर्ते समहं प्रजया सं मया प्रजा समह॑ रायस्पोषेण सं मया रायस्पोषः**

समिति । ज्योतिषा । अभूवम् । ऐन्द्रीम् । आवृतमित्या-वृतम् । अन्वावर्त इत्यनु-आवर्ते । समिति । अहम् । प्रजयेति प्र-जया । समिति । मया । प्रजेति प्र-जा । समिति । अहम् । राय । पोषेण । समिति । मया । राय । पोष । ५

आत्मानमभिमृशति—'स ज्योतिषा' इति ॥ ^v^ज्योतिषा दीप्त्याह ^v^सम् ^v^अभूवम् एकीभूतोऽस्मि इति । छान्दसो वा लुङ् । कृतकर्माहम् आदित्यस्य परमेण वा ज्योतिषा एकीभूयासमिति । यद्वा—"आशसाया भूतवच्च" (पा ३ ३ १३२) इति भविष्यति लुङ् । इदानीमेव ज्योतिषा सभविष्यामीति ॥

उदङ्पर्यावर्तते—'ऐन्द्रीम्' इति ॥ ^v^ऐन्द्रीम् ^v^आवृतम् आवृत्तिं पर्यावृत्तिं अहम् ^v^अन्वावर्ते अनुगन्तास्मि । इन्द्रेण पूर्वकृतामनु पश्चादहमनुवर्ते । यद्वा—लक्षणेऽनो' कर्मप्रवचनीयत्वम् (पा १ ४ ८४), ऐन्द्रयावृत्या इयमावृत्तिर्लक्ष्यत इति । इन्द्र आदित्य. । "असौ वा आदित्य इन्द्र" (तैस १ ७ ६) इत्यादि ब्राह्मणम् ॥

उपतिष्ठते—'समहम्' इति ॥ ससाधनां क्रियामुपसर्ग आह^x^ । सा "स ज्योतिषाऽभूवम्" (तैसं १ ६ ६) इति मन्त्रान्तरेऽनन्तरप्रकृतत्वात् भवतिक्रियेति विज्ञायते, गमनक्रिया वा । ^v^अहं ^v^प्रजया संभूयास, संगसीय वा ^v^प्रजा च ^v^मया सह सभूयात्, संगसीष्ट वा । ^v^राय. धनस्य क्षेत्रपश्वादेः ^v^पोषेण पुष्ट्या ^v^अहं सभूयास, सगसीय वा । ^v^रायः ^v^पोष च ^v^मया सह सभूयात्, संगसीष्ट वा ॥

समिति ॥ [कल्पः—"सं ज्योतिषाऽभूवम् ^v-^इत्युत्तरः प्रत्यात्मानं^-v^ प्रत्यभिमृशते" (बौश्रौ १ २१) इति ॥ अहमादित्यज्योतिषा ^v^सम् ^v^अभूवम् सगतो भूयासम् ॥

ऐन्द्रीमिति ॥ कल्पः—"दक्षिणम॰समभि पर्यावर्तस ऐन्द्रीमावृतमन्वावर्त इति" (बौश्रौ १ २१) इति ॥ *परमैश्वर्ययोगादादित्य इन्द्रः । तदीयमावर्तमन्वहमपि प्रादक्षिण्येनाऽऽवर्ते ॥

समिति ॥ कल्पः—"अथोदङ्पर्यावर्तते^५ समहं प्रजया सं मया प्रजा समह॰ रायस्पोषेण सं मया रायस्पोष इति" (बौश्रौ १·२१) इति ॥ ^६v^अहं ^v^प्रजया संगतो भूयासम् । ^७-v^प्रजा अपि^-७^ ^v^मया संगता भूयात् । ^८-^रायस्पोषेऽप्येवं योज्यम्^-८^ ॥

^x^[द्र. पाभा ५ २ २८] ।

४-४ आ क-'इत्यात्मानम् । *(द्र धातुपाठ ६३ इदि परमैश्वर्ये ।)। ५ इ.उ पा-'दङ्ङुपपर्यावर्तते । ६. म४-अथाहम् । ७-७. म४-त्वमपि; क-प्रजा च । ८-८. म-रायस्पोषेणेत्येवमेव योज्यम्; क-तथा रायस्पोषेण संगतो भूयासं रायस्पोषो मया संगतो भूयात् मा योजयतु ।

समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासं वसुमान् यज्ञो वसीयान्
भूयासमग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥

समिद्ध इति सम्–इद्धः । अग्ने । मे । दीदिहि । समेद्धेति सम्–एद्धा । ते । अग्ने । दीद्यासम् ।
वसुमानिति वसु–मान् । यज्ञः । वसीयान् । भूयासम् ।
अग्ने । आयूꣳषि । पवसे । एति । सुव । ऊर्जम् । इषम् । च । नः ।
आरे । बाधस्व । दुच्छुनाम् ॥

समिधमादधाति—'समिद्ध' इति ॥ हे अग्ने, समिद्ध अनया समिधा सम्यक् दीपितः । कर्मणि निष्ठा । "श्वीदितो निष्ठायाम्" (पा ७ २ १४) इतीट्प्रतिषेधः । "गतिरनन्तर" (पा ६ २ ४९) इति पूर्वपदप्रकृतिस्वरत्वम् । स त्वं मे मदर्थं दीदिहि दीप्यस्व । दीदितिर्दीप्तिकर्मा छान्दसः । अहं च ते समेद्धा संदीपयिता । इडभावानुनासिकलोपौ छान्दसौ । सोऽहं त्वदर्थमेव दीद्यास दीपिषीय । धातोरन्त्यलोपश्छान्दसः ॥

उपतिष्ठते—'वसुमान्' इति ॥ अयं यज्ञः त्वत्प्रसादात् वसुमान् धनवान् प्रशस्तैरेव बहुभिः धनैस्तद्वान् । प्रसिद्धमिदम् । अहमपि त्वत्प्रसात् वसीयान् ततोऽपि वसुमत्तरोऽहं भूयासम् । वसुमच्छब्दादीयसुनि "विन्मतोर्लुक्" (पा ५ ३ ६५), "टेः" (पा ६ ४·१४३) इति टिलोपः ॥

गार्हपत्यमुपतिष्ठते—'अग्न आयूꣳषि' इति गायत्रीभ्याम् ॥ व्याख्याते चैते "त्वमग्न रुद्र" (तैस १·३ १४) इत्यत्र । हे अग्ने, आयूꣳषि अन्नानि जीवनानि वा अस्मदीयानि त्वं खलु पवसे शोधय । यथा वर्धन्ते न क्षीयन्ते तथा कुर्विति भावः । नः अस्माकं अन्नमदनीयं भक्ष्यभोज्यादिकम्, ऊर्जं क्षीराज्यादिकं रसं चानुनामीषिः आभिमुख्येन प्रेरय उत्पादय, सर्वदा देहीति भावः । दुच्छुनां दौर्गत्यादिसर्वोपद्रवान् दूरे गत्वा बाधस्व विनाशय । हे अग्ने,

समिद्ध इति ॥ कल्पः—"अथाऽऽहवनीये समिधमादधाति समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासꣳ स्वाहेति" (बौश्रौ ३ २१) इति ॥ अत्र समित्प्रक्षेपाय स्वाहेति शब्दोऽध्याहृतः । हे अग्ने, अनया समिधा प्रदीप्तस्त्वं मे मदर्थं दीदिहि दीप्यस्व । तव दीपयिताऽहमपि त्वत्प्रसादाद्दीप्तो भूयासम् ॥

वसुमानिति ॥ कल्पः—"अथाऽऽहवनीयमुपतिष्ठते वसुमान् यज्ञो वसीयान् भूयासमिति" (बौश्रौ ३ २१) इति । अयं यज्ञः वसुमान् धनवान् । अहमपि त्वत्प्रसादात् वसीयान् वसुमत्तरः भूयासम् ॥

अग्न इति ॥ कल्पः—"अथाऽऽग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते अग्न आयूꣳषि पवसेऽग्ने पवस्वेति" (बौश्रौ ३·२८) इति ॥ पाठस्तु—'अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं मयि' इति ॥ हे अग्ने,

**अग्ने पर्वस्व स्वपा अस्मे वर्चः सुवीर्यम् (२)। दधत् पोषꣳ रयिं मयि ॥**

**गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना**

। पर्वस्व । स्वपा इति सु–अपाः । अस्मे इति । वर्चः । सुवीर्यमिति सु–वीर्यम् (२)।
दधत् । पोषम् । रयिम् । मयि ॥

। गृहपत इति गृह–पते । सुगृहपतिरिति सु–गृहपति । अहम् । त्वया । गृहपतिनेति –पतिना । भूयासम् । सुगृहपतिरिति सु–गृहपति । मया । त्वम् । गृहपतिनेति गृह–पतिना ।

नकर्मा त्वमसि अस्मान् शोभनानुष्ठानान् कुरु । अस्मदर्थं शोभन वीर्यं तेजो दीप्तिं च बल शोधय प्रापय । पोष वृद्धियुक्त रयिं धन च मयि दधत् स्थापयन्निति ॥

अत्रैव ' अग्ने गृहपते ' इत्यादि यजुर्व्याख्यातम् अग्न्युपस्थाने " स पश्यामि " (तैस ५ ६ ) इत्यत्र ॥ हे अग्ने, गृहकर्मणा पात, अह त्वया गृहपतिना गृहकर्मणां पात्रा सुगृहपति सुष्ठु गृहकर्मणां पाता भूयासम् । मया च गृहपतिना त्व सुगृहपति पा, शत वर्षाणि ता ज्योतिष्मतीं ब्रह्मवर्चसप्रधानाम् आशिषम् । अप्राप्ताभिमतार्थनमाशी । त्तवे संतानायाजाताय पुत्रादये आ शासे प्रार्थये अमुष्मै च जाताय देवदत्तादये ता तिष्मतीम् आशिषम् आ शासे इति ॥

पौत्रादियुक्तानामस्माकं आयूंषि पवसे शोधयसि अपमृत्युं परिहरसीत्यर्थः । नः अस्मभ्यम् ऊर्जं म् इषम् अन्नं च आ समन्तात् सुव प्रेरय देहीत्यर्थः । दुच्छुनां वैरिसेनाम् आरे दूरे बाधस्व ाकुरु । सकारान्तोऽपःशब्दः कर्मवाची ॥ शोभनमपः कर्म यस्यासौ स्वपाः । हे अग्ने, त्वं स्वपाः अस्मे[11] अस्मान् पवस्व शोधय । मयि ब्रह्मवर्चस व्यवहारसामर्थ्यं [12] पुष्टिं धनं[12] च स्थापय ॥

अग्न इति ॥ कल्पः— " अथ [13]गार्हपत्यमेवोपतिष्ठतेऽग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना ासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूया शतꣳ हिमाः मह्यममुष्मै ज्योतिष्मतीं ताम- षमाशासेऽमुष्मा अमुष्मा इति । यावन्तोऽस्य पुत्रा जाता भवन्ति तन्तव इत्यन्ततः " (बौश्रौ ३ २१) । यद्यप्यत्र " तामाशिषमाशासे तन्तवे ज्योतिष्मतीम् " इत्याम्नायपाठः [14]तथाऽप्यदःशब्दस्योत्पन्न विषयत्वात् तन्तुशब्दस्यानुत्पन्नपुत्रविषयत्वात् [15]नाय क्रमो न्याय्यः[15] इत्यभिप्रेत्य शाखान्तरानुसारेण प्रकारो मन्त्र पपाठ ॥ अयं गार्हपत्योऽग्निरस्मिन् गृहे सर्वदा धार्यमाणत्वात् गृहपतिः । हे गृहपते अग्ने, हपतिना त्वया अनुगृहीतः अहं सुष्ठु गृहपतिः भूयासम् । त्वम् अपि गृहपतिना मया पूजितः ष्ठु गृहपतिः भूयाः । हिमशब्दो हेमन्तवाची सन्न संवत्सरमुपलक्षयति । शतसंवत्सरानग्निमिन्धानोऽहं न्तवे अनुत्पन्नबहुपुत्रोत्पत्तये ज्योतिष्मतीं तदुत्पत्तिप्रकाशनसमर्थां ताम् आशिषम् आ शासे । मुष्मै [16]उत्पन्नपुत्राय देवदत्तादिनामकाय ज्योतिष्मतीम् [17]अभिवृद्धिप्रकाशनसमर्थां ताम् आशिषम् आ शासे ॥

९. आ हा–अस्माकम् । १० क–असि । ११ क–' अस्मे ' नास्ति । १२–१२ क–पोषं ष्टिं रयिं धनं च । १३ आ–°त्यमेत्योपतिष्ठते, क–°त्यमुपतिष्ठते । १४ ति–अथाप्य° । १५–१५ क तं म४–°त्वाम्नायं क्रमोऽन्याय्यः । १६. क–उत्पन्नबहुपुत्राय । १७ आ क म४–अतिवृद्धिप्र° ।

भूयाः शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीं तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीं कस्त्वा युनक्ति स त्वा वि मुञ्चत्वग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि यज्ञो बभूव स आ (३) बभूव स प्र जज्ञे स वावृधे ।

भूयाः । शतम् । हिमाः । ताम् । आशिषमित्या–शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । ताम् । आशिषमित्या–शिषम् । एति । शासे । अमुष्मै । ज्योतिष्मतीम् । कः । त्वा । युनक्ति । सः । त्वा । वीति । मुञ्चतु । अग्ने । व्रतपत इति व्रत–पते । व्रतम् । अचारिषम् । तत् । अशकम् । तत् । मे । अराधि । यज्ञः । बभूव । सः । एति (३) । बभूव । सः । प्रेति । जज्ञे । सः । वावृधे ।

~~~~~~~~~~~~~~~~~~~~

यज्ञं वि मुञ्चति—‘ कस्त्वा ’ इति ॥ [v]कः प्रजापतिस्त्वां [v]युनक्ति, अतः [v]स एव त्वां [v]वि [v]मुञ्चतु हे यज्ञ, स एव त्वां विमोक्तुं चार्हतीति ॥

समिधं आदधाति, व्रतं च विमुञ्चति—‘ अग्ने व्रतपते ’ इति ॥ हे अग्ने व्रतानां पालक, त्वत्प्रसादात् [v]व्रतम् [v]अचारिषं यथाशक्त्यनुष्ठितवानस्मि । त्वत्प्रसादात् [v]तत् [v]अशकं तत्प्रसाधयितुं शक्त एवाभूवम् । एतेन वैगुण्याभावः प्रतिपादितः । प्रसाधितत्वादेव [v]तत् [v]मे व्रतम् [v]अराधि सिद्धमभूत् । एतेन फलसंपत्तिरुक्ता ॥

यज्ञस्य पुनरालम्भं जपति—‘ यज्ञो बभूव ’ इति । इयं पञ्चपदा जगती ॥ [v]यज्ञः अयं [v]बभूव[1] निर्वृत्तोऽभूत् । [v]स [v]आ [v]बभूव स निर्वृत्तोऽस्माकमावृत्त्या भवतु पुनः पुनर्भवतु । छान्दसो

~~~~~~~~~~~~~~~~~~~~

क इति ॥ कल्पः—“ कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चति ” ( आपश्रौ ४ १६ ११ ) इति ॥ कशब्दः प्रजापतिमाचष्टे । हे यज्ञ, पूर्वं यः प्रजापतिस्त्वां [v]युनक्ति युक्तवान् [v]सः एवेदानीं त्वां [v]वि [v]मुञ्चतु ॥

अग्ने इति ॥ कल्पः—“ अथाऽऽहवनीये समिधमादधात्यग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधीति ” ( बौश्रौ १ २२ ) इति ॥ यज्ञरूपस्य व्रतस्य पते हे [v]अग्ने, त्वत्प्रसादादिदं [v]व्रतं चरितवानस्मि । तद्व्रतं समापयितुम् [v]अशकं शक्तोऽभूवं मदीयं तद्व्रतम् [v]अराधि समृद्धमभूत् ॥

यज्ञ इति ॥ कल्पः—“ अथ यज्ञस्य पुनरालम्भं जपति यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणामिति ” ( बौश्रौ

~~~~~~~~~~~~~~~~~~~~

१ तै ति–निर्वृत्तोऽभूत ।
~~~~~~~~~~~~~~~~~~~~

स दे॒वाना॒माधि॑पतिर्बभूव॒ सो अ॒स्मा२ँ॑ अधि॑पतीन्‌ करोतु व॒य२ँ॑ स्या॒म पत॑यो र॒यी॒णाम्‌ ॥
गोमा॑२ँ अग्ने॒ऽवि॑मा२ँ अ॒श्वी य॒ज्ञो नृ॒वत्स॑खा॒ सद॒मिद॑प्रमृ॒ष्यः ।
इडा॑वा२ँ ए॒षो अ॑सुर प्र॒जावा॑न्‌ दी॒र्घो र॒यिः पृ॑थुबु॒ध्नः स॒भावा॑न्‌ ॥ ६ ॥

[ द्विष्मः सुवीर्य२ँ स आ पञ्चत्रिꣳशच्च ]

सः । दे॒वाना॑म्‌ । अधि॑पति॒रित्यधि॑—प॒तिः । ब॒भू॒व । सः । अ॒स्मान्‌ । अधि॑पती॒नित्यधि॑—प॒तीन्‌ । क॒रो॒तु । व॒यम्‌ । स्या॒म । पत॑यः । र॒यी॒णाम्‌ ।

गोमा॒निति॒ गो—मा॒न्‌ । अ॒ग्ने॒ । अवि॑मा॒नित्यवि॑—मा॒न्‌ । अ॒श्वी । य॒ज्ञः । नृ॒वत्स॒खेति॑ नृ॒वत्‌—स॒खा । सद॑म्‌ । इत्‌ । अ॒प्र॒मृ॒ष्य इत्य॑प्र—मृ॒ष्यः । इडा॑वा॒नितीडा॑—वा॒न्‌ । ए॒षः । अ॒सु॒र । प्र॒जावा॒निति॑ प्र॒जा—वा॒न्‌ । दी॒र्घः । र॒यिः । पृ॒थु॒बु॒ध्न इति॑ पृ॒थु—बु॒ध्नः । स॒भावा॒निति॑ स॒भा—वा॒न्‌ ॥ ६ ॥

[ मैसं १·४·२–४; कासं ५·५–६; वासं २·२५–२८ ]

---

लिट्‌ । vसः vप्रजज्ञे प्रजातः प्रज्ञातो वाऽस्तु प्रसिद्धोऽस्तु । vस vवावृधे स प्रसिद्धो वर्धताम्‌ । " तुजादीनाम्° " ( पा ६·१·७ ) इत्यभ्यासस्य दीर्घत्वम्‌ । vसः च प्रसिद्धः vदेवानाम्‌ अधिपतिहेतुत्वात्‌ vअधिपतिः अधिकं पालयिता भवतु । vसः तादृशः सन्‌ vअस्मान्‌ अपि vअधिपतीन्‌ मनुष्याणामधिकं पालयितॄन्‌ vकरोतु । तदर्थं vवयं vरयीणां धनानां vपतयः स्वामिनः vस्याम भवेम । पूर्ववन्नाम उदात्तत्वम्‌ ( पा ६·१·१७७ ) ॥

प्राङुत्क्रम्य गोमतीं जपति—' गोमान्‌ ' इति त्रिष्टुभा ॥ यज्ञः पुनराभवत्वित्युक्तं, कीदृशः स आभवत्विति स विशेष्यते—हे vअग्ने, गोभिर्बहुभिः अविभिरश्वैश्च तद्वान्‌ vनृवत्सखा मनुष्यवन्तो देवाः सखायो यस्य तादृशः । छान्दसं मतुपो वत्वम्‌ । vसदम्‌ vइत्‌ सदैव vअप्रमृष्यः

---

३·२२ ) इति ॥ [18]इदानीमनुष्ठितोऽयं vयज्ञः vबभूव पुनरप्यावृत्तो भवतु । vसः यज्ञः vप्र vजज्ञे अस्मान्‌ [19]अनालस्येन अनुष्ठातॄन्‌ प्रज्ञातवान्‌ । अत एवास्मद्‌गृहे vसः यज्ञः vवावृधे पुनःपुनरनुष्ठानेन वर्धताम्‌ । vसः यज्ञोऽस्माभिरिज्यमानानां vदेवानाम्‌ अधिकं पालयिता भवतु । vसः यज्ञः vअस्मान्‌ अपि vअधिपतीन्‌ अधिकमनुष्ठानस्य पालकान्‌ vकरोतु । vवयमपि तस्य यज्ञपुरुषस्य प्रसादात्‌ vरयीणां यज्ञसाधनानां धनानां vपतयः भूयास्म ॥

गोमानिति ॥ कल्पः—" अथ प्राङुत्क्रम्य जपति गोमा२ँ अग्नेऽविमा२ँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः । इडावा२ँ एषो असुर प्रजावान्‌ दीर्घो रयिः पृथुबुध्नः सभावानिति" ( बौश्रौ ३·२२ ) इति । हे vअग्ने, पुनरावर्तनाय प्रार्थ्यमानः vयज्ञः एतैर्विशेषणैर्विशिष्टो भूयात्‌ । बहवो गावोऽस्य सन्तीति vगोमान्‌, एवम्‌ vअविमान्‌ vअश्वी इति योज्यम्‌ । vनृवत्सखा ऋत्विग्रूपैर्मनुष्यैर्युक्ता देवाः सखायो यस्य यज्ञस्य स तादृशः । vसदम्‌ vइत्‌ सदैव vअप्रमृष्यः[20] अनभिभवनीयः । vइडावान्‌ अन्नवान्‌ । vप्रजावान्‌ बह्वपत्यप्रदः

---

१८. ति–तदानीमनु° । १९. क–' अनालस्येन ' नास्ति । २०. क–सर्वेषामप्रमृष्यः ।

अनभिभवनीय । " ऋदुपधाच्चाक्लृपिचृते " ( पा ३ १ ११० ) इति क्यप् । " ययतोश्चातदर्थे " ( पा ६ २ १५६ ) इत्युत्तरपदान्तोदात्तत्वम् । [v]इडावान् अन्नवान् । " दीर्घादटि समानपादे " ( पा ८ ३ ९ ) इति नकारस्य संहितायां रुत्वम् । [v]प्रजावान् [v]दीर्घं सन्ततिमान् अविच्छिन्न [v]पृथुबुध्न विस्तीर्णमूल. [v]रयिं साक्षाद्धन च [v]सभावान् गृहवान् एष ईदृशो यज्ञ पुनराभवतु । [v-v]असुर प्राणवन्[v], मत्वर्थीयो र ( द्र पा ५ २ १०७, उ ४२ ), सुलुक् ( पा ६ १ ६९ ) ॥

इति षष्ठे षष्ठोऽनुवाक ॥

[v]दीर्घः पुन पुनरनुष्ठानादविच्छिन्न । [v]रयिः बहुधनोपेतः । [v]पृथुबुध्नः विस्तीर्णमूलो मन्त्रेष्वनुष्ठानेषु च मूलभूतेषु वैकल्यरहितः । [v]सभावान अविकलं यज्ञं द्रष्टुमिच्छन्त्या महत्या विद्वत्सभया युक्तः । असुः प्राण सोऽस्यास्तीत्यसुरः, हे [v]असुर, प्राणवन्नग्ने, [v]एष पुनः प्रार्थ्यमानो यज्ञः उक्तविशेषणविशिष्टो भूयात् ॥

अत्र विनियोगसंग्रहः —

" अगन् पूर्वाग्न्युपस्थान सुभूर्भानोरुपस्थितिः ।
इदं निःसारयेच्छत्रून् [21]सं ज्योति स्वाभिमर्शनम्[21] ॥ १ ॥
ऐन्द्री प्रदक्षिणावृत्तिः समहं तद्विपर्ययः ।
समिद्ध समिदाधानं वसु पूर्वाग्न्युपस्थितिः ॥ २ ॥
अग्न आयू त्रिभिर्मन्त्रैरपराग्नेरुपस्थितिः ।
कस्त्वा यज्ञविमोकः स्यादग्ने तद्व्रतमुत्सृजेत् ॥ ३ ॥
यज्ञेति पुनरालम्भं जपेद्गोमास्तु गोमतीम् ।
षष्ठेऽनुवाक एतस्मिन् मन्त्राः पञ्चदशेरिताः ॥ ४ ॥ " इति ॥

अथ मीमांसा ॥ नवमाध्यायस्य प्रथमपादे चिन्तितम्—

" अगन्मादेः स्वर्गहेतौ हेतू यज्ञोऽत्र[22] चोदितम् ।
आद्यो [23]लिङ्गान् नैवमङ्गस्यापूर्वाकाङ्क्षितत्वतः ॥ " ( जैन्या ९ १·७ )

दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ—' अगन्म सुवः ' इत्येकः । " अग्नेरहमुज्जितिमनूज्जेषम् " ( तैसं १ ६ ४ ) इत्यपरः । तयोरुभयोः क्रमेण स्वर्गवेदी प्रयोजकौ । कुतः ? तल्लिङ्गदर्शनात् । तथा सति ' सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ' ( द्र तैसं २ ३ २ ) इत्यत्र स्वर्गाग्न्योरभावान्नास्त्यूह इति प्राप्ते ब्रूमः—चोदितं यदपूर्वं तस्यैव [23]फलवत्त्वेनानुष्ठेयतयेतिकर्तव्यताकाङ्क्षा युक्ता । ततो मन्त्रयोरपूर्वं प्रयोजकम्[24] । तथा सति विकृतौ ' अगन्म ब्रह्मवर्चसं सूर्यस्याहमुज्जितिमनूज्जेषम् ' इत्येवं मन्त्रयोरस्त्यूहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

४–४ मै–आगच्छतु कालेकाले असुर असुमान् प्राणवान्; ति–असुरः प्राणवान् ।

२१-२१ क–सं ज्योतिषाभिमर्शनम् । २२ आ क म४–यज्ञा प्र° । २३ आ.क.म४–फलत्वे° । २४ म४-प्रयोजनम् ।

**यथा वै संमृतसोमा एवं वा एते संमृतयज्ञा यद्दर्शपूर्णमासौ कस्य वाऽह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां**

**यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वो भूते यजत**

यथा । वै । समृतसोमा इति समृत–सोमाः । एवम् । वै । एते । समृतयज्ञा इति समृत–यज्ञाः । यत् । दर्शपूर्णमासाविति दर्श–पूर्णमासौ । कस्य । वा । अह । देवाः । यज्ञम् । आगच्छन्तीत्या–गच्छन्ति । कस्य । वा । न । बहूनाम् । यजमानानाम् । यः । वै । देवताः । पूर्वः । परिगृह्णातीति परि–गृह्णाति । सः । एनाः । श्वः । भूते । यजते ।

[1]अतः परं[1] दर्शपूर्णमासयोर्याजमानब्राह्मणं प्राजापत्यमेव काण्डम् । तत्राग्न्यन्वाधानं विधातुमाह—‘ यथा वै ’ इत्यादि ॥ यथा समृतानां संप्राप्तानां पूर्वपरिगृहीतानां सोमाः सोमयागाः, केचित् सवादयोऽपि भवन्ति । यथा “ पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दांसि वृङ्क्ते ” ( तैसं ७·५·५ ) इति । एवम् एते दर्शपूर्णमासयाजिनः समृतयज्ञाः संभूतयज्ञाः[2] पूर्वपरिगृहीतानां देवानां भवन्ति । उभयत्रापि शाकपार्थिवत्वात् समासः ( पा २·१·६९ वा ८ ) । कारणमाह—‘ कस्य वा ’ इत्यादि । यजमानानां बहुत्वे कस्य यज्ञं देवाः देवादय आगच्छेयुः कस्य न ? नहि प्रथमपरिगृहीतादृते नियमकारणं किंचिदस्ति तदेवाह—‘ यो वै ’ इत्यादि । पश्वादीनां देवतात्वम् अस्त्येव, तस्मात् पूर्वेद्युरेव देवतापरिग्रहार्थमन्वाधानं कर्तव्य-

एतैः षड्भिरनुवाकैर्याजमानमन्त्रा उदीरिताः । [1]अथाऽनुवाकपञ्चकेन याजमानब्राह्मणमुच्यते । तत्राऽस्मिन् सप्तमानुवाके देवतापरिग्रहादिर्विधीयते । आहवनीयादिष्वग्निष्वध्वर्युणाऽन्वाधीयमानेषु तस्मिन्नन्वाधानकाले यजमानः अच्छिद्रकाण्डे आम्नातान् “ अग्निं गृह्णामि ” ( तैब्रा ३·७·४ ) इत्यादिमन्त्रान् जपेत् । सोऽयं देवतापरिग्रहः । असौ च आपस्तम्बसूत्रे विस्पष्टः । आपस्तम्बो हि “ अग्निं गृह्णामि ” इत्यादिमन्त्रानुच्चार्येदमाह—“ आहवनीयेऽन्वाधीयमाने जपति ” ( आपश्रौ ४·१·८ ) इति । “ अन्तराग्नी पशवः ” [2]इति मन्त्रमुच्चार्येदमाह[3]—“ अन्तराग्नी तिष्ठञ्जपति ” ( आपश्रौ ४·१·९ ) इति । “ इह प्रजाः ” इत्यादिमन्त्रद्वयमुच्चार्येदमाह—“ गार्हपत्यम् ” ( आपश्रौ ४·१·१० ) इति । अन्वाधीयमानमनुमन्त्रयते इति शेषः । “ अयं पितृणामग्निः[4] ” इति मन्त्रमुच्चार्येदमाह[3]— “ दक्षिणाग्निम् ” ( आपश्रौ ४·२·१ ) इति । अत्रापि पूर्ववद्वाक्यशेषः ॥

**यथेति** ॥ तमिमं देवतापरिग्रहं विधातुमादौ[5] प्रस्तौति—‘ यथा वै समृतसोमा एवं वा एते समृतयज्ञा यद्दर्शपूर्णमासौ । कस्य वाऽह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वो भूते यजते ’ इति । एकस्मिन्नेव काले संहत्य प्राप्ताः समृतसोमाः सोमयागा

१. तं.ति.पं-‘ अतः परं ’ नास्ति । २ तं.ति.पं-‘ संभूतयज्ञाः ’ नास्ति ।

१. इ.उ.पा-‘ अथ ’ नास्ति । २. तं.ति-इत्यादि । ३. म४-°यैवमाह । ४. आ.क.तं.ति. म४-‘ अग्निः ’ नास्ति । ५. तं.ति-°तुमत्र ।

एतद्वै देवानामायतनं यदाहवनीयोऽन्तराऽग्नी पशूनां गार्हपत्यो मनुष्याणामन्वाहार्य-

एतत् । वै । देवानाम् । आयतनमित्या–यतनम् । यत् । आहवनीय इत्या–हवनीयः । अन्तरा । अग्नी इति । पशूनाम् । गार्हपत्य इति गार्ह–पत्यः । मनुष्याणाम् ।

मिति । मन्त्रलिङ्गं च "ताः पूर्वः परिगृह्णामि" ( तैब्रा ३.७.४ ) इति । अथ कुत्र [1]का देवता परिगृह्यते[2] इत्याह—'एतद्वै' इत्यादि । आहवनीयगार्हपत्ययोर्मध्यं पशूनामायतनम् । "अन्तरान्तरेण युक्ते" ( पा २.३.४ ) इति द्वितीया । 'गार्हपत्यः' इति । "गृहपतिना संयुक्ते ञ्यः" ( पा ४.४.९० ) इति ञ्यः । अन्वाहार्य ओदनः पच्यतेऽस्मिन्निति अन्वाहार्य-पचनो दक्षिणाग्निः । 'पितॄणाम्' इति "नामन्यतरस्याम्" ( पा ६.१.१७७ ) इति षष्ठ्या उदात्तत्वम् ।

एकस्मिन्नेव वसन्ततौ बहूनां यजमानानां सोमयागाः संहृत्य प्राप्यन्ते [6]एवम् एव बहूनां यजमानानाम् एते दर्शपूर्णमासा यथा एकस्मिन्नेव पर्वणि संहृत्य प्राप्यन्ते । देवताश्चाग्न्यादयो या [7]एवैकस्य यजमानस्य [8]ता एवान्यस्यापि । तथा सति देवानां मनसि संकटमुत्पद्यते । तत्संकटं अहशब्देन द्योत्यते । देवानां पक्षपातस्यानुचितत्वात् । कस्य यजमानस्य यज्ञं देवा आगच्छन्ति कस्य वा यज्ञं न आगच्छन्तीति महदेतत् संकटम् । तस्य संकटस्यायं परिहारः । बहूनां यजमानानां मध्ये यः यजमान इतरेभ्यः [9]पूर्वं प्रवृत्तो देवताः परिगृह्णाति सः यजमान एताः परिगृहीता देवताः परेद्युर्यष्टुमर्हति । न च सर्वेऽपि यजमानाः परस्परमात्सर्येण प्रथमं प्रवर्तन्त इति स दोषस्तदवस्थ इति शङ्कनीयम् । परिग्रहमन्त्रपाठेनैव देवसंकटस्य परिहृतत्वात् । यागस्योद्देशत्यागमात्रत्वाद्देवानामागमनमन्तरेणापि सोऽनुष्ठातुं शक्यते । योगसामर्थ्येन वा बहूनि शरीराणि स्वीकृत्य तत्र तत्र सर्वत्राऽऽगमिष्यन्ति । [10]इमं च परिहारं भगवान् बादरायणो देवता-धिकरणे "विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" ( ब्रसू १.३.२७ ) इति सूत्रयामास । किं बहुना अस्य वाक्यस्य देवतापरिग्रहविध्यर्थवादत्वान्न किंचिद्देवानां संकटमस्ति ॥

एतदिति ॥ देवतापरिग्रहार्थानां देशविशेषाणां विधिमर्थवादेनोन्नयति–'एतद्वै देवानामायतनं यदाहवनीयोऽन्तराग्नी पशूनां गार्हपत्यो मनुष्याणामन्वाहार्यपचनः पितॄणाम्' इति ॥ "वसून् रुद्रानादित्यान् । इन्द्रेण सह देवताः" ( तैब्रा ३.७.४ ) इत्याहवनीयार्थमन्त्रलिङ्गात् आहवनीयः देवानां स्थानम् । "अन्तराग्नी पशवः" ( तैब्रा ३.७.४ ) इति मन्त्रलिङ्गादाहवनीयगार्हपत्ययोर्मध्यं पशूनां स्थानम् । "इह प्रजा विश्वरूपा रमन्ताम्" ( तैब्रा ३.७.४ ) इति मन्त्रलिङ्गात् गार्हपत्यो मनुष्याणां स्थानम् । अन्वाहार्यः पच्यतेऽस्मिन्नित्यन्वाहार्यपचनो दक्षिणाग्निः । "अयं पितॄणामग्निः" ( तैब्रा ३.७.४ ) इति मन्त्रलिङ्गादसौ पितॄणां स्थानम् ॥

१–२. सं.ति–को देवतापरिग्रह ।

६. क–मासर्मपाः । ७. आ–एकस्य; म ८–एवैकस्य । ८. आ–ताश्चान्यस्यापि । ९. आ–पूर्वः १०. आ–इत्थम् ।

**पचनः पितृणामग्निं गृह्णाति स्व एवाऽऽयतने देवताः परि (१) गृह्णाति ताः श्वो भूते यजते व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतमुपैष्यन् ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमा लभते बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनमुपस्तीर्यः**

अन्वाहार्यपचन इत्यन्वाहार्य–पचनः । पितृणाम् । अग्निम् । गृह्णाति । स्वे । एव । आयतन इत्या–यतने । देवताः । परीति (१) । गृह्णाति । ताः । श्वः । भूते । यजते । व्रतेन । वै । मेध्यः । अग्निः । व्रतपतिरिति व्रत–पतिः । ब्राह्मणः । व्रतभृदिति व्रत–भृत् । व्रतम् । उपैष्यन्नित्युप–एष्यन् । ब्रूयात् । अग्ने । व्रतपत इति व्रत–पते । व्रतम् । चरिष्यामि । इति । अग्निः । वै । देवानाम् । व्रतपतिरिति व्रत–पतिः । तस्मै । एव । प्रतिप्रोच्येति प्रति–प्रोच्य । व्रतम् । एति । लभते । बर्हिषा । पूर्णमास इति पूर्ण–मासे । व्रतम् । उपेति । एति । वत्सैः । अमावास्यायामित्यमा–वास्यायाम् । एतत् । हि । एतयोः । आयतनमित्या–यतनम् । उपस्तीर्य इत्युप–स्तीर्यः ।

‘ अग्निं गृह्णाति ’ इत्यादि । गतम् ॥

अथ व्रतोपनयनं विधातुमाह—‘ व्रतेन वै ’ इत्यादि ॥ यदि व्रतचारी यजमानः स्यात् तदा ᵛअग्निः ᵛव्रतपतिः व्रतस्य पाता ᵛमेध्यः मेधार्हो भवति । स्वयं च ᵛव्रतभृत् व्रतधारी भवति; तस्माद्व्रतमुपेयादिति । ‘ व्रतमुपैष्यन् ’ इत्यादि । व्रतपतिमग्निमामन्त्र्य तस्मै निवेद्य ᵛव्रतम् आरभते इति । “ एत्येधत्यूठ्सु ” ( पा ६·१·८९ ) इति वृद्धिः । ‘ बर्हिषा ’ इत्यादि । बर्हिराहरणेन तत्कालेन सह, बर्हिराहरणानन्तरमिति यावत् । ᵛवत्सैः वत्सानामपाकरणेन तत्का-

**अग्निमिति** ॥ [11]-देशविशेषानुज्ञीय-[11] तेषु देशेष्ववस्थितस्य देवतापरिग्रहं विदधाति—‘ अग्निं गृह्णाति स्व एवाऽऽयतने देवताः परि गृह्णाति ताः श्वो भूते यजते ’ इति ॥ स्पष्टोऽर्थः ॥

**व्रतेनेति** ॥ मन्त्रेण यज्ञरूपव्रतस्वीकारं विधातुं प्रस्तौति[12]—‘ व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृत् ’ इति । वक्ष्यमाणमन्त्रपाठरूपेण व्रतस्वीकारेणैव ᵛव्रतपतिः अयम् ᵛअग्निः ᵛमेध्यः यागयोग्यो भवति । ᵛब्राह्मणः च यजमानो व्रतधारी भवति ॥

**व्रतमिति** ॥ समन्त्रकव्रतस्वीकारं विधत्ते—‘ व्रतमुपैष्यन् ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीति ’ इति । मन्त्रोऽयमतीतप्रश्ने “ मम नाम ” ( तैसं १·५·१० ) इत्यनुवाके समाम्नातः ॥

**अग्निरिति** ॥ मन्त्रगतं व्रतपतिशब्दं मन्त्रतात्पर्यं च व्याचष्टे—‘ अग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमा लभते ’ इति ॥

**बर्हिषेति** ॥ तिथिविशेषेण व्रतोपायनस्य कालविशेषं विधत्ते—‘ बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनम् ’ इति । ᵛबर्हिषा [13]बर्हिराहरणेनोपलक्षिते काले ᵛवत्सैः वत्सापाकरणेन

११–११. आ–°विधिमन्त्रानुज्ञीय; तं–°विशेषमुज्ञीय; म४–विधिमुज्ञीय; क–देशमुज्ञीय । १२. ति–प्रशंसति । १३. क–बर्हिरासदनेनो° ।

**पूर्वश्चाग्निरपरश्चेत्याहुर्मनुष्याः (२) इन्न्वा उपस्तीर्णमिच्छन्ति किमु देवा येषां नवावसानमुपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति**

पूर्वः । च । अग्निः । अपरः । च । इति । आहुः । मनुष्याः ( २ ) । इत् । नु । वै । उपस्तीर्णमित्युप-स्तीर्णम् । इच्छन्ति । किम् । उ । देवाः । येषाम् । नवावसानमिति नव-अवसानम् । उपेति । अस्मिन् । श्वः । यक्ष्यमाणे । देवताः । वसन्ति । यः । एवम् । विद्वान् । अग्निम् । उपस्तृणातीत्युप-स्तृणाति ।

लेन सह वत्सेष्वपाकृतेष्वित्यर्थः । उक्तं च—" वत्ससंयोगे व्रतचोदना स्यात् " ( मीसू ६.४.३४ ) । अयं च संनयतोऽसंनयतश्च कालः । " कालः संनयनपक्षे तल्लिङ्गसंयोगात् " ( मीसू ६.४.४१ ) इति ॥

अथोपस्तरणं विधातुमाह— ' उपस्तीर्यः ' इत्यादि ॥ [v]उपस्तीर्यः उपस्तरितव्यः । छान्दसः क्यप् । दर्भैः पूर्वेद्युरेवोभावग्नी उपस्तृणुयात् तयोः समीपे परितः स्तृणुयात् । [v]मनुष्याः अपि खलु [v]उपस्तीर्णं समन्तादाच्छादितं निवासं गृहम् [v]इच्छन्ति किं पुनः [v]देवाः, येषामायतनं [v]नवावसानं नूतनाध्यवसायम् । यद्वा—अवसानं गृहम् । तेन कर्मधारये दासीभारादिर्द्रष्टव्यः ( पा ६.२.४२ ) । ' उपास्मिन् ' इत्यादि । उपवसन्ति उपेत्य वसन्ति देवा अस्मिन् इति । [v]विद्वान् वेदार्थवित् ॥

उपलक्षिते काल इत्यर्थः । [v]एतत् उक्तं कालद्वयं [v]एतयोः तिथिविशेषगतयोर्व्रतस्वीकारयोरुचितं स्थानमिति शाखान्तरप्रसिद्धिः ॥

**उपस्तीर्य इति** ॥ अथोपस्तरणं विधत्ते । अध्वर्युर्यदा दर्भैराहवनीयगार्हपत्यौ परिस्तृणाति तदानीमच्छिद्रकाण्डपठितस्य " उभावग्नी उपस्तृणुतः " ( तैब्रा ३.७.४ ) इत्यादिमन्त्रस्य यजमानेन जप उपस्तरणम् । अथवाऽध्वर्युकर्तृकं परिस्तरणम् । तदिदमस्मिन् काण्डे विदधाति—' उपस्तीर्यः पूर्वश्चाग्निरपरश्चेत्याहुः ' इति ॥ [14-]परोक्षकथनेन विधिः प्रशस्यते[-14] ॥

**मनुष्या इति** ॥ विहितमुपस्तरणमुपपादयति—' मनुष्या इन्न्वा उपस्तीर्णमिच्छन्ति किमु देवा येषां नवावसानमुपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति ' इति । [v]इत् [v]नु [v]वै इति निपातत्रयसमुदायोऽपिशब्दार्थे वर्तते । [15]अत्यन्तदरिद्राः [v]मनुष्याः अपि शीतवातादिपरिहाराय तृणादिभिराच्छन्नं गृहम् [v]इच्छन्ति महाप्रभावाः [v]देवाः उपस्तरणमिच्छन्तीति [v]किमु वक्तव्यम् । [v]येषां देवानामिच्छानुसारेण तदा तदा तत्र तत्र [v]नवावसानं नूतनगृहं निष्पाद्यते । [v]यः यजमानः [16-][v]एवं [v]विद्वान्[-16] [v]अग्निम् [v]उपस्तृणाति [v]अस्मिन् यजमाने परेद्युः [v]यक्ष्यमाणे सति पूर्वेद्युस्तत्समीपे हविर्भुजो [v]देवताः[17] निवसन्ति ॥

**यजमानेनेति** ॥ " आरण्यं सायमाशेऽश्नाति " ( आपश्रौ ४.३.७ ) इति सूत्रकारेण यदारण्यधान्यभोजनमुक्तं तदिदं विधातुं प्रस्तौति—' यजमानेन ग्राम्याश्च पशवोऽवरुध्या आरण्याश्चेत्याहुर्यद्ग्राम्या-

१४–१४. क–परोक्तिकथनेन विधिः प्रकल्प्यते । १५. क.म४–तत्र दरिद्राः । १६–१६. क–एवं देवानामिच्छानुसारेण विद्वान्; तं–एव देवानामिच्छन् विद्वान्; ति–एव देवानामिच्छन्ति विद्वान् । १७. तं–देवाः ।

**यजमानेन ग्राम्याश्च पशवोऽवरुध्या आरण्याश्चेत्याहुर्यद्ग्राम्यानुपवसति तेन ग्राम्यानव रुन्द्धे यदारण्यस्याश्नाति तेनारण्यान् यदनाश्वानुपवसेत् पितृदेवत्यः स्यादारण्यस्याश्नातीन्द्रियं (३) वा आरण्यमिन्द्रियमेवाऽऽत्मन् धत्ते यदनाश्वानुपवसेत् क्षोधुकः स्याद्यदश्नीयाद्रुद्रोऽस्य पशूनभि मन्येतापोऽश्नाति**

यजमानेन । ग्राम्याः । च । पशवः । अवरुध्या इत्यव–रुध्याः । आरण्याः । च । इति । आहुः । यत् । ग्राम्यान् । उपवसतीत्युप–वसति । तेन । ग्राम्यान् । अवेति । रुन्द्धे । यत् । आरण्यस्य । अश्नाति । तेन । आरण्यान् । यत् । अनाश्वान् । उपवसेदित्युप–वसेत् । पितृदेवत्य इति पितृ–देवत्यः । स्यात् । आरण्यस्य । अश्नाति । इन्द्रियम् (३) । वै । आरण्यम् । इन्द्रियम् । एव । आत्मन् । धत्ते । यत् । अनाश्वान् । उपवसेदित्युप–वसेत् । क्षोधुकः । स्यात् । यत् । अश्नीयात् । रुद्रः । अस्य । पशून् । अभीति । मन्येत । अपः । अश्नाति ।

अथ सायमाशविषये विकल्पभेदानाह—‘ यजमानेन ’ इत्यादि ॥ ग्राम्याणामनशनेन अवरोधः आरण्यानां तन्मांसाद्यशनेन । तत्र गोऽश्वाजाविपुरुषगर्दभोष्ट्राः सप्त ग्राम्याः पशवः । द्विखुरश्वापदपक्षिमत्स्यसरीसृपहस्तिमर्कटादयः सप्तारण्याः । ‘ यदनाश्वान् ’ इत्यादि । यदि सायं किंचिदप्यनशित्वाग्निसमीपे वसेत् । “ उपेयिवान्° ” ( पा ३·२·१०९ ) इत्यादौ निपातितः । Vपितृदेवत्यः Vस्यात् यागः, तेषामनशनप्रियत्वात् । “ देवतान्तात्तादर्थ्ये यत् ” ( पा ५·४·२४ ) । आरण्यस्य इन्द्रियसाधनत्वात्तदशनेन तल्लाभ इत्यारण्याशनकल्पः प्रथमः ॥

**नुपवसति तेन ग्राम्यानव रुन्द्धे यदारण्यस्याश्नाति तेनाऽऽरण्यान् यदनाश्वानुपवसेत् पितृदेवत्यः स्यात् ’ इति ॥ अत्रायं विचारः । किं ग्राम्यधान्यस्यान्नं [18]भोक्तव्यम् आरण्यधान्यस्य वा, अथवा[19] भोजनमेव[20] वर्जनीयमिति[21] । तत्रारण्यधान्यभोजनपक्षमभ्युपेत्येतरपक्षद्वयमपोद्यते । पशवो हि द्विविधाः । Vग्राम्याः Vआरण्याः Vच । गवाश्वाजाविपुरुषगर्दभोष्ट्राः सप्त ग्राम्याः । [22]द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयाः सप्तारण्याः । त एत उभयेऽपि Vयजमानेन Vअवरुध्याः संपादनीयाः Vइति बुद्धिमन्तः Vआहुः । यदि Vग्राम्यान् व्रीह्यादीन् प्रत्युपवसेत् भोजनेन[23] वर्जयेत् Vतेन वर्जनेन Vग्राम्यान् पशून् संपादयति । यदि Vअनाश्वान् उभयविधभोजनवर्जमुपवासं[24] कुर्यात् तदानीमयं व्रतविशेषः Vपितृदेवत्यः भवेत् । पितरो ह्यनश्नन्तं श्राद्धकर्तारमभिनन्दन्ति ॥**

**आरण्यस्येति ॥ इदानीं विदधाति—“ आरण्यस्याश्नातीन्द्रियं वा आरण्यमिन्द्रियमेवाऽऽत्मन् धत्ते ” इति । इन्द्रियाभिवृद्धिहेतुरारण्यधान्यम् ॥**

**यदिति ॥ अथ पक्षान्तरं विधातुं भोजनाभोजनयोर्दोषमाह—“ यदनाश्वानुपवसेत् क्षोधुकः स्याद्यदश्नीयाद्रुद्रोऽस्य पशूनभि मन्येत ” इति । Vक्षोधुकः क्षुधाशीलः । Vअभि Vमन्येत हन्यात् ॥**

**अप इति ॥ विधित्सितं पक्षान्तरं विदधाति—‘ अपोऽश्नाति ’ इति ।**

**तदिति ॥ उक्तदोषद्वयमत्र परिहरति—‘ तन्नेवाशितं नेवानशितं न क्षोधुको भवति नास्य रुद्रः पशूनभि मन्यते ’ इति । अशितास्वप्स्वदनाभावात् Vअशितम् Vइव Vन भवति, क्षुच्छान्तेः Vअनशितम् Vइव Vन भवति । अतो न दोषद्वयम् ॥**

१८. क–भोक्तव्यमुत । १९. आ–‘ अथवा ’ नास्ति । २०. आ–‘ भोजनमेव ’ इत्यस्यानन्तरम् ‘ वा ’ । २१. तं.ति–वर्ज्यमिति । २२. क–दिजैडश्वापदपक्षिसरीसृपहस्तिमर्कटाद्याः । २३. आ–भोजनम् । २४. इ.उ–उभयभोजनं विवर्जितमुपवासम् ; पा–उभयविधभोजनं विवर्जितमुपवासम् ।

तन्नेवाशितं नेवानशितं न क्षोधुको भवति नास्य रुद्रः पशूनभि मन्यते वज्रो वै यज्ञः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यदनाश्वानुपवसति वज्रेणैव साक्षात् क्षुधं भ्रातृव्यꣳ हन्ति ॥ ७ ॥

[ परि मनुष्या इन्द्रियꣳ साक्षात् त्रीणि च ]

तत् । न । इव । अशितम् । न । इव । अनशितम् । न । क्षोधुकः । भवति । न । अस्य । रुद्रः । पशून् । अभीति । मन्यते । वज्रः । वै । यज्ञः । क्षुत् । खलु । वै । मनुष्यस्य । भ्रातृव्यः । यत् । अनाश्वान् । उपवसतीत्युप–वसति । वज्रेण । एव । साक्षादिति स–अक्षात् । क्षुधम् । भ्रातृव्यम् । हन्ति ॥ ७ ॥

[ मैसं १ ४ ५,१०, कासं ३१.१५, ३२ ७, शब्रा १.१ १ २–१० ]

अथ द्वितीयोऽपामशनकल्प —' यत् ' इत्यादि ॥ [v]क्षोधुकः बुभुक्षाशील दरिद्रो वा । छान्दस उकञ् ( पा ३ २ १५४ ) । [v]अभि [v]मन्येत अभिक्रुध्येत् । ' नेवाशितम् ' इति । नभाव । पीतवन्तमशितवन्तमाहुः । [v]न [v]इव [v]अनशितम्, अपामशितत्वात् ॥

अथानशनकल्प तृतीय —' वज्र ' इति ॥ क्षुल्लक्षणमशनलक्षणेन यज्ञात्मना [v]वज्रेण [v]हन्ति इति क्षोधुकत्वदोषाप्रसङ्ग । " व्यन् सपत्ने " ( पा ४ १ १४५ ) इति व्यन् ॥

इति षष्ठे सप्तमोऽनुवाक

वज्र इति ॥ अथोपवासपक्षे विधत्ते—' वज्रो वै यज्ञः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यदना-श्वानुपवसति वज्रेणैव साक्षात्क्षुधं भ्रातृव्यꣳ हन्ति ' इति ॥ यज्ञस्य नरकपाताद्यनिष्टनिवारकत्वाद्वज्रत्वम्[२५] । क्षुधो वैरित्वं प्रसिद्धम् । यज्ञाङ्गभूतोपवासलक्षणेनानेन [v]वज्रेण [v]एव भाविजन्मनि प्राप्स्यमानं [v]साक्षात् [v]भ्रातृव्यं मुख्यवैरिणं क्षुद्रूपं [v]हन्ति इति ॥ अनेन यज्ञेन जन्मान्तरेऽन्नबाहुल्यस्य लप्स्यमानत्वात् ॥

अथ मीमांसा ॥ षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

" वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः ।
व्रतकालं लक्षयेद्वा वत्सयुक्ते व्रते विधिः ॥
भाति रागाद्व्रतप्राप्तेर्वत्समात्रं विधीयते ।
[२६]व्रतस्याकरणं वत्सः [२७]कालधीस्तदपाकृतेः ॥ " ( जैन्या ६.४.२०-२१ ) इति ॥

दर्शपूर्णमासयोः श्रूयते—" बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम् " ( तैसं १ ६ ७ ) इति । व्रतं भोजनम् । अत एवाऽऽम्नायते—" अमाषममाꣳस बहुसर्पिष्कं व्रतयति " ( द्र आपश्रौ ४ २ ५ ) इति । तदेतद्व्रतं वत्ससंयुक्तमत्र विधीयते । कुतः ? वत्सैः इति तृतीयया साहित्यस्य प्रतिभानात् इत्येकः पक्षः । रागत इत्येव प्राप्तत्वाद्व्रतं न [२८]विधातव्यम्, किंतु वत्समात्रं विधेयम् इति द्वितीयः पक्षः । न हि वत्सः पाण्यादिवत् व्रतस्य करणम् । ततो न तस्य विधिः । किंतु वत्सानामपाकरणेन काल उपलक्ष्यते । तस्मिन् काले व्रतमुपेयात् । एवं पूर्णमासे बर्हिःसंपादनकाले व्रतमुपेयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

२५ पा–'कत्वाद्यनिष्ट तद्वज्रत्वम् । २६ ति–न तस्य कारणम् । २७. च–कालस्तस्माद'
२८ आ इ ज पा–विधीयते ।

अप्प्रणयनाद्यायुधभृत्यः ]

**यो वै श्र॒द्धामना॑रभ्य य॒ज्ञेन॒ यज॑ते॒ नास्ये॒ष्टाय॒ श्रद्द॑धते॒ऽपः प्र ण॑यति श्र॒द्धा वा आप॑ः श्र॒द्धामे॒वाऽऽरभ्य॑ य॒ज्ञेन॑ यजत उ॒भये॑ऽस्य देवमनु॒ष्या इ॒ष्टाय॒ श्रद्द॑धते॒ तदा॑हुरति॒ वा ए॒ता व॒र्त्रं नेद॑न्त्यति॒ वाचं॒ मनो॒ वावैता नाति॒ नेद॒न्तीति॒**

य । वै । श्र॒द्धामिति॑ श्रत्—धाम् । अना॑रभ्येत्यना॑—र॒भ्य॒ । य॒ज्ञेन॑ । यज॑ते । न । अ॒स्य॒ । इ॒ष्टाय॑ । श्रत् । द॒धते॒ । अ॒पः । प्रेति॑ । न॒यति॒ । श्र॒द्धेति॑ श्रत्—धा । वै । आप॑ । श्र॒द्धामिति॑ श्रत्—धाम् । ए॒व । आ॒रभ्येत्या॑—रभ्य॑ । य॒ज्ञेन॑ । य॒जते॒ । उ॒भये॑ । अ॒स्य॒ । दे॒वमनु॒ष्या इति॑ देव—म॒नु॒ष्या । इ॒ष्टाय॑ । श्रत् । द॒धते॒ । तत् । आ॒हुः । अतीति॑ । वै । ए॒ता । व॒र्त्रम् । नेद॒न्ति॒ । अतीति॑ । वाच॑म् । मन॑ । वाव । ए॒ता । न । अतीति॑ । नेद॒न्ति॒ । इति॑ ।

अपां प्रणयनं विधातुमाह—'यो वै' इत्यादि ॥ "श्रदन्तरोरुपसर्गवद्वृत्तिः" ( द्र काशिका पा ३ ३ १०६ ) इति दधाते "आतश्चोपसर्गे" ( पा ३ ३ १०६ ) इत्यङ् । अनारभ्य सनिधाप्य न श्रत् दधते देवा मनुष्याश्च । विशिष्टदेशमन्त्रकमपां साधनं[1] प्रणयनम् । 'श्रद्धा वा आप' इति शोधकत्वेन श्रद्धाजनकत्वात् । 'तदाहु' इत्यादि । वर्त्रं शरीरेन्द्रियवृत्तिः । एता आपस्तत् अति नेदन्ति अतिगच्छन्ति अतिव्याप्य वर्तन्ते । णिद णेद गता( त्या ? )दिषु* । वागिन्द्रियं च अति नेदन्ति, मनइन्द्रियं तु न अति नेदन्ति नातिवर्तन्ते ।

सप्तमे देवतापरिग्रहादिरुक्त । अष्टमे यज्ञायुधभृतिरुच्यते ॥

य इति ॥ तत्र प्रथमं तावदपां प्रणयनं विधातुं प्रस्तौति—'यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधते' इति ॥ यः यजमानः मनसि [1]देवतादिविषयां श्रद्धाम् असंनिधाप्य [2]यद्गुमुपुङ्क्ते तदीयमिष्टं [3]देवताः ऋत्विजश्च न विश्वसन्ति ॥

अप इति ॥ विधत्ते—'अपः प्र णयति श्रद्धा वा आपः श्रद्धामेवाऽऽरभ्य यज्ञेन यजत उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते' इति ॥ अपां श्रद्धाहेतुत्वमैतरेयिणः समामनन्ति—"आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे" ( ऐब्रा २ १ ७ ) इति । प्रत्यक्षं चैतत् स्नानाचमनादियुक्तस्य देवपूजादावैकाग्र्यातिशयदर्शनात् । अतोऽपां प्रणयनेन[4] श्रद्धाया उपस्थापितत्वात् देवानामृत्विजां चैतदीये यज्ञे विश्वासो युक्तः । यद्यपि पौरोडाशिककाण्डे ( तैब्रा ३ २ ४ ) अध्वर्युकर्तृकमिदं प्रणयनं [5]विहितं तथापि शाखाभेदाद्-पुनरुक्तिः । शाखाभेदश्चाऽऽपस्तम्बेन तत्रत्यमन्त्राणां ( आपश्रौ १ १६ ६ ) साकल्येनानुवादाद्विधिपुनरुक्ति-बाहुल्याच्चावगन्तव्य ॥

तदिति ॥ "पृथिवीं च मनसा ध्यायति" ( आपश्रौ १ १६ ७ ) इति सूत्रकारेण प्रणयनकाले ध्यानमुक्तम् । तदिदं विधातुं प्रस्तौति—'तदाहुरति वा एता वर्त्रं नेदन्त्यति वाचं मनो वावैता नाति

*( पा द्र १ ४ ५९ वा५, पा १ ४ ६५ वा १)। १ तं ति—°मन्त्रकमपां साधनम् । *[ द्र धातुपाठः ८७१, ८७२ 'णिद णेद कुत्सासंनिकर्षयो' । ] ।

१ उ—देवतापरिग्रहादिरुक्तविषयाम् । २ आ क—यद्दु प्रयुङ्क्ते । ३ आ क—देवाः । ४ क—'प्रणयनेन' इत्यस्यानन्तरम् 'एव' । ५ क—अभिहितम् ।

[६]मनसा प्र णयतीयं वै मनो(१)ऽनयैवैनाः प्र णयत्यस्कन्नहविर्भवति य एवं वेद यज्ञायुधानि सं भरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत् सं भरति यदेकमेकं संभरेत् पितृदेवत्यानि स्युर्यत् सह सर्वाणि मानुषाणि

मनसा । प्रेति । नयति । इयम् । वै । मनः ( १ ) । अनया । एव । एनाः । प्रेति । नयति । अस्कन्नहविरित्यस्कन्न–हविः । भवति । यः । एवम् । वेद । यज्ञायुधानीति यज्ञ–आयुधानि । समिति । भरति । यज्ञः । वै । यज्ञायुधानीति यज्ञ–आयुधानि । यज्ञम् । एव । तत् । समिति । भरति । यत् । एकमेकमित्येकम्–एकम् । संभरेदिति सम् -भरेत् । पितृदेवत्यानीति पितृ–देवत्यानि । स्युः । यत् । सह । सर्वाणि । मानुषाणि ।

तस्मात् Vमनसा Vप्र Vणयति इत्याहुः । ' इयं वै ' इत्यादि । मनसो व्यापकत्वात् । ' अस्कन्नहविः ' इति । पृथिव्यात्मना व्यापकेन मनसा धृतत्वादपाम् ॥

' यज्ञायुधानि ' इत्यादि ॥ तदधीनत्वात् यज्ञनिर्वृत्तेस्ताच्छब्द्यम् । एकैकप्रयोगे Vपितृदेवत्यानि पात्राणि Vस्युः । सर्वेषां Vसह प्रयोगे Vमानुषाणि स्युः । तस्मात् Vद्वेद्वे प्रयुनक्ति । द्वित्वान्वयात् याज्यानुवाक्यारूपलाभः । Vअथो अपि च । द्वित्वान्वयेन मिथुनत्वमेव संपद्यते ।

नेदस्मीति ' इति । Vतत् [६]तत्रापां प्रणयने केचिदभिज्ञा इति Vआहुः । किमिति ? Vएता आपः Vयत्र शरीरस्य वृत्तिम् Vअति Vनेदन्ति अतिक्रामन्ति, Vवाचम् अप्यतिक्रामन्ति, न खलु प्रवहन्तीनां नद्यादिगतानामपां निवारणं शरीरेण वाचा वा कर्तुं शक्यते । Vमनः एवैकम् Vएताः आपः Vन अतिक्रामन्तीति । [७]तदेतदुत्तरत्र स्पष्टीकरिष्यते ॥

मनसेति ॥ विधत्ते––' मनसा प्र णयति ' इति ॥ पृथिवी [८]ध्यायन्निति शेषः । ब्राह्मणान्तरम् ( मैसं १·४·१० ) अनुसृत्य सूत्रकारेण ( आपश्रौ १·१६·७ ) उक्तत्वात् ॥

इयमिति ॥ अनतिक्रमणमुपपादयति ' इयं वै मनोऽनयैवैनाः प्र णयति ' इति । मनसः पृथिवीवत् व्याप्तुं शक्यत्वात् पृथिवीत्वम् । न हि नद्यादिगता आपः पृथिव्या अतिक्रमणे शक्ताः ॥

अस्कन्नहविरिति ॥ मनसा प्रणयतस्य वेदनं प्रशंसति––' अस्कन्नहविर्भवति य एवं वेद ' इति ॥

यज्ञायुधानीति ॥ विधत्ते—' यज्ञायुधानि सं भरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत् सं भरति ' इति ॥ वक्ष्यमाणानि स्फ्यकपालादीनि यज्ञस्य साधनत्वादायुधानीत्युच्यन्ते । तान्यध्वर्युः संपादयेत् ॥ साध्यसाधनयोरभेदोपचारात् यज्ञस्यैव तदायुधत्वम् । Vतत् तेनाऽऽयुधसंपादनेन Vयज्ञम् Vएव संपादयति ॥

यदिति ॥ [१०]अत्राऽऽयुधानां प्रयोगत्रिविधः । एकैकस्य प्रयोगः, सर्वेषां सह प्रयोगो [११]द्वयोर्द्वयोः प्रयोगश्चेति । तत्र तृतीय [१२]विधानुमितरपक्षौ निन्दति––' यदेकमेकं संभरेत् पितृदेवत्यानि स्युर्यत् सह सर्वाणि मानुषाणि ' इति ॥ एतौ पैतृकमानुषपात्रप्रयोगौ गृह्यकारेण दर्शितौ–" द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दैवसंयुक्तानि । सकृदेव मनुष्यसंयुक्तानि । एकैकशः पितृसंयुक्तानि " ( आपगृ १·१६–१८ ) इति ॥

६. क.मै.ति.म ४–"तत् ? नास्ति । ७. ति–तदेवापाम् । ८. आ–तदुत्तरम । ९. क–ध्यायतीति ।
१०. तं.ति–तत्रा° । ११. ह.उ.पा–द्वयोः ।

द्वेद्वे सं भरति याज्यानुवाक्ययोरेव रूपं करोत्यथो मिथुनमेव यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते स्फ्य(२)श्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य एवं वेद मुखतोऽस्य यज्ञः कल्पते

द्वेद्वे इति द्वे द्वे । समिति । भरति । याज्यानुवाक्ययोरिति याज्या–अनुवाक्ययो । एव । रूपम् । करोति । अथो इति । मिथुनम् । एव । य । वै । दश । यज्ञायुधानीति यज्ञ–आयुधानि । वेद । मुखत । अस्य । यज्ञ । कल्पते । स्फ्य ( २ ) । च । कपालानि । च । अग्निहोत्रहवणीत्यग्निहोत्र–हवनी । च । शूर्पम् । च । कृष्णाजिनमिति कृष्ण–अजिनम् । च । शम्या । च । उलूखलम् । च । मुसलम् । च । दृषत् । च । उपला । च । एतानि । वै । दश । यज्ञायुधानीति यज्ञ-आयुधानि । यः । एवम् । वेद । मुखत । अस्य । यज्ञ । कल्पते ।

---

‘ यो वै दश ’ इत्यादि । स्फ्यादयो [v]दश । [v]यज्ञायुधानि यागारम्भे य [v]वेद, अस्य यज्ञारम्भ एव यज्ञ सपद्यते, तदात्मकत्वाद्यज्ञस्य । “ आद्यादिभ्यस्तसिः ” ( पा ५ ४ ४४ वा १ ) । कानि पुनस्तानीत्याह—[v]स्फ्य छेदनादिकृत्, [v]कपालानि हविरधिश्रयणार्थानि, [v]अग्निहोत्रहवणी हविर्निर्वपणाद्यर्था, [v]शूर्पं परावपनार्थम् । [v]कृष्णाजिन कृष्णमृगचर्म उलूखलाद्यधिकरण, [v]शम्या समाहननाद्यर्था । [v]उलूखलम् अवहन्तव्याधिकरण, [v]मुसलम् अवहननकृत्, [v]दृषत् पेषणाधिकरणम्, [v]उपला पेषणी ॥

---

द्वे द्वे इति ॥ विधत्ते—‘ द्वेद्वे सं भरति याज्यानुवाक्ययोरेव रूपं करोत्यथो मिथुनमेव ’ इति । द्वित्वसाम्येन याज्यानुवाक्यारूपत्वं स्त्रीपुरुषात्मकमिथुनत्वं च ॥

य इति ॥ संपादनीयानां यज्ञायुधानां [12]स्वरूपविशेषं विधातुं तद्वेदनं प्रशंसति—‘ यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते ’ इति ॥ [v]यः यजमान [v]मुखतः यज्ञारम्भे [v]दश एतानि संपादनीयानीत्यनुसंधत्ते [v]अस्य [v]यज्ञः निर्विघ्नेनानुष्ठानक्षमो भवति ॥

स्फ्य इति ॥ आयुधविशेषस्वरूपाणि विधत्ते—‘ स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य एवं वेद मुखतोऽस्य यज्ञः कल्पते ’ इति ॥ [v]स्फ्यः नाम बाहुमात्रः खड्गाकारः काष्ठविशेष । [v]कपालानि भाण्डलेशसंदंशानि[13] । अग्निहोत्रहवणीलक्षणं सूत्रकार आह—“ वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा । प्रसृताकृति ” ( आपश्रौ ६ ३.६–७ ) इति । [v]शम्या बाहुमात्री गदाकृतिः काष्ठविशेषः । शिष्टानि शूर्पादीनि लोकप्रसिद्धानि । पुनरपि दशायुधवेदनप्रशंसनमुपसंहारार्थम् । चकाराः परस्परसमुच्चयार्थाः

---

१२ म४–द्वन्द्वरूप° । १३ क–भग्ननूतनमृद्भाण्डलेशानि ।

यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यꣳ हविर्निरुप्यमाणमभि मन्त्रयेताग्निꣳ होतारमिह तꣳ हुव इति (३) देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यमेष वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते

यः । वै । देवेभ्यः । प्रतिप्रोच्येति प्रति-प्रोच्य । यज्ञेन । यजते । जुषन्ते । अस्य । देवाः । हव्यम् । हविः । निरुप्यमाणमिति निः-उप्यमानम् । अभीति । मन्त्रयेत । अग्निम् । होतारम् । इह । तम् । हुवे । इति (३) । देवेभ्यः । एव । प्रतिप्रोच्येति प्रति-प्रोच्य । यज्ञेन । यजते । जुषन्ते । अस्य । देवाः । हव्यम् । एषः । वै । यज्ञस्य । ग्रहः । गृहीत्वा । एव । यज्ञेन । यजते ।

---

अथ हविर्निर्वपणे कञ्चिद्विशेषमाह—' यो वै ' इत्यादि ॥ प्रतिप्रोच्य प्रख्याप्य जुषन्ते सेवन्ते अस्य हव्य देवाः । ' हविर्निरुप्यमाणम् ' इत्यादि । ' एष वै ' इत्यादि । एष मन्त्रः यज्ञस्य ग्रहः गृह्यतेऽनेन यज्ञ इति । तस्मात् गृहीत्वा एव यज्ञम् अनेनाभिमन्त्रणेन,

---

अनुक्तयज्ञायुधसमुच्चयार्थो वा । तानि सर्वाण्यापस्तम्बो दर्शयति—" उत्तरेण गार्हपत्याहवनीयौ दर्भान् सꣳस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि । स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि । ताम्युत्तरेणावशिष्टान्यन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणि " ( आपश्रौ १ १५ ६-८ ) इति ॥

य इति ॥ यजमानस्याभिमन्त्रणं विधातुं प्रस्तौति—' यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यम् ' इति ॥ प्रतिप्रोच्य होष्यामीति प्रतिश्रुत्य ॥

हविरिति ॥ विधत्ते—' हविर्निरुप्यमाणमभि मन्त्रयेताग्निꣳ होतारमिह तꣳ हुव इति देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यम् ' इति ॥ ' अग्निꣳ होतारम् ' इत्यादिमन्त्रः पूर्वप्रपाठके ' मम नाम ' ( तैसं १ ५ १० ) इत्यनुवाके समाम्नातो व्याख्यातश्च । देवानामाह्वातारं तम् अग्निम् इह यज्ञेऽहमाह्वयामि । " आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य " ( तैसं १ ५ १० ) इत्यस्मिन्नुत्तरार्धे देवेभ्यः प्रतिश्रवणं विस्पष्टम् । अस्य हविषो वियन्तु इदं हविरश्नन्त्वित्यर्थः ॥

एष इति ॥ इदमभिमन्त्रणं पुनः प्रशंसति—' एष वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते ' इति ॥ एषः मन्त्रप्रयोगः यज्ञस्वीकाररूपः । " हविषो वियन्तु " ( द्र तैसं १·५ १० ) इत्यनेन देवतामुद्दिश्य द्रव्यत्यागस्य सूचितत्वात् ॥

**तदुदित्वा वाचं यच्छति यज्ञस्य धृत्या अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं तनुते रक्षसामनन्ववचाराय यो वै यज्ञं योग आगते युनक्ति युङ्क्ते युञ्जानेषु**

तत् । उदित्वा । वाचम् । यच्छति । यज्ञस्य । धृत्यै । अथो इति । मनसा । वै । प्रजापतिरिति प्रजा–पतिः । यज्ञम् । अतनुत । मनसा । एव । तत् । यज्ञम् । तनुते । रक्षसाम् । अनन्ववचारायेत्यनन्–अवचाराय । यः । वै । यज्ञम् । योगे । आगत इत्या–गते । युनक्ति । युङ्क्ते । युञ्जानेषु ।

ततो यागमारभते । तत् उदित्वा तद्वचनानन्तरं वाचं यच्छति अवचनो भवति, यज्ञस्य धृत्यै गृहीतस्य यज्ञस्याविस्रसनाय । अथो अपि च प्रजापति इव मनसा एव अयं यज्ञं तनितुमर्हति किं वाचा । एवं हि क्रियमाणे रक्षसाम् अनन्ववचाराय अननुप्रवेशाय भवति ॥

अथ यज्ञयोगं विदधाति—' यो वै ' इत्यादि ॥ योगे यागकाले आगते यज्ञं यो युनक्ति बध्नाति, अयमेव युञ्जानेषु यजमानेषु मध्ये युङ्क्ते, युङ्क्त इति व्यपदेशमर्हति ।

तदिति ॥ यजमानस्य मौनं विधत्ते– ' तदुदित्वा वाचं यच्छति यज्ञस्य धृत्यै ' इति ॥ तत् अभिमन्त्रणवाक्यम्[14] । मौनेन यज्ञो बहिरप्रकाशितत्वात् धृतो भवति ॥

अथो इति ॥ पुनरपि मौनं प्रशंसति—' अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं तनुते रक्षसामनन्ववचाराय ' इति ॥ सति वाग्व्यापारे विवक्षितशब्दविशेषतदर्थचिन्तया तत्प्रसक्तानुप्रसक्तचिन्तया च विक्षिप्तं मनः प्रकृतायज्ञात् [15]स्खलति । अतः प्रजापतिः अविक्षेपाय मनसा एव यज्ञं तनुते । तथा सति स्खलनाभावात् रक्षसाम् अत्र प्रचारो न भवति ॥

य इति ॥ यज्ञयोगविधिमुन्नेतुं प्रस्तौति—' यो वै यज्ञं योग आगते युनक्ति युङ्क्ते युञ्जानेषु ' इति ॥ यः यजमानो यज्ञयोगकाले समागते सत्यप्रमत्तो यज्ञं युनक्ति स एव युञ्जानेषु यजमानेषु युङ्क्ते इति व्यपदेशमर्हति । अकाले तु योगः कृतोऽप्यकृत एव स्यात् ॥

क इति ॥ योगविध्युन्नयनमभिप्रेत्य तत्र करणभूतं मन्त्रमुदाहृत्य व्याचष्टे—' कस्त्वा युनक्ति स त्वा युनक्त्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते युञ्जानेषु ' इति ॥ अयमपि मन्त्रः पूर्वप्रपाठके समाम्नातः । यः प्रजापतिः सर्वदा सर्वेषां यजमानानां यज्ञं युनक्ति सः एवाद्य मदीयं यज्ञं युनक्तु रथे अश्वमिव[16] मयि यज्ञं संबध्नातु । अनेन मन्त्रेण यज्ञं युञ्ज्यात् इत्युन्नीतो विधिः ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

" द्रव्यस्य स्फ्यकपालादेः सांकर्यं वा व्यवस्थितिः ।
यज्ञायुधत्वं सर्वाङ्गसमं तेनात्र संकरः ॥
वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं संकरे सति ।
अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन[17] पूर्ववत् ॥ " ( जैन्या ३ १ ९–१० ) इति ॥

[14] क–' वाक्यम् ' इत्यस्यानन्तरम् ' उक्त्वा ' । [15] इ उ पा–चलति । [16] तै–अश्वस्यामीव, म४–अश्वमेव । [17] क म४–अनेन ।

[ यज्ञायुधधर्माः

कस्त्वा युनक्ति स त्वा युनक्त्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते युञ्जानेषु ॥ ८ ॥

[ वै मन स्फ्य इति युनक्त्वेकादश च ]

कः । त्वा । युनक्ति । सः । त्वा । युनक्तु । इति । आह । प्रजापतिरिति प्रजा–पतिः । वै कः । प्रजापतिनेति प्रजा–पतिना । एव । एनम् । युनक्ति । युङ्क्ते । युञ्जानेषु ॥ ८ ॥

[ मैसं १ ४ १०; कास ३२ ७, शब्रा १ १ १–१३, २२ ]

यद्वा—युञ्जानेषु आत्मानं योजयति । मन्त्रपदमिदानीं व्याचष्टे—' कस्त्वा ' इति । गत (तैस १ ५ १० ) ॥

॥ इति षष्ठेऽष्टमोऽनुवाकः ॥

दर्शपूर्णमासयोः श्रूयते—" स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि " ( तैसं १.६ ८ ) इति । स्फ्यशब्देन खड्गाकारं काष्ठमुच्यते । अग्निहोत्रहवणी [18]हविर्निर्वापसाधनं प्रसृताकार[18] काष्ठपात्रम् । शम्या गदाकारं काष्ठम् । तत्र व्रीह्यादिद्रव्येष्ववघातादिसंस्काराणां सांकर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु सांकर्यं निराकर्तुमशक्यम् । येन केनापि द्रव्येण यस्यां कस्यांचित् क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्याविरोधात् । न च [19] [20]व्यवस्थामात्रेण यज्ञसाधनत्वमुपैति[21] इति प्राप्ते ब्रूमः—' स्फ्येनोद्धन्ति ' ' कपालेषु श्रपयति ' ' अग्निहोत्रहवण्या हवींषि निर्वपति ' ' शूर्पेण विविनक्ति ' ' कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति ' ' शम्यायां दृषदमुपदधाति ' ' उलूखलमुसलाभ्यामवहन्ति ' ' दृषदुपलाभ्यां पिनष्टि ' इत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं सांकर्यपक्षे प्रसज्येत । व्यवस्थापक्षेऽपि संबन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकमिति चेत् । न । उद्धननादिवाक्यसिद्धार्थानुवादित्वात् । न च वैपरीत्येनोद्धननादिवाक्यानामेवानुवादित्वमिति वाच्यम् । बहुवैयर्थ्यस्य जघन्यत्वात् । न चात्यन्तं यज्ञायुधानुवादस्य[22] वैयर्थ्यम् । " यज्ञायुधानि संभरति " ( तैस १ ६ ८ ) इत्यासादनविधावुपयुक्तत्वात् । तस्मादवघातादिसंस्कारा इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि ॥

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा ।
आद्योऽप्राप्तेः पुरोडाशे समुच्चयविकल्पने ॥
साधमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते ।
स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः ॥ " ( जैन्या ४.१ १०–११ ) इति ॥

दर्शपूर्णमासयोः ' स्फ्यश्च कपालानि च ' इत्याद्युपक्रम्य ' एतानि वै दश यज्ञायुधानि ' ( तैस १ ६ ८ ) इत्याम्नातम् । तानि चात्र हविष्ट्वेन विधीयन्ते । कुतः ? मानान्तरैरप्राप्तत्वेनापूर्वार्थत्वात् । यदि तत्र पुरोडाशो हविर्भवेत्, तदा तेन [23]सहैतेषां समुच्चयो विकल्पो वाऽस्त्विति प्राप्ते ब्रूमः—' आग्नेयोऽ

18–18 आ–हविर्निर्वापसाधनम्, इ उ तं ति पा म४–निर्वापसाधनम् । 19 तं ति म४–हि ।
20 तिं म४–अवस्था॰ । 21 आ इ उ तिं पा म हा–॰त्वमपैति । 22 इ उ पा–॰नुवादनस्य ।
23 इ उ पा म४–सह तेषाम् ।

[युधप्रभृतिः ]

कपाल ' इत्युत्पत्तिशिष्टेन[24] पुरोडाशेन सह पश्चात् शिष्टानामायुधानां विकल्पः समुच्चयो वा न भवति। आयुधत्वं यज्ञसाधनत्वम्। तच्च ' स्फ्येनोद्धन्ति ' ' कपालेषु श्रपयति ' इत्यादिशास्त्रसिद्धमेवानूद्य[25] ' यज्ञायुधानि सं भरति ' इत्येष संभरणविधिः स्तूयते। तस्मान्नास्ति हविष्ट्वम् ॥

एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

" देशपात्रर्त्विजोऽन्यस्मिन् प्रयोगेऽन्य उतैच्छिकाः।
भुक्तपर्णवत्तेऽन्ये वासोवत्स्युरैच्छिकाः ॥ " ( जैन्या ११ ३ १४ ) इति ॥

' समे यजेत ' इत्युक्तो देशः। जुह्वादीनि पात्राणि। अध्वर्युप्रमुखा ऋत्विजः। ते चैकस्मिन् योग उपयुक्ता निरिष्टकत्वान्न प्रयोगान्तरमर्हन्ति। इष्टान्निर्गता निरिष्टाः। कुत्सिता निरिष्टा[26] निरिष्टकाः इाः पुनः प्रयोगानर्हा इत्यर्थः। यथा भोजन उपयुक्तं कदलीपलाशादिपर्णं प्रक्षाल्यापि न पुनः शिष्टास्तत् वीकुर्वन्ति तथाऽत्राप्यन्ये देशादयः प्रयोगान्तरे सपाद्या इति प्राप्ते ब्रूमः—यथा वस्त्रं पूर्वदिने प्रावरणाोपयुक्तमपि दिनान्तरे निरिष्टकं न भवति, शिष्टास्तद्वाऽन्यद्वा स्वेच्छया दिनान्तरे स्वीकुर्वन्ति, तद्वत्रापि द्रष्टव्यम्। इदं निरिष्टकमिदं नेत्यत्र शिष्टाचार एव प्रमाणम्। शिष्टाश्च देशादीन्नियमेन न त्यजन्ति। स्मादैच्छिकाः ॥

तत्रैवान्यच्चिन्तितम्—

" मा भूदन्यत्वनियमः पात्रे [27]तन्त्र किमैच्छिकम्।
नियतं वाऽग्रिमो देशवन्नैवं प्रतिपत्तितः ॥ " ( जैन्या ११ ३ १५ ) इति ॥

देशपात्रर्त्विजां साधारण्येनान्यत्वनियमे निवारिते सति पुनः पात्रेषु [28]नियमान्तरसदसद्भाव चिन्त्यते। प्रथमप्रयोगे यान्युपयुक्तानि[29] पात्राणि तान्येव प्रयोगान्तरेष्विति नियमो नास्त्युतास्तीति संशयः। यथा [30]देशे कर्तृषु च[30] त एवेति नियमो [31]नास्त्यैच्छिकत्वस्योक्तत्वात् तथा पात्रेष्वपीति[31] चेत्। नैवम्। आमरणं पात्राणां धारणीयत्वात्। " आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च " ( बौपितृमेध १ १० ) इति प्रतिपत्तिविधानेनाऽऽमरणं [32]धारणमेव गम्यते[32]। ननु पात्रैरिति तृतीयाया गुणभावाद् दाहार्थकर्मेदं न तु प्रतिपत्तिः। तथा सति पात्रान्तरैरपि दाहसिद्धेर्न धारणनियम इति चेत् नैवम्। ' [33]दक्षिणे पाणौ[33] जुहूमासादयति ' इति द्वितीयया प्रतिपाद्यत्वावगमात् पूर्वेषामेव धारणम्। तस्मात् सर्वेषु प्रयोगेषु पात्राणां [34]तन्त्रम् ॥

तत्रैवान्यच्चिन्तितम्—

" किं पौर्णमासीमारभ्य यद्वाऽऽधानमियं श्रुतिः।
प्रकृत्यर्थतयाऽऽद्यः स्यान्मरणानियमात्परः ॥ " ( जैन्या ११ ३ १६ ) इति ॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणमिति प्राप्ते ब्रूमः—आधानकाले पवमानेष्टिषु चोदकप्राप्तत्वात् पात्राण्याधानमारभ्य धारयितव्यानि। अन्यथाऽऽधानपौर्णमास्योर्मध्ये यजमानस्य कदाचित् [35]मरणे पात्राभावेन दाहाभावप्रसङ्गात्। तस्मादाधानमारभ्य धारणमित्ययं [36]परः पक्षोऽभ्युपगन्तव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

२४ तं—'त्तिविशिष्टेन। २५ इ उ पा—'वानूद्य। २६ क—' निरिष्टा ' नास्ति। २७ इ उ पा—तत्र, त ति म४—तत्त्वम्। २८ इ उ म४—नियमान्तर सद्भाव'। २९ त—यान्यप्रयुक्तानि, ति—यानि वाक्यप्रयुक्तानि। ३०–३० आ—देशकर्तृषु। ३१–३१ ति—नास्त्यैच्छिकत्वस्योक्तत्वात् तच्चापात्रेष्विति। ३२–३२ तं ति म४—धारणमवगम्यते। ३३–३३ पा—दक्षिणपाणौ; इ उ—दक्षिणपादौ ( ? )। ३४ क.त ति—तत्त्वम्। ३५ क—मरणे सति। ३६. क—अपर।

प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो

प्रजापतिरिति प्रजा–पतिः । यज्ञान् । असृजत । अग्निहोत्रमित्यग्नि–होत्रम् । च । अग्निष्टोमं स्तोमम् । च । पौर्णमासीमिति पौर्ण–मासीम् । च । उक्थ्यम् । च । अमावास्यामित्यमा– च । अतिरात्रमित्यति–रात्रम् । च । तान् । उदिति । अमिमीत । यावत् । अग्निहोत्र होत्रम् । आसीत् । तावान् । अग्निष्टोम इत्यग्नि–स्तोम । यावती । पौर्णमासीति पौर्ण- तावान् । उक्थ्यः । यावती । अमावास्येत्यमा–वास्या । तावान् । अतिरात्र इत्यति–र

---

अथ दर्शपूर्णमासयोर्महाफलत्वं ख्यापयितुमाह—'प्रजापति' इत्यादि ॥ व्याख्यातम् ( तैस १ ५ ९ ) । अग्निष्टोम एकाहानां प्रकृतिभूतं कर्म । अग्ने स्तोम' या सामाग्निष्टोम, तत्प्रधानत्वात् तत्संस्थमपि कर्माग्निष्टोम उच्यते । "अग्ने स्तुत्स्तोमस ( पा ८ ३ ८२ ) इति षत्वम् । पूर्णश्चन्द्र पूर्णमाः, तत्संबन्धिनी तिथि शुक्लपञ्चदशी पौ तस्यां क्रियमाणमपि कर्माभेदेन पौर्णमासीत्युच्यते । उक्थ्य क्रतु' अग्निष्टोमविकार पञ्चदश अमा सह सूर्याचन्द्रमसावस्यां वसत इति अमावास्या । "अमावस्यदन्यतरस्याम्" ३ १ १२२ ) इति निपात्यते । कृष्णपञ्चदशी उच्यते । पूर्ववत् कर्मण्यभेदेन वर्तते । रात्रोऽप्यग्निष्टोमविकार, एकोनत्रिंशत्स्तोत्र', रात्रिपर्यायातिरेकादतिरात्र । "अह सं

---

अष्टमे यज्ञायुधसंभृतिरुक्ता । नवमे द्वादशकृम्भसपत्तिरुच्यते ।

प्रजापतिरिति ॥ प्रथमं तावदनुष्ठातॄणां फलाधिक्याय वेदनविशेषविधिमुन्नेतुं प्रस्तौ 'प्रजापतिर्यज्ञानसृजताग्निहोत्र चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुद यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रः' [१]अग्न्यग्निहोत्रपौर्णमास्यमावास्यायागा अल्पैर्द्रव्यमन्त्रक्रियाविशेषैः साध्या अत एवाल्पफलाः । अग्नि क्थ्यातिरात्रयागा बहुभिर्द्रव्यमन्त्रक्रियाविशेषैः साध्या अत एवाधिकफलाः । [४]तान् उभयविधान् [४]प्रजापतिः सृष्ट्वा कनिष्ठपुत्रे पितेव कनीयःसु अग्निहोत्रादिषु अनुग्रहेण तुल्या त्रीणि कुम्भानि उ यान् । तदनुग्रहादग्निहोत्रादीनि अग्निष्टोमादिसमानि संपन्नानि ॥

---

१ तै ति–'स्तोमः ।

---

१ म४–अत अग्नि', तै.ति–तत्राग्नि' ।

य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति ( १ ) तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति

य । एवम् । विद्वान् । अग्निहोत्रमित्यग्नि–होत्रम् । जुहोति । यावत् । अग्निष्टोमेनेत्यग्नि–स्तोमेन । उपाप्नोतीत्युप–आप्नोति । तावत् । उपेति । आप्नोति । य । एवम् । विद्वान् । पौर्णमासीमिति पौर्ण–मासीम् । यजते । यावत् । उक्थ्येन । उपाप्नोतीत्युप–आप्नोति ( १ ) । तावत् । उपेति । आप्नोति । य । एवम् । विद्वान् । अमावास्यामित्यमा–वास्याम् । यजते । यावत् । अतिरात्रेणेत्यति–रात्रेण । उपाप्नोतीत्युप–आप्नोति । तावत् । उपेति । आप्नोति ।

---

( पा ५ ४ ८७ ) इत्यच् समासान्तः । 'तान्' इत्यादि । ऊर्ध्वमानमुन्मानं तुलापरिच्छेदः । तत्राग्निहोत्रादिभिस्तुल्यगौरवात् अग्निष्टोमादयो दृश्यन्ते । तस्मादेव विदित्वाग्निहोत्रादिकं कुर्वन् अग्निष्टोमादिफलमाप्नोति । प्रासङ्गिकमग्निहोत्रग्रहणम्, उन्मानेन सहभावात् ॥

---

य इति ॥ वेदनविशेषविधिमुन्नयति—'य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति' इति ॥ प्रजापत्यनुग्रहादग्निहोत्रादीनामग्निष्टोमादिसाम्यं जानतः [२]तत्समानफलत्वकथनात् फलाधिक्यायानुष्ठातृभिरग्निष्टोमादिसाम्यं भावयेदिति विधिरुन्नीयते । विद्यया युक्तस्य कर्मणः फलाधिक्यं छन्दोगा आमनन्ति—" यदेव विद्यया करोति । तदेव वीर्यवत्तरं भवति " ( छाउ १ १ १० ) इति । लोकेऽपि राज्ञा ग्रामेषु प्रेरिते राजमुद्राधारिणि नीचे कस्मिंश्चिद्भृत्ये राजत्वमुपचरन्तीनां प्रजानां भृत्यचित्तप्रसादेन फलाधिक्यमुपलभामहे । काण्वैश्च बृहदारण्यकस्य पञ्चमाध्याये कानिचिदुपासनानि—" अथ संपदः " ( बृउ ३ १ ६ ) इति वाक्येनाऽऽम्नायन्ते । स्वल्पे कर्मण्यधिककर्मत्वस्य मनसा संपादनं संपत् । एतदेवाभिप्रेत्य सर्वेषु स्मृतिपुराणागमेषु शालग्रामप्रतिमादौ विष्ण्वादिबुद्धिर्विहिता । तस्मादेतद्वाक्यमग्निहोत्रादावग्निष्टोमादिसंपादनविधिपरम् । यद्यपि पूर्वमीमांसायां द्वितीयाध्याये ( मीसू २ २ ३–८ ) 'एवं विद्वान् पौर्णमासीं यजते' इत्यस्य विद्वद्वाक्यस्य विधायकत्वं निराकृत्यानुवादकत्वमुक्तं तथापि कर्मविधेरेव तत्र निराकरणात् [३]संपद्विध्युन्नीतौ न कोऽपि विरोधः । भावनाविधिपरत्वे वाक्यमेतत् कर्मप्रकरणादुत्कृष्येतेति चेत् । उत्कृष्यतां नाम । अग्निचयनप्रकरणपठितानां मनश्चिदाद्युपास्तीनां प्रकरणोत्कर्षस्य व्यासेनैव निर्णीतत्वात् ( ब्रसू ३ ३ ४४ ) । अन्यपरत्वात्स्तुत्यर्थत्वात् दर्शपूर्णमासौ प्रशंसितुमत्र पाठोऽस्तु ॥

---

२ आ–समान° । ३ आ–संपद्वुद्ध्यु° ।

परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छत् तेन प्रजापतिं निरवासाययत् तेन प्रजापतिः परमां काष्ठामगच्छत् तेनेन्द्रं निरवासाययत्तेनेन्द्रः परमां काष्ठामगच्छत् तेनाग्नीषोमौ निरवासाययत्तेनाग्नीषोमौ परमां काष्ठामगच्छतां य (२) एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति

परमेष्ठिनः । वै । एषः । यज्ञः । अग्रे । आसीत् । तेन । सः । परमाम् । काष्ठाम् । अगच्छत् । तेन । प्रजापतिमिति प्रजा--पतिम् । निरवासाययदिति निः--अवासाययत् । तेन । प्रजापतिरिति प्रजा--पतिः । परमाम् । काष्ठाम् । अगच्छत् । तेन । इन्द्रम् । निरवासाययदिति निः--अवासाययत् । तेन । इन्द्रः । परमाम् । काष्ठाम् । अगच्छत् । तेन । अग्नीषोमावित्यग्नी--सोमौ । निरवासाययदिति निः--अवासाययत् । तेन । अग्नीषोमावित्यग्नी--सोमौ । परमाम् । काष्ठाम् । अगच्छताम् । यः (२) । एवम् । विद्वान् । दर्शपूर्णमासाविति दर्श--पूर्णमासौ । यजते । परमाम् । एव । काष्ठाम् । गच्छति ।

पुनरपि दर्शपूर्णमासयोः स्तुतिः --' परमेष्ठिनः ' इत्यादि ॥ परमे महिम्नि तिष्ठति इति परमेष्ठी । उणादिषु निपात्यते ( उ ४५९ ) । सर्वदेवतासमष्टिः परमात्मोच्यते । तस्य vएषः vयज्ञः दर्शश्च पूर्णमासश्च vअग्रे आदौ vआसीत् । vतेन vसः vपरमां vकाष्ठां परमैश्वर्यकाष्ठाम् vअगच्छत् । vतेन यज्ञेन स परमेष्ठी vप्रजापतिं जगतां स्रष्टारं vनिरवासाययत् देवतान्तरेभ्यो

**परमेष्ठिन इति** ॥ पुनरपि दर्शपूर्णमासौ प्रशंसति--' परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् तेन स परमां काष्ठामगच्छत् तेन प्रजापतिं निरवासाययत् तेन प्रजापतिः परमां काष्ठामगच्छत् तेनेन्द्रं निरवासाययत् तेनेन्द्रः परमां काष्ठामगच्छत् तेनाग्नीषोमौ निरवासाययत् तेनाग्नीषोमौ परमां काष्ठामगच्छतां य एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति ' इति ॥ परमे पदे सत्यलोके तिष्ठतीति परमेष्ठी चतुर्मुखः । तस्य च vअग्रे पूर्वस्मिन् कल्पे यजमानत्वेनावस्थितस्य vएषः vयज्ञः[४] दर्शपूर्णमासयज्ञः प्रवृत्तः । vतेन चेश्वरार्पणबुद्ध्याऽनुष्ठितेन vसः यजमानः vपरमां vकाष्ठाम् इदं परमेष्ठित्वपदं प्राप्तवान् । प्रजापतिर्दक्षादिः । तं पूर्वस्मिन् जन्मनि vतेन उत्तमफलहेतुदर्शपूर्णमासोपदेशेन vनिरवासाययत् तोषितवान्, अनुष्ठानाय प्रेरितवान् वा । स च तस्मिन् जन्मनि यजमानः vतेन अनुष्ठानेन vपरमां vकाष्ठां दक्षत्वपदं प्राप्तवान् । एवमितरत्र योज्यम् । अत एव दर्शपूर्णमासयोः स्वर्गकामार्थत्वमाम्नातं मीमांसकैर्विचारितं च ॥

४. क.तं.ति.म४--' यज्ञः ' नास्ति ।

यो वै प्रजातेन यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते द्वादश मासाः संवत्सरो द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्याहुर्वत्सं चोपावसृजत्युखां चाधि श्रयत्यव च हन्ति

य । वै । प्रजातेनेति प्र–जातेन । यज्ञेन । यजते । प्रेति । प्रजयेति प्र–जया । पशुभिरिति पशु–भि । मिथुनै । जायते । द्वादश । मासा । संवत्सर इति सम्–वत्सर । द्वादश । द्वन्द्वानीति द्वम्–द्वानि । दर्शपूर्णमासयोरिति दर्श–पूर्णमासयो । तानि । संपाद्यानीति सम्–पाद्यानि । इति । आहुः । वत्सम् । च । उपावसृजतीत्युप-अवसृजति । उखाम । च । अधीति । श्रयति । अवेति । च । हन्ति ।

व्यावृत्तमुत्कर्षिणमकरोत् । निरवसानमुत्कर्ष । यथा—“तस्माज्ज्येष्ठ पुत्र धनेन निरवसाययन्ति” (तैस २ ५.२ ) इति । निरवपूर्वात् स्यतेर्णिचि “ शाछासाह्वा ” ( पा ७ ३ ३७ ) इति युक् । गतिद्वयमप्याख्यातेन समस्यते । “ गतिर्गतौ ” ( पा ८ १ ७० ) इति प्रथमोऽनुदात्त । “ उदात्तवता च तिङा सह ” ( द्र पाभा २ २ १८ वा ४ ) इति समा स[M] । एवं सर्वत्र । या प्राणिनां सदा निरतिशयानन्दनिर्वृत्तिदायिनी शाश्वती पुनर्जन्मच्छेदिनी सा परमा काष्ठा तां गच्छति प्राप्नोत्येव । ‘ यो वै ’ इत्यादि । प्रजातो जातप्रज. । यथा संवत्सरस्य [V]द्वादश [V]द्वन्द्वानि [V]दर्शपूर्णमासयो सन्ति, [1-V]तानि [V]संपाद्यानि[-1] क्रियाविशेषैः [V]इति [V]आहुः । द्वेद्वे संयुक्ते द्वन्द्व यज्ञपात्रप्रयोगे निपात्यते ( पा ८ १ १५ ) ॥

अथ तानि दर्शयति—‘ वत्स च ’ इत्यादि ॥ एतै क्रियाविशेषै द्वन्द्वानि संपद्यन्ते, तेन द्वन्द्वबहुत्वेऽपि द्वन्द्वसंपादनक्रियापेक्ष द्वादशत्व वेदितव्यम् । [V]वत्सम् [V]उपावसृजति मातृ-सकाश प्रापयति । अनेनोपावसर्जनेन मातृवत्सयोः द्वन्द्वभाव संपद्यते । एव सर्वत्र द्रष्टव्यम् ।

य इति ॥ [V]द्वन्द्वसंपादन विधातुं प्रस्तौति—‘ यो वै प्रजातेन यज्ञेन यजते प्र प्रजया पशुभि-र्मिथुनैर्जायते द्वादश मासाः संवत्सरो द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्याहुः ’ इति । [V]प्रजातेन अत्यन्तविस्तृतेन प्रजादिभिः प्रसृतो विस्तृतो जायते । द्वादशमासोपेतसंवत्सरसाम्येन द्वादशद्वन्द्वोपेतस्य यज्ञस्य प्रसृतत्वम् ॥

वत्समिति ॥ द्वन्द्वानि विधत्ते—‘ वत्सं चोपावसृजत्युखां चाधि श्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोप दधाति पुरोडाशं चाधिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च सं नह्यति प्रोक्षणीश्चासादयत्याज्यं च ’ इति ॥ गां दोग्धुमध्वर्युः “ अयक्ष्मा वः प्रजया ” ( तैब्रा ३ ७ ४ ) इति मन्त्रेण [V]वत्सं बन्धनात् मुञ्चेत् । क्षीरं अपयितु “ मातरिश्वनो घर्मः ”

[M][ शुद्धीकृतः पाठः । लिखितपुस्तकेषु ‘ समासनिषेधः ’ इत्येवमुपलभ्यते । मै-मुद्रित पुस्तके ‘ समास ( निषेधः ) ’ इत्येवंरूपेण प्रदर्शितः । ] । २–२ तं–सनिहितानि ।

५ इ.उ पा–द्रव्यसंपादनम् ।

दृषदौ च समाहन्त्यधि च वपते कपालानि चोप दधाति पुरोडाशं चा(३)धिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च सं नह्यति प्रोक्षणीश्चासादयत्याज्यं

दृषदौ । च । समाहन्तीति सम्–आहन्ति । अधीति । च । वपते । कपालानि । च । उपेति । दधाति । पुरोडाशम् । च (३) । अधिश्रयतीत्यधि–श्रयति । आज्यम् । च । स्तम्बयजुरिति स्तम्ब–यजुः । च । हरति । अभीति । च । गृह्णाति । वेदिम् । च । परिगृह्णातीति परि–गृह्णाति । पत्नीम् । च । समिति । नह्यति । प्रोक्षणीरिति प्र–उक्षणीः । च । आसादयतीत्या–सादयति । आज्यम् ।

---

एतानि याजमानप्रकरणगतान्यपि अध्वर्युणैव कर्तव्यानि । उक्तं च—“ याजमाने समाख्यानात् कर्माणि याजमानं स्युः ” ( मीसू ३ ८ १९ ) इत्यत्र । Vउखाम् Vअधि Vश्रयति, अङ्गारेषु कुम्भीं स्थापयति । Vअव Vहन्ति व्रीहीनुलूखले । Vदृषदौ Vच Vसमाहन्ति शम्यया । अधिवपति दृषदि तण्डुलान् । Vकपालानि Vउप Vदधाति अङ्गारेषु । Vपुरोडाशं Vच Vअधि Vश्रयति कपालेषु । Vआज्यं Vच अधिश्रयतीत्येव । Vस्तम्बयजुः Vहरति । सतृणं पुरीषम् Vअभिगृह्णाति न्युप्तमञ्जलिनाग्नीध्रः । Vवेदिं Vपरिगृह्णाति स्फ्येनोत्तरं परिग्राहम् । Vपत्नीं Vसं Vनह्यति योक्त्रेण । Vप्रोक्षणीः अपः Vआसादयति । Vआज्यं Vच अवसादयतीत्येव, स्रुग्गृहीतमित्यर्थः ॥

---

( तैसं १ १ ३ ) इति मन्त्रेण Vउखां गार्हपत्ये स्थापयेत् । “ अव रक्षो दिवः ” ( द्र आपश्रौ १ १९ १० ) इति शाखान्तरमन्त्रेण व्रीहीनवहन्यात् । “ इषमा वद ” ( तैसं १ १ ५ ) इति मन्त्रेण पाषाणेन शम्यया वा पेषणार्थे[६] दृषदुपले समाहन्यात् । “ देवस्य त्वा ” ( तैसं १ १ ६ ) इत्यादिमन्त्रेण पेषणाय दृषदि तण्डुलानधिवपेत् । “ ध्रुवमसि ” ( तैसं १ १ ७ ) इत्यादिभिर्मन्त्रैः पुरोडाशश्रपणायाग्नौ Vकपालानि उपदध्यात् । “ घर्मोऽसि ” ( तैसं १ १ ८ ) इति मन्त्रेण तेषु कपालेषु Vपुरोडाशम् अधिश्रयेत् । “ अग्निस्ते तेजः ” ( तैसं १ १ १० ) इति मन्त्रेण Vआज्यम् आहवनीयेऽधिश्रयेत् । चिकीर्षितवेदिस्थाने “ पृथिवि देवयजनि ” ( तैसं १ १ ९ ) इत्यादिभिर्मन्त्रैः Vस्तम्बयजुः हरेत् । “ अररुस्ते दिवम् ” ( तैसं १ १ ९ ) इति मन्त्रेणाग्नीध्रोऽञ्जलिना सतृणपांसूनुत्करे प्रक्षिप्तानभिगृह्णीयात् । “ वसवस्त्वा परिगृह्णन्तु ” ( तैसं १ १ ९ ) इत्यादिभिर्मन्त्रैः Vवेदिं परिगृह्णीयात् । “ आशासाना ” ( तैसं १ १ १० ) इति मन्त्रेण योक्त्रेण Vपत्नीं सनह्येत् । “ कृतसधस्थ ” ( द्र आपश्रौ २ ३ १२ ) इति शाखान्तरमन्त्रेण स्फ्यनिष्पादितायां लेखायां Vप्रोक्षणीः आसादयेत् । “ अग्नेर्जिह्वाऽसि ” ( तैसं १ १ १० ) इति मन्त्रेण स्फ्यलेखायाम् Vआज्यं सादयेत् ॥

---

६ आ–पेषणार्थम्, क–पेषण°; म४–पेषणम् ।

चैतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवꣳ संपाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते ॥ ९ ॥

[ उक्थ्येनोपाप्नोत्यगच्छता य पुरोडाशं च चत्वारिꣳशच्च ]

च । एतानि । वै । द्वादश । द्वन्द्वानीति द्वम्–द्वानि । दर्शपूर्णमासयोरिति दर्श–पूर्णमासयोः । तानि । य । एवम् । संपाद्येति सम् पाद्य । यजते । प्रजातेनेति प्र–जातेन । एव । यज्ञेन । यजते । प्रेति । प्रजयेति प्र -जया । पशुभिरिति पशु- भि । मिथुनै । जायते ॥ ९ ॥

---

'एतानि वै' इत्यादि ॥ गतम् ( तैस १ ६ ९ ) ॥

इति षष्ठे नवमोऽनुवाक ॥

---

एतानीति ॥ विहितानि द्वन्द्वानि प्रशस्योपसंहरति—'एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवꣳ संपाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते' इति ॥ यद्यप्युक्तानां वत्सविमोकादीनां चतुर्दशत्वात् सप्तैवैतानि द्वन्द्वानि तथाऽपि चकारैः पूर्वानुवाकोक्तेषु दशसु यज्ञायुधेषु समुच्चितेषु द्वादश संपद्यन्ते ॥

अथ मीमांसा ॥ द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" एवं विद्वान् पौर्णमासीममावास्यामितीरितम् ।
कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥
कर्मान्तरं स्यादभ्यासाद्‌[7]द्रौव्यं[8] द्रव्य हि देवता ।
याग्नेच्छीत्यादितो लभ्याऽनुवादस्तु न युज्यते ॥
याग्नेच्छीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता ।
पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा[8] ॥
[9]अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् ।
सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥
विद्वद्वाक्ये [10]विधौ विध्यावृत्तिराग्नेयआदिना[11] ।
विहितस्य फलित्वेन [12]प्राधान्यमितरे गुणाः ॥" ( जैन्या २ २ ९–१० ) इति ॥

इदमाम्नायते—'य एवं विद्वान् पौर्णमासीं यजते' (तैस १ ६ ९), 'य एवं विद्वानमावास्यां यजते' (तैसं १ ६ ९) इति । अत्र यजतिना [13]कर्मान्तर विधीयते[13] न तु प्रकृता आग्नेयादयः षट् यागा अनूद्यन्ते । आग्नेयादयः कालसंयुक्तास्तत्प्रकरण एवाम्नाताः । "यदाग्नेयोऽष्टाकपालो अमावास्याया च पौर्णमास्यां चाच्युतो भवति" ( तैसं २·६ ३ ) इति । "तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजति" इति । "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" (तैस २ ५ २ ) इति । "ऐन्द्रं दध्यमावास्यायाम्' ( तैस २·५ ४ ) इति । "ऐन्द्रं पयोऽमावास्यायाम्" इति च ।[14]एतेभ्य प्रकृतेभ्यः

---

७ म४–स्यादन्यासा द्रौन (?) । ८ ति–यथा । ९ ति–समेत्यपि । १० क–पृथक् । ११. ति–आग्नेयकादिना । १२ क–प्राधा यादितरे । १३–१३ ति–कर्मान्तराणि विधीयन्ते । १४ ति–तेभ्य ।

षट्स्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य कर्मणोऽन्यत्वे सति पूर्वाधिकरणन्यायेन विध्यभ्यास उपपद्यते। न च कर्मान्तरत्वे द्रव्यदेवतयोरभावो ध्रौवादिसद्भावात् ।

अत एवोक्तम्--" ध्रौव साधारण द्रव्य देवता मान्त्रवर्णिकी । रूपवन्तौ ततो यागौ विधीयेते पृथक्तया " इति । " सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम् " (तैब्रा ३ ३ ५) इति ध्रौवस्य साधारणत्वं श्रुतम् । देवताया मान्त्रवर्णिकत्वमित्थमुन्नेतव्यम्— " तस्माद्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम् " (तैसं २ ५ २) इति । वार्त्रघ्न्यौ वृधन्वत्यौ चर्चौ क्रमेण कालद्वयोपेते विधीयेते । तत्र " अग्निर्वृत्राणि जङ्घनत् " (तैस ४ ३ १३) इत्येको वार्त्रघ्नो मन्त्रः । " त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा " (तैस ४ ३ १३) इत्यपरः । तयोरुक्तावग्नीषोमौ पौर्णमासदेवता । एवमनन्तराम्नातयोर्वृधिधातुयुक्तयोर्मन्त्रयोरुक्तावग्नीषोमावमावास्यादेवता । ताभ्यां द्रव्यदेवताभ्यां रूपवत्त्वात् यागान्तरमत्र विधीयते । षड्यागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्यचिददर्शनाद्विद्वद्वाक्यमनर्थकं स्यात् न केवल तदानर्थक्यं[15] किं तु ' पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत ' इत्येतदपि व्यर्थं स्यात् । न चैतत् कालविधायकं, " यदाग्नेयः " (तैस २ ६ ३) इत्याद्युत्पत्तिवाक्यैरेव तद्विधानात् कर्मान्तरत्वे तु काल विधास्यति । तस्मात् कर्मान्तरविधिरिति प्राप्ते ब्रूमः— आस्तां तावद्द्रव्यम् , देवता विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते । [16]वार्त्रघ्नोर्वृधन्वत्योश्चाज्यभागदेवताप्रतिपादकत्वात् द्वात्र मन्त्रकाण्डे सामिधेनीरावाहननिगदप्रयाजमन्त्रांश्चाम्नाय प्रयाजानन्तरभाविनोराज्यभागयोः[17] क्रमेण वार्त्रघ्न्यौ वृधन्वत्यौ चाम्नाते । लिङ्ग चाग्निविषय सोमविषयं च तत्रोपलभ्यते[18] । ततो लिङ्गक्रमाभ्यामाज्यभागविषयत्वमवगम्यते । यत्तु " वार्त्रघ्नी पूर्णमासे " (तैसं २ ५ २) इत्यादिवाक्य तल्लिङ्गक्रमक्लृप्तयोराज्यभागाङ्गयोर्मन्त्रयुगलयोः कालद्वय व्यवस्थामाचष्टे, न तु नूतनकर्माङ्गतां तयोर्विदधाति । अत रूपराहित्यात् विद्वद्वाक्य कर्मान्तरविधायक न भवति । किं तर्हि[19] ? पूर्वप्रकृतेष्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुवदति । न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानुवादानुपपत्तिः [20]तत्तत्कालविहितयोर्यागत्रिकयोरुपलक्षितत्वात् । न चानुवादो व्यर्थ । समुदायद्वित्वसिद्धेस्तत्प्रयोजनत्वात् तत्सिद्धौ च[21] ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' [22]इत्यस्मिन् फलवाक्ये षड्यागविवक्षया द्विवचन निर्देश उपपद्यते । यदप्युक्तमनुवादपक्षे ' पौर्णमास्याम् ' इत्यादि वाक्यवैयर्थ्यमिति तदयुक्तम् ; कालविधानासम्भवेऽप्येकैकस्य त्रिकस्य सहप्रयोगविधानात् । आग्नेयोपांशुयाजाग्नीषोमीयाणां त्रयाणां पौर्णमासीकालविहितानां सह प्रयोगः ' पौर्णमास्या ' इत्यनेन तृतीयैकवचनान्तेन विधीयते । एवमितरत्रापि ननु विद्वद्वाक्यस्य कर्मान्तरविधायकत्वाभावेऽपि नानुवादकत्वम् , तस्य यागविधायकत्वाभ्युपगमात् " आग्नेयोऽष्टाकपालः " (तैसं २·६ ३) इत्यादिवाक्यानि तु [23]विहितयागानुवादेन द्रव्यदेवतालक्षणगुणविधायकानीति चेत् । न । तथा सत्येकेन वाक्येनानेकगुणविध्यसंभवात् । प्रतिगुण पृथग्विधौ विध्यावृत्ति प्रसज्येत आग्नेयादिवाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नास्ति विध्यावृत्तिदोषः । तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्यमनुवादकम् । किं चानुवादमनभ्युपगम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्रधानभावो न सिध्येत् । तथा हि–" समिधो यजति " (तैस २ ६·१) " आघारमाघारयति " (तैसं २ ५ ११ इत्यादयः कालयोगरहिताः केचित् विधय आम्नाताः । " यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां च ' (तैसं २ ६ ३) इत्यादयः कालयुक्ता अपरे। तेषामुभयेषां प्रकृतत्वात् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति वाक्येन सर्वेषां फलसम्बन्धो बोधनीयः । ' दर्शपूर्णमासाभ्याम् ' इति द्विवचनं बहुवचनत्वेन परिणेतव्यम् । विद्वद्वाक्यविहिते द्वे कर्मान्तरे प्रयाजादय आग्नेयादयश्चेत्येतेषु द्वित्वासंभवात् । सर्वेषां च फलसंब

१५ तं–तदनर्थकम् । १६, क°–वार्त्रघ्नीवृध° । १७, क–भागदेवतयोः । १८ म४–°लक्ष्यते १९ इ उ पा–' तर्हि ' इत्यस्यानन्तरं ' ते ' । २० आ म४–तत्काल° । २१ इ उ पा–चेत् । २२ तैति–इत्येतस्मिन् । २३ इ उ पा–' विहित° ' नास्ति ।

द्वादशद्वन्द्वसंपत्तिः ]

राजसूयगतेष्टिपशुसोमवत् समप्राधान्यात् प्रयाजादीनां गुणभावो न स्यात्। तदभावे चानङ्गत्वात् [24]सौर्यादिविकृतिष्वाग्नेयादीनामिवातिदेशो न स्यात्। अनुवादपक्षे तु त्रिकयोः कालयोगेन दर्शपूर्णमासशब्दार्हत्वात् समुदायद्वित्वेन द्विवचनार्हत्वाच्चाऽऽग्नेयादीनामेव फलसंबन्धेन प्राधान्यम्। प्रयाजादीनां तु गुणभाव इति न कोऽपि दोषः। तस्माद्विद्वद्वाक्यमनुवादकम्॥

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्–

" दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः।
[25]अङ्गोपाङ्गोदितः कामो विध्यभावादनूद्यते॥
उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने।
फलसंयोगबोधेन भवेदेष फले विधिः॥" (जैन्या ४·३·१२–१३)॥

इदमाम्नायते— " एकस्मै वा अन्या इष्टयः कामायाऽऽह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ " इति, " एकस्मै वा अन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः " इति। तत्र ' सर्वेभ्यः ' [26]इत्यनेन वाक्येन दर्शपूर्णमासयोर्न फले विधिः। विधायकस्य लिङादेर्भावनावाचिन आख्यातस्य चाभावात्। अनुवादस्तु भविष्यति, सर्वकामानां प्राप्तत्वात्। न च ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति विधानात् स्वर्ग एव प्राप्तो न तु कामान्तरमिति वाच्यम्। अङ्गोपाङ्गकामानामपि प्राप्तत्वात्। सामिधेन्यो दर्शपूर्णमासयोरङ्गम्। तत्र कामाः श्रूयन्ते—" एकविꣳशतिमनुब्रूयात् प्रतिष्ठाकामस्य ... चतुर्विꣳशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य" (तैसं २·५·१०) इति। तथा सांनाय्ययागस्य दोहनमङ्गम्। तत्साधनं वत्सापाकरणमुपाङ्गम्, तत्र पलाशशाखाहरणे काम आम्नातः—"यं कामयेत पशुमान्त्स्यादिति। बहुपर्णां तस्मै बहुशाखामाहरेत्। पशुमन्तमेवैनं करोति " (आपश्रौ १·१·९) इति [27]त एते सर्वे कामा[27] अनूद्यन्त इति प्राप्ते ब्रूमः— मा भूतामस्मिन् वाक्ये विधिभावने। तथाऽप्युत्पत्तिवाक्यसिद्धे ते आश्रित्य तादर्थ्यवाचिन्या चतुर्थ्या फलसंयोगो बोध्यते। तस्मादेष[28] फले विधिः॥

तृतीयाध्यायस्याष्टमे पादे चिन्तितम्–

" वत्सं चोपसृजेत् तद्वदुखां चाधिश्रयेदिति।
द्वादशद्वन्द्वकर्मैतत् स्वामिनो वेतरस्य वा॥
आद्यः पाठात् स्वामिकाण्डे तादर्थ्येन परिक्रयात्।
महाकाण्डोक्तितोऽन्योऽस्तु[29] द्वन्द्वतैवात्र कीर्त्यते॥" (जैन्या ३·८·१४–१५)

दर्शपूर्णमासयोर्याजमानकाण्डे श्रूयते—' द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्याहुर्वत्सं चोपावसृजत्युखां चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्ति ' (तैसं १·६·९) इत्यादि। तत्र गां दोग्धुं वत्सोपसर्जनमेकं कर्म, दोहनेन संपादितं क्षीरं धारयितुं पिठरस्थापनमपरं कर्म। तदेतदुभयमेकं द्वन्द्वम्। तथा व्रीहीणामवघातः, दृषदुपलयोः पाषाणान्तरेण समाघात इत्येतदुभयं द्वितीयं द्वन्द्वम्। एवं द्वादश कर्मद्वन्द्वान्यनुष्ठेयानि अत्राऽऽम्नातानि। तेषां याजमानकाण्डे पठितत्वात् समाख्यया यजमानेन तान्यनुष्ठेयानीति प्राप्ते ब्रूमः— यजमानस्य यानि कार्याणि तान्यनुष्ठातुमेव परिक्रीता ऋत्विजः। किं च यजुर्वेदे याजमानमिदमवान्तरकाण्डम्, महाकाण्डं त्वाध्वर्यवमेव। तत्रैते वत्सापाकरणादयो धर्मा आम्नाताः। तस्मादध्वर्युरेवताननुतिष्ठेत्। याजमाने तु काण्डे न[30] तेषामनुष्ठानप्रकारश्चोदितः, किं तु परिगणनया द्वन्द्वसंपादनमात्रमेव[31] आम्नातम्। तेन यजमानस्तामानुपूर्वीं मनसि निधायाध्वर्योरनुष्ठाने प्रमादराहित्यमनुसंधातुं प्रभवति। तस्मादध्वर्योरेवानुष्ठानम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥ ९॥

२४. इ.उ–सौर्यादिकं वि°; पा–सौर्यादिकवि°; म४–सौम्यवि°। २५. इ.उ.पा–अङ्गोपाङ्गादितः। २६. इ.उ.पा–इत्यतेन। २७–२७. क–एतेन सर्वकामाः। २८. इ.उ.क.तं.ति.पा.म४.हा–तस्मादशेष°। २९. तं.ति–°क्तितोऽतोऽस्तु; म४–°क्तितान्त्योऽस्तु। ३०. इ.उ.क.पा–' न ' नास्ति। ३१. म४–°मात्रम्।

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमित्याह ध्रुवानेवैनान् कुरुत उग्रोऽस्युग्रोऽहꣳ सजातेषु भूयासमित्याहाप्रतिवादिन एवैनान् कुरुतेऽभिभूरस्यभिभूरहꣳ सजातेषु भूयासमित्याह य एवैनं प्रत्युत्पिपीते तमुपास्यते

ध्रुवः । असि । ध्रुवः । अहम् । सजातेष्विति स–जातेषु । भूयासम् । इति । आह । ध्रुवान् । एव । एनान् । कुरुते । उग्रः । असि । उग्रः । अहम् । सजातेष्विति स जातेषु । भूयासम् । इति । आह । अप्रतिवादिन इत्यप्रति–वादिनः । एव । एनान् । कुरुते । अभिभूरित्यभि–भूः । असि । अभिभूरित्यभि–भूः । अहम् । सजातेष्विति स–जातेषु । भूयासम् । इति । आह । यः । एव । एनम् । प्रत्युत्पिपीत इति प्रति–उत्पिपीते । तम् । उपेति । अस्यते ।

‘ ध्रुवोऽसि ’ इत्यादीनां याजमानमन्त्राणां ब्राह्मणम् । तत्र परिधीनामनुमन्त्रणमन्त्राः ‘ ध्रुवोऽसि ’ इत्यादयः ॥ एतान् सजातानविनष्टान् करोति । तथा हि सति तेष्वयं ध्रुवतरो भवति । ᵛएनान् ᵛअप्रतिवादिनः ᵛकुरुते सजातान् । ᵛउग्रः उद्गूर्णः, यस्याग्रे, न कश्चित् प्रतिवदतीति । ᵛप्रत्युत्पिपीते सजातेषु मध्ये य एनं प्रातिकूल्येन उपजीवति ᵛतम् ᵛउपास्यते उपक्षिपति । पीङ् पाने, दैवादिकः । व्यत्ययेन शपः श्लुः । “ उपसर्गादस्यत्यूह्योर्वावचनम् ” ( पा १·३·२९ वा ३ ) इत्यस्यतेः आत्मनेपदम् । “ अनुदात्ते च ” ( पा ६·१·१९० ) इत्यभ्यस्तस्याद्युदात्तत्वम् । “ तिङि चोदात्तवति ” ( पा ८·१·७१ ) इति द्वितीयस्य गतेः अनुदात्तत्वम्, “ गतिर्गतौ ” ( पा ८·१·७० ) इति प्रथमस्य ॥

नवमे द्वन्द्वसंपादनमुक्तम् । दशमे हविःसादनं विधीयते ॥

**ध्रुव इति** ॥ प्रथमं तावत् द्वितीयानुवाकस्य पूर्वभागोक्तानां मन्त्राणां व्याख्यानम् । तत् परिध्यनुमन्त्रणमन्त्रानुदाहृत्य व्याचष्टे — ‘ ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमित्याह ध्रुवानेवैनान् कुरुत उग्रोस्युग्रोऽहꣳ सजातेषु भूयासमित्याहाप्रतिवादिन एवैनान् कुरुतेऽभिभूरस्याभिभूरहꣳ सजातेषु भूयासमित्याह य एवैनं प्रत्युत्पिपीते तमुपास्यते ’ इति ॥ ‘ सजातेषु ध्रुवो भूयासम् ’ इत्यनेन [१]न केवलं स्वस्यैव ध्रुवत्वं प्रार्थितं, किंतु ᵛएनान् ज्ञातीनपि ᵛध्रुवान् एव कर्तुं प्रार्थितम् । [२]–स्वस्यानुग्रत्वे सत्यशिक्षिता–[२] ज्ञातयः प्रतिवादिनो भवन्ति । अत [३]उग्रत्वप्रार्थनेन तन्निवार्यते । [४]ज्ञातिमध्ये ᵛयः कोऽपि ᵛएनं यजमानं ᵛप्रत्युत्पिपीते प्रतिकूलो [५]भूत्वोत्पाटयितुमिच्छति तं प्रतिकूलमभिभविता ᵛभूयासम् इत्यनेन ᵛउपास्यते उपक्षिपति[६] ॥

१. इ.उ.तं.पा.हा–‘ न ’ नास्ति । २–२. आ.क–स्वस्यानुग्रत्वेनाशिक्षिताः । ३. इ.उ.पा–उग्रत्वेन प्राथितेन । ४. इ.उ.पा–यज्ञान्ते मध्ये । ५. आ.क–भूत्वोत्सादयि°; ति–भूत्वोत्पादयितु° । ६. तं.ति.पा.हा–उपक्षयति ।

**युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनै(१)वैनं युनक्ति यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान् पराऽभावयन् यन्मे अग्ने अस्य यज्ञस्य रिष्यादित्याह यज्ञस्यैव तत् समृद्धेन यजमानः सुवर्गं लोकमेति यज्ञस्य व्यृद्धेन भ्रातृव्यान् परा भावयत्यग्निहोत्रमेताभिर्व्याहृतीभिरुप सादयेद्यज्ञमुखं वा अग्निहोत्रं**

युनज्मि । त्वा । ब्रह्मणा । दैव्येन । इति । आह । एषः । वै । अग्नेः । योगः । तेन (१) । एव । एनम् । युनक्ति । यज्ञस्य । वै । समृद्धेनेति सम्–ऋद्धेन । देवाः । सुवर्गमिति सुवः–गम् । लोकम् । आयन् । यज्ञस्य । व्यृद्धेनेति वि–ऋद्धेन । असुरान् । परेति । अभावयन् । यत् । मे । अग्ने । अस्य । यज्ञस्य । रिष्यात् । इति । आह । यज्ञस्य । एव । तत् । समृद्धेनेति सम–ऋद्धेन । यजमानः । सुवर्गमिति सुवः–गम् । लोकम् । एति । यज्ञस्य । व्यृद्धेनेति वि–ऋद्धेन । भ्रातृव्यान् । परेति । भावयति । अग्निहोत्रमित्यग्नि–होत्रम् । एताभिः । व्याहृतीभिरिति व्याहृति–भिः । उपेति । सादयेत् । यज्ञमुखमिति यज्ञ–मुखम् । वै । अग्निहोत्रमित्यग्नि–होत्रम् ।

'युनज्मि त्वा' इत्यग्नियोगः ॥ [V]एषः मन्त्रः [V]अग्नेः [V]योगः। अग्निर्युज्यते बध्यतेऽनेनेति करणे घञ् (पा ३·३·१८) ॥

'यज्ञस्य' इत्यादि ॥ [V]यज्ञस्य यत्समृद्धं हविरादीनामन्यूनत्वम्, अन्यूनं वा हविरादि, तत्स्वर्गप्राप्तिहेतु । यत्पुनर्व्यृद्धं स्कन्नादिवैकल्यं तेन [V]असुरान् [V]पराऽभावयन् [V]देवाः । 'यन्मे अग्ने' इत्यनेनासन्नहविरभिमन्त्रणेन तद्वैकल्यं प्रति पराभवनहेतुः क्रियत इत्यर्थः । "गतिरनन्तरः" (पा ६·२·४९) इति गतेः प्रकृतिस्वरत्वम् ।

**युनज्मीति** ॥ अग्नियोगमन्त्रमादौ व्याचष्टे—'युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनैवैनं युनक्ति' इति ॥ [V]एषः मन्त्रपाठः एव [V]योगः भवति । "त्वामग्निं युनज्मि" इति मन्त्रे[7] श्रवणात् ॥

**यज्ञस्येति** ॥ आसन्नस्य हविषोऽभिमन्त्रणमन्त्रं[8] व्याचष्टे—'यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान् पराऽभावयन् यन्मे अग्ने अस्य यज्ञस्य रिष्यादित्याह यज्ञस्यैव तत्समृद्धेन यजमानः सुवर्गं लोकमेति यज्ञस्य व्यृद्धेन भ्रातृव्यान् परा भावयति' इति ॥ यज्ञस्य हि द्वावंशौ समृद्धो व्यृद्धश्च । यथाशास्त्रमनुष्ठितः समृद्धः । अतथाभूतो व्यृद्धः । तत्र समृद्धो देवानां स्वर्गप्राप्तिहेतुः । व्यृद्धोऽसुराणां तिरस्कारहेतुः । अतोऽस्मिन् मन्त्रे 'रिष्यात्' '[9]स्कन्दात्' इति व्यृद्धमनूद्य तेन 'हन्मि सपत्नम्' इति वैरिपराभवः कथ्यते । [10]समृद्धेन [11]स्वर्गं प्राप्नोमीत्यर्थात्[12] लभ्यते ॥

**अग्निहोत्रमिति** ॥ 'भूर्भुवः सुवः' इति व्याहृतिभिरग्निहोत्रहविष उपसादनं विधत्ते—'अग्निहोत्रमेताभिर्व्याहृतीभिरुप सादयेत्' इति ॥

७. क–मन्त्रेण । ८. आ–°भिमन्त्रणम्; क–°षो मन्त्रणम् । ९. इ.उ.पा.तं.ति–स्कन्देत् । १०. आ–समृद्धो न; इ.उ.पा–समृद्धे च । ११. म४–'स्वर्गम्' इत्यस्यानन्तरम् 'कामम्' । १२. आ–प्राप्नोतीत्यर्थः; क–प्राप्नोमीत्यर्थः ।

ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म (२) कुरुते संवत्सरे पर्यागत एताभिरेवोप सादयेद्ब्रह्मणैवोभयतः संवत्सरं परि गृह्णाति दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्या सादयेद्यज्ञमुखं वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते संवत्सरे पर्यागत एताभिरेवाऽऽ सादयेद् ब्रह्मणैवोभयतः संवत्सरं परि गृह्णाति

ब्रह्म । एता । व्याहृतय इति वि आहृतय । यज्ञमुख इति यज्ञ मुखे । एव । ब्रह्म ( २ ) । कुरुते । संवत्सर इति सम्–वत्सरे । पर्यागत इति परि–आगते । एताभि । एव । उपेति । सादयेत् । ब्रह्मणा । एव । उभयत । संवत्सरमिति सम्–वत्सरम् । परीति । गृह्णाति । दर्शपूर्णमासाविति दर्श पूर्णमासौ । चातुर्मास्यानीति चातु - मास्यानि । आलभमान इत्या–लभमान । एताभि । व्याहृतीभिरिति व्याहृति–भि । हवीꣳषि । एति । सादयेत । यज्ञमुखमिति यज्ञ–मुखम् । वै । दर्शपूर्णमासाविति दर्श–पूर्णमासा । चातुर्मास्यानीति चातु–मास्यानि । ब्रह्म । एता । व्याहृतय इति वि -आहृतय । यज्ञमुख इति यज्ञ -मुखे । एव । ब्रह्म । कुरुते । संवत्सर इति सम्–वत्सरे । पर्यागत इति परि -आगते । एताभि । एव । एति । सादयेत् । ब्रह्मणा । एव । उभयत । संवत्सरमिति सम्–वत्सरम् । परीति । गृह्णाति ।

---

हविरासादिन्यो व्याहृतय ॥ विविधमाह्रियन्ते आनीयन्त इति व्याहृतय । लोकत्रयात्मिका विविधफलाहरणहेतुभूता वा । अनन्तरगते "तादौ च°" ( पा ६ २ ५० ) इति प्रकृतिस्वरत्वम् । ᵛएताभि अग्निहोत्रहवि ᵛउपसादयेत् । ᵛयज्ञमुख ᵛवै अग्निहोत्र, प्राधान्यात् । 'ब्रह्मैता' इति, लोकत्रयात्मकत्वात । ᵛपर्यागते पर्यावृत्ते । पूर्वपदप्रकृतिस्वरत्वम् । ᵛउभयत[1], सार्वविभक्तिकस्तसिल् ॥

'दर्शपूर्णमासौ' इत्यादि ॥ गत प्रथमप्रयोग इदम् ॥

---

**यज्ञमुखमिति** ॥ तदेतदुपपादयति—'यज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते' इति ॥ आधानानन्तरमेवानुष्ठेयत्वात् [13]प्राथम्येन सर्वयज्ञेष्वग्निहोत्रस्य मुखत्वम् । ᵛव्याहृतयः च त्रैलोक्यात्मनो विराड्रूपस्य परब्रह्मण्यारोपितशरीरस्य वाचकत्वेन ब्रह्मरूपाः । अतः प्रशस्ते ᵛयज्ञमुखे प्रशस्तं ब्रह्मरूपं व्याहृतित्रयं कृतवान् भवति ॥

**संवत्सर इति** ॥ अग्निहोत्रारम्भदिनगते हविःसादने व्याहृतीर्विधाय कालान्तरगतेऽपि सादने विदधाति—'संवत्सरे पर्यागत एताभिरेऽऽ सादयेत्' इति ॥

**ब्रह्मणेति** ॥ आद्यन्तयोर्दिनयोर्व्याहृतिभिरुपसादनं प्रशंसति— 'ब्रह्मणैवोभयत संवत्सरं परि गृह्णाति' इति ॥ अग्निहोत्रवत् कर्मान्तरेऽपि व्याहृतिभिरासादनम्[14] विधत्ते— 'दर्शपूर्णमासौ चातुर्मास्या

---

१ तं ति पै—उभयत्र ।

---

१३ आ—प्राधान्येन । १४ इ उ—°भिरुपसादनम् ।

यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं (३) यज्ञस्याऽऽशीर्गच्छति यदृचा विशं यज्ञस्याऽऽशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते तथा ब्राह्मणः साशीर्केण यज्ञेन यजते

यत् । वै । यज्ञस्य । साम्ना । क्रियते । राष्ट्रम् ( ३ ) । यज्ञस्य । आशीरित्या—शीः । गच्छति । यत् । ऋचा । विशम् । यज्ञस्य । आशीरित्या—शीः । गच्छति । अथ । ब्राह्मणः । अनाशीर्केण । यज्ञेन । यजते । सामिधेनीरिति साम्—इधेनीः । अनुवक्ष्यन्नित्यनु—वक्ष्यन् । एताः । व्याहृतीरिति वि—आहृतीः । पुरस्तात् । दध्यात् । ब्रह्म । एव । प्रतिपदमिति प्रति—पदम् । कुरुते । तथा । ब्राह्मणः । साशीर्केणेति स—आशीर्केण । यज्ञेन । यजते ।

'यद्वै' इत्यादि ॥ [V]यज्ञस्य या [V]आशीः [V]साम्ना [V]क्रियते सा सामस्था [V]आशीः आशंसनीयं फलं [V]राष्ट्रं [V]गच्छति यत्रायं वसति तद्राष्ट्रवासिनां तत्केवलं स्यात् । अथ [V]यत् [V]ऋचा क्रियते सा [V]यज्ञस्य [V]आशीः [V]विशं [V]गच्छति सर्वान् मनुष्यान् । जातावेकवचनम् । [V]अथ इदानीमयं [V]ब्राह्मणः वराकः [V]अनाशीर्केण अफलेन [V]यज्ञेन [V]यजते, किमेतद्युज्यते ? यद्वा— तिष्ठन्त्वन्ये; ब्राह्मणः किमनाशीर्केण यजेत यः प्रयोजनमन्तरेणाविहितं[2] निमेषमात्रमपि न करोतीति प्रतिपादनार्थं ब्राह्मणग्रहणम् । यजुषां प्रायेण [3]करणमन्त्रत्वान्न तत्र[3] कदाचिदाशीरिति ऋक्सामयोरेव ग्रहणम् । नास्त्याशीरस्येति बहुव्रीहौ कप् ( पा ५·४·१५१ ) ।

न्यालभमान एताभिर्व्याहृतीभिर्हवींष्या सादयेद्यज्ञमुखं वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते संवत्सरे पर्यागत एताभिरेवाऽऽसादयेद्ब्रह्मणैवोभयतः संवत्सरं परि गृह्णाति इति' ॥ यज्ञो ज्योतिष्टोमादिः । ततः पूर्वभावित्वाद्दर्शादेर्मुखत्वम् ॥

यद्वा इति ॥ अन्यत्राऽपि व्याहृतीर्विधत्ते— 'यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं यज्ञस्याऽऽशीर्गच्छति यदृचा विशं यज्ञस्याऽऽशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते तथा ब्राह्मणः साशीर्केण यज्ञेन यजते' इति ॥ यज्ञसंबन्धि किंचिदङ्गं [V]साम्ना [V]क्रियते, यथा बहिष्पवमानादि । अन्यत् किंचिदङ्गम् [V]ऋचा क्रियते, यथा याज्या-पुरोनुवाक्यादि । तत्र सामसाध्येनाङ्गेन यद्यज्ञफलं तत् [V]राष्ट्रं प्राप्नोति, राष्ट्रे सस्याद्यभिवृद्धिर्भवतीत्यर्थः । ऋक्साध्येनाङ्गेन यत् फलं तत् [V]विशं प्रजां प्राप्नोति, प्रजाया आयुरारोग्यादि वर्धत इत्यर्थः । [V]अथ एवं सति [V]ब्राह्मणः यजमानः फलप्रदैर्यजुर्भिर्विरहितत्वात् [V]अनाशीर्केण निष्फलेन [V]यज्ञेन इष्टवान् भवति । अतो यज्ञरूपाः [V]व्याहृतीः प्रयुञ्ज्यात् । [15]होत्राऽनुवचनीयाः 'प्र वो वाजा' ( तैसं २·५·५ ) इत्यादयः ऋचः सामिधेन्यः तदनुवचनात् प्रागेव होता व्याहृतीः पठेत् । तावता[16] ब्रह्मरूपं व्याहृतित्रयमेव सामिधेनीनां [V]प्रतिपदं प्रारम्भं कृतवान् भवति । [V]तथा सति यजमानः सफलेन [V]यज्ञेन इष्टवान् भवति ॥

२. मै-आहितम् । ३–३. तं.ति-करणं नात्र ।

१५. इ.उ.पा-होत्राद्यनु° । १६. आ.क-तद्देवता° ।

यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याऽऽशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोनुवाक्यायां दध्याद्भ्रातृव्यदेवत्या वै पुरोनुवाक्या भ्रातृव्यमेवास्य यज्ञस्य (४) आशीर्गच्छति यान् कामयेत यजमानान्त्समावत्येनान् यज्ञस्याऽऽशीर्गच्छेदिति तेषामेता व्याहृतीः पुरोनुवाक्याया अर्धर्चे एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्चे एकां तथैनान्त्समावती यज्ञस्याऽऽशीर्गच्छति

यम् । कामयेत । यजमानम् । भ्रातृव्यम् । अस्य । यज्ञस्य । आशीरित्या--शी । गच्छेत् । इति । तस्य । एता. । व्याहृतीरिति वि- आहृती । पुरोनुवाक्यायामिति पुर --अनुवाक्यायाम् । दध्यात् । भ्रातृव्यदेवत्येति भ्रातृव्य--देवत्या । वै । पुरोनुवाक्येति पुर --अनुवाक्या । भ्रातृव्यम् । एव । अस्य । यज्ञस्य ( ४ ) । आशीरित्या--शी । गच्छति । यान् । कामयेत । यजमानान् । समावती । एनान् । यज्ञस्य । आशीरित्या--शी । गच्छेत । इति । तेषाम् । एता । व्याहृतीरिति वि--आहृती । पुरोनुवाक्याया इति पुर --अनुवाक्याया । अर्धर्चे इत्यर्ध--ऋचे । एकाम । दध्यात् । याज्यायै । पुरस्तात् । एकाम् । याज्याया । अर्धर्चे इत्यर्ध--ऋचे । एकाम । तथा । एनान् । समावती । यज्ञस्य । आशीरित्या शी । गच्छति ।

अयस्मयादित्वेन पदत्वात् ( पा १ ४ २० ) रुत्वम् । भ्वादिविसर्जनीयाभाव । " नञ्सुभ्याम् " ( पा ६ २ १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । " सामिधेनी " इत्यादि । समिधामाधानमन्त्रा सामिधेन्य , " प्र वो वाजा' " ( तैसं २ ५ ५ ) इत्याद्या । " समिधामाधाने षेण्यण् " (पा ४ ३ १२० वा १० ) । "हलस्तद्धितस्य" ( पा ६ ४ १५० ) इति यलोप । [v]प्रतिपद प्रारम्भ [v]कुरुते । प्रथमत. पद्यत इति प्रतिपत् । सपदादित्वात् क्विप् ( पा ३ ३ १०८ वा ९ ) ।

' य कामयेत ' इत्यादि ॥ पुरस्तादवदानकालेऽनूच्यत इति पुरोनुवाक्या । गतमन्यत् ( तैसं १ ६ १० ) ॥

' यानि ' इत्यादि ॥ समावती समा सर्वेषां तुल्या न कदाचिदपि भ्रातृव्यस्य । यद्वा—समा अविषमा सदा यजमानगामिनी । समात् आवतुप् । ऋचोर्धमर्धर्चं । " अर्धं

यमिति ॥ प्रकारान्तरेण विनियोग [१७]हेयतयोपन्यस्यति—' य कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याऽऽशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोनुवाक्याया दध्याद्भ्रातृव्यदेवत्या वै पुरोनुवाक्या भ्रातृव्य मेवास्य यज्ञस्याऽऽशीर्गच्छति इति ॥ [v]यं [v]यजमानं प्रति होता द्वेषादेवं [v]कामयेत [v]अस्य [v]यज्ञस्य फलं यजमानवैरिण [v]गच्छेत् [v]इति तस्य यजमानस्य यागे पुरोनुवाक्यायाः प्राक् [v]व्याहृतीः प्रयुञ्ज्यात् । तदा पुरोनुवाक्यायाः वैरी देवतेति तत्फलं वैरिगामि [v]एव भवति ॥

१७ ह उ--पक्षतया; पा--हेतुतया, तं.तिं.म४--हेयपक्षतया ।

**यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परि गृह्णाति मनोऽसि प्राजापत्यं (५) मनसा मा भूतेनाऽऽ विशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन् धत्ते**

यथा । वै । पर्जन्यः । सुवृष्टमिति सु-वृष्टम् । वर्षति । एवम् । यज्ञः । यजमानाय । वर्षति । स्थलया । उदकम् । परिगृह्णन्तीति परि-गृह्णन्ति । आशिषेत्या-शिषा । यज्ञम् । यजमानः । परीति । गृह्णाति । मनः । असि । प्राजापत्यमिति प्राजा-पत्यम् (५) । मनसा । मा । भूतेन । एति । विश । इति । आह । मनः । वै । प्राजापत्यमिति प्राजा-पत्यम् । प्राजापत्य इति प्राजा-पत्यः । यज्ञः । मनः । एव । यज्ञम् । आत्मन् । धत्ते ।

---

नपुंसकम् " ( पा २·२·२ ) इति समासः । " ऋक्पूरब्धूः° ( पा ५·४·७४ ) इत्यादिना अप्रत्ययः समासान्तः । इज्यतेऽनयेति याज्या । " यजयाच° " ( पा ३·३·९० ) इति कुत्वाभावः ।

' यथा ' इति । [v]स्थलया कूलेन [v]उदकं [v]परिगृह्णन्ति निरुन्धन्ति, एवम् [v]आशिषा [v]यज्ञं [v]यजमानः [v]परि [v]गृह्णाति फलप्रदानैकव्यापारयन्त्रितमिव करोति, यथा न कदाचिदपि फलमददानस्तिष्ठति, दत्ते चेदं न याचते यजमानः, याचितेयाचिते ददाति यज्ञ इति ॥

' मनोऽसि ' इति ॥ स्रौवाघाराभिमन्त्रणम् । प्राजापत्याविशेषात् मन इति यज्ञ उच्यते ॥

---

**यानिति** ॥ प्रकारान्तरेण विनियोगमुपादेयतया विधत्ते— ' यान् कामयेत यजमानान्त्समावत्येनान् यज्ञस्याऽऽशीर्गच्छेदिति तेषामेता व्याहृतीः पुरोनुवाक्याया अर्धर्चे एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्चे एकां तथैनान्त्समावती यज्ञस्याशीर्गच्छति ' इति ॥ बहुयजमानकानाम् अहीनसत्राणामङ्गभूतेष्टिषु होता यद्येवं कामयेतैनान् सर्वान् यजमानान् [१८]यज्ञस्य फलं सममेव प्राप्नुयादिति तेषां यजमानानां यागे व्याहृतीरेवं दध्यात् । पुरोनुवाक्याया अर्धर्चेऽभिहिते सति प्रथमा व्याहृतिः । याज्यायाः पुरस्ताद्द्वितीया व्याहृतिः । याज्याया अर्धर्चेऽभिहिते सति तृतीया व्याहृतिः । तथा सत्येनान् सर्वान् यजमानान् यज्ञस्य फलं साम्येन प्राप्नोति ॥

**यथेति** ॥ तामेतां प्राप्तिं दृष्टान्तेन स्पष्टयति—' यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परि गृह्णाति ' इति ॥ यथा लोके सर्वतः प्रसृतो

---

१८. इ.उ-पा-यज्ञ° ।

वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽ विशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन् धत्ते ॥ १० ॥

[ तेनैव ब्रह्म राष्ट्रमेवास्य यज्ञस्य प्राजापत्य॰ षटत्रिं॰ शच्च ]

वाक् । असि । ऐन्द्री । सपत्नक्षयणीति सपत्न-क्षयणी । वाचा । मा । इन्द्रियेण । एति । विश । इति । आह । ऐन्द्री । वै । वाक् । वाचम् । एव । ऐन्द्रीम् । आत्मन् । धत्ते ॥ १० ॥

[ मैसं १ ४ ५, कासं ३१ १५ ]

' वागसि ' इति स्रुच्याघाराभिमन्त्रणम् । गतम् ( तैस १ ६ २ ) ॥

इति षष्ठे दशमोऽनुवाकः ॥

मेघः पक्षपातमन्तरेण सर्वत्र देशेष्वेकरूप [V]सुवृष्ट सस्यनिष्पत्तिक्षमं वर्षं मुञ्चत्येवमयं यथोक्तव्याहृत्युपेतो [V]यज्ञः सर्वयजमानसंघाय सुफल साधारण्येन प्रयच्छति । तेन च सुवृष्टेन नद्यां पूर्णायां सर्व जनाः [V]स्थलया कूलेन [V]उदक [V]परिगृह्णन्ति, तद्वद्यजमानसंघः [V]आशिषा साधारणफलेन युक्तमिम [V]यज्ञ [V]परि[V]गृह्णाति ॥

मन इति ॥ स्रावाघारस्रुच्याघारानुमन्त्रणमन्त्रौ व्याचष्ट— ' मनोऽसि प्राजापत्यं मनसा मा भूतेनाविशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन् धत्ते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽविशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन् धत्ते ' इति ॥ सर्वव्यवहारसाधनस्य मनसः प्रजापतिना प्रथमसृष्टत्वात् मनसः प्राजापत्यत्वम् । प्रथमसृष्टिश्च होतृब्राह्मणकाण्डे समाम्नायत— " इदं वा अग्रे नैव किंचनाऽऽसीत् । न द्यौरासीत् । न पृथिवी । नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति " ( तैब्रा २ २·९ ) । बृहदारण्यकेऽप्याम्नातम् — " तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति " ( बृउ १ २ १ ) इति । ' प्रजापतिर्यज्ञानसृजत ' इत्युक्तत्वात् प्राजापत्यो यज्ञः । अनेन मन्त्रपाठेन तौ मनोयज्ञौ स्वस्मिन् स्थापयति । इन्द्रेण व्याकृतत्वात् वागैन्द्री[ॐ] । तां च मन्त्रपाठेन स्वात्मनि स्थापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

[ॐ द्र तैसं ६ ४ ७–' तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते ' ] ।

**यो वै स॒प्तद॑शं प्र॒जाप॑तिं य॒ज्ञम॒न्वाय॑त्तं॒ वेद॒ प्रति॑ य॒ज्ञेन॑ तिष्ठ॒ति न य॒ज्ञाद्भ्रꣳ॑शत॒**
**आ श्राव॒येति॒ चतु॑रक्षर॒मस्तु॒ श्रौष॒डिति॒ चतु॑रक्षरं॒ यजे॒ति॒ द्व्य॑क्षरं॒ ये यजा॑मह॒**

य । वै । स॒प्तद॒शमिति॑ स॒प्त–द॒शम् । प्र॒जाप॑तिमिति॑ प्र॒जा–प॒तिम् । य॒ज्ञम् । अ॒न्वाय॑त्तमित्य॑नु–आय॑त्तम् । वेद॑ । प्रतीति॑ । य॒ज्ञेन॑ । ति॒ष्ठ॒ति॒ । न । य॒ज्ञात् । भ्र॒ꣳश॒ते॒ । एति॑ । श्रा॒व॒य॒ । इति॑ । चतु॑रक्षर॒मिति॒ चतु॑–अ॒क्ष॒र॒म् । अस्तु॑ । श्रौष॑ट् । इति॑ । चतु॑रक्षर॒मिति॒ चतु॑–अ॒क्ष॒र॒म् । यज॑ । इति॑ । द्व्य॑क्षर॒मिति॒ द्वि–अ॒क्ष॒र॒म् । ये । यजा॑महे ।

'यो वै' इत्यादि ॥ सप्तदशाक्षरसमूहात्मा प्रजापति सप्तदश । समूहे छान्दसो ड. । परिमाणे वा "तस्य पूरणे°" ( पा ५ २ ४८ ) इति डट् । अवयवधर्मेण समुदायो व्यपदिश्यते, सप्तदशसु प्रथमादीनामपि सप्तदशत्वात् । यज्ञम् अन्वायत्तम् अनुप्रविष्टम् ॥

'आ श्राव्रय' इत्यादि ॥ तुभ्यमिद दीयत इति देवताविशेषमाभिमुख्येन आ श्रावय इति चतुरक्षरम् अध्वर्योः । अस्तु श्रौषट् एवमेतत्कर्तव्यम् इति चतुरक्षरम् अग्नीध । यज इमां देवतां यष्टु याज्यां ब्रूहि इति द्व्यक्षरम् अध्वर्योरेव । ये यजामहे य [1]–एव वय स्म त–[1]

य इति ॥ दशमे हविःसादनं विहितम् । एकादशे तु आश्रावणादिमन्त्राः प्राधान्येन विधीयन्ते । तेषां पञ्चमन्त्राणामुत्पत्तिं विधातुं प्रस्तौति—'यो वै सप्तदश प्रजापतिं यज्ञमन्वायत्त वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते' इति ॥ अथ मन्त्रसघः सप्तदशाक्षरोपेतत्वात् प्रजापतिसृष्टत्वाच्च 'सप्तदशः प्रजापतिः' इत्यभिधीयते । स च यज्ञम् अन्वायत्तः सर्वयज्ञेष्वनुगतः [1]तद्विद्यजमानः सपूर्णेन यज्ञेन प्रतिष्ठितो भवति । वैकल्याभावादेव यज्ञात् न भ्रष्टो भवति ॥

एति ॥ मन्त्रानुत्पादयति—'आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षर ये यजामह इति पञ्चाक्षर द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एव वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते' इति ॥ एतेषु पञ्चसु मन्त्रेष्वाद्यस्य मन्त्रत्रयस्य विनियोगमापस्तम्बोऽध्वर्युकाण्डे दर्शयति— "ब्रह्मन् प्रवरायाऽऽश्रावयिष्यामीति ब्रह्माणमामन्त्र्याऽऽश्रावयो श्रावय श्रावयोमाश्रावयेति वा श्रावयति । अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्कर दक्षिणामुखस्तिष्ठन् स्फ्यꣳ समार्गौश्च धारयन् प्रत्याश्रावयति" ( आपश्रौ २ १५ ३–४ ) इति । "अवदानमुष्मा अनुब्रूहीति पुरोनुवाक्यां सप्रेष्यति । अवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणातिक्रम्याऽऽश्राव्य प्रत्याश्राविते‌ऽमु यजेति याज्यामिति सार्वत्रिकम्" ( आपश्रौ २ १८·४ ) इति च ॥ "आ श्रावय" इत्ययमेव पाठोऽत्रस्य । 'ओ॰श्रावय' इति, 'श्रावय' इति, 'ओमाश्रावय' इति च त्रय शाखान्तरीयम् । हे आग्नीध्र, [2]वक्ष्यमाणदेवतां

१–१ तं ति–एवं समत्तः ।

१ क–तद्विज्ञानः, म४–तद्वदन्य, पा–तद्विन्दन् यजमान उ सं ति–तद्विदन् (?) यजमानः ।
२ तं ति–वक्ष्यमाण° ।

इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद्भ्रꣳशते यो वै यज्ञस्य प्रायणं प्रतिष्ठा( १ )मुदयनं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छत्या

इति । पञ्चाक्षरमिति पञ्च–अक्षरम् । द्व्यक्षर इति द्वि–अक्षर । वषट्कार इति वषट्–कारः । एषः । वै । सप्तदश इति सप्त–दश । प्रजापतिरिति प्रजा–पति । यज्ञम् । अन्वायत्त इत्यनु–आयत्त । य । एवम् । वेद । प्रतीति । यज्ञेन । तिष्ठति । न । यज्ञात् । भ्रꣳशते । य । वै । यज्ञस्य । प्रायणमिति प्र–अयनम् । प्रतिष्ठामिति प्रति–स्थाम्( १ )। उदयनमित्युत्–अयनम् । वेद । प्रतिष्ठितेनेति प्रति–स्थितेन । अरिष्टेन । यज्ञेन । सꣳस्थामिति सम्–स्थाम् । गच्छति । एति ।

---

एव यजामहे कस्त्वा यष्टुमर्हतीति Vइति यागसकल्पाय Vपञ्चाक्षरं होतुः । वषट्क्रियते हविर्दीयतेऽनेनेति Vवषट्कार वौषट्शब्द. Vद्व्यक्षर होतुरेव ।

'एष वै' इत्यादि गतम् ॥

'यो वै यज्ञस्य' इत्यादि ॥ Vप्रायणं प्रारम्भः प्रवेशनम् । प्रतिष्ठा स्थितिः । Vउदयन सस्था समाप्ति. । एतत्त्रयात्मकमाश्रावयादिकम् । तस्मादत्रैव समस्तो याग समाप्त, एतच्छेषतया सर्वमन्यत् क्रियत इति । अरिष्ट हिंसारहित. ॥

---

प्रति तुभ्यमिदं दीयत इत्याभिमुख्येन Vश्रावय इत्यध्वर्युणोक्ते सति स आग्नीध्रोऽस्त्वित्यङ्गीकृत्य Vश्रौषट् इति शब्देन श्रावयति । हे देवाः, त्वद्( युष्मद् )विषयमिदं हविर्दानं शृणुतेत्यर्थः । हे होतः, Vयज याज्यां पठेत्यर्थः । इतरस्य तु मन्त्रद्वयस्य विनियोगमाश्वलायनो होतृकाण्डे दर्शयति— "आगूर्याज्यादिरनुयाज वर्जम् । ये३ यजामह इत्यागूः । वषट्कारोऽन्त्यः सर्वत्र" ( आश्वश्रौ १ ५ ४–५ ) इति । Vये वयं होतारोऽध्वर्युणा यजेति प्रेषितास्ते वय Vयजामहे याज्यां पठामः । वषट्कारशब्देन 'वौषट्' इत्येवरूपो मन्त्रो विवक्षित । तं चाऽऽश्वलायन उदाहृत्य दर्शयति—"ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु३ वौ३षळिति[3] वषट्कार इति" ( आश्वश्रौ १ ५ १५ ) इति । हविर्दीयत इति तस्य शब्दस्यार्थः ॥

य इति ॥ एतेषां पञ्चमन्त्राणां महिमानं वक्तु प्रस्तौति—'यो वै यज्ञस्य प्रायण प्रतिष्ठामुदयनं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति' इति ॥ Vप्रायण प्रारम्भः । प्रतिष्ठा मध्यकालवर्त्यनुष्ठानम् । Vउदयनं समाप्तिः । Vयः यजमानो यज्ञस्य मुख्यं प्रारम्भादित्रयं Vवेद तदीयो यज्ञः प्रतिष्ठितः साङ्गः अरिष्टो वैकल्यरहितः तादृशेन Vयज्ञेन Vसस्थां फलपर्यन्ततां प्राप्नोति ॥

---

२ तं ति पं–'इत्यादि' इत्यस्यानन्तरं 'ब्राह्मणम्'।

---

३ क.तं ति म४–वौषडिति ।

ावणादिमन्त्राः ]

वयास्तु श्रौषड्यज ये यजामहे वषट्कार एतद्वै यज्ञस्य प्रायणमेषा प्रतिष्ठैतदुदयनं एवं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति यो वै सूनृतायै दोहं वेद दुह एवैनां यज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु (२) श्रौषडित्युपावास्राग्-

वय। अस्तु। श्रौषट्। यज। ये। यजामहे। वषट्कार इति वषट्-कार। त्। वै। यज्ञस्य। प्रायणमिति प्र-अयनम्। एषा। प्रतिष्ठेति प्रति-स्था। एतत्। यनमित्युत्-अयनम्। य। एवम्। वेद। प्रतिष्ठितेनेति प्रति-स्थितेन। अरिष्टेन। यज्ञेन। स्थामिति सम्-स्थाम्। गच्छति। य। वै। सूनृतायै। दोहम्। वेद। दुहे। एव। एनाम्। । वै। सूनृता। एति। आवय। इति। एति। एव। एनाम्। अह्वत्। अस्तु (२)। श्रौषट्। इति। उपावास्रागित्युप-अवास्राक्।

'यो वै सूनृतायै' इत्यादि॥ प्रियसत्यात्मिका वाक् सूनृता। तत्तुल्यत्वात् तत्साधनाद्वा मेदेन यज्ञ उच्यते। "यज्ञो वै सूनृता" इति गोत्वेन रूप्यते। ᵛएनां सूनृतां यज्ञं ᵛदुहे ये अभिमतं स्वर्गादिकम्। "लोपस्त आत्मनेपदेषु" (पा ७ १ ४१) इति तलोप। व ᵛएनाम् ᵛअह्वत् एनामाह्वयत् दोग्धुम्। छान्दसो लुङ् (पा ३ ४ ६)। "लिपिसिचिह्वश्च" पा ३ १ ५३) इत्यङ्। ᵛउपावास्राक् उपसृजति वत्सम्। सृजतेर्लुङि "बहुलं छन्दसि"

यति॥ मन्त्रमहिमानं वक्ति—'आ श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कार एतद्वै यज्ञस्य यणमेषा प्रतिष्ठैतदुदयनं य एवं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन सꣳस्थां गच्छति' इति॥ आद्यो मन्त्रो स्य: प्रारम्भः ᵛ⁻मन्त्रत्रयं ᵛप्रतिष्ठा⁻ᵛ। अन्त्यः ᵛउदयनम्। देवतोद्देशेन द्रव्यत्यागरूपस्य यागशरीर तैरेव मन्त्रैर्निष्पन्नत्वादवशिष्टानि प्राच्यान्युदीच्यानि चाङ्गानि शरीरगतवस्त्रालङ्कारादिस्थानीयानि॥

य इति॥ प्रकारान्तरेण महिमानं वक्तुं प्रस्तौति—'यो वै सूनृतायै दोहं वेद दुह एवैनाम्' ति॥ सूनृता समीचीना वाक्। सम्यक्त्वं च तस्याः सत्यप्रियरूपत्वम्। अत एव स्मर्यते—"सत्यं यात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः" (मनुस्मृति ४ १३८) ति॥ सा च कामधेनुवत् परितोषहेतुत्वाद्गोत्वेनात्र विवक्षिता। तस्याश्च दोहनप्रकारं ᵛयः यजमानः ᵛवेद ोऽवश्यम् ᵛएनां दुग्धे॥

यज्ञ इति॥ काऽसावत्र सूनृता को वा तद्दोहनप्रकार इत्याशङ्क्य तदुभयं दर्शयन् मन्त्रमहि ान वक्ति— 'यज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु श्रौषडित्युपावास्राग्यजेत्युदनैषीद्ये यजामह त्युपासदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवं वेद दुह एवैनाम्' इति॥ लोके हि धोक्ष्य- माणाया गोराभिमुख्याय किमपि भक्ष्यं घासादिकं[६] दातुं सांकेतिकेन नाम्ना तामाह्वयन्ति। अत एव प्रवर्ग्ये- ाह्मणे घर्मदुह आह्वानमेवमाम्नायते— "इड एह्यदित एहि सरस्वत्येहीत्याह। एतानि वा अस्यै

४-४ म४-मध्याः प्रतिष्ठाः। ५ आ-ᵒकारस्थानीयानि। ६ आ-'घासादिकम्' नास्ति।

यजेत्युदनैषीद्ये यजामह इत्युपासदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवं वेद दुह एवैनां देवा वै सत्रमासत तेषां दिशोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना

श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन् यजेति

विद्युत( ३ )मजनयन् ये यजामह इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण ततो वै

तेभ्यो दिशः प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते

यज । इति । उदिति । अनैषीत् । ये । यजामहे । इति । उपेति । असदत् । वषट्कारेणेति वषट्-कारेण । दोग्धि । एषः । वै । सूनृतायै । दोहः । यः । एवम् । वेद । दुहे । एव । एनाम् । देवाः । वै । सत्रम् । आसत । तेषाम् । दिशः । अदस्यन् । ते । एताम् । आर्द्राम् । पङ्क्तिम् । अपश्यन् । एति । श्रावय । इति । पुरोवातमिति पुरः-वातम् । अजनयन् । अस्तु । श्रौषट् । इति । अभ्रम् । समिति । अप्लावयन् । यज । इति । विद्युतमिति वि-द्युतम् ( ३ ) । अजनयन् । ये । यजामहे । इति । प्रेति । अवर्षयन् । अभीति । अस्तनयन् । वषट्कारेणेति वषट्-कारेण । ततः । वै । तेभ्यः । दिशः । प्रेति । अप्यायन्त । यः । एवम् । वेद । प्रेति । अस्मै । दिशः । प्यायन्ते ।

---

( पा ७ ३ ९७ ) इतीडभावः । " सृजिदृशोः " ( पा ६ १ ५८ ) इत्यमागमः । " वदव्रज० " ( पा ७ २ ३ ) इति वृद्धिः । उदनैषीत् उन्नयति पात्रम् । उपासदत् उपसीदति दोग्धा । लृदित्वादङ् ( पा ३ १ ५५ ) आश्रावयाद्युक्तिरभिमतसिद्ध्यै सूनृताह्वानादिकृत् ॥

" देवा वै " इत्यादि ॥ सत्रासन क्रतुविशेषः एकादशरात्रादिः, तमकुर्वत । आस्थानकर्म वा इदानीमयमास्ति. । दिशः प्रागाद्याः अदस्यन् उपक्षीणविभवा अभूवन् । दसु उपक्षये । आर्द्राम् आर्द्रयित्रीम् आ समन्तादार्द्रीं लोकाना वर्षहेतुम् अक्षरपङ्क्तिम् अपश्यन् । गतमन्यत् ॥

---

देवनामानि । देवनामैरेवैनामाह्वयति । असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि । मनुष्यनामैरेवैनामाह्वयति " ( तैब्रा ५ ७ ३-४ ) इति । तद्वदत्रापि आ श्रावय इति मन्त्रपाठेन एव एनां सूनृताम् अह्वत आह्वयति । अस्तु श्रौषट् इति पाठेन उपावास्राक् वत्सम् उपावसृजति । यज इति पाठेन उदनैषीत् दोहनपात्रमुन्नयति । ये यजामहे इति पाठेन उपासदत् दोग्धा प्रत्यासीदति । वौषट् इति पाठेन दोग्धि । अत्र रूपकत्वेन परिकल्पनात् मन्त्राणां तत्तदर्थवाचकत्वमपेक्षितम् ॥

देवा इति ॥ सामर्थ्यान्तरकल्पनया पुनर्महिमानं वक्ति—' देवा वै सत्रमासत तेषां दिशोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रꣳ समप्लावयन् यजेति

पतिं त्वोवेद प्रजापतिस्त्वंवेद यं प्रजापतिर्वेद स पुण्यो भवत्येष वै छन्दस्यः पतिरा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद पुण्यो भवति

पतिमिति प्रजा–पतिम् । त्वोवेदेति त्व –वेद । प्रजापतिरिति प्रजा–पति. । त्ववेदेति वेद । यम् । प्रजापतिरिति प्रजा-पति । वेद । स । पुण्य । भवति । एष । वै । छन्दस्यः । प्रजापतिरिति प्रजा–पति । पति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कार इति वषट्–कारः । य । एवम । वेद । पुण्य । भवति ।

' प्रजापतिम् ' इत्यादि ॥ [v]प्रजापतिं कश्चित् वेद ज्ञातवान् । [v]प्रजापति अपि कञ्चित् । " त्वत्त्वसमसिमेत्यनुच्चानि " ( फि ७८ ) इति त्वशब्दस्यानुदात्तत्वात् तस्याख्यातेनैकपद्य न्यन्ते पदकारा[-१] । तत्र " चादिलोपे विभाषा " ( पा ८ १ ६३ ) इति प्रथमा हुविभक्तिर्न निहन्यते । " यम् " इत्यादि । एत प्रचरन्त [v]प्रजापति [v]वेद इति । " छन्दस्य " ये । " अक्षरसमूहे छन्दस उपसङ्ख्यानम् " ( पा ४ ४ १४० वा १ ) इति यत् । श्रावयादीनां छन्दसां वीर्यत्वात्[*], यथोक्तम्— " य एव छन्दसां वीर्यम् " ( तैस ३ ३ ७ ) यादि । तत्रैषा छन्दसां वीर्यत्वमुक्तम् , अत्र तु तत्समूहस्य प्रजापतित्वमिति विवेक । एवविद्-नुष्ठाता [v]पुण्य. [v]भवति, न चेत्पापकृत् । यत्किञ्चित्पापकृदपीति केचित् ॥

वषुतमजनयन् ये यजामहे इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण ततो वै तेभ्यो दिश प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते ' इति ॥ सत्रमासीनानां देवानां केनापि वैकल्येन वृष्ट्यभावात् [v]दिशः [v]अदस्यन् नानादिग्गतानि सस्यानि शोषणेनोपक्षीणानि । तत्परिहाराय देवाः [v]आर्द्रां [v]वृष्टिहेतुभूतामेतां [v]पङ्क्तिं मन्त्रपञ्चकम् [v]अपश्यन् । स्पष्टमन्यत् ॥

प्रजापतिमिति ॥ पुनरपि प्रकारान्तरेण मन्त्रमहिमानं वर्णयितुं प्रस्तौति— ' प्रजापतिं त्वोवेद प्रजापतिस्त्ववेद य प्रजापतिर्वेद स पुण्यो भवति ' इति ॥ त्वशब्दः सर्वनामगणे पठित एकशब्दपर्यायः । अत एव सम्प्रदायविदः " उत त्वः पश्यन्न ददर्श वाचम् " ( ऋस १० ७१ ४ ) इत्यृचमेवं व्याचक्षते— " अप्येकः पश्यन्न पश्यति " ( निरुक्त १ १९ ) इति । सप्तदशाक्षररूपमेनं [v]प्रजापतिम् एको यजमानो वक्ष्यमाणमहिमोपेत वेद । स च [v]प्रजापतिः [v]ज्ञातारं तमेकं यजमानं [v]वेद जानात्यनुगृह्णाति । यम् अनु गृह्णाति [v]सः अन्येभ्यो यजमानेभ्यः पुण्यादुत्कृष्टः [v]भवति ॥

एष इति ॥ तन्महिमानं दर्शयति— ' एष वै छन्दस्यः प्रजापतिरा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद पुण्यो भवति ' इति ॥ [v]एष सप्तदशाक्षररूपः[९] [v]प्रजापति [v]छन्दस्यः,

३–३ तं–मन्यते पदकारः । *[ ' वीर्यत्वात् प्रजापतिरूपत्वम् ' इतिः सम्भावितः पाठः मैसूर-मुद्रितपुस्तके तलटिप्पण्याम । ] ।

७ क–पुष्टि° । ८ म ४–होतारम् । ९ आ–अक्षररूपः ।

**वसन्त(४)मृतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो य एवं वेदाग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमित्याहाग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान् ताभ्यामेव चक्षुरात्मन् धत्तेऽग्नेरहं**

वसन्तम् (४) । ऋतूनाम् । प्रीणामि । इति । आह । ऋतवः । वै । प्रयाजा इति प्र-याजाः । ऋतून् । एव । प्रीणाति । ते । अस्मै । प्रीताः । यथापूर्वमिति यथा-पूर्वम् । कल्पन्ते । कल्पन्ते । अस्मै । ऋतवः । यः । एवम् । वेद । अग्नीषोमयोरित्यग्नी-सोमयोः । अहम् । देवयज्ययेति देव-यज्यया । चक्षुष्मान् । भूयासम् । इति । आह । अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम् । वै । यज्ञः । चक्षुष्मान् । ताभ्याम् । एव । चक्षुः । आत्मन् । धत्ते ।

‘ वसन्तम् ’ इत्यादयः प्रयाजानुमन्त्रणमन्त्राः ॥ पञ्चत्वान्वयाल्लोकस्थितिहेतुत्वाच्च [v]प्रयाजा ऋतवः । प्रथममिज्यन्त इति प्रयाजाः । “ प्रयाजानुयाजौ यज्ञाङ्गे ” ( पा ७.३.६२ ) इति कुत्वाभावः । थाथादिना उत्तरपदान्तोदात्तत्वम् ( पा ६.२.१४४ ) । कल्पन्ते अविपर्यासेन प्रवर्तन्ते ॥

‘ अग्नीषोमयोः ’ इत्याज्यभागानुमन्त्रणम् ॥ “ ईदग्नेः° ” ( पा ६.३.२७ ) इतीत्वम् । “ अग्नेः स्तुत्स्तोमसोमाः ” ( पा ८.३.८२ ) इति षत्वम् । “ देवताद्वन्द्वे च ” ( पा ६.२.१४१ ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

छन्दःसु वेदेषु सारत्वेन निष्पन्नः । अत एव तृतीयकाण्डे समाम्नायते—“ एतद्वै छन्दसां वीर्यमा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारः ” ( तैसं ३.३.७ ) इति । [v]यः [v]एवं प्रजापतिं छन्दःसारं [v]वेद स उत्कृष्टः [v]भवति । ‘ त्वोवेद ’ ‘ त्वंवेद ’ इत्यत्रोभयत्रैकपद्यं सांप्रदायिकम् ॥

**वसन्तमिति** ॥ द्वितीयानुवाकोक्तानां प्रयाजानुमन्त्रणमन्त्राणां रूपककल्पनया तात्पर्यं व्याचष्टे— ‘ वसन्तमृतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो य एवं वेद ’ इति ॥ ऋतुदेवतास्तत्कल्पनया प्रीयन्ते । [v]प्रीताः चास्मै यजमानाय [v]यथापूर्वं [v]कल्पन्ते अविपर्यासेन प्रवर्तन्ते [10]स्वस्वकालोचितपुष्पोद्भवसंतापवृष्ट्यादिलक्षणयुक्ता भवन्ति । वेदितुरपि एतदेव[11] फलम् ॥

**अग्नीषोमयोरिति** ॥ आज्यभागानुमन्त्रणमन्त्रं व्याचष्टे—‘ अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमित्याहाग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान् ताभ्यामेव चक्षुरात्मन् धत्ते ’ इति ॥ “ चक्षुषी वा एते यज्ञस्य यदाज्यभागौ ” ( तैसं २.६.२ ) इत्यस्मिन्ननुवाके यज्ञचक्षुष्ट्वमाज्यभागयोः सम्यक् प्रतिपादितम् । अतस्तदीयदेवताभ्यां यज्ञस्य चक्षुष्मत्त्वं यजमानस्य तत्फलं चोच्यते ॥

१०. तं-ति-स्वस्वकालोचितपुष्पोद्गमसंताप°; क.म ४-स्वस्वकालोचितपुष्पागमसंताप° ।
११. आ.क.ति.म४-तदेव ।

देवयज्ययाऽन्नादो भूयासमित्याहाग्निर्वै देवानामन्नादस्तेनैवा(५)ऽन्नाद्यमात्मन् धत्ते दब्धिरस्यदब्धो भूयासममुं दभेयमित्याहैतया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नोत्यग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याहाग्नीषोमाभ्यां वा

अग्नेः । अहम् । देवयज्ययेति देव–यज्यया । अन्नाद इत्यन्न–अद । भूयासम् । इति । आह । अग्निः । वै । देवानाम् । अन्नाद इत्यन्न–अद । तेन । एव ( ५ ) । अन्नाद्यमित्यन्न—अद्यम् । आत्मन् । धत्ते । दब्धिः । असि । अदब्धः । भूयासम् । अमुम् । दभेयम् । इति । आह । एतया । वै । दब्ध्या । देवाः । असुरान् । अदभ्नुवन् । तया । एव । भ्रातृव्यम् । दभ्नोति । अग्नीषोमयोरित्यग्नी–सोमयो । अहम् । देवयज्ययेति देव–यज्यया । वृत्रहेति वृत्र–हा । भूयासम् । इति । आह । अग्नीषोमाभ्यामित्यग्नी–सोमाभ्याम् । वै । इन्द्रः । वृत्रम् । अहन् । ताभ्याम् । एव ।

'अग्नेरहम्' इत्याग्नेयस्य पुरोडाशस्यानुमन्त्रणम्—- 'अग्निर्वै' इत्यादि ॥ Vदेवानां मध्ये Vअग्नि Vअन्नाद अन्नस्य अत्ता, हविषां भोक्तृत्वात् । अणपवाद । पचाद्यच् (पा ३ १ १३४ ) । Vअन्नाद्यम् अन्नस्यादनमन्नाद्यम् अन्नादनसामर्थ्यम् । छान्दसो भावे क्यप् (प्) । यद्वा—अन्नात्मकमदनीयमन्नाद्यम् । "गदमदचरयमश्च" (पा ३ १ १०० ) इति चकारस्यानुक्तसमुच्चयार्थत्वाद्यत् ॥

'दब्धिरसि' इत्युपांशुयाजस्यानुमन्त्रणम्— 'एतया वै' इत्यादि ॥ Vदब्ध्या दम्भनेन शत्रूणां दम्भनहेतुना । उपांशुयाजेन[4] Vदेवा Vअसुरान् Vअदभ्नुवन् हिंसितवन्तः ॥

'अग्नीषोमयोः' इत्यग्नीषोमीयस्यानुमन्त्रणम् ॥ स्तृणुते नाशयति ॥

अग्नेरिति ॥ आग्नेययागानुमन्त्रणमन्त्रं व्याचष्टे—'अग्नेरहं देवयज्ययाऽन्नादो भूयासमित्याहाग्निर्वै देवानामन्नादस्तेनैवान्नाद्यमात्मन् धत्ते' इति ॥ Vअन्नादः [12]बह्वाशी न त्वन्यदेववदल्पाशी ॥

दब्धिरिति ॥ उपांशुयाजानुमन्त्रणमन्त्रं व्याचष्टे—'दब्धिरस्यदब्धो भूयासममुं दभेयमित्याहैतया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नोति' इति ॥ Vएतया उपांशुयाजरूपया Vदब्ध्या वैरिघातिन्या हेत्या Vअदभ्नुवन् हिंसितवन्तः । [13]-अनया Vएव दब्ध्या Vभ्रातृव्य वैरिणं Vदभ्नोति मारयतीत्यर्थः-[13] ॥

अग्नीषोमयोरिति ॥ पौर्णमासीगतद्वितीयपुरोडाशानुमन्त्रणमन्त्रं व्याचष्टे— 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्याहाग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन् ताभ्यामेव भ्रातृव्यꣳ स्तृणुते' इति ॥ वृत्रनामकोऽसुरोऽग्नीषोमौ देवौ दन्तैः संदष्टवान् । [14]तौ [15]निःसारयितुमिन्द्रः शीतज्वरसंतापौ वृत्रे प्रयुज्य कम्प्यमानाद्वृत्रात् तौ निःसार्य वृत्रं हतवान् इति द्वितीयकाण्डे ( तैसं २ ५ २ ) स्पष्टीभविष्यति । Vस्तृणुते हिनस्ति ॥

४ तं ति–'उपांशुयाजेन' इत्यस्यानन्तरम् 'अङ्गेन' ।

१२ तं ति–सर्वाशी; क–'बह्वाशी' नास्ति । १३-१३ आ.हा–'अनया. ..मारयतीत्यर्थः' नास्ति । १४. म४–तान् । १५. म४–निरासयितुम् ।

इन्द्रो वृत्रमहन् ताभ्यामेव भ्रातृव्यꣳ स्तृणुत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्याहेन्द्रियाव्येवान्नादो भवतीन्द्रस्या(६)ऽहं देवयज्ययेन्द्रियावी भूयासमित्याहेन्द्रियाव्येव भवति महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमित्याह जेमानमेव महिमानं गच्छत्यग्नेः स्विष्टकृतोऽहं देवयज्यया—

भ्रातृव्यम् । स्तृणुते । इन्द्राग्नियोरितीन्द्र—अग्नियोः । अहम् । देवयज्ययेति देव—यज्यया । इन्द्रियावी । अन्नाद इत्यन्न—अदः । भूयासम् । इति । आह । इन्द्रियावी । एव । अन्नाद इत्यन्न—अदः । भवति । इन्द्रस्य (६) । अहम् । देवयज्ययेति देव—यज्यया । इन्द्रियावी । भूयासम् । इति । आह । इन्द्रियावी । एव । भवति । महेन्द्रस्येति महा—इन्द्रस्य । अहम् । देवयज्ययेति देव—यज्यया । जेमानम् । महिमानम् । गमेयम् । इति । आह । जेमानम् । एव । महिमानम् । गच्छति । अग्नेः । स्विष्टकृत इति स्विष्ट—कृतः । अहम् । देवयज्ययेति देव—यज्यया ।

'इन्द्राग्नियोरहम्' इत्यैन्द्राग्नस्यानुमन्त्रणम्—'इन्द्रियाव्येव' इत्यादि ॥ इन्द्रेण [v]इन्द्रियावी, अग्निना [v]अन्नादः च भवति । "बहुलं छन्दसि" (पा ५·२·१२२) इति विनिः, "अन्येषामपि दृश्यते" (पा ६·३·१३७) इति दीर्घत्वम् ॥ 'इन्द्रस्य' इति ऐन्द्रस्य सांनाय्यस्यानुमन्त्रणम् ॥

'महेन्द्रस्य' इति माहेन्द्रस्य ॥ जेमा जेतृत्वम् सर्वोत्कृष्टत्वम् । "तुश्छन्दसि" (पा ५·३·५९) इति जेतृशब्दादिमनिच् । छान्दस इकारलोपः, "तुरिष्ठेमेयःसु" (पा ६·४·१५४) इति तृलोपः । जनयितृत्वं वा । जनेश्छान्दसो जाभावः, "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५) इति वा व्यत्ययेन भावे जयतेर्मनिन्प्रत्ययः । छान्दसमन्तोदात्तत्वम् । [v]महिमानं महत्त्वम् । मह पूजायाम् । सर्वेषां पूजार्हत्वम् । पूर्ववत् मनिन्प्रत्ययः स्वरश्च ॥

इन्द्राग्नियोरिति ॥ अमावास्यागतद्वितीयपुरोडाशानुमन्त्रणमन्त्रं व्याचष्टे — 'इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्याहेन्द्रियाव्येवान्नादो भवति' इति ॥

इन्द्रस्येति ॥ सांनाय्यानुमन्त्रणमन्त्रं व्याचष्टे— 'इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासमित्याहेन्द्रियाव्येव भवति' इति ॥

महेन्द्रस्येति ॥ गतश्रियां राजन्यादीनां सांनाय्यानुमन्त्रणमन्त्रं व्याचष्टे — 'महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमित्याह जेमानमेव महिमानं गच्छति' इति ॥ [१६-v]जेमानं जेतृत्वलक्षणं, [v]महिमानं विद्यैश्वर्यादिमहत्त्वमित्यर्थः-[१६] ।

अग्नेरिति ॥ स्विष्टकृदनुमन्त्रणमन्त्रं व्याचष्टे— 'अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवाऽऽत्मन् धत्ते प्रति यज्ञेन तिष्ठति' इति ॥

१६—१६. आ.हा—'जेमानं ......त्यर्थः' नास्ति ।

ऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहाऽऽयुरेवाऽऽत्मन् धत्ते प्रति यज्ञेन तिष्ठति ॥११॥

[ प्रतिष्ठा मह्वदस्तु विद्युत वसन्त तेनैवेन्द्रस्याष्टात्रिंशच्च ]

ायुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति–स्थाम् । गमेयम् । इति । आह । आयु । एव । आत्मन् । धत्ते । प्रतीति । यज्ञेन । तिष्ठति ॥ ११ ॥

[ कासं ३२ १ ]

---

'अग्ने. स्विष्टकृत' इति स्विष्टकृतोऽनुमन्त्रणम् ॥ [v]आयुष्मान् दीर्घायु । आयुर्दीर्घमात्मनि थापयति । 'प्रति यज्ञेन तिष्ठति' इति । यज्ञेन या प्रतिष्ठा यजमानस्य भवति, "प्रतिष्ठति प्रजया पशुभिर्यजमान" ( तैब्रा ३ ३ ९ ) इति, तामपि प्रतिष्ठां गच्छतीति । यद्वा—तिष्ठेति परमात्मोच्यते । यज्ञेन यजनेन त प्रतितिष्ठति प्राप्नोतीति ॥

॥ इति षष्ठ एकादशोऽनुवाक. ॥

---

अथ मीमांसा ॥ दशमाध्यायस्याष्टमे पादे चिन्तितम्–

" नार्षेय न च होतार नानूयाजेष्वितीदृशः ।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात् ॥
अन्याय्यत्वाद्विकल्पस्य [17]विध्यंश [18]सा निषेधगीः[18] ।
नेत्यनूयाजधातुस्थस्तदर्थः पर्युदस्यति[19] ॥ " ( जैन्या १० ८.१–२ ) ॥

[20]महापितृयज्ञे चोदकप्राप्तं वरण प्रत्येवं श्रूयते—" नाऽऽर्षेयं वृणीते न होतारम् " ( ब्र मैसं १ १० १८) इति । तथाऽनारभ्यवादे श्रूयते—'आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षर द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त.' (तैस १.६ ११) इति । [21]तथोक्तम्—" नानूयाजेषु येयजामहं करोति " (सत्याषाढ श्रौसू २१ २.६०) इति । तत्र वरणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयेते । 'ये यजामहे' ( तैस १ ६ ११ ) इति मन्त्रस्य तु द्वाभ्यां प्रत्यक्षवचनाभ्यां विधिप्रतिषेधप्रतीतिः । तत्र विधायकप्रतिषेधकयोर्द्वयोः प्रमाणयोरवैयर्थ्याय विकल्प इति प्राप्ते ब्रूम —अष्टदोषग्रस्तत्वाद्विकल्पो न न्याय्यः । [22]ननु परस्परविरुद्धयोर्विधिनिषेधयोः समुच्चयस्याप्य संभवात् का गतिरत्रेति चेत् । उच्यते—निषेधत्वेन प्रतीयमानम् 'इदं न' इत्यनेन शब्देनोपेतं वाक्यं विधिवाक्यस्य [23]अंशो भविष्यति । तथा हि—'यदि न' इत्यय शब्दः करोतिना सबध्येत तदा येयजामहं न करोतीत्येव प्रतिषेधः स्यात् । यदि च वृणीत [24]इत्येवमाऽऽख्यातप्रत्ययेन संबध्येत तदा वरण न कर्तव्य मिति निषिध्येत । न [25]त्वेव सबध्यते, किं त्वनूयाजपदेन वृञ् धातुना च संबध्यते । तथा सत्यनूया जव्यतिरिक्तेषु[26] यागेषु 'येयजामहः' कर्तव्यः । वरणव्यतिरिक्तमङ्गजातमनुष्ठेयमित्यनूयाजवरणपर्युदासेन विधेरेव विशेषितत्वे सति प्रतिषेधवाक्यस्य [27]कस्यचिदभावाच्च विकल्पः शङ्कितुमपि शक्य ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

१७ ति–विध्यङ्ग । १८ क–निषेधाय, म–सो (?) निषेधः । १९ म४–पर्युदास्यते । २० क–पितृयज्ञे । २१ ति–तत्रोक्तम् । २२ इ उ पा हा–न च । २३, आ हा–शेषः । २४ ति–इत्यत्राख्यात°, म ४–इत्याख्यात° । २५ आ हा–चैवम् । २६ ति–°याजातिरिक्तेषु । २७ स ति–कदाचिदभा° ।

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥

इन्द्रम् । वः । विश्वतः । परीति । हवामहे । जनेभ्यः । अस्माकम् । अस्तु । केवलः ॥

"ऐन्द्रं चरुं निर्वपेत् पशुकामः" ( तैसं २·२·७ ) इत्यस्य पुरोनुवाक्या—"इन्द्रं वः" इति गायत्री ॥ याजमानब्राह्मणमध्ये याज्याकाण्डं वैश्वदेवम् । हे ऋत्विग्यजमानाः, वः युष्माकं मम जनेभ्यः पुत्रादिभ्यः सामर्थ्याद्युष्मभ्यमस्मभ्यं च सर्वार्थम् इन्द्रं विश्वतः परि विश्वस्मादुपरि हवामहे आह्वयामः । "पञ्चम्याः परावध्यर्थे" ( पा ८·३·५१ ) इति सत्वम् । यद्वा विश्वतो जनेभ्य उपरिस्थितमिन्द्रं वो युष्मदर्थं हवामहे । किमर्थं ? अस्माकम् एव केवलः असाधारणोऽस्तु साधको नान्येषामिति ॥

सप्तमादिष्वेकादशान्तेषु [1]पञ्चस्वनुवाकेषु याजमानब्राह्मणप्रसङ्गादाध्वर्यवब्राह्मणमपि कियदभिहितम् । द्वादशानुवाके याज्यापुरोनुवाक्या[2] उच्यन्ते ।

काम्येष्टिकाण्डे सप्तमानुवाके काचिदिष्टिरेवमाम्नायते—"ऐन्द्रं चरुं निर्वपेत् पशुकाम ऐन्द्रा वै पशव इन्द्रमेव भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवति" ( तैसं २·२·७ ) इति । पशूनामैन्द्रत्वमर्थवादान्तरे द्रष्टव्यम् ॥ पुरोडाशादिपरित्यागेन चरुविधानं प्रशंसति—"चरुर्भवति स्यादेवास्मै योनेः पशून् प्र जनयति" ( तैसं २·२·७ ) इति ॥ [3]वाजपेये हि[3] नैवारं चरुम् अश्वानवघ्रापयेत् । अश्वमेधेऽपि "लाजी३न्" ( तैसं ७·४·२० ) इत्यादिमन्त्रेणाश्वायान्नमुपावहरन्ति[4] । तच्च भक्षितमन्नमुत्पत्स्यमानानामश्वानां रेतोरूपेण बीजमित्यभिप्रेत्य चरोः पशुयोनित्वमत्राभिधीयते ॥

इन्द्रमिति ॥ तस्या ऐन्द्रेष्टेः पुरोनुवाक्यामाह—'इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः' इति । हे ऋत्विग्यजमानाः, वः युष्माकं जनेभ्यः पुत्रभृत्यादिजनसिद्ध्यर्थं विश्वतः परि सर्वस्य जगत उपरि स्थितमुत्कृष्टत्वेन वर्तमानम् इन्द्रं हवामहे आह्वयामः । स चेन्द्रः अस्माकं केवलः अस्तु असाधारणोऽस्तु । इतरयजमानेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः ॥

इन्द्रमिति ॥ याज्यामाह—'इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः । शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः' इति ॥ अग्निचयनमनुतिष्ठन्तः नरः इन्द्रं नेमधिता [5]वह्न्यादिभिर्देवैः सह नेमस्यार्धस्य हविषो धिता धारणाय हवन्ते आह्वयन्ति । [6]अत एव[6] चयनब्राह्मणमेवमाम्नायते—"अर्धेन्द्राणि जुहोति" ( तैसं ५·४·८ ) इति । तन्मन्त्राश्चैवमाम्नायन्ते—"अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे" ( तैसं ४·७·६ ) इत्यादयः[7] । यत् यस्मात् कारणात् पार्याः चितेऽग्नावग्निष्टोमादिपारमर्हन्तो यजमानाः ताः धियः युनजते युञ्जते[8] तान्यग्निष्टोमादीन्यनुतिष्ठन्ति[9] । तादृश हे इन्द्र, त्वं शूरः रक्षोभिरनभिभूतः नृषाता मनुष्येभ्यः सनिता धनस्य दाता शवसः अस्मदीयस्य बलस्य चकानः [10]तर्पको भूत्वा नः अस्मान् गोमति बहुगवादिपशुयुक्ते व्रजे संघे आ भज आभिमुख्येन स्थापय ॥

१. क—'पञ्चसु' नास्ति । २. आ.क.म४.हा—याज्याः । ३-३ इ.उ.पा—वाजपेयेहि । ४. तं—उपाहरति, ति—उपाहरन्ति; क.म४—उपावहरति । ५. क—वह्न्यादि° । ६-६ इ.उ.पा.हा—अस्य । ७. इ.उ.पा.हा—इत्यादि । ८. क—'युञ्जते' नास्ति । ९. क—°नुगच्छन्ति । १०. क—सम्यक् प्रकाशकः ।

ष्टियाज्यापुरोनुवाक्याः ]

इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥

इन्द्रम् । नरः । नेमधितेति नेम–धिता । हवन्ते । यत् । पार्याः । युनजते । धियः । ताः ।
ः । नृषातेति नृ–साता । शवसः । चकानः । एति । गोमतीति गो–मति । व्रजे । भज । त्वम् । नः ॥

~~~~~~~~~~~~~~~~~~~~

तत्रैव याज्या—'इन्द्रं नरः' इति त्रिष्टुप् ॥ नरः मनुष्याः इन्द्रं हवन्ते आह्वयन्ति । दृशम् ? नेमधिता, नेम इत्यर्धस्य नाम* । "यत्सर्वेषामर्धमिन्द्र प्रति" ( तैस ५ ४ ८ ) ते सर्वेषां भागार्धेन इन्द्रो धीयते धार्यत इति नेमधित । निष्ठायां "सुधितवसुधितनेमधित°" पा ७ ४ ४५ ) इति धिभावो निपात्यते। "सुपां सुलुक्°" ( पा ७ १ ३९) इति द्वितीयैक-चनस्याकारः । "तृतीया कर्मणि" ( पा ६ २ ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । कदा नरसौ नेमेन धार्यत इत्याह—यत् यदा । तेनैव सप्तम्या लुक् । पार्या परलोके साधव । छन्दसो ण्य. ( पा ४ ४ ९०, ९३, ९८ ) । यद्वा— दुःखानां पारं समाप्तिः, तत्र साध्वी धियः कर्माणि ताः यदर्थमिन्द्रमाह्वयन्ति, ताः यदा युनजते युञ्जते अनुतिष्ठन्ति तदा नेमधितेति । 'छन्दस्युभयथा" ( पा ३ ४ ११७ ) इत्यार्धधातुकत्वेन श्नमो ङित्वाभावाद्, "श्नसोरल्लोप." पा ६ ४ १११ ) इति न प्रवर्तते । अथेन्द्रः प्रत्यक्षमुच्यते— शूरः वीरः । नृषाता नृभिर्मनुष्यैः साता सातः सभक्तः आश्रितः नृषातः । पूर्ववदाकारः । "जनसनखनां सञ्झलोः" पा ६ ४ ४२ ) इत्यात्वम् । पूर्ववत् पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ ४८)। सुषामादि-त्वात् षत्वम् ( पा ८ ३ ९८ ) । यद्वा— नरो मनुष्याः सनितारः सभक्तारः दातारो वा यस्य नृषाता । छान्दसमात्वम् । "ऋतश्छन्दसि" ( पा ५.४.१५८ ) इति कबभाव । शवसः बलस्य नेतारो यस्य दातारो यजमाना[ यजना ]धीनबलत्वात् । यद्वा— शवस बलस्य नृभ्यो दाता । छान्दसमात्वं पूर्वपदप्रकृतिस्वरत्वं च । चकानः तृप्तिशील । चक तृप्तौ, भौवादिक उदात्तेत् । ताच्छीलिकश्चानश् ( पा ३ २ १२९ ) । "बहुलं छन्दसि" ( पा २ ४ ७३ ) इति शपो लुक् । ईदृशस्त्वं नः अस्मान् गोमति व्रजे गोऽजाविमनुष्यादिमति संघाते । यद्वा—व्रजे गोष्ठे भूयिष्ठगोभिर्युक्ते आ भज आभिमुख्येनास्मान् योजय पशुमन्तं मां कुरु । "द्व्यचोऽतस्तिङः" ( पा ६.३ १३५ ) इति संहितायां दीर्घत्वम् ॥

~~~~~~~~~~~~~~~~~~~~

इष्ट्यन्तरं विधत्ते– "इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत् पशुकाम इन्द्रियं वै पशव इन्द्रमेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रियं पशून् प्र यच्छति पशुमानेव भवति"

~~~~~~~~~~~~~~~~~~~~

* [ द्र निरुक्त ३ २० 'त्वः नेमः इति अर्धस्य'। ]
~~~~~~~~~~~~~~~~~~~~

इ॒न्द्रि॒याणि॑ शतक्रतो॒ या ते॒ जने॑षु प॒ञ्चसु॑ । इन्द्र॒ तानि॑ त॒ आ वृ॑णे ॥
अनु॑ ते दायि म॒ह इ॑न्द्रि॒याय॑ स॒त्रा ते॒ विश्व॒मनु॑ वृत्र॒हत्ये॑ ।
अनु॑ (१) क्ष॒त्रमनु॒ सहो॑ यजत्रेन्द्र दे॒वेभि॒रनु॑ ते नृ॒षह्ये॑ ॥

इ॒न्द्रि॒याणि॑ । श॒त॒क्र॒तो॒ इति॑ शत क्र॒तो॒ । या । ते॒ । जने॑षु । प॒ञ्चस्विति॑ प॒ञ्च-सु॒ ।
इन्द्र॑ । तानि॑ । ते॒ । एति॑ । वृ॒णे॒ ॥
अन्विति॑ । ते॒ । दा॒यि॒ । म॒हे । इ॒न्द्रि॒याय॑ । स॒त्रा । ते॒ । विश्व॑म् । अन्विति॑ । वृ॒त्र॒ह॒त्य॒ इति॑ वृत्र-ह॒त्ये॑ ।
अन्विति॑ (१) । क्ष॒त्रम् । अन्विति॑ । सह॑ । य॒ज॒त्र॒ ।
इन्द्र॑ । दे॒वेभि॑ । अन्विति॑ । ते॒ । नृ॒षह्य॒ इति॑ नृ॒-सह्ये॑ ॥

" इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत् पशुकाम " ( तैस २ २ ७ ) इत्यस्य पुरोनुवाक्या—' इन्द्रियाणि ' इति गायत्री ॥ हे इन्द्र शतक्रतो, या यानि ते तव इन्द्रियाणि वीर्याणि पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिषु देवमनुष्यपितृरक्षोगन्धर्वेषु वा त्वया दत्तानि तिष्ठन्ति । यद्वा—पञ्चसु जनेषु निमित्तभूतेषु तत्पालनार्थानि[1] यानि तव वीर्याणि त्वयि तिष्ठन्ति तानि अहम् आ वृणे आभिमुख्येन याचे ते तवैव प्रसादात् मदभिमतान्यपि साधयन्त्विति प्रार्थये । त्वं च तथानुज्ञातुमर्हसि, यथाहं पशुमान् स्यामिति । यद्वा—मय्यपि तानि वीर्याणि सन्त्विति याचे, त्वं च तानि देहि । " स एवास्मा इन्द्रियं पशून् प्र यच्छति पशुमानेव भवति " ( तैस २ २ ७ ) इति ब्राह्मणम् ॥

तत्रैव याज्या—' अनु ते ' इति त्रिष्टुप् ॥ हे इन्द्र यजत्र यष्टव्य । यजेरत्र ( उ ३८५ ) । ते तुभ्यं दायि दीयते देवेभि ऋत्विग्भि, सामर्थ्याद्धविरिति गम्यते । विश्व

(तैस २ २ ७) इति । इन्द्रियं बलं प्रभूतमस्यास्तीतीन्द्रियावान् । क्षीरघृतादिद्वारेणेन्द्रियवृद्धिहेतुत्वात् पशूनामिन्द्रियत्वम् । इन्द्रियं पशून् । चेति [11]समुच्चये अध्याहर्तव्यः ॥

इन्द्रियाणीति ॥ तस्यामिष्टौ पुरोनुवाक्यामाह– ' इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे ' इति ॥ हे शतक्रतो, पञ्चसु जनेषु निषादपञ्चमेषु ब्राह्मणादिवर्णेषु यानि ते तवानुग्रहात् इन्द्रियाणि सामर्थ्यानि सन्ति, हे इन्द्र, तानि सर्वाणि ते तवानुग्रहात् आ वृणे समन्तात् गृह्णामि ॥

अन्विति ॥ याज्यामाह—' अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ' इति ॥ यजत्र यष्टव्य हे इन्द्र, महे महते सर्वेभ्योऽभि

१ मै–पञ्चजनपरिपा ।

११. क तं ति म४–समुच्चयो ।

न्द्रेष्टियाज्यापुरोनुवाक्याः ]

आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥

एति । यस्मिन् । सप्त । वासवा । तिष्ठन्ति । स्वारुह इति स्व-रुह । यथा ।
ऋषि । ह । दीर्घश्रुत्तम इति दीर्घश्रुत्-तम इन्द्रस्य । घर्म । अतिथि ॥

त्त्वमपि तुभ्यमेव दीयते, त्वत्प्रधानत्वादेवानाम् । यद्वा— विश्वं हविस्तुभ्यमेव दीयतां किमन्येभ्य[2] । छान्दसो लुङ् । "अमाङ्योगेऽपि" (पा ६.४ ७५) इत्यडभावश्छान्दसः । सत्रा सत्रेषु सर्तव्येषु यज्ञेषु सर्वेष्वपि । सप्तम्या आकार (पा ७.१ ३९) । देवतान्तरेभ्य न्द्रस्य विशेषानाचष्टे— [v]महे महते [v]इन्द्रियाय वीर्याय [v]अनु । द्वितीयार्थे चतुर्थी । [3]महदिन्द्रिय-तुभावम् अनुशब्दो द्योतयति । महतेन्द्रियेण तद्वानयमिति कृत्वा तुभ्यमेव दीयते । [v]अनु वृत्रहत्ये वृत्रहत्याम् । "सुपां सुलुक्" (पा ७ १ ३९) इति द्वितीयाया एकार । वृत्र तवानयमिति कृत्वा । [v4]अनु [v]क्षत्रं धन, धनवानयमिति[4] कृत्वा । [v]सह बलम्, बलवानयमिति[5] कृत्वा । [v]अनु [v]नृषह्ये, नृषह्य नृणां शत्रूणामभिभवितृत्वम्, सर्वेषां नृणामयमभिभवितेति कृत्वा । "शकिसहोश्च" (पा ३ १ ९९) इति भावे यत् । पूर्ववद्द्वितीयाया एकारः । सुषामादित्वात् त्वम् (पा ८ ३ ९८) ॥

"इन्द्राय घर्मवते पुरोडाशमेकादशकपाल निर्वपेद्ब्रह्मवर्चसकाम" (तैस २ २ ७) इत्यस्य पुरोनुवाक्या—'आ यस्मिन्' इत्यनुष्टुप् ॥ [v]सप्त सृप्तार सप्तसंख्या वा । [v]वासवा. जगतां वासहेतव ।

नाय [v]ते तुभ्यं [v]सत्रा सत्रेषु [v]विश्वं सर्वं हविः देवेभिः अग्न्यादिभिः [v]अनु [v]दायि अनुक्रमेण दीयते । किमर्थम् ? [v]वृत्रहत्ये वृत्रवधम् [v]अनु [v]ते तव इन्द्रियाय बलसिद्ध्यर्थम् । न केवलं वृत्रवधमनुसृत्य, किं तु [v]क्षत्रम् [v]अनु त्वदीयं क्षत्रियत्वजात्यभिमानमनुसृत्य, [v]सहः [v]अनु त्वदीयं बलमनुसृत्य, [v]नृषह्ये वैरिमनुष्यतिरस्कारशीलमनुसृत्य, त्वयि यथोक्तान् गुणानवेक्ष्य [v]ते तुभ्यं पुनः पुनर्दीयत इति शेषः ॥

अन्यामिष्टिं विधत्ते— "इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ब्रह्म-वर्चसं वै घर्म इन्द्रमेव घर्मवन्त स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति" (तैसं २ २ ७) इति ॥ घर्मवते वेदशास्त्रादिप्रयुक्तमाहात्म्यतेजोविशिष्टाय[12] । विद्वत्सभासु[13] वेदशास्त्रादिरूपेण ब्रह्मवर्चसेन दीप्यत इति ब्रह्मवर्चसस्य घर्मत्वम् ॥

एति ॥ एतस्यामिष्टौ पुरोनुवाक्यामाह— 'आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा । ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः' इति ॥ वासयन्ति रथस्योपर्यावित्यमिति [v]वासवा. आदित्य स्याश्वाः[14] । ते च सप्तसंख्याकाः । "सप्त युञ्जन्ति रथमेकचक्रम्" (ऋस १ १६४ २) इति मन्त्रवर्णात् ।

२ मै—किमन्यैर्देवैः; ति—किमन्यैः । ३. त ति—महदिन्द्रियमिषु उद्दीक्ष्य हेतुभावम् ।
४-४ मै—क्षत्रे धन धनवानिति । ५. मै—बलवानिति ।

१२. क—वेदशास्त्रप्रयुक्तमहा°; आ.हा—°तेजोयुक्ताय । १३. आ हा—विद्वत्सु । १४ आदित्याश्वाः ।

आमासु पुक्वमैरय आ सूर्यं॑ रोहयो दिवि ।
घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः ॥

आमासु । पुक्वम् । ऐरयः । एति । सूर्यम् । रोहय । दिवि ।
घर्मम् । न । सामन् । तपत । सुवृक्तिभिरिति सुवृक्ति–भिः । जुष्टम् । गिर्वणसे । गिरः ।

वसव एव वासवा प्रकाशोदकधारणाहरणवितरणकारिणो रश्मयोऽश्वा वा । वसूनां रश्मि समूह एव वा वासवः सप्तशतानि प्रधानानि ते यस्मिन् तिष्ठन्ति । स्वारुह स्वयमेव रोह विचरन्तीति स्वारुहः । सांहितिको दीर्घश्छान्दस । आदित्यपरतन्त्रा अपि स्वैरवृत्तय इव वस भगवन्तमप्यास्थाय यस्मिन् वर्तन्ते । " यथेति पादान्ते " ( फिट् ८५ ) इति सर्वानुद यथाशब्दः । पुनरप्यादित्यो विशेष्यते— ऋषि द्रष्टा सर्वस्य त्रैकालिकस्य लोकसाक्षि दीर्घश्रुत्तम' प्रथितकीर्तितम. । ईदृशो महाभाग. घर्म' आदित्योऽपि इन्द्रस्य अतिथि. अर्थि पार्श्वमागच्छति, इन्द्रनिसृष्टेनोदकेन वाऽर्थी भवति, दीप्यते वा पूज्यत्वेन । हशब्द खल्व तस्मादेवं महानुभावः इन्द्रोऽस्मभ्य ब्रह्मवर्चसं ददात्विति ॥

तत्रैव याज्या— ' आमासु ' इति पथ्याबृहती, तृतीयपादस्य द्वादशाक्षरत्वात आमासु अतप्तासु भूमिष्ठासु अप्सु पक्वं परिणत दिवि नवमासधृत पक्ववदुदकम् ऐ

न चैवं सति " एको अश्वो वहति सप्तनामा " ( ऋसं १·१६४ २ ) इत्यनेन विरोधः ॥ वचनद्वयव विकल्पस्याङ्गीकृतत्वात् । ते च सप्ताश्वाः स्वारुहः यथा आदित्यपरतन्त्रा अपि स्वयमेवाऽऽरोहन्त [15]वर्तन्ते, सुशिक्षितत्वेन प्रेरणं विनैव प्रवृत्तत्वात् । तादृशाः सप्ताश्वाः यस्मिन् आदित्ये आ तिष्ठ [16]अभिवर्तन्ते स आदित्यः ऋषिः ह अतीन्द्रियज्ञाम्येव । सर्वदा वेदत्रयोपेतत्वात् । अत एवाऽऽम्नायते " वेदैरशून्यस्त्रिभिरेति सूर्यः " ( तैब्रा ३ १२ ९ ) इति । दीर्घश्रुत्तमः त्रैलोक्यप्रकाशनेन [17]प्रथितकीर्तितमः ईदृशो घर्मः दीप्यमान आदित्यः इन्द्रस्य गृहे अतिथिः स्वाभीष्टं याचितुं यदा कदाचिदागच तस्येन्द्रस्य महिमा [18]किमु वक्तव्य इत्यभिप्रायः ॥

आमास्विति ॥ याज्यामाह—' आमासु पक्वमैरय आ सूर्यं रोहयो दिवि । घर्मं न सामन् त सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः ' इति ॥ [19]आमासु फलपाकरहितास्वोषधीषु पक्वं सम्यक् पाकयुक्तं हे इन्द्र, त्वम् ऐरयः वृष्टिद्वारा सम्पादितवानसि । सूर्यम् [20]विचरन्तं परिवर्तनसामर्थ्यप्रदानेनानुगृ दिवि आ रोहयसि[21] । [22]हेऋत्विग्यजमानाः जुष्टम् इन्द्रस्य प्रियं हविः पुरोडाशरूपं तपत दुग्धं कुरुत । किमिव ? घर्मं न प्रवर्ग्यमिव, सुवृक्तिभिः [24]हुंकारप्रस्तावादिशोभनभक्तियु

६. तैं तिं—आरोहन्त ।

१५. कं—पर्यन्ते । १६ क—आश्रित्य वर्तन्ते । १७. इ.उ.पा हा—कथित° । १८. हा—किमिव । १९. क—' आमासु ' नास्ति । २० क—चिरन्तन°, तैं ति म४—निरन्तर° । २१. आ. ' अनुग्रह ' नास्ति । २२. ति—रोहय । २३. तैं.ति—ऋत्विग्यजमान° । २४. क.तैं.सि.म४—हिंका

काम्येष्टियाज्यापुरोनुवाक्याः ]

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः ॥ इन्द्रम् । वाणीः । अनूषत ॥

प्रेरयसि, हे इन्द्र, त्वं ᵛसूर्यं च ᵛदिवि ᵛआ ᵛरोहयः आरोहयसि आसमन्तादारोप्य प्रकाशयसि । "प्राणो वा इन्द्रः" (ऐ ब्रा ३ २ ९) इति [7]प्राणवृत्तिभिर्भगवाननुदेति । इदानीं प्रत्यक्षवदिन्द्र उच्यते—ᵛघर्मं ᵛन प्रवर्ग्यमिव ᵛसामन् साम्नि सामविषयाभिः ᵛसुवृक्तिभिः, सुष्ठु शोभनं वा आवृज्यते याभिः स्तुतिभिस्ता सुवृक्तयः । "मन्क्तिन्व्याख्यान°" (पा ६ २ १५१) इत्युत्तरपदान्तोदात्तत्वम् । यद्वा— सुवृक्तिभिः शोभनभक्तिभिः सामभिः । "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम् । सामन्निति व्यत्ययेन तृतीयाबहुवचनस्य सप्तम्येकवचनं, तस्य च "सुपां सुलुक्°" (पा ७ १ ३९) इति लुक् । ननु तृतीया बहुवचनस्यैव लुगस्तु ? नैव शक्यते । "न ङिसंबुद्ध्योः" (पा ८ २ ८) इति नलोपप्रतिषेधो न स्यात् । ᵛजुष्टम् इन्द्रस्य प्रियं भागं ᵛतपत । तस्मै महानुभावाय इन्द्राय दातुं तद्योग्यं संस्कुरुत । सांहितिकोऽस्य दीर्घश्छान्दसः । जुष्टशब्दस्याद्युदात्तत्वमुक्तम् (पा ६ १ २०९) । किं च—ᵛगिर्वणसे गीर्भिर्वननीयाय भजनीयाय स्तोतव्यायेन्द्राय इन्द्रार्थं ᵛगिरः वाचश्च स्तुतिरूपाः तपतेत्येव । गीर्भिर्वननीय इति "गतिकारकयोरपि" (उ ६६६) इत्यसुन् । पूर्वपदप्रकृतिस्वरत्वं च । स चास्मभ्यं ब्रह्मवर्चसं ददात्विति ॥

"इन्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामः" (तैसं २ २ ७) इत्यस्य पुरोनुवाक्या— "इन्द्रमित्" इति गायत्री ॥ ᵛइन्द्रम् ᵛइत् इन्द्रमेव ᵛगाथिनः गाथावन्तः गायका उद्गातारः । व्रीह्यादित्वादिनिप्रत्ययः (पा ५ २ ११६) । ᵛबृहत् बृहता साम्ना ᵛअनूषत इति वक्ष्यते । "सुपां सुलुक्°" (पा ७ १ ३९) इति तृतीयाया लुक् । तथा ᵛअर्किणः अर्कवन्तः होतारः । ऋच स्तुतौ । घञ् (पा ३ ३ १८) । "चजोः कु घिण्यतोः"

ᵛसामन् सामभिर्घर्मं यथा तपन्ति तद्वत्[25] । ᵛगिर्वणसे गीर्भिः स्तुत्यायेन्द्राय ᵛगिरः स्तुतिरूपाः [26-]प्रयुङ्क्तेति शेषः[-26] ॥

। इष्ट्यन्तरं विधत्ते—"इन्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवार्कवन्तं स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति" (तैसं २ २ ७) इति । बुभुक्षुभिरर्च्यमानत्वादादरेण स्वीक्रियमाणत्वादन्नस्यार्कत्वम् ॥

इन्द्रमिति ॥ तत्र पुरोनुवाक्यामाह—'इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत' इति ॥ ᵛगाथिनः सामगाः ᵛबृहत् बृहता साम्ना ᵛइन्द्रम् ᵛइत् इन्द्रमेव ᵛअनूषत अस्तुवन् । ऋच स्तुतौ

७ मै–प्राणवृत्तिर्भग° ।

२५ आ क म४, हा–'तद्वत्' नास्ति । २६–२६ तं ति म४–प्रयुङ्ग्ध्वमिति शेषः; हा–प्रतीयन्ते ।

गायन्ति त्वा गायत्रिणो(२)ऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रतवुद्व॑शमिव येमिरे ॥

गायन्ति । त्वा । गायत्रिण॑ (२) । अर्चन्ति । अर्कम् । अर्किण॑ ।
ब्रह्माण॑ । त्वा । शतक्रतविति शत-क्रतो । उदिति । व॒ꣳशम् । इ॒व । येमिरे ॥

(पा ७ ३ ५२ ) इति कुत्वम् । अर्केभि अर्कै ऋग्भि इन्द्रम् एव अनूषत अस्तुवन् । छान ऐसभाव. (पा ७ १ १० ) । तथा वाणी वाण्य ऋग्यजु सामलक्षणा । " वा छन्दसि (पा ६ १ १०६ ) इति पूर्वसवर्णदीर्घत्वम् । पारिशेष्यादध्वर्यूणां वाण्यश्च इन्द्रमेव अनू नुवन्ति । णू स्तवने, तौदादिक. । छान्दसो लुङ् (पा ३ २ ४ ) । व्यत्ययेनात्मनेपा (पा ३ १ ८५ ) । कुटादित्वाद्गुणाभाव (पा १ २ १, पा १ १ ५ ) । छान्दस इडभाव तथा स इन्द्रोऽस्मभ्यमन्न ददात्विति ॥

तत्रैव याज्या—' गायन्ति ' इत्यनुष्टुप् ॥ हे शतक्रतो बहुकर्मन् शताश्वमेधिन् इन्द्र, गायत्रिण गायत्रेण साम्ना तद्वन्त उद्गातार त्वा गायन्ति । तथा अर्किण अर्कय ऋक्षु साधव होतार त्वाम् अर्कं स्तोतव्यम् अर्चन्ति स्तुवन्ति । यद्वा— अर्च पूजायाम अर्चयन्त्यर्कं पूजनीय त्वामर्चयन्ति पूजयन्ति होतार. । तथा ब्रह्माण. ब्रह्मादय अध्वर्यवो गृह्यन्ते । ते त्वाम् उद् येमिरे उद्यच्छन्ते उत्थापयन्ति वर्धयन्तीत्यर्थ । छान्दसो लिट् । कमिव वंशम् इव । यथोत्तमसंबन्धादिभि सत्पुरुषा वश स्वकुलमुत्कर्षं नयन्ति । यद्वा— वश यथोदकादिभि शनैः वर्धयन्ति तद्वत् स त्वमस्मभ्यमन्न प्रयच्छेति । केचित्— अत्रोभयत्रा शब्दोऽन्नवचन । अर्किण. अन्नवन्त अर्कैर्हविर्लक्षणैरर्कमर्च्यं पूज्य त्वामर्चयन्ति यजन्ते । व समानमिति ॥

इत्यस्माद्धातोरुत्पन्नोऽर्कशब्द [२७]ऋचमाचष्टे । अर्केभिः ऋग्भिः अर्किणः बह्वृचाः इन्द्रम् अस्तुव [२८]-वाणीः अन्या अपि वाचो यजूरूपाः इन्द्रम् अस्तुवन्-[२८] ॥

गायन्तीति ॥ याज्यामाह—' गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रतवुद्वꣳशमिव येमिरे ' इति ॥ हे शतक्रतो, गायत्रिणः गायत्रसामयुक्ता उद्गातारस्त्वां गायन्ति । अर्किं बह्वृचास्त्वाम् अर्चन्ति स्तुवन्ति । ब्रह्माण तदुपलक्षिता अध्वर्यवोऽपि त्वाम् उत् येमिरे उत्थापयन्ति वर्धयन्तीत्यर्थः । किमिव ? वशम् इव । यथा कुलाचारादिभिः स्वकीयं [२९]वंशमुन्नतं कुर्वन्ति तद्वत् ॥

इष्ट्यन्तरं विहविष्कं विधत्ते—" इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रिया इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियाः आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रति तिष्ठति भवत्येव " ( तैसं २ २ ७

८ मै-अर्चयन्ति । ९ तं ति-गायन्ति । १० तं ति पं-सेवादिभिः ।

२७ क-ऋक्त्वमाचष्टे । २८ तं-' वाणीः अस्तुवन् ' नास्ति । २९ क-वंशमुन्नयति उन्नतम

स्मेष्टियाज्यापुरोनुवाक्याः ]

अꣳहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः ।

इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः ॥

अꣳहोमुच इत्यꣳहः-मुचे । प्रेति । भरेम । मनीषाम् ।

ओषिष्ठदाव्न इत्योषिष्ठ-दाव्ने । सुमतिमिति सु-मतिम् । गृणानाः ।

इदम् । इन्द्र । प्रतीति । हव्यम् । गृभाय । सत्याः । सन्तु । यजमानस्य । कामाः ॥

"इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात्" (तैसं २ २ ७) तस्य पुरोनुवाक्या—'अꣳहोमुचे' इति त्रिष्टुप् ॥ अंहसः पापाद्विमोक्त्रे Vओषिष्ठदाव्ने दाव्नेऽतिशयेन दग्धृतम आदित्य तस्मै उदकस्य दात्रे, वर्षार्थं वा तस्य दापयित्रे, यथा—"आदित्याज्जायते वृष्टिः" (मनुस्मृति ३ ७६) इति । उष दाहे । तृजन्तात् (पा ३ १ १३३) "तुश्छन्दसि" (पा ५ ३ ५९) इतीष्ठन्प्रत्ययः । "तुरिष्ठेमेयस्सु" (पा ६ ४ १५४) इति तृशब्दस्य लोपः । ददाते "आतो मनिन्॰" (पा ३ २ ७४) इति वनिप्प्रत्ययः । हे Vइन्द्र, ईदृशाय तुभ्यं Vगृणानाः स्तुवन्तः वयं Vमनीषां बुद्धिं Vप्र Vभरेम त्वत्स्तुत्यर्थं प्रकर्षेण स्वीकुर्मः । कीदृशीं ? Vसुमतिं शोभमानाम् । "नञ्सुभ्याम्" (पा ६.२ १७२) इत्युत्तरपदान्तोदात्तत्वम् । त्वां तोषयेमेत्येवरूपाम् । त्वं च तया स्तुत्या तुष्टः Vइदं Vहव्यं Vप्रति Vगृभाय प्रतिगृहाण । "हृग्रहोर्भश्छन्दसि" (पा ८ २ ३२ वा १) इति भः । "छन्दसि शायजपि" (पा ३ १ ८४) । Vयजमानस्य Vकामाः मनोरथाः अंहसो मुच्येयेत्येवमादयः Vसत्याः अमोघा भवन्तु ॥

इति । तेन घर्मवते निर्वापेणाध्वर्युरस्य यजमानस्य शिरः करोति । [30]"पूर्वविधैश्वर्यादिभिः"[30] समाया मुख्यशिरस्कं करोति । तेनेन्द्रियावते निर्वापेणास्य यजमानस्याऽऽत्मानमेव करोति पुष्टशरीरमेव करोति । अर्कवते निर्वापेण यजमानो भूत एवैश्वर्यं प्राप्त एव [31]सप्तवन्तयोग्ये सम्यगन्ने प्रतितिष्ठति । भवत्येव पुनरप्यधिकमैश्वर्यं प्राप्नोत्येव । अत्र घर्मवतो हविषि 'आ यस्मिन्' इत्यादिके याज्यानुवाक्ये । इन्द्रियावतो हविषि 'इन्द्रियाणि शतक्रतो' इत्यादिके । अर्कवतो हविषि 'इन्द्रमिद्गाथिनो बृहत्' इत्यादिके ॥

इष्ट्यन्तरं विधत्ते— "इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात् पाप्मा वा अꣳह इन्द्रमेवाꣳहोमुचꣳ स्वेन भागधेयेनोप धावति स एवैनं पाप्मनोऽꣳहसो मुञ्चति" (तैसं २ २ ७) इति ॥ [32]अंहःशब्देन अत्र नरकहेतुर्निषिद्धाचरणादिरूपः[33] पाप्मोच्यते ॥ पाप्मनः अंहसः अत्यधिकात् पापादित्यर्थः ॥

अꣳहोमुच इति ॥ तत्र पुरोनुवाक्यामाह—'अꣳहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः । इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः' इति ॥ Vगृणानाः स्तुवन्तो वयम्

३०-३० आ हा-एवंविधैश्वर्यादिभिः । ३१ उ पा हा-सप्तदन एव योग्ये । ३२ क-'अह शब्देन' इत्यस्यानन्तरम् 'आग' । ३३ इ,उ-'चरणरूपः ।

**विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।**
**अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥**

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इन्द्रम् । अह्नः ।
अꣳहसः । यत्र । पीपरत् । यथा । नः । नावा । इव । यान्तम् । उभये । हवन्ते ॥

तत्रैव याज्या—‘ विवेष ’ इति त्रिष्टुप् ॥ यत् यस्मात् मां धिषणा तादृशी बुद्धिः विवेष व्याप्तवती तस्मादहं जजान जातवानस्मि; नो चेदहमजातसम[11] एव स्याम् । अपदात् परत्वान्न निहन्यते । “ समानवाक्ये निघातादयः ” ( द्र. पाभा २·१·१ वा ११ ) इति वचनात् जजानेति न निहन्यते । का पुनः सा धिषणेत्याह—पार्यात् पारे भवात् अत्यन्तात् अह्नः दिवसात् पुरा पूर्वं यावन्मरणदिवसम् इन्द्रं स्तवै स्तुत्या तोषयामीतीयं धिषणा जजान ममोदपादि, अतो जातवानस्मि । पुनश्च धिषणा विशेष्यते—यत्र यस्यां धिषणायां सत्याम् इन्द्रः अंहसः पापात् पीपरत् पारयति उत्तारयति पुरुषम् । पार तीर कर्मसमाप्तौ । छान्दसो लुङ् । “ चङ्यन्यतरस्याम् ” ( पा ६·१·२१८ ) इत्युपोत्तमोदात्तत्वम्[*] । यद्वा—यत्राह्नि अस्मानिन्द्रः अंहसः पारयति उत्तारयति तत्पार्यमहरिति निर्वचनं क्रियते । आ तत इन्द्रं स्तवै, यावदंहोविमोचनमित्यर्थः । अथ पारतरणं विशेष्यते— यथा अंहसः उत्तारितानस्मान् उभये उभयकुलप्रभवा अपि हवन्ते आह्वयन्ति आत्मरक्षार्थं मां रक्ष मां रक्षेति । यथेति निपातो यद्वृत्तप्रतिरूपकः[*] । यथा गणकाराः—“ मात्रायां वेलायां यथा पुरा हो अहो अथो मनो( न्ये ) ” ( द्र. गणपाठ-पा १·४·५७) इति । तेनाख्यातं निहन्यते[*] । यथा नदीमध्ये नावा यान्तम् [12]उभयतटस्थिता आह्वयन्ति, भो मामुत्तारय मामुत्तारयेति, तथांहस उत्तारिणी धिषणा बुद्धिर्मां विवेष व्याप्ता भवतु, अतो जजानाहमिति । तस्मात् [13]तादृशधिषणं मामिन्द्रः अंहसो मुञ्चत्विति ॥

**ओषिष्ठदाव्ने ग्रीष्मकाले दावाग्निनाऽत्यन्तदग्धभूप्रदेशेभ्यो वर्षतौ वृष्टिदात्रे अꣳहोमुचे पापात् मोचयित्रे मनीषां बुद्धिं प्र भरेम स्वीकुर्मः । कीदृशीम् ? सुमतिं, ‘ त्वां तोषयेम ’ इत्येवमादिशोभनमननोपेताम्[34] । हे इन्द्र, इदं त्यज्यमानं[35] हव्यं[36] प्रति गृहाण । तेन यजमानस्य कामाः सत्याः सन्तु ॥**

**विवेषेति ॥ याज्यामाह—‘ विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः । अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ’ इति ॥ यत् यस्मात् कारणात् धिषणा पूर्वोक्ता बुद्धिर्मां**

११. तं.ति-°जातः । *[ शुद्धीकृतः पाठः । मैसूरमुद्रितपुस्तके लिखितपुस्तकेषु च ‘ इत्युत्तरपदान्तोदात्तत्वम् ’ इति पाठोऽस्ति । ] । *[ यथेति निपातस्य यद्वृत्तप्रतिरूपकत्वात् ‘ यावद्यथाभ्याम् ’ ( पा ८·१·३६ ) इति निघातनिषेधः न प्रवर्तते । यथेत्यस्य यद्वृत्तप्रतिरूपकत्वेऽपि साक्षाद्यद्वृत्ताभावात् ‘ यद्वृत्तान्नित्यम् ’ ( पा ८·१·६६ ) इत्यनेनापि निघातनिषेधस्य अप्रवर्तनात् ‘ तिङ्ङतिङः ’ ( पा ८·१·२८ ) इत्यनेन ‘ हवन्ते ’ इत्याख्यातं निहन्यते इत्याशयः भाष्यस्य प्रतिभाति । ] । १२. मै-उभयतः स्थिताः । १३. तं.ति-तादृग्धिषणम् ।

**३४. क-मनसोपेताम् । ३५. क.तं.ति.म४-दीयमानम् । ३६. तं.ति-हव्यान्नम् ।**

द्वियाज्यापुरोनुवाक्याः ]

प्र सम्राजं प्रथममध्वराणा(३)मंहोमुचं वृषभं यज्ञियानाम् ।
अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः ॥

प्रेति । सम्राजमिति सम्–राजम् । प्रथमम् । अध्वराणाम् (३) ।
अंहोमुचमित्यंहः–मुचम् । वृषभम् । यज्ञियानाम् ।
अपाम् । नपातम् । अश्विना । हयन्तम् । अस्मिन् । नर । इन्द्रियम् । धत्तम् । ओजः ॥

तत्रैव याज्या विकल्प्यते—'प्र सम्राजम्' इति त्रिष्टुप् ॥ सम्राज सगतदीप्तिम् । "मो जे सम क्वौ" (पा ८ ३ २५) । अध्वराणां यज्ञानां प्रथम प्रधानम् । अंहोमुचम् 'सो मोक्तारम् इन्द्र, स्थानात् गम्यते । वृषभ वर्षितारं कामानां दातारम् । यज्ञियानां यज्ञा-णां मध्ये सम्राज सम्यग्भ्राजन्त, यज्ञियानां वा संबन्धिन स्वामित्वेन, यज्ञियानां वा वृषभम् । यज्ञर्त्विग्भ्याम्° " (पा ५ १ ७१) इति घः । अपां नपातम् अपां चतुर्थमिन्द्रम् स्मान्मध्यम. ततो मेघ' तत आप इति । न पातयति न च्यावयतीति नपात्, " नभ्राण्ण त्° " (पा ६ ३ ७५) इति निपात्यते । हयन्त वर्धमानम् अविच्छिन्नैश्वर्यं सर्वगम् । हय तौ । हे नर. मनुष्या ऋत्विज', ईदृशमिन्द्र प्र गच्छत प्रकर्षेण बन्धुत्वेन भजत, यथाय जमान' अंहसो मुञ्चतीति । यद्वा—'प्र' इत्यस्याख्यातापेक्षायां धत्तमिति वक्ष्यमाणत्वाच्च धत्तेति ामर्थ्यायोग्य लभ्यते । इदानीमश्विनावुच्येते—हे अश्विनौ, युवामपि अस्मिन् यजमाने इन्द्रिय चक्षुरादिदार्ढ्यम् ओजः बल च प्र धत्त प्रकर्षेण स्थापयतम् । अत्रापि [14]विशेषा-ाकाङ्क्षायां प्रेति प्रकृत संबध्यते, अंहसश्च मुक्तोऽस्त्विति ॥

'धिषण ध्यातवती तस्मादह सुबुद्धिः जजान जातवानस्मि । अत एव पार्यात् अहः [१७]पारे भवात्[१७] मरणदिवसात् पुरा त्वां [१८]स्तवै आमरण स्तवानीत्यर्थः[१८] । यत्र यस्यां धिषणायां सत्याम् इन्द्रोऽस्मान् अंहसः पापात् पीपरत् उत्तारितवान् सा धिषणा विवेषेत्यन्वयः । अथवा यत्राऽहनि अस्मानंहसः पारयति तस्मात् पार्यादह्नः पुरा स्तवा इत्यन्वयः । यथा लोके नावा नद्यां यान्तं नाविकम् उभये कूलद्वय-वर्तिनो हवन्ते; भो, मामुत्तारयेत्याह्वयन्ति तथैवांहसो मुक्तानस्मानुभयकू(कु)लप्रभवा आह्वयन्तीत्यर्थः ॥

प्रेति ॥ अत्रैव विकल्पितामन्यां याज्यामाह—'प्र सम्राजं प्रथममध्वराणामंहोमुच वृषभ यज्ञियानाम् । अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः' इति ॥ हे नरः मनुष्या ऋत्विजः, प्रकर्षेणेन्द्रं भजतेति शेषः । कीदृशम् ? सम्राजं सम्यग्दीप्यमानम् । अध्वराणाम् अग्निष्टोमादीनां प्रथम मुख्यदेवतम् । अंहोमुच पापात् मोचयितारम् । यज्ञियानां यज्ञसंबन्धिफलानां वृषभं वर्षितारम् । अपां वृष्टिरूपाणामुदकानां नपातम् अविनाशयितारम् । हयन्तम् ऐश्वर्यस्य गमयितारम् । हे अश्विनौ, अस्मिन् यजमाने इन्द्रिय चक्षुरादिपाटवम् ओजः बलं च धत्तं स्थापयतम् ॥

इत्यन्तर विधत्ते—" इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभि प्र वेपेरन् राष्ट्राणि वाऽभि समियुरिन्द्रमेव वैमृधं स्वेन भागधेयेनोप धावति स एवास्मान् मृधोऽपहन्ति "

१४ तं प–विशेषणाकाङ्क्षायाम् ।

१७–१७. तं. ति–पुरोतमात् । १८–१८. इ.उ.पा–तथैवामरणं स्तवानीत्यर्थः, हा–तथैवामरणं स्तावानर्थः (?) ।

विन इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासति ॥

वीति । नः । इन्द्र । मृधः । जहि । नीचा । यच्छ । पृतन्यतः ।
अधस्पदमित्यधः—पदम् । तम् । ईम् । कृधि । यः । अस्मान् । अभिदासतीत्यभि—दासति

---

"इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्य मृधोऽभि प्रवेपेरन् राष्ट्राणि वा समियुरिन्द्रमेव वैमृधम्" (तैस २ २ ७) इत्यस्य पुरोनुवाक्या—"वि न इन्द्र" इत्यनुष्टु हे इन्द्र, नः अस्माकं मृधः योद्धॄन् अस्माभिर्युध्यमानान् वि जहि विविधं मारय । किंच पृतन्यतः संग्रामं कर्तुमिच्छतः पुरुषान् नीचा न्यग्भूतान् यच्छ उपरमय मारयेति याव न्यक्शब्दाद्द्वितीयाबहुवचनस्य स्थाने व्यत्ययेन तृतीयैकवचनम् । "अञ्चेश्छन्दस्यसर्वनामस्थानम्" (पा ६ १ १७०) इति तस्या उदात्तत्वम् । पृतनायाः क्यचि "कव्यध्वरपृतनस्य" (पा ७ ४ ३९) इति लोपः । "शतुरनुमः" (पा ६.१ १७३) इति उदात्तत्वम् । किं च यः अस्मान् अभिदासति अभिदासयति उपक्षपयति । दसु उपक्ष ण्यन्ताल्लेट् । "छन्दस्युभयथा" (पा ३ ४ ११७) इति शप आर्धधातुकत्वाण्णिलोप उदात्तनिवृत्तिस्वरो व्यत्ययेन न प्रवर्तते । तम् उपक्षयकारिणम् अधस्पदम् एव कृधि कु ईम् इत्यवधारणे । अस्मत्पादयोरधः प्रणिपतितशिरस्कं कुर्विति यावत् । "बहुलं छन्दसि" (पा २ ४ ७३) इति शपो लुक् । "श्रुशृणुपॄकृवृभ्यश्छन्दसि" (पा ६ ४ १०२) धिभावः । "अधःशिरसी पदे" (पा ८ ३ ४७) इत्यधःशब्दस्य संहितायां सत्वम् ॥

---

(तैसं २ २ ७) इति । मृधो वैरिणो यं यजमानमभितः प्रवेपेरन् प्रकर्षेण कम्पयेयुर्भीतिमुत्पादये अथवा [39]राष्ट्राणि देशानभितो विनाशयितुं समियुः संगता भवेयुः । तस्य यजमानस्य रक्षायै वैमृ शत्रुविनाशकायेन्द्राय निर्वपेत् । स चेन्द्रोऽस्माद्यजमानात् मृधः शत्रूनपहन्ति ॥

वीति ॥ तत्र पुरोनुवाक्यामाह—'वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । अध तमीं कृधि यो अस्माꣳ अभिदासति' इति ॥ हे इन्द्र, नः अस्माकं मृधः शत्रून् विशेषेण ज किं च पृतन्यतः अस्मान् घातयितुं सेनामिच्छतः शत्रून् नीचा न्यग्भूतान् यच्छ उपरतान् कुरु । य अन्यः अस्मान् अभिदासति उपक्षपयति । तम् ईम् तमपि वैरिणम् अधस्पदम् अस्मत्पा प्रणतशिरस्कं कृधि कुरु ॥

---

३९. इ ङ-'राष्ट्राणि' नास्ति ।

इन्द्रं क्षत्रम॒भि वा॒मम्ओजोऽजा॑यथा वृषभ च॒र्षणी॑नाम् ।
अपा॑नुदो॒ जन॑मभित्र॒यन्त॑मुरुं दे॒वेभ्यो॑ अकृणोरु लो॒कम् ॥

इन्द्र॑ । क्ष॒त्रम् । अ॒भीति॑ । वा॒मम् । ओज॑. । अजा॑यथाः । वृ॒ष॒भ । च॒र्ष॒णी॑नाम् ।
अपेति॑ । अ॒नु॒दः॒ । जन॑म् । अ॒मि॒त्र॒यन्त॒मित्य॑मित्र–यन्त॑म् । उ॒रुम् । दे॒वेभ्यः॑ । अ॒कृ॒णो॒. । उ॒ । लो॒कम् ॥

---

तत्रैव याज्या— 'इन्द्र क्षत्रम्' इति त्रिष्टुप् ॥ हे [V]इन्द्र, [V]वाम वननीयं [V]क्षत्रं [15]–क्षत्रियस्य भाव–[15] धन वा [V]ओजः बल च [V]अभि [V]अजायथाः अभिलक्ष्य जातोऽसि । वरिष्ठेन क्षत्रादिना लक्ष्यमाणजनन इत्यर्थः । [V]चर्षणीनां मनुष्याणां [V]वृषभ कामानां [V]वर्षितः अभिमतस्य दातरित्यर्थ । पूर्ववन्नाम उदात्तत्वम् । एवं सामर्थ्यमुपकारत' स्वभावतश्च प्रतिपाद्य इदानीं स्वाभिमत प्रार्थयते— तादृशस्त्वमस्मासु [V]अमित्रयन्त शत्रुभावमिच्छन्त [V]जनम् [V]अप [V]अनुद अपनुद अपकृष्य नाशय । छान्दसो लङ् । किंच—[V]देवेभ्य हवि.प्रदानादिव्यवहारिभ्य [V]उरु विस्तीर्णं [V]लोक स्थानमकृणो. कुरु । छान्दसो लङ् । "धिन्विकृण्व्योर च" (पा ३ १ ८०) इत्युप्रत्यय। । [V]उ इति पादपूरणे अवधारणे वा । देवेभ्य इति षष्ठ्यर्थे वा चतुर्थी (पा २·३ ६२ वा १ ) । देवानां विस्तीर्णं लोकमस्मभ्यं देहीति ॥

---

इन्द्रेति ॥ तत्र याज्यामाह—'इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् । अपानुदो जनममित्रयन्तमुरु देवेभ्यो अकृणोरु लोकम्' इति ॥ हे [V]इन्द्र, [V]वाम वननीयं [V]क्षत्र क्षतात्त्रक्षणम् [V]ओजः अस्मदीयं बल चाभिलक्ष्य [V]अजायथाः एतत् सर्वं सपादयितुं जातोऽसि । [V]चर्षणीनां मनुष्याणां हे [V]वृषभ कामानां [40]वर्षयितः, [V]अमित्रयन्त शत्रुभावमिच्छन्तं [V]जनम् [V]अपानुदः [41]निराकृतवानसि । [V]देवेभ्यः हविष्प्रदानादिव्यवहारिभ्यो यजमानेभ्यः [V]उरुं विस्तीर्णं [V]लोक भोगस्थानम् [V]अकृणोः [V]उ कृतवानेवाऽसि ॥

मृग इति ॥ तस्यामेवेष्टौ विकल्पितां पुरोनुवाक्यामाह—'मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगामा परस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व' इति ॥

---

१५–१५. तं.ति–क्षत्रियस्वभावम् ।

---

४०. आ.हा–वर्षक; इ उ.पा–वर्षसि । ४१. आ–तिरस्कृतवानसि; हा–तिरस्कृतवानेवासि ।

मृगो न भीमः कुचरो गिरिष्ठाः परावत (४) आ जगामा परस्याः ।
सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥

मृग । न । भीम । कुचर । गिरिष्ठा इति गिरि—स्थाः ।
परावत इति परा—वतः (४)। एति । जगाम । परस्याः ।
सृकम् । सꣳशायेति सम्—शाय । पविम् । इन्द्र । तिग्मम् ।
वीति । शत्रून् । ताढि । वीति । मृधः । नुदस्व ॥

~~~~~~~~~~~~~~~~~~~~

याज्याविकल्पः—' मृगो न ' इति त्रिष्टुप् ॥ मृग न मृग इव भीमः बिभेत्यस्मादिति भीमः । " भीमादयोऽपादाने " (पा ३ ४ ७४)। भयहेतुः व्याघ्रः सिंहो वा । कुचरः कुत्सितं चरति । पचाद्यच् (पा ३ १ १३४)। हिंस्रस्वभावः । गिरिष्ठाः पर्वतवासी स इव शत्रून् ताडय । यद्वा—गिरिर्मेघः गजो वा, तत्स्थः । सोर्जस् । परस्याः परावतः महतः दूरात् आ जगाम आगच्छति यो भृत्यं रक्षितुम् । पुरुषव्यत्ययो वा आजगाम आगच्छसि । " उपसर्गाच्छन्दसि धात्वर्थे " (पा ५ १ ११८) इति वतिः । आख्यातस्य सांहितिको दीर्घश्छान्दसः । स त्वमित्थमागत्य हे इन्द्र, सृकं परशरीरादिषु सरणशीलं तिग्मं प्रागेव तीक्ष्णं पविं वज्रं संशाय निशितीकृत्य तेनातितीक्ष्णेन शत्रून् वि ताढि विविधं ताडय । ताडयतेर्लोटि शपो लुक् । " छन्दस्युभयथा " (पा ३ ४ ११७) इत्यार्धधातुकत्वात् णिलोपः । मृधः योद्धॄन् वि नुदस्व विविधं नुद विनाशय ॥

~~~~~~~~~~~~~~~~~~~~

हे इन्द्र, भीम भयंकरः कुचरः प्राणिभक्षणादिरूपकुत्सिताचरणशीलः गिरिष्ठाः पर्वतनिवासी[42] मृगः न सिंहव्याघ्रादिमृग इव परस्याः परावतः [43]महतो दूरात् आ अगाम अस्मद्विरोधिनं हन्तुमागतोऽसि । 'आजगन्थाः' इति हि शाखान्तरे (मैस ४ १२·३) मध्यमपुरुषः पठितः । सृकं परशरीरादिषु सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं सꣳशाय सम्यक् तीक्ष्णं कृत्वा विशेषेण शत्रून्[44] ताडय । मृधः योद्धॄन् शत्रून् विशेषेण नुदस्व निराकुरु ॥

~~~~~~~~~~~~~~~~~~~~

४२. म४—°निष्ठाः । ४३. इ.उ.पा.हा—संहतः । ४४. म४—' शत्रून् ' नास्ति ।
~~~~~~~~~~~~~~~~~~~~

काम्येष्टियाज्यापुरोनुवाक्याः ]

वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू रुज।
वि मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः॥
त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम्।
हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः॥

वीति। शत्रून्। वीति। मृधः। नुद। वीति। वृत्रस्य। हनू इति। रुज।
वीति। मन्युम्। इन्द्र। भामितः। अमित्रस्य। अभिदासत इत्यभि–दासत॥
त्रातारम्। इन्द्रम्। अवितारम्। इन्द्रम्।
हवेहव इति हवे–हवे। सुहवमिति सु–हवम्। शूरम्। इन्द्रम्।
हुवे। नु। शक्रम्। पुरुहूतमिति पुरु–हूतम्। इन्द्रम्।
स्वस्ति। नः। मघवेति मघ–वा। धातु। इन्द्रः॥

अतश्च विकल्प —'वि शत्रून्' इत्यनुष्टुप्॥ $^{v}$शत्रून् विविध नाशय। $^{v}$मृध च योद्धॄन् $^{v}$वि $^{v}$नुद विशेषतो नाशय। $^{v}$वृत्रस्य असुरस्य $^{v}$हनू $^{v}$वि $^{v}$रुज विभिन्धि। वृत्रस्य वा मेघस्य हनुस्थानीये पार्श्वे विरुज विदारय वर्षार्थं याभ्यां वर्षन्ति मेघा। हे $^{v}$इन्द्र, अस्मान् $^{v}$अभिदासतः उपक्षपयत $^{v}$अमित्रस्य शत्रो $^{v}$मन्यु क्रोध $^{v}$वि $^{v}$नुद विनाशय, $^{v}$भामित. अमित्रविषये क्रुद्धस्त्वम्॥

"इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वा" (तैस २ २ ७) इत्यस्य पुरोनुवाक्या—'त्रातारमिन्द्रम्' इति त्रिष्टुप्॥ इदि परमैश्वर्ये, इन्द्र.। ऐश्वर्यहेतून् बहून् दर्शयति—$^{v}$त्रातारम् अवितार देवानां, तस्मादिन्द्रव्यपदेशभाजम्, $^{v}$अवितार सर्वेषामपि तर्पयितारम् $^{v}$इन्द्रम इतोऽपीन्द्रव्यपदेशभाज, $^{v}$हवेहवे $^{v}$सुहव सर्वेष्वाह्वानेषु सुखेनाह्वातव्य निर्भयै। "भावेऽनुपसर्गस्य" (पा ३ ३ ७५) इत्यप् सम्प्रसारण च। "बहुल

---

वीति॥ विकल्पितां याज्यामाह–'वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू रुज। वि मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः' इति॥ हे $^{v}$इन्द्र, $^{v}$शत्रून् विशेषेण $^{v}$नुद निराकुरु। $^{v}$मृधः योद्धॄनपि विशेषेण नुद। $^{v}$वृत्रस्य $^{v}$हनू $^{v}$वि $^{v}$रुज विशेषेण भग्नीकुरु। त्वं $^{v}$भामितः क्रुद्धः सन् $^{v}$अभिदासतः अस्मानुपक्षपयतः $^{v}$अमित्रस्य वैरिणः $^{v}$मन्युं विशेषेण भग्नं कुरु॥

इष्ट्यन्तरं विधत्ते–"इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायते" (तैस २ २ ७) इति। बद्धः शृङ्खलया निगडितः। परियत्तः शृङ्खलामन्तरेण परितो भटैरवरुद्धः॥

त्रातारमिति॥ तत्र पुरोनुवाक्यामाह–'त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम्। हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः' इति॥ $^{v}$त्रातारं शृङ्खलाबन्धात् रक्षितारम्, $^{v}$अवितारं भटावरोधात् रक्षितारं, $^{v}$शूरं बन्धकानामवरोधकानां च तिरस्कारे क्षमम्।

मा ते॑ अ॒स्या॑ं (५) सहसाव॒न् परि॑ष्टाव॒घाय॑ भूम हरिवः परा॒दै ।
त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यास॑ः सू॒रिषु॑ स्याम ॥

मा । ते॒ । अ॒स्याम् (५) । स॒ह॒सा॒व॒न्निति॑ सहसा-व॒न् । परि॑ष्टौ ।
अ॒घाय॑ । भू॒म॒ । ह॒रि॒व॒ इति॑ हरि-व॒ । प॒रा॒दा इति॑ परा-दै ॥
त्राय॑स्व । न॒ः । अ॒वृ॒केभिः । वरू॑थैः । तव॑ । प्रि॒यास॑ः । सू॒रिषु॑ । स्या॒म॒ ॥

छन्दसि " (पा ६ १ ३४ ) इति संप्रसारणे आकारान्तत्वाभावात् खल्वेव भवति । Vशूरं महाबलं सर्वजेतारं तथाप्याहूतमात्र[16] एवागच्छन्तम् Vइन्द्रम् इतोऽपीन्द्रशब्दाभिधेयं, Vशक्र सर्वार्थसाधनशक्तं Vपुरुहूतं बहुभिर्यजमानैराहूतम्, अतोऽप्यासादितेन्द्रत्व देवेश्वर Vहुवे आह्वयामि । शपो लुक् । पूर्ववत् संप्रसारणम् । Vनु इति पादपूरणे । स Vमघवा प्रशस्तैर्धनै अन्नादिभिर्हविरादिभिश्च तद्वान् अतश्चेन्द्रपदाभिधानार्ह Vन अस्मभ्य Vस्वस्ति अविनाश Vधातु ददातु । शपो लुक् । " मघवा बहुलम् " ( पा ६ ४ १२८ ) इति निपात्यते । " इत्थंभूतेन कृतमिति च " ( पा ६ २ १४९ ) इति पुरुहूतशब्दोऽन्तोदात्त । यद्वा—पुरुषु स्थानेषु हूत पुरुहूत । " तृतीया कर्मणि " ( पा ६ २ ४८ ) इति प्राप्त्यभावात् कृदुत्तरपदप्रकृतिस्वरत्वमेव निपात्यते ( पा ६ २ १३९ ) । अत्र पुनः पुन. इन्द्रोक्तिरस्माकं सर्वार्थेषु त्वमेव शरण नान्य इत्यादरसूचनार्था ॥

तत्रैव याज्या—' मा ते अस्याम् ' इति त्रिष्टुप् ॥ हे Vसहसावन् बलवन् इन्द्र । सह एव सहसं बल तद्वान् । " अन्येषामपि दृश्यते " ( पा ६ ३ १३७ ) इति दीर्घत्वम् । यद्वा—

Vहवेहवे Vसुहवं [45-]तस्मिन् तस्मिन्[-45] होमे [46]सुखेनाऽऽह्वातुं शक्यम् । Vशक्र सर्वेषु कार्येषु शक्तियुक्तम् । Vपुरुहूतं बहुभिर्यजमानैराहूतम् Vइन्द्रं Vहुवे Vनु आह्वयाम्येव । [47]प्रतिविशेषणमिन्द्रशब्दावृत्तिर्वाक्यभेदार्थम् । त्रातारमिन्द्रं हुवे । अवितारमिन्द्रं हुव इत्येव वाक्यभेदः । तैश्च बहुभिर्वाक्यैः आदरातिशयः प्रदर्श्यते । 'इन्द्राऽऽगच्छ हरिव आगच्छ[M]' इत्यादौ तद्दर्शनात् । लोकेऽप्यतिबालं पुत्रमुपलालयितुं पितरागच्छ भ्रातरागच्छेत्यादौ [48]तद्दृश्यते । Vमघवा धनवान् Vइन्द्रः Vनः अस्मभ्यं Vस्वस्ति Vधातु अविनाश ददातु ॥

मेति ॥ तत्रैव याज्यामाह—' मा ते अस्या१ सहसावन् परिष्टावघाय भूम हरिवः परादै । त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम ' इति ॥ हे Vसहसावन् बलवन् Vइन्द्र, Vअस्यां Vपरिष्टौ परित्राणार्थं क्रियमाणायामिष्टौ वयम् Vअघाय वैकल्याय Vमा Vभूम । अस्मदनुष्ठिते कर्मणि वैकल्यं मा भूदित्यर्थः ॥ हे Vहरिवः, हरिभिरश्वैस्तद्वन् । Vपरादै परादातु वयं मा भूम कदाचिदप्यवशा मा करवाम

१६ तं ति पं-°प्याहूत ।

४५-४५ आ.क हा-सर्वस्मिन् । ४६ ति-सुखेन होतुम् । ४७. इ ज-प्रतिविशेषणशब्दा° । M[ द्र ऋग्रा ११, शाग्रा ३ ३ ४ १८ ] । ४८. आ-' तद् ' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।
ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥

अनव । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुहूतेति पुरु-हूत । द्युमन्तमिति द्यु-मन्तम् ॥
ब्रह्माणः । इन्द्रम् । महयन्त । अर्कैः । अवर्धयन् । अहये । हन्तवै । उ ॥

अवतुप्रत्ययश्छान्दस । [v]ते तव [v]अस्या [v]परिष्टौ परित सर्वत सर्वस्यामिष्टौ । छादस ह्रस्वत्वम्, शकन्ध्वादित्वाद्वा पररूपत्वम् ( पा ६ १ ९४ वा ४ ) । [v]अघाय पापाय कर्मवैगुण्यलक्षणाय [v]मा [v]भूम विगुणकारिणो न भवेम, सर्वेणापि प्रकारेणाविगुणो यज्ञोऽस्त्विति यावत् । हे [v]हरिव हरिवन् हरिभि [17]हयै तद्वान् । " मतुवसो° " ( पा ८ ३ १ ) इति रुत्वम् । [v]परादै परादानाय च मा भूम प्रत्याख्यानाय । अन्येभ्यो दान परादा । " क्विप् च " ( पा ३ २ ७६ ) इति क्विप् । चतुर्थ्येकवचने आकारलोपाभावश्छा दसः । यद्वा—तुमर्थे कैप्रत्यय, ( द्र काशिका पा ३ ४ १० ) यथा—' प्रयै ' इति । परादातुं च वय मा भूम कदापि त्वया त्याज्या मा भूमेत्यर्थ । तस्मात् [v]नः अस्मान् [v]त्रायस्व रक्ष [v]अवृकेभि अवृकैश्चोरादिर्हिंसकरहितै [v]वरूथे गुप्तियुक्तैर्गृहै, ईदृशगृहवासिन कृत्वा त्रायस्वेति । " नञ्सुभ्याम् " ( पा ६ २ १७२ ) इत्यवृकशब्दोऽन्तोदात्त । किंबहुना—[v]सूरिषु मेधाविषु मध्ये वयमेव [v]तव [v]प्रियास प्रिया [v]स्याम भवेम । " आज्जसेरसुक् " ( पा ७ १.५० ) । " युष्मदस्मदोर्ङसि " ( पा ६ १ २११ ) इति तवशब्द आद्युदात्तः ॥

" इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्य महायज्ञो नोपनमेत् " ( तैस २.२ ७ ) इत्यस्य पुरोनुवाक्या—' अनवस्ते ' इति त्रिष्टुप् ॥ हे [v]पुरुहूत बहुभिराहूत इन्द्र,

इत्यर्थः । त्व [v]नः [v]अस्मान् [v]अवृकेभिः हिंसकरहितैः [v]वरूथैः गृहैः [v]त्रायस्व । तादृशान् गृहान् प्रयच्छ । [v]सूरिषु विद्वत्सु यजमानेषु मध्ये वय तव प्रिया भवेम ॥

इष्ट्यन्तर विधत्ते—" इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपाल निर्वपेद्य महायज्ञो नोपनमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मा अन्ततो महायज्ञं च्यवयत्युपैनं महायज्ञो नमति " ( तैस २ २ ७ ) इति ॥ अश्वमेधयज्ञस्य साधनभूतो योऽग्निः सोऽर्कः । यश्च तत्फलभूत आदित्यः सोऽश्वमेधः । अत एव पञ्चमकाण्डे पञ्चाकाहुति विधिशेषार्थवादे समाम्नायते—" अर्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि संदधाति " ( तैस ५ ७ ५ ) इति । अश्वमेधब्राह्मणेऽप्याम्नायते— " अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्य उत्तरवेदिं चिनोति । तावर्काश्वमेधौ " ( तैब्रा ३ ९ २१ ) इति । वाजसनेयिनोऽपि चित्यस्याग्नेरुपासने समामनन्ति— " एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ " ( शब्रा १० ६ ५ ८ ) इति । [49]इन्द्रः स्तुतयोः[49] अग्न्यादित्ययोः स्वामित्वादर्काश्वमेधवानित्युच्यते । यं

१७ ति-अश्वै ।

४९-४९ ति-इन्द्रस्य तयो ; क-इन्द्रस्तुतयोः ।

[ काम्येष्टियाज्यापुरोनुवाक्याः

वृष्णे यत् ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।
अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ १२ ॥

[ वृत्रहत्येऽनु गायत्रिणोऽध्वराणां परावतोऽस्यामष्टाचत्वारिꣳशच्च ]

वृष्णे । यत् । ते । वृषण । अर्कम् । अर्चान् । इन्द्र । ग्रावाण । अदिति । सजोषा इति स-जोषाः ।
अनश्वास । ये । पवय । अरथा ।
इन्द्रेषिता इतीन्द्र-इषिता । अभ्यवर्तन्तेत्यभि-अवर्तन्त । दस्यून् ॥ १२ ॥

[ स त्वा भुवोऽस्यग्निमौ बर्हिषोऽहमा प्यायतामगंम यथा वै यो वै श्रद्धां प्रजापतिर्यज्ञान् भुवोऽसीत्याह यो वै सप्तदशमिन्द्र वो द्वादश ] [ स त्वा बर्हिषोऽह यथा या एव विद्वाञ्छीर्षट्सहसावन्नेकपञ्चाशत् ] [ स त्वा सिञ्चाम्यभ्यवर्तन्त दस्यून् ]

ते तव रथम् अनव मनुष्या तक्षन् तक्षन्तु संस्कुर्वन्तु । छन्द[18]छोऽर्थे । अडभावश्छान्दस[18] । अश्वाय अश्व योक्तु यथा योग्यो भवति तथा संस्कुर्वन्तु । यद्वा—अश्वाय व्याप्तिमते तुभ्य यथा पर्याप्तो भवति त्वष्टा [19]देवानां शिल्पी वज्र तक्षतु तीक्ष्णीकरोतु । कीदृशम् ? द्युमन्त दीप्तिमन्तम् । किं च—ब्रह्माण ब्राह्मणाश्च त्वाम् इन्द्रम् ईश्वरम् अर्कै मन्त्रैः हविर्लक्षणैरन्नैर्वा महयन्त पूजयन्त अवर्धयन् वर्धयन्तु यशसा । किमर्थं ? अहये अघाय अहिंसनाय आगत्य । हन्तीत्यहि सर्पादि । "आङि श्रिहनिभ्यां ह्रस्वश्च" ( उ ५८७ ) इतीण्प्रत्ययः । कर्मणि चतुर्थी ( द्र पाभा १ ४ ३२ ) । हन्तवै हन्तुम् । "तुमर्थे सेसेन्" ( पा ३ ४ ९ ) इति तवैप्रत्यय । "अन्तश्च तवै युगपत्" ( पा ६ १ २०० ) इत्याद्यन्तयोरुदात्तत्वम् । उ पादपूरणे । त्वं चास्माक महायज्ञमुपनयेति ॥

तत्रैव याज्या—'वृष्णे' इति त्रिष्टुप् ॥ हे इन्द्र, ते तुभ्य वृष्णे वर्षित्रे अभिमत दात्रे । षष्ठ्यर्थे चतुर्थी ( पा २ ३ ६२ वा १ ) । तव वर्षितु अर्कम् अर्चनीयामाज्ञाम्, अर्चनीय वा ते तव यागम् अर्चान् अर्चयन्ति पूजयन्ति । लेट्याडागम । के ? वृषण ग्रावाण वर्षितारो मेघा वृष्टिं कुर्वन्तस्तवार्कमर्चयन्ति[20] मेघा इत्यर्थ । "वा षपूर्वस्य निगमे"

यजमानं प्रत्यश्वमेधराजसूयरूपो[50] महायज्ञो नोपनमेच्च प्राप्नुयात् । स यजमानोऽर्काश्वमेधस्वामिने निर्वपेत् । यावेतावर्काश्वमेधशब्दवाच्यावग्न्यादित्यौ तावुभौ महायज्ञस्याश्वमेधस्यान्त्ये तनू प्रारम्भसमाप्तिकोटयोर्वर्तमानशरीरे । चित्याग्नि साधनत्वेन प्रारम्भकोटौ वर्तते । आदित्यः फलरूपत्वेन समाप्तिकोटिगामी । स एवेन्म एवास्मै[51] यजमानस्य समीपे महायज्ञं प्रेरयति । स च महायज्ञ एनं यजमानमुपनमति प्राप्नोति ॥

अनव इति ॥ तत्र पुरोनुवाक्यामाह—'अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् । ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ' इति ॥ हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र, ते तव रथम् अनवः मनुष्याः तक्षन तक्षन्तु संस्कुर्वन्तु । किमर्थम् ? अश्वाय अश्व संयोक्तुम् । त्वष्टा

१८-१८ लोडन्यतर । १९ तं ति-देव° । २० तं-°मर्चन्ति ।

५० क-°सूर्यादिरूपः । ५१ क-'एवास्मै' नास्ति ।

(पा ६ ४ ९) इति दीर्घाभाव । अदिति पृथिवी च सजोषा समानप्रीति त्वया तैर्वा मेधैरानुकूल्य भजमाना सस्याद्युत्पादयतस्तव कर्मार्कमर्चयति । यत् यदा एवमेते कुर्वन्ति, तदानीं दुष्टात्मानो दस्यवोऽपि त्वयैव हन्तव्या इति तत्प्रार्थयते—अनश्वासः अश्वरहिता । "आज्जसेरसुक्" (पा ७ १ ५०) । अरथा रथरहिता अश्वरथमनपेक्षमाणाः । "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम् । ये पवयः तवायुधविशेषा इन्द्रेषिता सर्वदेन्द्रेणैव प्रेषिताः अन्येन प्रेषितुमशक्या, ते दस्यून् अभ्यवर्तन्त दस्यूनभिवर्तन्ताम् आभिमुख्येन हन्तु वर्तन्ताम् । स्वरणादिद्वारा अस्मदुपक्षपयितारो दस्यव । तानभिभूय पराजितान् कृत्वा सर्वदाऽस्मान् रक्षन्तो वर्तन्तामिति भाव । छान्दसो लङ । एव सर्वस्य लोकस्य रक्षको महात्मा त्वम्, अतोऽस्माकमपि महायज्ञमुपनयेति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमे काण्डे षष्ठे प्रपाठके द्वादशोऽनुवाक ॥

समाप्तश्च प्रपाठक ॥

देवशिल्पी[५२] द्युमन्तं दीप्तिमन्तं वज्र तक्षतु । ब्रह्माणः ब्राह्मणा ऋत्विज अर्कैः अर्चनसाधनैर्मन्त्रै महयन्तः पूजयन्तः इन्द्रम् अवर्धयन् यशसा वर्धयन्तु । अहये अहिम् अघं महायज्ञप्राप्तिप्रतिबन्धक-पाप हन्तवै उ अवश्य हन्तुमवर्धयन्नित्यन्वय ॥

वृष्ण इति ॥ याज्यामाह—'वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः । अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून्' इति ॥ हे इन्द्र, यत् यदा वृष्णे ते कामाभिवर्षिणस्तव संबन्धिनम् अर्कम् अर्चनीय वृषणः वर्षण(क) फलाभिवर्षकं यागं ग्रावाणः साधनभूता दृषदुपलादयः पदार्थाः अर्चान् अर्चयन्ति अलङ्कुर्वन्ति । तदानीम् अदितिः वेदिरूपा पृथिवी सजोषाः त्वया समानप्रीतिर्भवतु । इन्द्रेषिता इन्द्रप्रेरिता ये पवयः वज्राः सन्ति तेऽपि अरथा अनश्वासः रथाश्वनिरपेक्षा एव दस्यून्[५३] महायज्ञप्राप्तिप्रतिबन्धकानसुरान् अभ्यवर्तन्त अभिलक्ष्य हन्तुं प्रवर्तन्ताम् ॥

अत्र विनियोगसंग्रहः—

"इन्द्र वो विश्वतोऽसुष्मिश्चरावैन्द्र ऋचोर्द्वयम्[५४] ।
इन्द्रीन्द्रियावद्यागे स्यादा यस्मिन् घर्मवद्यजौ ॥ १ ॥
इन्द्र स्यादर्कवद्यागे तिस्रोऽहोमुग्यजावृच ।
वि वैमृधे[५५] चतस्रः स्युस्त्रातारं त्रातृमद्यजौ ॥
अनयोऽर्कीश्वयागे मन्त्राः सप्तदशेरिताः (मन्त्रा एकोनविंशतिः)" ॥२॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठः प्रपाठकः ॥

५२ आ पा हा–देवः शिल्पी । ५३ इ उ–महायज्ञप्रति° । ५४ म४–ऋचोर्द्वयो । ५५ आ क हा–नो मृधे ।

# ( अथ प्रथमकाण्डे सप्तमः प्रपाठकः )

हरिः ॐ ॥ पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्त

पाकयज्ञमिति पाक-यज्ञम् । वै । अन्विति । आहिताग्नेरित्याहित-अग्नेः । पशवः । उपेति । तिष्ठन्ते ।

अथ दर्शपूर्णमासयोरेव याजमानशेषस्य ब्राह्मणं प्राजापत्यं काण्डम् । तत्रेडाया आह्रियमाणाया अनुमन्त्रणं विधातुमाह—' पाकयज्ञम् ' इत्यादि ॥ अत्रेदमुक्तमाचार्येण— " हुत प्रहुत आहुत शूलगवो बलिहरण प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः । अपरिमिता इत्येके ब्रुवते यत्किंचान्यत्र[1] विकाराद्धूयते सर्वास्ता पाकयज्ञसंस्था " ( बौगृ १ १ १ ) इति । पक्वमात्रनिर्वर्तिता पाकयज्ञा । अन्ये त्वाहु —" अल्पयज्ञा पाकयज्ञा " इति । ᵛपाकयज्ञम् ᵛअनु ᵛआहिताग्ने ᵛपशव ᵛउप ᵛतिष्ठन्ते यजमानमेव श्रयन्ते । यद्वा—

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके सप्तमेऽस्मिन्ननुवाकास्त्रयोदश ।
यजमानब्राह्मणस्य शेषः षट्स्वादिमेषु हि ॥
वाजपेयस्य मन्त्रास्तु षट्स्वन्येष्वथ याज्यकाः ।
इडानुमन्त्रणं तस्या इडायाश्च प्रशंसनम् ॥
अन्वाहार्योऽथ मन्त्रानुवाकव्याख्या त्रिषु स्मृता ।
रथमन्त्रा धावनं च रोहणं वाजहोमकः[1] ॥
उज्जित्यतिग्राह्ययाज्या इत्यर्थो अनुवाकगाः ॥

तत्र प्रथमेऽनुवाक इडानुमन्त्रणमुच्यते—

पाकयज्ञमिति ॥ तदेतद्विधातुं प्रस्तौति—' पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्त इडा खलु वै पाकयज्ञ सैषाऽन्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता ' इति । पाकयज्ञस्य स्वरूपमापस्तम्ब सूत्रव्याख्यातृभिरुक्तम्— " औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञसंस्थाः " ( धूर्तस्वामिभाष्य—आपश्रौ १ १ १ ) इति । बौधायनोऽप्याह— " हुतः प्रहुत आहुतः शूलगवो बलिहरण प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः " ( बौगृ १ १ १ ) इति । अन्ये त्वाहुः—" अल्पयज्ञाः पाकयज्ञाः " । आश्वलायनोऽप्याह— " त्रयः पाकयज्ञा हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः " ( आश्वगृ १ १.२–३ ) इति ।

एतेषां मध्ये यं कंचिदपि ᵛआहिताग्नेः ᵛपाकयज्ञम् ᵛअनु गवाद्याः ᵛपशवः [2]अवस्थिता भवन्ति पाकयज्ञेन लभ्यन्त इत्यर्थः । अत्र त्विडाभक्षणमेव ᵛपाकयज्ञः, ब्रह्मणि हुतत्वात् । अतोऽनेनापि इडाभक्षणेन

१ पं—यच्च किंचान्यत्र; वि त्रि—किंचान्यत्र ।

१ म४—वाजसोमकः । २ त—ति—' अवस्थिताः ' नास्ति ।

इडा खलु वै पाकयज्ञः सैषाऽन्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता तामाह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते यज्ञं वै देवा अदुहन् यज्ञोऽसुराꣳ अदुहन्तेऽसुरा यज्ञदुग्धाः पराऽभवन् यो वै यज्ञस्य दोहं विद्वान् (१) यजतेऽप्यन्यं यजमानं दुहे

इडा । खलु । वै । पाकयज्ञ इति पाक–यज्ञः । सा । एषा । अन्तरा । प्रयाजानूयाजानिति प्रयाज–अनूयाजान् । यजमानस्य । लोके । अवहितेत्यव–हिता । ताम् । आह्रियमाणामित्या-ह्रियमाणाम् । अभीति । मन्त्रयेत । सुरूपवर्षवर्ण इति सुरूप–वर्षवर्ण । एति । इहि । इति । पशवः । वै । इडा । पशून् । एव । उपेति । ह्वयते । यज्ञम् । वै । देवाः । अदुहन् । यज्ञः । असुरान् । अदुहन् । ते । असुराः । यज्ञदुग्धा इति यज्ञ–दुग्धाः । परेति । अभवन् । यः । वै । यज्ञस्य । दोहम् । विद्वान् (१) । यजते । अपीति । अन्यम् । यजमानम् । दुहे ।

आहिताग्नेरिति कर्मणि षष्ठी, आहिताग्निं पशव इति । सगतिकरणे आत्मनेपदम्* । “ क्रियाग्रहणं कर्तव्यम् ” ( द्र पाभा १ ४ ३२ ) इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । “ अनुर्लक्षणे ” ( पा १ ४ ८४ ) इत्यनोः कर्मप्रवचनीयत्वम् । ‘ इडा खलु ’ इत्यादि । इडायाः प्राशनं पाकयज्ञः । ‘ सैषा ’ इति । “ अन्तरान्तरेण° ( पा २ ३ ४ ) इति द्वितीया । यजमानस्य लोके स्थाने ᵛअवहिता अवस्थिता । ‘ताम्’ इत्यादि । पशुसाधनत्वात्ताच्छब्द्यं ‘ पशव इडे ’ इति । तस्मात् ‘ इड एहि ’ इति पशूनेवोपह्वयते । “ निसमुपविभ्यो ह्वः ” ( पा १ ३ ३० ) इत्यात्मनेपदम् ॥

‘ यज्ञं वै ’ इत्यादि ॥ दुहेर्लङि “ बहुलं छन्दसि ” ( पा ७ १ ८ ) इति रुट् । “ वैवावेति च छन्दसि ” ( पा ८ १ ६४ ) इति निघाताभावः । ᵛअदुहत् इति व्यत्ययेन

पशवो लभ्यन्ते । ᵛसा[3] इयमिडा ᵛयजमानस्य ᵛलोके फलसाधने यज्ञे प्रयाजानूयाजमध्ये व्यवस्थिता । प्रयाजाज्यभागप्रधानस्विष्टकृद्भ्यः ऊर्ध्वमनूयाजेभ्यश्च[4] प्रागिडाया अनुष्ठेयत्वात् । एतच्च हौत्रकाण्डे ( तैब्रा ३ ५ १ ) स्विष्टकृद्याज्याया अनूयाजयाज्यायाश्च मध्य इडोपाह्वानमन्त्रपाठादवगम्यते ॥

तामिति ॥ विधत्ते—‘ तामाह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते ’ इति ॥ ᵛताम् ᵛइडाम् ᵛआह्रियमाणाम् अवदाय होतृसमीपमानीयमानाम् । तत्प्रकार-मापस्तम्ब आह—“ इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडाꣳ समवद्यति । चतुरवत्तां वा पञ्चावत्ताम् ” ( आपश्रौ ३ १ ५ ) इति । “ अभिघार्येडाꣳ होत्रे प्रदाय ” ( आपश्रौ ३ २ १ ) इति च ॥ इडादेवताया पशुसाधनत्वाद्गोरूपत्वाच्च मन्त्रगतेन ‘ एहि ’ इति पदेन ᵛपशून् ᵛएव ᵛउप ᵛह्वयते ॥

यज्ञमिति ॥ ‘ सा मे सत्याशीः ’ इत्येतं मन्त्रभागं व्याख्यातुं प्रस्तौति—‘ यज्ञं वै देवा अदुहन् यज्ञोऽसुराꣳ अदुहन्तेऽसुरा यज्ञदुग्धाः पराऽभवन् यो वै यज्ञस्य दोहं विद्वान् यजतेऽप्यन्यं यजमानं

*[ द्र पा १ ३ २५ वा १ ] । २ पं प्रकाशनम् ।

३ आ–ना–हा–तन्त्र । ४. इ उ ति त्रि४ ना पा म४ हा–‘ च ’ नास्ति ।

[ इडानुमन्त्रणम्

सा मे सत्याऽऽशीरस्य यज्ञस्यं भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्सो

सा । मे । सत्या । आशीरित्या—शी । अस्य । यज्ञस्य । भूयात । इति । आह । एष । वै । यज्ञस्यं । दोहं । तेनं । एव । एनम् । दुहे । प्रत्ता । वै । गौः । दुहे । प्रत्ता । इडा । यजमानाय । दुहे । एते । वै । इडायै । स्तनाः । इडा । उपहूतेत्युप—हूता । इति । वायु । वत्स ।

…लेरड् । यज्ञेन दुग्धा यज्ञदुग्धा । "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपद-प्रकृतिस्वरत्वम् । पराभवन विनाश । दोहन [१-]हि रिक्तीकरणम्[-१] । 'दुह प्रपूरणे' इति । प्रशब्दो हि धात्वर्थनिवृत्तिमाचष्टे, प्रस्मरण प्रस्थानमिति यथा । यज्ञस्तु देवैर्दुग्धोऽपि स्वमहिम्ना पुनः पुनराप्यायते गौरिव ।

'यो वै' इत्यादि । 'सा मे सत्याशी' इत्यादिवचन यज्ञस्य दोह । अनेन मन्त्रेण यज्ञोऽसुरानधुक्षत् । दुहे इति पूर्ववत् तलोप ।

'प्रत्ता' इत्यादि ॥ पय प्रदातुमारब्धवती प्रत्ता वत्सलेहनेन प्रस्नुतस्तनी गौ । आदिकर्मणि क्त । "अच उपसर्गात्त" (पा ७ ४ ४७) इति तत्वम् । दुहे दुग्धे भूयिष्ठ क्षीरं क्षारयति । एव प्रत्ता होत्रे अध्वर्युणा । प्रदानेन इडा यजमानाय दुग्धे तस्मादिडां प्रददातीति । 'एते वा' इत्यादि । 'इडोपहूता' इत्यादयो मन्त्राः अस्या स्तनस्थानीया, दोहन-साधनत्वात् स्तनत्वेन रूप्यन्ते, स्तनापेक्षत्वात् दोहस्य । वायुर्वत्सस्थानीय प्राणवृत्तिरूपत्वात् ।

…दुहे' इति ॥ दोहनं रिक्तीकरणम् । गां दोग्धीत्यत्र तथा दर्शनात् । देवाः प्रथम यज्ञम् अदुहन्[१] तद्गतसारफलस्वीकारेण रिक्तीचक्रुः । स च यज्ञः असुरान् अदुहत् तदीयसारापहारेण रिक्तीचकार, ततस्ते पराभूताः । यो यजमानो देवकर्तृक यज्ञरिक्तीकरण यज्ञकर्तृकमसुररिक्तीकरण च विद्वान् यजते सः अन्यम् अपि यजमान दुहे रिक्तीकरोति । एतस्य वाक्यस्य मन्त्रप्रशंसारूपत्वादन्यस्य यजमानस्य न काचित् हानिः ॥

सेति ॥ व्याचष्टे—'सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे' इति ॥ 'उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतः' इत्यादिका येयमाशीरुपह्वानमन्त्रगता सेयमस्य यज्ञस्य सम्बन्धिन्याशीर्मम सत्या भूयात् इत्येवरूपो यज्ञदोहस्तेनैवान्यं यजमानं दोग्धि ॥

प्रत्तेति ॥ वायुध्यानं विधातुं प्रस्तौति—'प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्स' इति । [१-]प्रत्ता वत्सलेहनेन[-१] प्रस्नुतस्तनी गौः दुहे पयः क्षारयति तद्वदत्र इडा प्रत्ता सती यजमानस्य फल दोग्धि । तस्या इडायाः इडोपहूतेत्यादिमन्त्रभागाः स्तनाः, वायुः वत्सः ॥

२-२ त्रि पं–हविरिक्तीकरणम्, ति–हर्ष (?) रिक्तीकरणम् । ४ तं–ति वत्सलोमेन ।

५ ति त्रि४ म४–'अदुहन्' नास्ति । ६–६ म४–प्रत्ता वत्सदानेन, तं.ति–वत्सस्नेहेनैव ।

**यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेन्(२) मात्रे वत्समुपावसृजति सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत् सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः**

यर्हि । होता । इडाम् । उपह्वयेतेत्युप—ह्वयेत । तर्हि । यजमान । होतारम् । ईक्षमाण । वायुम् । मनसा । ध्यायेत् (२) । मात्रे । वत्सम् । उपावसृजतीत्युप—अवसृजति । सर्वेण । वै । यज्ञेन । देवा । सुवर्गमिति सुव—गम् । लोकम् । आयन् । पाकयज्ञेनेति पाक—यज्ञेन । मनु । अश्राम्यत् । सा । इडा । मनुम् । उपावर्ततेत्युप—आवर्तत । ताम् । देवासुरा इति देव—असुरा । वीति । अह्वयन्त । प्रतीचीम् । देवा । पराचीम् । असुरा । सा । देवान् । उपावर्ततेत्युप—आवर्तत ।

‘ यर्हि ’ इत्यादि । “ अनद्यतने र्हिलन्यतरस्याम् ” ( पा ५ ३ २१ ) इति र्हिल् । ‘ वायुम् ’ इत्यादि । किं कृत भवतीत्याह—‘ मात्रे ’ इति । दोहार्थं मातृसकाश वत्स प्रापयती त्यनेन प्रदेशान्तरमृता एतेनेति । [ न्तरं गता एव ते इति ] । “ उदात्तयण॰ ” ( पा ६ १·१७४ ) इति चतुर्थ्या उदात्तत्वम् ॥

‘ सर्वेण ’ इत्यादि ॥ vअश्राम्यत् पाकयज्ञमात्रानुष्ठानतत्परोऽभवत् । तत vसा vइडा vमनुम् vउपावर्तत । तस्मादिय मानवीत्युच्यत इत्यभिप्राय । ‘ ताम् ’ इत्यादि । vव्यह्वयन्त विविधमाह्वयन् । पूर्ववदात्मनेपदम् । vप्रतीचीं स्वात्माभिमुखावस्थानां, पदाभ्यासात् । “ चौ ” ( पा ६ १ २२२ ) इति पूर्वपदस्य दीर्घत्वमन्तोदात्तत्व च । vपराचीं पराङ्मुखावस्थानाम्, पदाभ्यासाभावात । “ अनिगन्तोऽञ्चतौ॰ ” ( पा ६ २ ५२ ) इति गते प्रकृतिस्वरत्व च । केचिदाहु —इडोपहूतेति प्राची, उपहूतेडेति पराची ।

**यर्हीति** ॥ विधत्ते— ‘ यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेन्मात्रे वत्समुपावसृजति ’ इति ॥ vयर्हि यस्मिन्काले ॥

**सर्वेणेति** ॥ इडोपहूतेत्यादिमन्त्रभागप्रयोगे हेयोपादेयपक्षौ विधातु प्रस्तौति— ‘ सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत् सेडा मनुमुपावर्तत ता देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः सा देवानुपावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुः ’ इति । मनुसहिताः सर्वे vदेवाः कृत्स्नेन दर्शपूर्णमासयागेन स्वर्गलोक प्राप्तुमुद्यता । तत्र vमनुः vपाकयज्ञेन श्रान्तोऽभूत् । “ इडा खलु वै पाकयज्ञः ” इत्युक्तम् । अतो मनुर्होता सन्निडोपाह्वान एव तात्पर्यवानभूदित्युक्तं भवति । vसा च vइडा देवता तात्पर्यवन्तं vमनुम् उपगतवती । vतां दृष्ट्वा देवाश्चासुराश्च परस्परव्यत्ययेन आह्वयन्त[१०] । vदेवाः[११] vप्रतीचीं संमुखामुपाह्वयन्त । vअसुरा v[१२]पराचीं विमुखामुपाह्वयन्त[१२] । इडोपहूते-

५ प-प्रकृतिस्वरत्वमन्तो॰ ।

७ तं ति त्रि४ म४—इति ह युक्तम । ८ त ति—दृष्ट्वा । ९ इ उ ना पा हा—परस्परं व्यत्य॰ । १० क तं,ति त्रि४ म४—इडामुपाह्वयन्त । ११ आ क ना हा—ते देवाः । १२–१२ आ ना हा—पराचीनमुखम् ।

सा देवानुपावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुर्यं कामयेतापशुः स्यादिति पराचीं तस्येडामुप ह्वयेतापशुरेव भवति यं (१) कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुप ह्वयेत पशुमानेव भवति ब्रह्मवादिनो वदन्ति स त्वा इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडायामुप ह्वयेतेति सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयाऽऽत्मानमिडायामुप ह्वयते

पशवं । वै । तत् । देवान् । अवृणत । पशवं । असुरान् । अजहुः । यम् । कामयेत । अपशुः । स्यात् । इति । पराचीम् । तस्य । इडाम् । उपेति । ह्वयेत । अपशुः । एव । भवति । यम् (१) । कामयेत । पशुमानिति पशु-मान् । स्यात् । इति । प्रतीचीम् । तस्य । इडाम् । उपेति । ह्वयेत । पशुमानिति पशु-मान् । एव । भवति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । स । तु । वै । इडाम् । उपेति । ह्वयेत । य । इडाम् । उपहूयेत्युप-हूय । आत्मानम् । इडायाम् । उपह्वयेतेत्युप-ह्वयेत । इति । सा । नः । प्रिया । सुप्रतूर्तिरिति सु-प्रतूर्तिः । मघोनी । इति । आह । इडाम् । एव । उपहूयेत्युप-हूय । आत्मानम् । इडायाम् । उपेति । ह्वयते ।

'पशवो वै' इत्यादि । इडाया. प्रतीचीनत्वेन पशव एव देवान् अवृणत इति वेदितव्यम् । पराचीनत्वेन असुरान् पशव अजहुः अत्यजन् । "सिजभ्यस्त" (पा ३ ४ १०९) इति जुस् ॥

'यम्' इत्यादि । गतम् (तैस १ ७ १) ॥

'ब्रह्मवादिन' इत्यादि ॥ ब्रह्म वेद तद्वदितुं शीलं येषामिति "ब्रह्मणि वद" (पा ३ २ ७८ वा २) इति णिनि । संहितायां तोरन्त्यच्छोपश्छान्दस । उक्तं च प्रातिशाख्ये—"तुनुपूर्व उदात्तयोर्वकार" (तैप्रा ५ १२) इति । य इडाम् आत्मनि उपहूय आत्मानम् इडायाम् उपह्वयते स एवेडामुपह्वातुमर्हतीति ब्रह्मवादिन आहुः ॥

'सा न' इत्यादि ॥ सुप्रतूर्तित्वात् मघवत्त्वाच्च सा अस्माकं प्रिया इति आत्मानम् इडायाम् उप ह्वयते । 'व्यस्तम्' इत्यादि । विच्छेद इवैष यज्ञस्य क्रियते यत् इडा नाम ।

स्येवमादाविडाशब्दप्रयोगः सांमुख्यम् । उपहूतेडेति [13]पश्चादिडाशब्दप्रयोगो विमुखत्वम् । तत्र संमुखत्वेन तुष्टा सती सा देवान् उपावर्तत । "पशवो वा इडा" (तैस २ ६ ८) इत्यन्यत्राऽऽम्नातत्वादिडारूपाः पशवः तत् तदा देवान् अवृणत वृतवन्तः प्राप्तवन्तः ॥ विमुखत्वेनेडाया अपरितोषात् तद्रूपाः पशवः असुरान् अजहुः त्यक्तवन्तः [14] ॥

यमिति ॥ तत्र हेयपक्षं विधत्ते— 'यं कामयेतापशुः स्यादिति पराचीं तस्येडामुप ह्वयेतापशुरेव भवति' इति ॥

यमिति ॥ उपादेयपक्षं विधत्ते—'य कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुप ह्वयेत पशुमानेव भवति' इति ॥

ब्रह्मवादिन इति ॥ 'सा न प्रिया' इति मन्त्रभाग व्याख्यातुं प्रस्तौति—'ब्रह्मवादिनो वदन्ति स त्वा इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडायामुप ह्वयेतेति' इति ॥ वेदार्थविचारका विद्वांसः

[13] तं ति-पदादि° । [14] आ ना.हा-संत्यक्तवन्तः ।

व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति (४) सामि मार्जयन्त एतत् प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुर्-

व्यस्तमिति वि-अस्तम् । इव । वै । एतत् । यज्ञस्य । यत् । इडा । सामि । प्राश्नन्तीति प्र-अश्नन्ति (४) । सामि । मार्जयन्ते । एतत् । प्रतीति । वै । असुराणाम् । यज्ञ । वीति । अच्छिद्यत । ब्रह्मणा । देवा । समिति । अदधु ।

कथमित्याह—'सामि' इत्यादि । तत्र हविषो Vयदेकदेश Vप्राश्नन्ति यजमानपञ्चमा ऋत्विज, एकदेश प्रस्तरे Vमार्जयन्ते, नाऽस्य यज्ञो न दक्षिणा व्यय एवाय, तस्माद्विच्छिद्यते यज्ञ इति । "चादिलोपे विभाषा" (पा ८ १ ६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते, गतिस्वरसमासावुक्तौ । 'व्यस्तम्' इति भावे निष्ठायां व्यत्ययेन गते प्रकृतिस्वरत्वम् । "उदात्तस्वरितयोर्यण°" (पा ८ २ ४) इत्यकार स्वर्यते ॥

'एतत् प्रति' इति । अत एवैतस्मिन् प्रदेशे Vअसुराणां Vयज्ञ Vव्यच्छिद्यत अत परं लुप्त एवाभवत् । लक्षणादिना प्रते कर्मप्रवचनीयत्वम् (पा १ ४ ९०) । Vदेवा तु विच्छिन्न यज्ञ ब्रह्मणि Vसम् Vअदधु सहितमकुर्वन् ।

परस्परमित्याहुः । किमिति ? Vयः बुद्धिमान् मन्त्रेण 'इड एहीति एहि' इत्यादिना Vइडाम् Vउपहूय तस्याम् Vइडायाम् Vआत्मानम् उपह्वयते योजयति Vसः एव Vइडां यथाशास्त्रम् Vउप Vह्वयेत इति ॥

सेति ॥ मन्त्रं व्याचष्टे— 'सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयाऽऽस्मानमिडायामुप ह्वयते' इति ॥ येयमिडाऽस्माभिः 'इड एहि' इत्यादिनोपहूता Vसा इयमिडा[१५] Vनः अस्माकं Vप्रिया इत्यनेन वचनेन स्वात्मानम् Vइडायां योजितवान् भवति ॥

व्यस्तमिति ॥ [१६]मार्जनार्थं 'मनो ज्योतिः' इत्यादिकामृचं व्याख्यातु प्रस्तौति—'व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति सामि मार्जयन्त एतत्प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुः' इति ॥ इडेति यदेतेन Vयज्ञस्य अङ्गं Vव्यस्तं विच्छिन्नमिव भवति । तत्कथम् इत्युच्यते— Vसामि पुरोडाशस्य लेशमिडाभागरूपमृत्विजः Vप्राश्नन्ति, Vसामि उदकलेश Vमार्जयन्ते शिरसि सिञ्चन्ति । तदानीं प्रधानयागाः पूर्वमेव हुता अनूयाजादियागा इत ऊर्ध्वं यष्टव्यास्तन्मध्ये एवेतदिडाभक्षणं मार्जनं च क्रियते तयोरयागरूपत्वाद्यागविच्छेदकत्वम् । तथा सत्यसुरा यष्टव्याननूयाजादीन् विस्मृतवन्त । अतः Vअसुराणां Vयज्ञः Vएतत् Vप्रति भक्षणमार्जनद्वय प्रत्येतदीये काले विच्छिन्नोऽभूत् । Vदेवाः तु अप्रमत्ताः सन्तः Vब्रह्मणा परिवृढेन केनचित् पुरुषेण Vसम् Vअदधुः तयोर्विच्छिन्नयोः पूर्वोत्तरयोर्यज्ञभागयोः संधानं कृतवन्तः ॥

६ त ति त्रि-ये एकदेशम् ।

१५ आ ना ह्रा-'इयमिडा' इत्यस्यानन्तरं 'त्वम्'। १६ तं ति-याजनार्थम् ।

बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञ५ं सं दधाति विच्छिन्नं यज्ञ५ं समिमं दधात्वित्याह संतत्यै विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति यां वै (५) यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सं क्रामन्ति

बृहस्पतिः। तनुताम्। इमम्। नः। इति। आह। ब्रह्म। वै। देवानाम्। बृहस्पतिः। ब्रह्मणा। एव। यज्ञम्। समिति। दधाति। विच्छिन्नमिति वि–छिन्नम्। यज्ञम्। समिति। इमम्। दधातु। इति। आह। संतत्या इति सम्–तत्यै। विश्वे। देवाः। इह। मादयन्ताम्। इति। आह। संतत्येति सम्–तत्य। एव। यज्ञम्। देवेभ्यः। अन्विति। दिशति। याम्। वै (५)। यज्ञे। दक्षिणाम्। ददाति। ताम्। अस्य। पशवः। अनु। समिति। क्रामन्ति।

तस्मात् "बृहस्पतिस्तनुतामिम न" (तैस १६३) इति मार्जनमन्त्रे वचनं ब्रह्मणि संधानप्रतिपादनार्थं, 'विच्छिन्नम्' इति वचन संतत्यै। [V]ब्रह्मणा [V]समदधु इत्युक्ते ब्रह्मप्रतिपादनस्याकाङ्क्षितत्वात् तृतीय पाद प्रथमं व्याख्यात। ततो द्वितीय —— 'विश्वे' इति। [V]विच्छिन्न [V]यज्ञ [V]संतत्य [V]एव सन्धाय [V]देवेभ्य [V]अनु [V]दिशति। इह संहिते यज्ञे देवा मादयन्तु मोपेक्षां कुर्वतेति बोधयति ॥

'यां वै' इत्यादि ॥ अत्र "ब्रध्न पिन्वस्व" (तैसं १६३) इति बर्हिषद पुरोडाशमनुमन्त्रयते, स च ऋत्विग्भ्यो दक्षिणेव दीयते। तामधिकृत्येदमुच्यते——[V]दक्षिणां

बृहस्पतिरिति ॥ तस्या ऋचस्तृतीयपादं व्याचष्टे—'बृहस्पतिस्तनुतामिम न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञ५ं स दधाति' इति ॥ देवगुरुत्वात् बृहस्पतेः परिवृढत्वम् ॥

विच्छिन्नमिति ॥ संधातृप्रतिपादकं [17]तृतीयं पाद व्याख्याय संधानप्रतिपादकं [18]द्वितीय पादं व्याचष्टे—'विच्छिन्नं यज्ञ५ं समिम दधात्वित्याह संतत्यै' इति ॥ अविच्छेदायेत्यर्थः ॥

विश्व इति ॥ तस्य [19]संततस्य यज्ञस्य देवसमर्पणप्रतिपादकं चतुर्थपाद व्याचष्टे——'विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति' इति ॥

यामिति ॥ 'ब्रध्न पिन्वस्व' इत्यादिक पुरोडाशाभिमन्त्रणमन्त्र व्याख्यातु प्रस्तौति——'यां वै यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सं क्रामन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्त कुर्वीताऽऽत्मन् पशून् रमयेतेति' इति ॥ यजमानेनर्त्विग्भ्यो दीयमानां गवान्वाहार्यादिरूपां दक्षिणां तदीयाः पशव सर्वेऽप्यनुगच्छन्ति, तदा यज्ञानुष्ठाता च पशुरहितो भवति। अत [20]स्त्वेन दत्त दक्षिणाद्रव्य [V]यथा [V]देवत्रा देवेषु ऋत्विक्ष्ववस्थितं भवति पशवश्च यथा स्वस्मिन्नेव रमन्ते, तथा [V]यजमानेन कर्तव्यमिति बुद्धिमन्तः [V]आहुः ॥

१७ आ ते त्रि४–तृतीय°। १८ आ त्रि४ ना पा हा–द्वितीय°। १९ उ–संतत°। २० क तं ति–तेन।

स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीताऽऽत्मन् पशून् रमयेतेति ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन् पशून् रमयते ददतो मे (६) मा क्षायीत्याहाक्षितिमेवोपैति कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति ॥ १ ॥

[ विद्वान् ध्यायेद्भवति य प्राश्नन्ति या वै म एकान्नविंशतिश्च ] ॥ १ ॥

स । एष । ईजान । अपशु । भावुक । यजमानेन । खलु । वै । तत् । कार्यम् । इति । आह । यथा । देवत्रेति देव–त्रा । दत्तम् । कुर्वीत । आत्मन् । पशून् । रमयेत । इति । ब्रध्न । पिन्वस्व । इति । आह । यज्ञ । वै । ब्रध्न । यज्ञम् । एव । तत् । महयति । अथो इति । देवत्रेति देव–त्रा । एव । दत्तम् । कुरुते । आत्मन् । पशून् । रमयते । ददतः । मे (६) । मा । क्षायि । इति । आह । अक्षितिम् । एव । उपेति । एति । कुर्वत । मे । मा । उपेति । दसत् । इति । आह । भूमानम् । एव । उपेति । एति ॥ १ ॥

[v]पशव. [v]अनु [v]स [v]क्रामन्ति दक्षिणया सह गच्छन्ति । [v]स. [v]एष यजमान [v]ईजान. दक्षिणादानान्त सर्वं यज्ञ कृतवान् [v]अपशु. [v]भावुक भविता । "लषपतपद°" (पा ३ २ १५४) इत्युकञ्प्रत्यय । तस्मात् [v]यजमानेन तादृश किंचित् कर्तव्य, येन [v]देवत्रा देवेषु ऋत्विक्षु [v]दत्त पुरोडाशमेव [v]कुर्वीत कर्तुं समर्थ स्यात्, आत्मनि [v]एव [v]पशून् [v]रमयते । "देवमनुष्य°" (पा ५ ४ ५६) इति त्राप्रत्यय । 'ब्रध्न पिन्वस्व' इत्यादि । [v]महयति महान्त करोति, महित वा करोति । गतमन्यत् (तैस १ ६ ३) ॥

इति सप्तमे प्रथमोऽनुवाक ॥

ब्रध्नेति ॥ मन्त्रस्य प्रथमभाग व्याचष्टे–'ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्त कुरुत आत्मन् पशून् रमयते' इति । हे यज्ञ, प्रीणीहीत्यनेन यज्ञस्य पूजारूपेण प्रोत्साहनेन यथोक्त प्रयोजनत्रय सपद्यते ॥

ददत इति ॥ द्वितीय भाग व्याचष्टे–'ददतो मे मा क्षायीत्याहाक्षितिमेवोपैति' इति । [21]दानेन प्रयुक्तो [22]द्रव्योपक्षयो मा क्षायीति प्रार्थनेन निवारितो भवति ॥

कुर्वत इति ॥ 'कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति' इति । उपक्षयनिवारणस्य पूर्वमेव प्रार्थितत्वान्मोप दसदित्यनेनाभिवृद्धिलक्षण बाहुल्यमेव प्रार्थ्यते भूमानमेवोपैतीति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

७ ति त्रि मै–इत्युकञ् ।

२१ आ ना हा–दान° । २२ आ ना हा–द्रव्यक्षयो ।

सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच यत् सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितृनिति छिनत्ति सा न छिनत्ती३ इति छिनत्तीति होवाच

सꣳश्रवा इति सम्–श्रवा । ह । सौवर्चनस । तुमिञ्जम् । औपोदितिमित्यौप–उदितिम् । उवाच । यत् । सत्रिणाम् । होता । अभूः । काम् । इडाम् । उपेति । अह्वथा । इति । ताम् । उपेति । अह्वे । इति । ह । उवाच । या । प्राणेनेति प्र–अनेन । देवान् । दाधार । व्यानेनेति वि–अनेन । मनुष्यान् । अपानेनेत्यप–अनेन । पितृन् । इति । छिनत्ति । सा । न । छिनत्ती३ । इति । छिनत्ति । इति । ह । उवाच ।

'संश्रवा' इत्यादि प्रासङ्गिक हौत्रम् । सुवर्चनसोऽपत्य [v]सश्रवाः नाम । उपोदितस्यापत्य तुमिञ्ज नाम [v]उवाच । 'यत्' इत्यादि । [v]यत् यदा । [v]उपाह्वथा "निसमुपविभ्यो ह्वः" (पा १ ३ ३०) इत्यात्मनेपदम् । "छिपिसिचिह्वश्च" (पा ३ १ ५३) इत्यङ् । एव सश्रवसा पृष्टे 'ताम्' इत्युत्तरम् [v]उवाच तुमिञ्ज । 'या' इत्यादि । [v]या [v]प्राणेन उत्तमवृत्त्या दक्षिणात्वेन [v]देवान् धारयति, [v]व्यानेन मध्यमवृत्त्या मनुष्योपजीव्यत्वेन [v]मनुष्यान् धारयति, [v]अपानेन अधमवृत्त्या मरणेन [v]पितृन् धारयति, तादृशीमहम् [v]उपाह्वे, सन्ध्या [सेयं] अन्या वास्त्विति ॥

अथ सश्रवा –'छिनत्ति' इत्यादिकम् । प्रतिग्रहादिषु प्रजा अनर्थेन योजयति उत नेति । प्रश्नान्ते प्लुत (पा ८ २ १०५) । छान्दस तिङ उदात्तत्वम् । विश्वजनादित्वात्तुगभाव

[1]इडाद्यनुमन्त्रणमन्त्राः प्रथमे व्याख्याताः । तामिडां द्वितीये द्वयोर्मुन्योः प्रश्नोत्तराभ्यां प्रशंसति ।

सश्रवा इति ॥ तत्र प्रश्नमवतारयति– 'सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच' इति ॥ [v]सश्रवाः [2]इत्यृषेर्नामधेयम् । स च सुवर्चनसः पुत्रः । तुमिञ्ज इत्यृष्यन्तरस्य नामधेयम् । स चोपोदितस्य पुत्रः ।

यदिति ॥ संश्रवसः प्रश्नं दर्शयति—'यत्सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति' इति ॥ [v]यत् यदा, तदेत्यध्याहार । [v]कां किंगुणकाम् ॥

तामिति ॥ तुमिञ्जस्योत्तरं दर्शयति—'तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितृनिति' इति ॥ प्राणादिवृत्तिभिरिडाया देवादिधारणमुत्तरत्र स्पष्टीकरिष्यते ॥ [v]तां देवादिधारणगुणकामिडामुपहूतवानस्मि ॥

छिनत्तीति ॥ पुन प्रश्न दर्शयति—'छिनत्ति सा न छिनत्ती३ इति' इति ॥ त्वयोपहूता [v]सा इयम् इडा गोरूपा सती दक्षिणात्वेन प्रतिग्रहीतॄन् किं [v]छिनत्ति प्रतिग्रहदोषेण विनाशयति, अथवा [v]न छिनत्ति [3]इति विचारार्थः प्लुतः ॥

छिनत्तीति ॥ उत्तरं दर्शयति—'छिनत्तीति होवाच' इति ॥

१ तं ति–इडार्थमन्त्राः, म४–इडामन्त्राः, त्रि४–इडाद्यष्ट मन्त्राः । २ म४–इत्यृषिनाम । ३ इ उ क तं ति पा म४ हा–'इति' नास्ति ।

शरीरं॒ वा अ॒स्यै॒ तदुपा॑ह्वथा॒ इति॒ होवाच॒ गौर्वा (१)अ॒स्यै॒ शरीरं॒ गां वाव तौ तत् पर्य॑वदता॒ं या य॒ज्ञे दी॒यते॒ सा प्रा॒णेन॒ दे॒वान् दा॒धार॒ यया॑ मनु॒ष्या॑ जीव॑न्ति॒ सा व्या॒नेन॑ मनु॒ष्या॑न् यां पि॒तृभ्यो॒ घ्नन्ति॒ साऽपा॒नेन॑ पि॒तॄन्

शरी॑रम् । वै । अ॒स्यै॒ । तत । उपेति॑ । अ॒ह्वथा । इति॑ । ह॒ । उ॒वाच॒ । गौः । वै (१) । अ॒स्यै॒ । शरी॑रम् । गाम् । वाव । तौ । तत् । परीति॑ । अ॒वद॒ताम् । या । य॒ज्ञे । दी॒यते॑ । सा । प्रा॒णेनेति॑ प्र--अ॒नेन॑ । दे॒वान् । दा॒धा॒र॒ । यया॑ । म॒नु॒ष्या॑ । जीव॑न्ति । सा । व्या॒नेनेति॑ वि-अ॒नेन॑ । म॒नु॒ष्या॑न् । याम् । पि॒तृभ्य॒ इति॑ पि॒तृ-भ्यः । घ्नन्ति॑ । सा । अ॒पा॒नेनेत्य॑प-अ॒नेन॑ । पि॒तॄन् ।

(पा ६·१ ७६ वा १)। अथ ^V^छिनत्ति ^V^इति ^V^उवाच तुमिञ्ञ । समानवाक्ये पदात् परत्वाभावान्न निहन्यते (पा ८ १ १६, १७, १८)। सर्वस्य प्लुतस्य पाक्षिकत्वादाख्यातलक्षणप्लुताभाव. ॥

सश्रवा उवाच—'शरीरम्' इत्यादि ॥ किं पुनस्तच्छरीरमित्याकाङ्क्षायां 'गौर्वै' इत्यादि वेदात्मा वदति गोरूपा इडा भवति इति । अथ स असहमान इवाह—'गाम्' इत्यादि । ^V^तत् तदानीं ^V^तौ सश्रवस्तुमिञ्ञौ एव ^V^गां ^V^पर्यवदताम् अनिन्दताम्, अन्यत् प्रारब्धमन्यत् फलितमिच्छति वेत्तृ[फलितमित्यतिवक्तृ]त्वाभ्युपगमो निन्दा ॥

अथ यदुक्त सश्रवसा अस्या शरीरं त्वमुपाह्वथा' इति, तत्समर्थनार्थं प्राणादिवृत्तिभि

शरीरमिति ॥ एव तर्हि नेय मुख्येडेति प्रश्नवादिनोक्तं दूषण दर्शयति—'शरीरं वा अस्यै तदुपाह्वथा इति होवाच' इति ॥ अस्या इडादेवताया: ^V^शरीरम् एव त्वयोपहूतं न तु सा देवता ॥

गौरिति ॥ इदानीमाख्यायिकातोऽपसृत्य^V^ श्रुतिः स्वयमेवाऽऽह—'गौर्वा अस्यै शरीरं गां वाव तौ तत्पर्यवदताम्' इति ॥ ^V^गौः एव अस्या इडायाः ^V^शरीरम् । एतच्च—"मानवी घृतपदी मैत्रावरुणी" (तैब्रा ३ ५ ८) इत्येतस्य हौत्रस्येडोपाह्वानमन्त्रस्य ब्राह्मणे—"मनुः पृथिव्याः" (तैसं २ ६ ७) इत्याद्यनुवाके प्रसिद्धम् । अत इडायाः शरीरभूतां ^V^गाम् एव ^V5^तौ उभौ^5^ तदानीं 'छिनत्ति' ^6^इत्येताभ्यां प्रश्नोत्तराभ्यामनिन्दताम् ॥

येति ॥ इदानीं देवादिधारण स्पष्टीकरोति—'या यज्ञे दीयते सा प्राणेन देवान् दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान् यां पितृभ्यो घ्नन्ति साऽपानेन पितॄन्' इति ॥ ^V^यज्ञे दक्षिणारूपेण दत्तया गवा देवास्तूष्णीमेव तुष्यन्ति न तु तां दुहन्ति नापि घ्नन्ति । अतः ^V^प्राणेन प्रकृष्टचेष्टयोत्तमया^7^ वृत्त्या ^V^देवान् धारयति । ^V^मनुष्याः तु गां दुग्ध्वा ^V^जीवन्ति, तदा नात्यन्तमहानिः क्षीरस्य हीनत्वात् । नाप्यत्यन्त हानिः शरीरस्य वधाभावात् । अतः प्राणापानमध्यवर्तिन्या व्यानसमानया मध्यमवृत्त्या ^V^मनुष्यान्

४ क–इदानीमाख्यायिको नोपसृत्य । ५-५ आ क ना ह्रा–शातव तौ । ६ म४–एवेति ताभ्यां°, त्रि४–न होतादृ° । ७ ति–प्रकृष्टयोत्तम°, भि४ म४–प्रकृष्टचेष्टयोत्तम° ।

य एवं वेद पशुमान् भवत्यथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीत्यन्नं वा अस्यै तदु(२)पाह्वथा इति होवाचौषधयो वा अस्या अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्या भवन्ति य एवं वेदान्नादो भवत्यथ

यः। एवम्। वेद। पशुमानिति पशु—मान्। भवति। अथ। वै। ताम्। उपेति। अह्वे। इति। ह। उवाच। या। प्रजा इति प्र—जा। प्रभवन्तीरिति प्र भवन्ती। प्रतीति। आभवतीत्या—भवति। इति। अन्नम्। वै। अस्यै। तत् (२)। उपेति। अह्वथा। इति। ह। उवाच। ओषधय। वै। अस्या। अन्नम। ओषधय। वै। प्रजा इति प्र—जा। प्रभवन्तीरिति प्र—भवन्ती। प्रति। एति। भवन्ति। य। एवम्। वेद। अन्नाद इत्यन्न-अद। भवति। अथ।

देवानां धारकत्वं वेदात्मैत्र गौराह—' या यज्ञे ' इत्यादि ॥ तस्मात् सम्यगभिहितं सश्रवसा इति। ' य एवम् ' इत्यादि। गतम् ( तैस १७२ ) ॥

अथ तुमिञ्ज उवाच—' अथ वै ताम् ' इत्यादि। कक्षण व्याचष्टे- ' या ' इत्यादि। [V]या [V]प्रभवन्ती प्रभुत्ववती [V]प्रजा [V]प्रत्याभवति प्रत्यक्षाभिमुख्येन भवति ॥

अथ सश्रवा उवाच—' अन्नम् ' इत्यादि ॥ तत् समर्थयते वेदात्मा पुरुष —' ओषधय ' इत्यादि। [V]अस्या गो [V]अन्नम् [V]ओषधय, ताभिः प्रजा प्रभवन्त्यो भवन्तीति ॥

धारयति। अष्टकाश्राद्धे गां पितृभ्यो घ्नन्ति। तथा चाऽऽपस्तम्बः—" श्वोभूते वर्त्मेन गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमि " ( आपगृ ८.२२.१ ) इति ॥ सेयं गौरपामेनाथमत्वस्या मारणरूपया [V]पितॄन् धारयति ॥

य इति ॥ उक्तस्य देवादिधारणस्य वेदनं प्रशंसति—' य एवं वेद पशुमान् भवति ' इति ॥

अथेति ॥ अथ तुमिञ्जः स्वेनोपहूताया इडाया मुख्यत्वं संपादयितुं गुणान्तरेणोक्ता विशिनष्टीति दर्शयति—' अथ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्या भवतीति ' इति ॥ पक्षान्तरद्योतनाय ' अथ वै ' इति पदद्वयम्। [V]या इयमिडा प्रभुत्वोपेताः [V]प्रजाः प्रत्याभिमुख्येन वर्तते तादृशीमिडामुपहूतवानस्मि ॥

अन्नमिति ॥ सश्रवा एतस्या अपि इडाया मुख्यत्वं धारयतीति दर्शयति— ' अन्नं वा अस्यै तदुपाह्वथा इति होवाच ' इति। अस्या इडायाः संबन्धि यद् [V]अन्नं तदेवोपहूतवानसि न तु मुख्यामिडाम् ॥

ओषधय इति ॥ तदेतद्वेदः उपपादयति—' ओषधयो वा अस्याः अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्या भवन्ति ' इति ॥ ओषधीनां गवामन्नत्वं प्रसिद्धम्। प्रभुत्वोपेतानां च प्रजानां गृहेषु बहुजनभोजनाय व्रीह्याद्योषधय आगत्य वर्तन्ते ॥

य इति ॥ एतद्वेदनं प्रशंसति—' य एवं वेदान्नादो भवति ' इति ॥

१ तं ति–त्याचष्टे।

वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति प्रतिष्ठां वा अस्यै तदुपाह्वथा इति होवाचेयं वा अस्यै प्रतिष्ठे(३)यं वै प्रजाः पराभवन्तीरनु गृह्णाति प्रत्याभवन्तीर्गृह्णाति य एवं वेद प्रत्येव तिष्ठत्यथ वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति

वै । ताम् । उपेति । अह्वे । इति । ह । उवाच । या । प्रजा इति प्र-जाः । पराभवन्तीरिति परा-भवन्ती । अनुगृह्णातीत्यनु-गृह्णाति । प्रतीति । आभवन्तीरित्या-भवन्ती । गृह्णाति । इति । प्रतिष्ठामिति प्रति-स्थाम् । वै । अस्यै । तत् । उपेति । अह्वथा । इति । ह । उवाच । इयम् । वै । अस्यै । प्रतिष्ठेति प्रति-स्था (३) । इयम् । वै । प्रजा इति प्र-जा. । पराभवन्तीरिति परा-भवन्तीः । अन्विति । गृह्णाति । प्रतीति । आभवन्तीरित्या-भवन्ती । गृह्णाति । य । एवम । वेद । प्रतीति । एव । तिष्ठति । अथ । वै । ताम् । उपेति । अह्वे । इति । ह । उवाच । यस्यै । निक्रमण इति नि-क्रमणे । घृतम् । प्रजा इति प्र-जा । सजीवन्तीरिति सम्-जीवन्तीः । पिबन्ति । इति ।

पुनरपि तुमिञ्ज उवाच-'अथ' इति ॥ छक्षण ब्रूते-'या' इत्यादि । या पराभवन्ती विद्यमाना प्रजा अनुगृह्णाति पुष्टयादिप्रदानेन धारयति । प्रत्याभवन्ती आत्मानं भजमाना प्रजा गृह्णाति प्रतिष्ठिता करोतीति ॥

अथ सश्रवा उवाच-'प्रतिष्ठाम्' इत्यादि ॥ तदुपपादयति वेदात्मा-'इयम्' इत्यादि ॥

अथ तुमिञ्ज उवाच-'अथ' इति ॥ छक्षण चाभिधत्ते-'यस्यै' इत्यादि । यस्या निक्रमणे न्यक्पतने सर्वा प्रजा सजीवन्त्य' घृतम् उदकं पिबन्ति । ब्राह्मणान्तरं च भवति "सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत" ( तैस २ ६ ७ ) इति ॥

अथेति ॥ पुनरपि तुमिञ्जस्य गुणान्तरोक्तिमिडाया मुख्यत्वसंपादिकामुदाहरति-'अथ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति' इति ॥ या इयमिडा व्याध्यादिभि पराभूयमाना प्रजाः स्वस्यामवस्थाप्य अनुगृह्णाति, पराभूयमानाश्च प्रजास्तत्तदपेक्षित स्थानप्रदानेन स्वीकरोति ॥

प्रतिष्ठामिति ॥ अस्या अपि इडाया मुख्यत्वनिराकरणोक्तिं दर्शयति-'प्रतिष्ठां वा अस्यै तदुपाह्वथा इति होवाच' इति ॥ प्रतितिष्ठत्यस्यामिडा गोरूपेति प्रतिष्ठा भूमिस्तामेवोपहूतवानसि न मुख्यामिडाम् ॥

इयमिति ॥ तदेतदेव उपपादयति-'इयं वा अस्यै प्रतिष्ठेय वै प्रजाः पराभवन्तीरनु गृह्णाति प्रत्याभवन्तीर्गृह्णाति' इति ॥

य इति ॥ वेदनं प्रशंसति-'य एव वेद प्रत्येव तिष्ठति' इति ॥

अथेति ॥ मुख्यत्वसंपादनाय गुणान्तरोक्तिं दर्शयति-'अथ वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति' इति ॥ यस्या वृष्टिरूपाया इडायाः निक्रमणे न्यग्भावेन पतने सति यद् घृतं क्षरदुदकं तज्जीवनार्थिभ्यः प्रजाः उपजीवन्ति तादृशीमिडामुपहूतवानस्मि ॥

छिनत्ति सा न छिनत्ती३ इति न छिनत्तीति होवाच प्र तु जनयतीत्येष वा इडामुपाह्वथा इति (४) होवाच वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो भवति ॥ २ ॥

[ गौर्वा अस्यै तत्प्रतिष्ठाऽह्वथा इति षिट्‌शतिश्च । ]

छिनत्ति । सा । न । छिनत्ती३ । इति । न । छिनत्ति । इति । ह । उवाच । प्रेति । तु । जनयति । इति । एषः । वै । इडाम् । उपेति । अह्वथा । इति (४) । ह । उवाच । वृष्टिः । वै । इडा । वृष्ट्यै । वै । निक्रमण इति नि-क्रमणे । घृतम् । प्रजा इति प्र-जाः । संजीवन्तीरिति सम्-जीवन्ती । पिबन्ति । य । एवम् । वेद । प्रेति । एव । जायते । अन्नाद इत्यन्न-अद । भवति ॥ २ ॥

अथ सश्रवा उवाच—' छिनत्ति ' इत्यादि ॥ व्याख्यातम् ॥

अथ तुमिञ्ज प्रत्युवाच—न छिनत्ति, अपि तु प्रजनयत्येव प्रजा इति ॥

अथ सश्रवा उवाच—'एष वा इडाम्' इत्यादि ॥ एष त्वम् इडाम् उप अह्वथा, यस्त्वं घृतपदीमह्वथा इति । तदेतत् समर्थयते वेदात्मा—' वृष्टिर्वा ' इत्यादि । तत्साधनत्वात्ताच्छब्द्यम् । एवं वेदिता होता प्रकरणाद्वा यजमान' वृष्टिकामेन प्रजावान् भवति अन्नस्य चात्ता ॥

इति सप्तमे द्वितीयोऽनुवाकः ॥

छिनत्तीति ॥ संश्रवाः 'अस्यामिडायां पूर्ववद्दोषभावाभावौ पृच्छति—' छिनत्ति सा न छिनत्ती३ ' इति ॥

नेति ॥ वृष्टेर्गवाश्वभूमीनामिव प्रतिग्राह्यद्रव्यत्वाभावात्तुमिञ्जस्य प्रतिग्रहदोषाभावोक्ति गुणान्तरोक्तिं च दर्शयति—' न छिनत्तीति होवाच प्र तु जनयतीति ' इति ॥ वृष्टिरूपेयमिडा कमपि पुरुषं न छिनत्ति न दूषयति किं तु प्रकर्षेण सस्यादिकं जनयति ॥

एष इति ॥ संश्रवसो मुख्येडास्वाङ्गीकारोक्तिं दर्शयति—' एष वा इडामुपाह्वथा इति होवाच ' इति ॥ एषः वृष्टिरूपेडावादी त्वमेव मुख्याम् इडाम् उपहूतवानसि ॥

वृष्टिरिति ॥ एतस्यामुक्तायाम् इडायां पूर्वोक्तलक्षणं वेदो दर्शयति—' वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति ' इति ॥

य इति ॥ वेदनं प्रशंसति—' य एवं वेद प्रैव जायतेऽन्नादो भवति ' इति ॥

तदेवमस्मिन्ननुवाके सर्वप्राण्युपकारिभिर्गवाश्वभूमिवृष्टिरूपैरियमिडा प्रशस्ता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

८ तै ति.त्रि४.म तस्यामिडायाम् । ९-९. आ क-' इति ॥ वेदनं प्रशंसति ' नास्ति ।

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणात्यथो दक्षिणैवास्यैषाऽथो यज्ञस्यैव छिद्रमपि दधाति यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येणा(१)न्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं

परोक्षमिति पर -अक्षम् । वै । अन्ये । देवा । इज्यन्ते । प्रत्यक्षमिति प्रति–अक्षम् । अन्ये । यत् । यजते । ये । एव । देवा । परोक्षमिति पर –अक्षम् । इज्यन्ते । तान् । एव । तत् । यजति । यत् । अन्वाहार्यमित्यनु–आहार्यम् । आहरतीत्या–हरति । एते । वै । देवा' । प्रत्यक्षमिति प्रति–अक्षम् । यत् । ब्राह्मणा । तान् । एव । तेन । प्रीणाति । अथो इति । दक्षिणा । एव । अस्य । एषा । अथो इति । यज्ञस्य । एव । छिद्रम् । अपीति । दधाति । यत् । वै । यज्ञस्य । क्रूरम् । यत् । विलिष्टमिति वि–लिष्टम् । तत् । अन्वाहार्येणेत्यनु–आहार्येण ( १ )। अन्वाहरतीत्यनु–आहरति । तत् । अन्वाहार्यस्येत्यनु–आहार्यस्य । अन्वाहार्यत्वमित्यन्वाहार्य–त्वम् ।

---

अथान्वाहार्यं विधास्यन् आह– ' परोक्ष वै ' इत्यादि ॥ अक्ष्ण परस्तात् [v]परोक्षम् । " परोक्षे लिट् " ( पा ३ २ ११५ ) इति निपातनाद्रूपसिद्धिः । अक्षमक्ष प्रति [v]प्रत्यक्षम् । *यथार्थेऽव्ययीभावः । उभयत्रापि " कूलतीरतूल" " ( पा ६ २ १२१ ) इत्यादिना उत्तरपदाद्युदात्तत्वम् । " एकान्याभ्यां समर्थाभ्याम् " ( पा ८ १ ६५ ) इति प्रथमा तिङ्विभक्तिर्न निहन्यते । ' यद्यजते ' इत्यादि । यागेन परोक्ष यष्टव्यान् [v]यजते । प्रत्यक्षयष्टव्यानन्वाहार्याहरणेन प्रीणयति । ' एते वै देवाः प्रत्यक्षम् ' इति । वर्तन्त इति शेष. । [v]अथो अपि च [v]दक्षिणा [v]एव [v]अस्य यागस्य [v]एषा यदन्वाहार्याहरणम् । अपि च [v]यज्ञस्य यत् [v]छिद्र प्रमादालस्यादिना छिन्न तत् [v]अपि [v]दधाति पूरयति ॥

अधुना छिद्रापिधान समर्थयते– ' यद्वै ' इत्यादि ॥ [v]यज्ञस्य [v]यत् [v]क्रूरं मात्रातीत [v]यत् च [v]विलिष्टं न्यून क्रियते । लिश अल्पीभावे । [v]तत् [v]अन्वाहार्येण [v]अन्वाहरति हीन

---

द्वितीय इडायाः प्रशंसोक्ता ॥

परोक्षमिति ॥ तृतीयेऽन्वाहार्यं उच्यते—तस्य दानं विधातुं प्रस्तौति—' परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवा परोक्षमिज्यन्ते तानेव तद्यजति ' इति ॥ [v]परोक्षम् इति क्रिया विशेषणम् । अग्नीन्द्रादीनामदृश्यमानत्वात्तद्यागः परोक्ष । ऋत्विजां दृश्यमानत्वात् तद्यागः प्रत्यक्षः ।

यदिति ॥ अन्वाहार्यदानं विधत्ते– ' यदन्वाहार्यमाहरत्येते वै देवा। प्रत्यक्ष यद्ब्राह्मणास्तानेव तेन प्रीणाति ' इति ॥ अन्वाहार्यः पक्व ओदनस्तम् [v]आहरति ऋत्विग्भ्यो दद्यात् । [v]प्रत्यक्ष वर्तन्त इति शेषः ॥

अथो इति ॥ अन्वाहार्यस्य दक्षिणारूपत्वेन यज्ञच्छिद्रपिधायकत्वेन च तं प्रशंसति— ' अथो दक्षिणैवास्यैषाऽथो यज्ञस्यैव छिद्रमपि दधाति ' इति ॥

---

*[ द्र काशिका-पा २ १ ६ ] ।

देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत् तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते

देवदूता इति देव-दूताः । वै । एते । यत् । ऋत्विजः । यत् । अन्वाहार्यमित्यनु-आहार्यम् । आहरतीत्या-हरति । देवदूतानिति देव-दूतान् । एव । प्रीणाति । प्रजापतिरिति प्रजा-पतिः । देवेभ्यः । यज्ञान् । व्यादिशदिति वि-आदिशत् । सः । रिरिचानः । अमन्यत । सः । एतम् । अन्वाहार्यमित्यनु-आहार्यम् । अभक्तम् । अपश्यत् । तम् । आत्मन् । अधत्त । सः । वै । एषः । प्राजापत्य इति प्राजा-पत्यः । यत् । अन्वाहार्य इत्यनु-आहार्यः । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु-आहार्यः । आह्रियत इत्या-ह्रियते । साक्षादिति स-अक्षात् । एव । प्रजापतिमिति प्रजा-पतिम् । ऋध्नोति । अपरिमित इत्यपरि-मितः । निरुप्य इति निः-उप्य । अपरिमित इत्यपरि-मितः । प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-पतेः (२) । आप्त्यै ।

---

पुनरन्वाहरति । यद्वा अनुक्रमेणास्य नाशयति । ^v^तत् ^v^अन्वाहार्यत्वम् अस्य । करणे ण्यत् । तस्माच्छिद्रापिधानमेतत् इति । अन्वाहार्य ओदनविशेषः ॥

' देवदूता ' इत्यादि ॥ गतम् ॥

' प्रजापति ' इत्यादि ॥ ^v^व्यादिशत् विभज्य अददात् । स प्रजापतिर्व्यादिश्य यज्ञो रिक्तोऽहमिति ^v^अमन्यत । ततः ^v^अन्वाहार्यम् अविभक्तम् ^v^अपश्यत् । ^v^तम् आत्मन्येव ^v^अधत्त स्थापयामास । तस्मादयं ^v^प्राजापत्य एव । ' यस्यैवम् ' इत्यादि । गतम् ॥

---

यदिति ॥ अन्वाहार्यशब्दं निर्वक्ति— ' यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येणान्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वम् ' इति ॥ ' अतिरिक्तं कर्मणो यच्च हीनम् ' ( तैब्रा १.७.११ ) इत्यस्मिन् प्रायश्चित्ताहुतिमन्त्रपक्षे प्रोक्तमधिकं यथाक्रमेण ^v^क्रूरं, न्यूनं ^v^विलिष्टं, ^v^तत् उभयेन अन्वाहार्यदानेनानुकूलं यथा भवति तथाऽऽहरति समादधाति । तस्मादन्वाहार्येण आनुकूल्येन समाधीयतेऽनेनेत्यन्वाहार्यः ॥

देवदूता इति ॥ ऋत्विक्प्रीतिहेतुत्वेन पुनः प्रशंसति— ' देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति ' इति ॥

प्रजापतिरिति ॥ ऋत्विक्प्रीतिहेतुत्वेन पुनः प्रशंसति— ' प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत्तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोति ' इति ॥ आग्नेयाग्नीषोमीयपुरोडाशादीन् यागानग्न्यादिदेवेभ्यो विभज्य दत्त्वा स्वकीययागराहित्येन रिक्तमात्मानं मन्यमानः ^v^प्रजापतिः ^v^अभक्तं देवेभ्यो विभज्यासमर्पितं दृष्ट्वा तमात्मन्येव स्थापितवान् । ततः ^v^अन्वाहार्यः ^v^प्राजापत्यः ॥

अपरिमित इति ॥ तस्यान्वाहार्यस्य बाहुल्यसंपादनं विधत्ते— ' अपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेराप्त्यै ' इति ॥ सर्वदेवस्वामित्वेन व्याप्तिबाहुल्यात् प्रजापतेरपरिमितत्वम् ॥

साक्षादेव प्रजापतिमृध्नोत्यपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेरा(२)प्त्यै देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन् तमन्वाहरन्त ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती

देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एतम् । प्राजापत्यमिति प्राजा-पत्यम् । अन्वाहार्यमित्यनु-आहार्यम् । अपश्यन् । तम् । अन्वाहरन्तेत्यनु-आहरन्त । ततः । देवाः । अभवन् । परेति । असुराः । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु-आहार्यः । आह्रियत इत्या-ह्रियते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । यज्ञेन । वै । इष्टी । पक्वेन । पूर्ती । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु-आहार्यः । आह्रियत इत्या-ह्रियते । सः । तु । एव । इष्टापूर्तीतीष्ट-पूर्ती ।

अपरिमितत्व ᵛप्रजापते. आप्त्यै च भवति, तस्याप्यपरिमितत्वात् ॥

‘ देवा वै ’ इत्यादि ॥ गतम् । ᵛभवति ᵛआत्मना भूतिमान् सपद्यते, ᵛअस्य ᵛभ्रातृव्य ᵛपरा ᵛभवति विनष्टो भवति ॥

‘ यज्ञेन वै ’ इत्यादि ॥ इष्टमनेनेति ᵛइष्टी । पूर्तमनेनेति ᵛपूर्ती । “ इष्टादिभ्यश्च ” (पा ५ २ ८८) इतीनिप्रत्यय. । ‘ न ध्याख्या° ’ (पा ८ २ ५७) इति निष्ठानत्वाभाव । साधकतमत्वविवक्षायां “ क्तस्येन्विषयस्य ” (पा २ ३ ३६ वा १) इति सप्तम्यभाव. । ᵛअन्वाहार्यम् आहरन् ᵛइष्टापूर्ती भवति । “ अत इनिठनौ ” (पा ५ २ ११५) इतीनिप्रत्यय । छान्दस पूर्वपदस्य दीर्घत्वम् ॥

देवा इति ॥ स्वविजयहेतुत्वेन वैरिपराजयहेतुत्वेन च पुनः प्रशंसति—‘ देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन् तमन्वाहरन्त ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषोऽन्वाहार्य आह्रियते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ’ इति ॥

यज्ञेनेति ॥ इष्टापूर्तकारित्वपूरणेन च पुनः प्रशंसति—‘ यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती ’ इति ॥ इष्टमाग्नेयादि [1]श्रौतकर्म । पूर्तं वापीकूपादि स्मार्तकर्म । तत्राऽऽग्नेयादियागेनेष्टसंपूर्तिः[2] । पक्वेनान्वाहार्येण पूर्तसंपूर्तिः[2] ॥

प्रजापतेरिति ॥ तस्याभिमर्शनमन्त्रे प्रथमभागं व्याचष्टे—‘ प्रजापतेर्भागोसीत्याह प्रजापतिमेव भागधेयेन समर्धयति ’ इति ॥

ऊर्जस्वानिति ॥ द्वितीयभागं व्याचष्टे—‘ ऊर्जस्वान् पयस्वानित्याहोर्जमेवास्मिन् पयो दधाति ’ इति ॥

१ इ ड ना-श्रौतं कर्म; ति-श्रुतं कर्म । २ आ क ना म४ हा-°संपत्ति ।

प्रजापतेर्भागोऽसी( ३ )त्याह प्रजापतिमेव भागधेयेन समर्धयत्यूर्जस्वान् पयस्वानित्याहोर्जमेवास्मिन् पयो दधाति प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाऽऽशिषमेवैतामा शास्तेऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्याह क्षीयते वा अमुष्मिँल्लोकेऽन्नमितःप्रदान९ ह्यमुष्मिँल्लोके प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गमयति नास्यामुष्मिँल्लोकेऽन्नं क्षीयते ॥ ३ ॥

[ अन्वाहार्येण प्रजापतेरसि ह्यमुष्मिँल्लोके पञ्चदश च ]

प्रजापतेरिति प्रजा–पते । भाग । असि ( ३ ) । इति । आह । प्रजापतिमिति प्रजा–पतिम् । एव । भागधेयेनेति भाग–धेयेन । समिति । अर्धयति । ऊर्जस्वान् । पयस्वान् । इति । आह । ऊर्जम् । एव । अस्मिन् । पयः । दधाति । प्राणापानाविति प्राण–अपानौ । मे । पाहि । समानव्यानाविति समान–व्यानौ । मे । पाहि । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । अक्षितः । असि । अक्षित्यै । त्वा । मा । मे । क्षेष्ठाः । अमुत्र । अमुष्मिन् । लोके । इति । आह । क्षीयते । वै । अमुष्मिन् । लोके । अन्नम् । इतः प्रदानमितीतः–प्रदानम् । हि । अमुष्मिन् । लोके । प्रजा इति प्र–जाः । उपजीवन्तीत्युप–जीवन्ति । यत् । एवम् । अभिमृशतीत्यभि–मृशति । अक्षितिम् । एव । एनत् । गमयति । न । अस्य । अमुष्मिन् । लोके । अन्नम् । क्षीयते ॥ ३ ॥

'प्रजापते' इत्यादिरन्वाहार्यस्यासन्नस्यानुमन्त्रणमन्त्र । गतमन्यत् ( तैसं १ ६ ३ ) । पाहि इति आशिषम् आ शास्ते । इत प्रदानम् अस्मिन् लोके यत्प्रत्त तत् प्रजाः अमुष्मिन् लोके उपजीवन्तीति, न तु तत्रोत्पाद्यते । तस्मात् क्षीयते अमुष्मिन् लोके अन्नम्; तस्मादनेनाभिमर्शनमक्षयत्वाय भवति । अक्षितिरक्षय ॥

इति सप्तमे तृतीयोऽनुवाक ॥

**प्राणापानाविति** ॥ तृतीयभाग व्याचष्टे– 'प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाऽऽशिषमेवैतामा शास्ते' इति ॥ ऋत्विग्भिरन्वाहार्यस्य नीयमानत्वात्तेन [३]स्वकीयप्राणापानादिपालनमाशीरेव एव ॥

**अक्षित इति** ॥ चतुर्थभागं व्याकुर्वन्नभिमर्शनं विधत्ते– 'अक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्याह क्षीयते वा अमुष्मिँल्लोकेऽन्नमित प्रदान९ ह्यमुष्मिँल्लोके प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गमयति नास्यामुष्मिँल्लोकेऽन्नं क्षीयते' इति ॥ स्वर्गस्य कर्मभूमित्वाभावात् [४]तत्र साधनानुष्ठानेनान्नं संपादयितुं शक्यं, किं तु स्वर्गप्राप्ताः प्रजा इतःप्रदानम् एतल्लोकानुष्ठितकर्मसंपादितमेवान्नं स्वर्गे लोके उपजीवन्ति । तस्मात्तत्र भुज्यमानमिदं क्षीयते । 'अक्षितोऽसि' इति मन्त्रेण, यत् अभिमर्शनं तेनान्नस्याक्षयत्वप्रापणात् अन्नं न स्वर्गे क्षीयते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥

३ आ ना हा–स्वकीयप्राणादि° । ४ आ क ना म४.हा–तत्° ।

ब॒र्हिषो॒ऽहं दे॒वय॒ज्यया॑ प्र॒जावा॑न् भूयास॒मित्या॑ह ब॒र्हिषा॒ वै प्र॒जाप॑तिः प्र॒जा अ॑सृजत॒ तेनै॒व प्र॒जाः सृ॑जते॒ नरा॒शꣳस॑स्या॒हं दे॒वय॒ज्यया॑ पशु॒मान् भू॑यास॒मित्या॑ह॒ नरा॒शꣳसे॑न॒ वै प्र॒जाप॑तिः प॒शून॑सृजत॒ तेनै॒व प॒शून्त्सृ॑जते॒ऽग्नेः स्वि॑ष्ट॒कृतो॒ऽहं दे॒वय॒ज्यया॒ऽऽयु॑ष्मान् य॒ज्ञेन॑ प्रति॒ष्ठां ग॑मेय॒मित्या॒हाऽऽयु॑रे॒वाऽऽत्मन् ध॒त्ते प्रति॑ य॒ज्ञेन॑ तिष्ठति दर्शपूर्ण॒मास॒यो(१)र्वै दे॒वा उज्जि॑ति॒मनू॑दजयन् दर्शपूर्ण॒मासा॒भ्या॒मसु॑रा॒-नपा॑नुदन्ता॒ग्नेर॒हमुज्जि॑ति॒मनूज्जे॑ष॒मित्या॑ह

ब॒र्हिषः॑ । अ॒हम् । दे॒वय॒ज्ययेति॑ देव–य॒ज्यया॑ । प्र॒जावा॒निति॑ प्र॒जा–वा॒न् । भू॒या॒स॒म् । इति॑ । आ॒ह॒ । ब॒र्हिषा॑ । वै । प्र॒जाप॑ति॒रिति॑ प्र॒जा–प॒ति॒ । प्र॒जा इति॑ प्र–जा । अ॒सृ॒ज॒त॒ । तेन॑ । ए॒व । प्र॒जा इति॑ प्र–जा । सृ॒ज॒ते॒ । न॒रा॒शꣳस॑स्य । अ॒हम् । दे॒वय॒ज्ययेति॑ देव–य॒ज्यया॑ । प॒शु॒मानिति॑ पशु–मान् । भू॒या॒स॒म् । इति॑ । आ॒ह॒ । न॒रा॒शꣳसे॑न । वै । प्र॒जाप॑ति॒रिति॑ प्र॒जा–प॒ति॒ । प॒शून् । अ॒सृ॒ज॒त॒ । तेन॑ । ए॒व । प॒शून् । सृ॒ज॒ते॒ । अ॒ग्नेः । स्वि॒ष्ट॒कृत॒ इति॑ स्वि॒ष्ट–कृ॒तः॑ । अ॒हम् । दे॒वय॒ज्ययेति॑ देव–य॒ज्यया॑ । आयु॑ष्मान् । य॒ज्ञेन॑ । प्र॒ति॒ष्ठामिति॑ प्रति–स्थाम् । ग॒मे॒य॒म् । इति॑ । आ॒ह॒ । आयु॑ । ए॒व । आ॒त्मन् । ध॒त्ते॒ । प्रतीति॑ । य॒ज्ञेन॑ । ति॒ष्ठ॒ति॒ । द॒र्श॒पू॒र्ण॒मा॒सयो॒रिति॑ द॒र्श–पू॒र्ण॒मा॒सयोः॑ (१) । वै । दे॒वाः । उज्जि॑ति॒मित्युत्–जि॒ति॒म् । अनु॑ । उदिति॑ । अ॒ज॒य॒न् । द॒र्श॒पू॒र्ण॒मा॒सा॒भ्या॒मिति॑ द॒र्श–पू॒र्ण॒मा॒सा॒भ्या॒म् । असु॑रान् । अपेति॑ । अ॒नु॒द॒न्त॒ । अ॒ग्नेः । अ॒हम् । उज्जि॑ति॒मित्युत्–जि॒ति॒म् । अनु॑ । उदिति॑ । जे॒ष॒म् । इति॑ । आ॒ह॒ ।

अथानूयाजानामनुमन्त्रणमन्त्रा —‘ बर्हिषोऽहम् ’ इत्याद्या । गताः ( तैस १ ६ ४ ) । नरै शसनीयो नराशस । द्वितीयानूयाजदेवता । छान्दस पूर्वपदस्य दीर्घत्वम्, उत्तरपदाद्युदात्तत्व च ॥

‘ दर्शपूर्णमासयोर्वै ’ इत्यादि ॥ दर्शपूर्णमासयोर्या उज्जिति उच्छ्रिता जिति दर्शपूर्णमास-निमित्ता वा । ताम ᵛअनु ᵛदेवा ᵛउदजयन् । लक्षणेऽनो (पा १ ४·८३,८४) कर्मप्रवचनीयत्वम् ।

तृतीयेऽन्वाहार्योऽभिहितः । चतुर्थे शेषाहुतीनामनुमन्त्रणमन्त्रा व्याख्यायन्ते—

बर्हिष इति ॥ तत्रानूयाजमन्त्रान् व्याचष्टे—‘ बर्हिषोऽहं देवयज्यया प्रजावान् भूयासमित्याह बर्हिषा वै प्रजापति प्रजा असृजत तेनैव प्रजाः सृजते नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमित्याह नराशꣳसेन वै प्रजापतिः पशूनसृजत तेनैव पशून्त्सृजतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान यज्ञेन प्रतिष्ठां गमेयमित्याहाऽऽयुरेवाऽऽत्मन् धत्ते प्रति यज्ञेन तिष्ठति ’ इति ॥ ᵛबर्हिषा बर्हिर्यागानुमन्त्रणेन । एवमितरत्राभ्यर्थ्य ॥

दर्शपूर्णमासयोरिति ॥ सूक्तवाकानुमन्त्रणमन्त्रं व्याचष्टे—‘ दर्शपूर्णमासयोर्वै देवा उज्जिति-मनूदजयन् दर्शपूर्णमासाभ्यामसुरानपानुदन्ताग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवतानां यजमान

दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानप नुदते वाजवतीभ्यां व्यूहत्यन्नं वै वाजोऽन्नमेवाव रुन्द्धे द्वाभ्यां प्रतिष्ठित्यै यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत उभयत(२)एव यज्ञं दुहे पुरस्ताच्चोप-रिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यो।

दर्शपूर्णमासयोरिति दर्श—पूर्णमासयोः । एव । देवतानाम् । यजमान । उज्जितिमित्युत् -जितिम् । अनु । उदिति । जयति । दर्शपूर्णमासाभ्यामिति दर्श पूर्णमासाभ्याम् । भ्रातृव्यान् । अपेति । नुदते । वाजवतीभ्यामिति वाज—वतीभ्याम् । वीति । ऊहति । अन्नम् । वै । वाज. । अन्नम् । एव । अवेति । रुन्द्धे । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । य. । वै । यज्ञस्य । द्वौ । दोहौ । विद्वान् । यजते । उभयत (२) । एव । यज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च । एष । वै । अन्य । यज्ञस्य । दोह । इडायाम् । अन्य. ।

" तादौ च° " ( पा ६ २ ५० ) इति गते. प्रकृतिस्वरत्वम् । ' दर्शपूर्णमासयोरेव ' इति । दर्शपूर्णमासयोर्या देवता अग्न्यादय तासाम् $^{v}$उज्जितिम् $^{v}$अनु $^{v}$यजमान $^{v}$उत् $^{v}$जयति । सूक्तवाके " अग्नेरहम् " ( तैस १ ६ ४ ) इत्युज्जितीनां वचनात् । अग्नेरहमिति चोपलक्षण " सोमस्याहम् " ( तैस १ ६ ४ ) इत्यादिना सर्वासामुज्जितीनाम् ॥

' वाजवतीभ्याम् ' इत्यादि ॥ " वाजस्य मा प्रसवेन " ( तैस १ ६ ४ ) इत्यादिभ्यां स्रुचौ $^{v}$व्यूहति विश्लेषयति । अध्वर्युणा क्रियमाणमनुमन्त्रयते—द्वाभ्यां व्यूहन प्रतिष्ठित्यै भवति । द्वाभ्यां हि पुरुष [1]प्रतितिष्ठति । पूर्ववद्गते प्रकृतिस्वरत्वम् ॥

' यो वै यज्ञस्य ' इत्यादि ॥ $^{v}$उभयत [2] यज्ञ दुग्धे पुरस्तादुपरिष्टाच्च । पूर्ववत्तलोप । ' एष वै ' इत्यादि । $^{v}$एष वक्ष्यमाण $^{v}$यज्ञस्य एक $^{v}$दोह, $^{v}$इडायाम् एको दोह. । तत्रेडायां स प्रथमेऽनुवाके उक्त " सा मे सत्याशी " ( तैस १ ७ १ ) इति ॥

उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानप नुदते ' इति ॥ अनुष्ठितयोः $^{v}$दर्शपूर्णमासयोः अनेनोज्जिति-मन्त्रपाठेनोज्जितिरुत्कर्षः संपूर्णता भवति । तां च यज्ञोज्जितिम् $^{v}$अनु $^{v}$देवाः अप्युत्कर्षेण $^{v}$अजयन् । ताभ्यां च सपूर्णाभ्यां $^{v}$दर्शपूर्णमासाभ्याम् $^{v}$असुरान् निराचक्रुः ॥

वाजवतीभ्यामिति ॥ स्रुग्व्यूहनानुमन्त्रणं विधत्ते—' वाजवतीभ्यां व्यूहत्यन्नं वै वाजोऽन्नमेवाव रुन्द्धे ' इति ॥ $^{v}$व्यूहति अध्वर्युणा क्रियमाणमनुमन्त्रयेतेत्यर्थः ॥

द्वाभ्यामिति ॥ पादद्वयेनैव प्रकर्षेण स्थिरत्वार्थं मन्त्रद्वित्वमित्याह—' द्वाभ्यां प्रतिष्ठित्यै ' इति ॥

य इति ॥ कालविशिष्टम् " एमा अग्मन् " ( तैस १ ६ ४ ) इति मन्त्रपाठं विधातुं प्रस्तौति— ' यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह

१ मै—प्रतिष्ठति । २ सं ति—उभयत्र ।

यर्हि होता यजमानस्य नाम गृह्णीयात् तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वा(३)यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गं लोकं गमयति वि ते

मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं वि मुञ्चति

यर्हि । होता । यजमानस्य । नाम । गृह्णीयात् । तर्हि । ब्रूयात् । एति । इमा । अग्मन् । आशिष इत्या-शिषः । दोहकामा इति दोह-कामा । इति । सꣳस्तुता इति सम्-स्तुता । एव । देवताः । दुहे । अथो इति । उभयतः । एव । यज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च । रोहितेन । त्वा । अग्निः । देवताम् । गमयतु । इति । आह । एते । वै । देवाश्वा इति देव-अश्वाः (३) । यजमानः । प्रस्तर इति प्र-स्तरः । यत् । एतैः । प्रस्तरमिति प्र-स्तरम् । प्रहरतीति प्र-हरति । देवाश्वैरिति देव-अश्वैः । एव । यजमानम् । सुवर्गमिति सुवः-गम् । लोकम् । गमयति । वीति । ते । मुञ्चामि । रशनाः । वीति । रश्मीन् । इति । आह । एषः । वै । अग्नेः । विमोक इति वि-मोकः । तेन । एव । एनम् । वीति । मुञ्चति ।

अत्र द्वितीयं दोहं विदधाति—'यर्हि होता' इत्यादि ॥ "आ शास्तेऽयं यजमानोऽसौ" (तैब्रा ३ ५ १०) इत्यदःशब्दस्य स्थाने यदा [v]यजमानस्य [v]नाम गृह्णाति तदा [v]ब्रूयात् यजमानः । 'एमा अग्मन्' इत्यादि । [v]संस्तुताः "अग्निमावह" (तैब्रा ३ ५ ३) "अग्निरिदं हविरजुषत" (तैब्रा ३ ५ १०) इत्यादिषु बहुशः संकीर्तिताः । दर्शपूर्णमासदेवताः सर्वा एव दुग्धे । [v]अथो अपि च [v]उभयतः पुरस्तादुपरिष्टाच्च [v]यज्ञं दुग्धे ॥

'रोहितेन त्वा' इति प्रस्तरस्य प्रह्रियमाणस्यानुमन्त्रणम् ॥ तत्र [v]एते रोहितादयः देवानामग्न्यादीनामश्वाः (द्र निघण्टु १ १५ २) । प्रस्तीर्यत इति [v]प्रस्तरः । "ऋदोरप्"

इडायामन्यः' इति ॥ [v]एष इदानीमेव वक्ष्यमाणः 'एमा अग्मन्' इति मन्त्रपाठः पृथक् [v]दोहः । पूर्वम् [v]इडायाम् उक्तः "सा मे सत्याऽऽशीः" (तैसं १ ७ १) इति मन्त्रपाठः पृथक् [v]दोहः ॥

यर्हीति ॥ विधत्ते—'यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च' इति ॥ होता सूक्तवाकं पठन्नाशास्ते—"अयं यजमानोऽसौ" (तैब्रा ३ ५ १०) इति । यदा [v]नाम[1] गृह्णाति [2]तदानीम् 'एमा अग्मन्' इति मन्त्रं पठेत् । या [v]देवताः "अग्निमग्न आवह" (तैब्रा ३ ५ ३) "अग्निरिदं हविरजुषत" (तैब्रा ३ ५ १०) इत्यादिना होत्रा बहुशः [v]संस्तुताः [2]ताः सर्वा अप्यनेन मन्त्रपाठेन यजमानो दुग्धे । किं बेलाकालीनो दोह इदानींतनो दोह इत्युभयमपि सपादितं भवति ॥

१ ति-तदा सु; म४-तदा । २, आ ति ना हा-'ताः' नास्ति ।

विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रति तिष्ठति सोमस्याहं देवयज्यया सुरेता (४) रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन् धत्ते त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन् धत्ते देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात् प्रजापतिर्मिथुनेन (५) प्राजायत तस्मादेव यजमानो मिथुनेन प्र जायते

विष्णोः । शंयोरिति शम्—योः । अहम् । देवयज्ययेति देव—यज्यया । यज्ञेन । प्रतिष्ठामिति प्रति—स्थाम् । गमेयम् । इति । आह । यज्ञः । वै । विष्णुः । यज्ञे । एव । अन्ततः । प्रतीति । तिष्ठति । सोमस्य । अहम् । देवयज्ययेति देव—यज्यया । सुरेता इति सु—रेताः (४) । रेतः । धिषीय । इति । आह । सोमः । वै । रेतोधा इति रेतः—धाः । तेन । एव । रेतः । आत्मन् । धत्ते । त्वष्टुः । अहम् । देवयज्ययेति देव—यज्यया । पशूनाम् । रूपम् । पुषेयम् । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप—कृत् । तेन । एव । पशूनाम् । रूपम् । आत्मन् । धत्ते । देवानाम् । पत्नीः । अग्निः । गृहपतिरिति गृह—पतिः । यज्ञस्य । मिथुनम् । तयोः । अहम् । देवयज्ययेति देव—यज्यया । मिथुनेन । प्रेति । भूयासम् । इति । आह । एतस्मात् । वै । मिथुनात् । प्रजापतिरिति प्रजा—पतिः । मिथुनेन (५) । प्रेति । अजायत । तस्मात् । एव । यजमानः । मिथुनेन । प्रेति । जायते ।

(पा ३ ३ ५७) । थाथादिनोत्तरपदान्तोदात्तत्वम् (पा ६ २ १४४) । प्राधान्यात्ताच्छब्द्यम् । 'यदेतै' इत्यादि । [v]एतै अनुमन्त्र्यमाण [v]प्रस्तर प्रहरन्नग्नि [v]देवाश्चै [v]यजमान स्वर्गं प्रापयति ॥ 'वि ते मुञ्चामि' इति परिधीनां विमुच्यमानानामनुमन्त्रणम् ॥ एष मन्त्रोऽग्निविमोको[१] नाम ॥ शंयुवाकस्य (तैस १ ६ ४) उक्तस्यानुमन्त्रण 'विष्णो' इति ॥

रोहितेनेति ॥ प्रस्तरानुमन्त्रणमन्त्रं व्याचष्टे—'रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्चा यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गं लोकं गमयति' इति ॥ यजमानत्वयागसाधनत्वात् प्रस्तरे यजमानत्वोपचारः ॥

वीति ॥ परिधिविमोकानुमन्त्रणमन्त्रं व्याचष्टे—'वि ते मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं वि मुञ्चति' इति ॥ 'ते रशना वि मुञ्चामि' इत्यग्निमुद्दिश्याभिधानादयमग्नेर्विमोकः ॥

विष्णोरिति ॥ शंयुवाकानुमन्त्रणमन्त्रं व्याचष्टे—'विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रति तिष्ठति' इति ॥ यज्ञस्य फलव्याप्त्या विष्णुत्वम् । [v]अन्ततः समाप्तिकाले ॥

३ त-विकारो (?) ।

वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं यद्यद्भ्रातृव्यस्याभिध्यायेत् तस्य नाम गृह्णीयात् तदेवास्य

वेदः। असि। वित्तिः। असि। विदेयं। इति। आह। वेदेन। वै। देवाः। असुराणाम्। वित्तम्। वेद्यम। अविन्दन्त। तत्। वेदस्य। वेदत्वमिति वेद–त्वम्। यद्यदिति यत्–यत्। भ्रातृव्यस्य। अभिध्यायेदित्यभि–ध्यायेत्। तस्य। नाम। गृह्णीयात्। तत। एव। अस्य।

---

'सोमस्याहम्' इत्यादय पत्नीसंयाजानुमन्त्रणमन्त्रा ॥ 'मिथुनेन प्र जायते' इति। मिथुनेन प्रजावान् भवेत। [v]तस्मात पूर्वोक्तात् यज्ञस्य मिथुनात [v]यजमान [v]मिथुनेन [4]प्रजावान् भवति ॥

'वेदोऽसि' इति ॥ वेदेऽन्तर्वेदि निधीयमाने[5] यजमान वाचयति ॥ [v]वित्त लब्ध [v]वेद्य लब्धु योग्य च धन वेदादलभन्त [v]देवाः। "विदेर्वित्तश्च वित्नश्च" (द्र पाभा ८ २ ५८) इति पाक्षिको नत्वाभाव। विद्यते लभ्यतेऽनेनेति करणे घञ् (पा ३ ३ १२१)। उञ्छादित्वादन्तोदात्तत्वम् (पा ६ १ १६०)। [v]यद्यत [v]भ्रातृव्यस्य सबधि गृहक्षेत्रादि तत

---

**सोमस्येति** ॥ प्रथमस्य पत्नीसंयाजस्यानुमन्त्रणमन्त्रं व्याचष्टे—'सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन धत्ते' इति ॥ गर्भाशये रेतोधारण सोमस्यानुग्रहात् भवति। ततः [v]सोमः [v]रेतोधाः ॥

**त्वष्टुरिति** ॥ द्वितीयपत्नीसंयाजानुमन्त्रणमन्त्रं व्याचष्टे—'त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूना मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन्धत्ते' इति ॥ अन्यत्र "यावच्छो वै रेतस सिक्तस्य त्वष्टा रूपाणि विकरोति" (तैस १५९) इत्याम्नानात् मनुष्यगवाश्वादिपशूनां स्त्रीपुरुषमिथुनात्मकानां रूप त्वष्टा करोति ॥

**देवानामिति** ॥ तृतीयचतुर्थपत्नीसंयाजयोरेकीकारेणानुमन्त्रणमन्त्र व्याचष्टे—'देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुन तयोरहं देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात् प्रजापतिर्मिथुनेन प्र जायते' इति ॥

वेद इति ॥ वेदाभिमर्शनमन्त्रं व्याचष्टे–'वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्त वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्' इति ॥ [v]वित्तं पूर्वलब्धं धनं [v]वेद्यम् इत परं लब्धव्यम्।

---

४ तं ति–प्रजातवान्। ५ ति मै–विधीयमाने।

तैसं २९

सर्वं वृङ्क्ते घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायां वाजी जायते य एवं वेद ॥ ४ ॥

[ दर्शपूर्णमासयोरुभयतो देवाश्वा सुरेता प्रजापतिर्मिथुनेनाऽऽप्नोत्यष्टौ च ]

सर्वम् । वृङ्क्ते । घृतवन्तमिति घृत–वन्तम् । कुलायिनम् । राय । पोषम् । सहस्रिणम् । वेदः । ददातु । वाजिनम् । इति । आह । प्रेति । सहस्रम् । पशून् । आप्नोति । एति । अस्य । प्रजायामिति प्र–जायाम् । वाजी । जायते । य । एवम् । वेद ॥ ४ ॥

[ मैसं १ ४ ५; कासं ३२ ३–४ ]

~~~~~~~~~~~~~~~~

[V]अभिध्यायेत् इदं ममास्त्विति मनसा काङ्क्षेत्, मा इदमस्य भूयादिति वा । य द्विष्यात् [V]तस्य नामधेय 'विदेय' इत्यत. पुरा [V]गृह्णीयात् । [V]तत् [V]सर्वम [V]अस्य [V]वृङ्क्ते स्वयमेव गृह्णाति । वृजी वर्जने, रौधादिक । यद्वा—तत्सर्वं तस्य वर्जयति नाशयति । वेदितु प्रजासु [V]वाजी जायते अन्नवानेव सर्वं [V]आ [V]जायते, सर्वत्र वा जायते ॥

इति सप्तमे चतुर्थोऽनुवाकः ॥

~~~~~~~~~~~~~~~~

तदुभयमसुरसंबन्धि यत्र क्वापि निक्षिप्तं, तदुभयं [V]देवाः कदाचित् [V]वेदेन भूमिं समृजन्तोऽलभन्त । ततो विद्यते वित्तमनेनेति व्युत्पत्त्या [V]वेदत्वं निष्पन्नम् ॥

यदिति ॥ विधत्ते–'यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं वृङ्क्ते' इति ॥ वैरिणः संबन्धि यद्गृहक्षेत्रादिकं यजमानो 'ममास्तु' इति [V]अभिध्यायेत् [V]तस्य सर्वस्य नामधेयं मन्त्रमध्ये गृहीत्वा 'विदेय' इत्येतत्पदं पठेत् ॥

घृतवन्तमिति ॥ एतस्य मन्त्रस्यान्त्यभागे 'सहस्रिणम्' इति पदस्योच्चारणं प्रशंसति–– 'घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोति' इति ॥

एति ॥ मन्त्रार्थवेदनं प्रशंसति––'आऽस्य प्रजायां वाजी जायते य एवं वेद' इति ॥ [V]प्रजायां सन्ततौ [V]आ सर्वतः पुत्रोऽन्नसमृद्धो [V]जायते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

ध्रुवां वै रिच्यमानां यज्ञोऽनु रिच्यते यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमाना यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजा आ प्यायतां ध्रुवा घृतेनेत्याह ध्रुवामेवाऽऽ प्याययति तामाप्यायमाना यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजाः प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेने-(१)त्याहाऽयं वै प्रजापतेर्विभान्नाम लोकस्तस्मिन्नेवैनं दधाति सह यजमानेन

ध्रुवाम् । वै । रिच्यमानाम् । यज्ञः । अन्विति । रिच्यते । यज्ञम् । यजमान. । यजमानम् । प्रजा इति प्र–जाः । ध्रुवाम् । आप्यायमानामित्या–प्यायमानाम् । यज्ञ । अनु । एति । प्यायते । यज्ञम् । यजमान । यजमानम् । प्रजा इति प्र–जा । एति । प्यायताम् । ध्रुवा । घृतेन । इति । आह । ध्रुवाम् । एव । एति । प्याययति । ताम् । आप्यायमानामित्या–प्यायमानाम् । यज्ञ । अनु । एति । प्यायते । यज्ञम् । यजमान । यजमानम् । प्रजा इति प्र–जा । प्रजापतेरिति प्रजा–पते । विभानिति वि–भान् । नाम । लोकः । तस्मिन् । त्वा । दधामि । सह । यजमानेन इति ( १ ) । आह । अयम् । वै । प्रजापतेरिति प्रजा–पते । विभानिति वि–भान् । नाम । लोक । तस्मिन् । एव । एनम् । दधाति । सह । यजमानेन ।

'आप्यायताम्' इति ध्रुवाया आप्यायमानाया अनुमन्त्रणम् । तामाप्यायमानां स्तोतुमाह—'ध्रुवां वै' इत्यादि ॥ अनोर्लक्षणे कर्मप्रवचनीयत्वम् ( पा १ ४ ८४ ) । रिचिर् रेचने, रौधादिक. कर्मकर्तरि यक् । व्यत्ययेनाद्युदात्तत्वम् । "अचः कर्तृयकि" ( पा ६ १ १९५ ) इति वा [१]व्यत्ययेन अनजन्तस्य भवति । श्यन् वा व्यत्ययेन । ओप्यायी वृद्धौ । गतमन्यत् ॥

चतुर्थे शेषाहुत्यनुमन्त्रणमन्त्रा व्याख्याताः । पञ्चमे त्वाप्यायनादिमन्त्रा व्याख्यायन्ते ।

ध्रुवामिति ॥ तत्राऽऽप्यायनमन्त्रं व्याख्यातुमन्वयव्यतिरेकाभ्यां प्रस्तौति— 'ध्रुवां वै रिच्यमानां यज्ञोऽनु रिच्यते यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमानां यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजाः' इति ॥ ध्रुवाया [१]रिच्यमानायां यज्ञस्यासंपूर्त्या यजमानस्य [२]फलाभावात् तदीयप्रजानाम्[३] अन्नाद्यभाव इति व्यतिरेकः । एवमन्वये[४] योज्यम् ॥

एति ॥ मन्त्रं व्याचष्टे—'आ प्यायतां ध्रुवा घृतेनेत्याह ध्रुवामेवाऽऽ प्याययति तामाप्यायमानां यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजाः' इति ॥

प्रजापतेरिति ॥ यजमानभागप्राशनमन्त्रं व्याचष्टे—'प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेनेत्याहायं वै प्रजापतेर्विभान्नाम लोकस्तस्मिन्नेवैनं दधाति सह यजमानेन' इति ॥ विशेषेण कर्मभूमित्वेन भातीति [४]विभान् अयं भूलोकः । [४]एनं यजमानभागम् ॥

१ तं ति–प्रत्ययेन (?) ।

१ आ ना म४ छा–रिक्तायाम् । २ म४–कुशलाभावात् । ३ आ ना छा–°प्रजायाः । ४.म४–एवमाप्यायनेऽपि; ने–एवमस्यान्वयेऽपि ।

रिच्यत इव वा एतद्यद्यजते यद्यजमानभागं प्राश्नात्यात्मानमेव प्रीणात्येतावान् वै यज्ञो यावान् यजमानभागो यज्ञो यजमानो यद्यजमानभागं प्राश्नाति यज्ञ एव यज्ञं प्रति ष्ठापयत्येतद्वै सूयवसꣳ सोदकं यद्बर्हिश्चाऽऽपश्चैत( २ )द्यजमानस्याऽऽयतनं यद्वेदिर्यत् पूर्णपात्रमन्तर्वेदि निनयति स्व एवाऽऽयतने सूयवसꣳ सोदकं कुरुते

रिच्यते । इव । वै । एतत् । यत् । यजते । यत् । यजमानभागमिति यजमान–भागम् । प्राश्नातीति प्र–अश्नाति । आत्मानम् । एव । प्रीणाति । एतावान् । वै । यज्ञः । यावान् । यजमानभाग इति यजमान–भागः । यज्ञः । यजमानः । यत् । यजमानभागमिति यजमान–भागम् । प्राश्नातीति प्र–अश्नाति । यज्ञे । एव । यज्ञम् । प्रतीति । स्थापयति । एतत् । वै । सूयवसमिति सु–यवसम् । सोदकमिति स–उदकम् । यत् । बर्हिः । च । आपः । च । एतत् ( २ ) । यजमानस्य । आयतनमित्या–यतनम् । यत् । वेदिः । यत् । पूर्णपात्रमिति पूर्ण–पात्रम् । अन्तर्वेदीत्यन्तः–वेदि । निनयतीति नि–नयति । स्वे । एव । आयतन इत्या–यतने । सूयवसमिति सु–यवसम् । सोदकमिति स–उदकम् । कुरुते ।

'प्रजापतेर्विभान्' इति । यजमानप्राशनमन्त्रः । अयं लोको मनुष्यलोकः सूर्यादिभिः विविधं भातीति विभान् ।

'रिच्यत इव' इत्यादि । नियमैः कर्शितत्वात् रिच्यते इव यजमानः । स आत्मीयभाग-प्राशनेन आत्मानं तर्पयति ।

'एतावान्' इत्यादि ॥ प्राधान्यात् यज्ञः यजमान इति तदधीनत्वात् तन्निर्देशः ॥

'एतद्वै' इत्यादि ॥ पूर्णपात्रविधिः । सूयवसं सोदकं चानेनैतत् क्रियते, यत् आपः च बर्हिः च तयोश्चयन्ते । किंच एतत् यजमानस्य आयतनं गृहं यत् वेदिः तस्मात् यत् इदम् अन्तर्वेदि प्रणीतासु पूर्णपात्रम् आनयति तदेतत् स्वे एव आयतने आत्मार्थं सूयवसं सोदकं च कुरुते ॥

रिच्यत इति ॥ यजमानस्य रिक्तीकरणनिवारणेन भागप्राशनं प्रशंसति—'रिच्यत इव वा एतद्यद्यजते यद्यजमानभागं प्राश्नात्यात्मानमेव प्रीणाति' इति ॥ यजते इति यत्, एतेन पुरोडाशाज्य-सांनाय्यद्रव्यहानेः यजमानो रिक्त इव भवति । भागप्राशनेन तु प्रीतस्तं क्लेशं जहाति ॥

एतावानिति ॥ यज्ञप्रतिष्ठाहेतुत्वेनापि तदेव प्रशंसति—'एतावान्वै यज्ञो यावान् यजमानभागो यज्ञो यजमानो यद्यजमानभागं प्राश्नाति यज्ञ एव यज्ञं प्रति ष्ठापयति' इति ॥ यजमानस्य भागः यावान् अस्ति एतावान् एवेह लोके यजमानस्योपयुक्तो यज्ञः, अवशिष्टस्य देवैर्ऋत्विग्भिश्च भक्ष्यमाणत्वात् । स्वयं च यज्ञस्वामित्वेन यज्ञात्मकः । तथा सति यजमानेन भागे प्राशिते यज्ञ एव यज्ञः प्रतिष्ठापितो भवति ॥

२ तं ति–भागस्य प्राशनेन ।

५ आ ना छा–ऽर्थ्यहोमे ।

सदसि सन्मे भूया इत्याहाऽऽपो वै यज्ञ आपोऽमृतं यज्ञमेवामृतमात्मन् धत्ते सर्वाणि वै भूतानि व्रतमुपयन्तमनूप यन्ति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्याहैष वै दर्शपूर्णमासयोरवभृथो (३) यान्येवैनं भूतानि व्रतमुपयन्तमनूपयन्ति तैरेव सहावभृथमवैति

सत् । असि । सत । मे । भूया । इति । आह । आप । वै । यज्ञ । आप । अमृतम् । यज्ञम् । एव । अमृतम् । आत्मन् । धत्ते । सर्वाणि । वै । भूतानि । व्रतम् । उपयन्तमित्युप–यन्तम् । अनु । उपेति । यन्ति । प्राच्याम् । दिशि । देवा । ऋत्विज । मार्जयन्ताम् । इति । आह । एष । वै । दर्शपूर्णमासयोरिति दर्श–पूर्णमासयो । अवभृथ इत्यव–भृथ (३) । यानि । एव । एनम् । भूतानि । व्रतम । उपयन्तमित्युप–यन्तम् । अनूपयन्तीत्यनु–उपयन्ति । तै । एव । सह । अवभृथमित्यव–भृथम् । अवेति । एति ।

तत्र ‘सदसि सन्मे’ इति पूर्णपात्र आनीयमाने यजमानो जपति ॥ ‘आपो वै’ इत्यादि । गतम । ᵛयज्ञम् ᵛअमृतम् आत्मनि स्थापयति अनेन मन्त्रेण । सदादिपदैर्यज्ञामृते अभिधीयेते इति भाव ॥

‘सर्वाणि’ इत्यादि ॥ व्रतोपायनकाल एवैनम ᵛअनु ᵛसर्वाणि ᵛभूतानि देवादीनि ᵛउप ᵛयन्ति उपगच्छन्ति । इदानीं तै सर्वै सहावभृथमवैति । क पुनरयमवभृथ इत्याह— ‘प्राच्याम्’ इत्यादि । अनेन मन्त्रेण यद्दिशा व्युत्सेचनम् ॥

‘विष्णुमुखा’ इत्यादि ॥ विष्णुक्रमाणां क्रमणविधि । ते च ‘विष्णो क्रमोऽसि’ (तैस १ ६ ५) इत्यादय । ᵛविष्णुमुखा विष्णुप्रधाना । ᵛअनपजय्यम् अन्यैरपजेतुमशक्यम् ।

यतदिति ॥ पूर्णपात्रस्य निनयनं विधातुं प्रस्तौति—‘एतद्वै सूयवसꣳ सोदक यद्बर्हिश्चाऽऽपश्चै तद्यजमानस्याऽऽयतनं यद्वेदिः’ इति ॥ वेदेर्बर्हिर्धारणेन यजमानस्थानत्वम् । एतत् च स्थान बर्हिषाऽऽस्तीर्णत्वात् समीचीनतृणोपेत प्रणीतानामत्र स्थापितत्वादुदकोपेत च ॥

यदिति ॥ विधत्ते— ‘यत्पूर्णपात्रमन्तर्वेदि निनयति स्व एवाऽऽयतने सूयवसꣳ सोदकं कुरुते’ इति ॥ ᵛसूयवसं तृणसमृद्धिं ᵛसोदकम् उदकसमृद्धिं च ᵛकुरुते ॥

सदसीति ॥ विनयनमन्त्रं व्याचष्टे—‘सदसि सन्मे भूया इत्याहापो वै यज्ञ आपोऽमृतं यज्ञमेवामृतमात्मन् धत्ते’ इति ॥ अपां यज्ञसाधनत्वात् यज्ञत्वम् । जीवनहेतुत्वाच्चामृतत्वम्, तस्मादपोऽभिलक्ष्य ‘सन्मे भूयाः’ इत्युक्ते सति यज्ञरूपम् ᵛअमृतं ᵛस्वस्मिन् धारयति ॥

सर्वाणीति ॥ व्युत्सेचनमन्त्रं व्याचष्टे—‘सर्वाणि वै भूतानि व्रतमुपयन्तमनूप यन्ति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्याहैष वै दर्शपूर्णमासयोरवभृथो यान्येवैनं भूतानि व्रतमुपयन्तमनूपयन्ति तैरेव सहावभृथमवैति’ इति । यो यजमानो यज्ञव्रतमुपैति तम् ᵛअनु देवपित्रादीनि ᵛसर्वाणि ᵛभूतानि व्रत प्रारभन्ते । अतो देवपित्रादिमार्जनप्रतिपादकेनानेन मन्त्रेण तैः सर्वैर्भूतैः सहैवावभृथं प्राप्नोति ॥

६ म४–‘सोदकम्’ नास्ति । ७ तं म४–तस्मिन् ।

विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभि जयति ॥ ५ ॥

[ यजमानेनेति चैतदवभृथो दिशः सप्त च ]

विष्णुमुखा इति विष्णु–मुखाः । वै । देवाः । छन्दोभिरिति छन्दः–भिः । इमान् । लोकान् । अनपजय्यमित्यनप–जय्यम् । अभीति । अजयन् । यत् । विष्णुक्रमानिति विष्णु–क्रमान् । क्रमते । विष्णुः । एव । भूत्वा । यजमानः । छन्दोभिरिति छन्दः–भिः । इमान् । लोकान् । अनपजय्यमित्यनप–जय्यम् । अभीति । जयति । विष्णोः । क्रमः । असि । अभिमातिहेत्यभिमाति–हा । इति । आह । गायत्री । वै । पृथिवी । त्रैष्टुभम् । अन्तरिक्षम् । जागती । द्यौः । आनुष्टुभीरित्यानु–स्तुभीः । दिशः । छन्दोभिरिति छन्दः -भिः । एव । इमान् । लोकान् । यथापूर्वमिति यथा–पूर्वम् । अभीति । जयति ॥ ५ ॥

[ मैसै १४७, कासं ३२५ ]

क्रियाविशेषणम् । "अचो यत्" (पा ३ १ ९७)। "क्षय्यजय्यौ शक्यार्थे" (पा ६ १ ८१) इति अयादेशः । "ययतोश्चातदर्थे" (पा ६ २ १५६) इत्युत्तरपदान्तोदात्तत्वम् । 'विष्णो क्रमोऽसि' इति । चतुर्णां क्रमाणां ग्रहणम् । त्रिष्टुब्जगत्यनुष्टुप्शब्देभ्य उरसादित्वादञ् (पा ४ १ ८६)। [V]आनुष्टुभी' आनुष्टुभ्यः । "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् । 'छन्दोभिरेव' इत्यादि । गायत्र्यादयः पृथिव्यादीनां कारणानि, कारणेन च कार्यजयः सुकर इति भावः । 'यथापूर्वम्' इति । अनपजय्यमित्यर्थः, अनुक्रमेण वा ॥

इति सप्तमे पञ्चमोऽनुवाकः ॥

विष्णुमुखा इति ॥ विष्णुक्रमान् विधत्ते–'विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति' इति ॥ [V]देवाः पूर्वं खलु विष्णुमेव मुख्यं कृत्वा छन्दोभिमानिदेवैः सहिता अन्यैर्जेतुं यथा न शक्येत तथा [V]इमान् [V]लोकान् अजयन् । [८–]अतो यजमानो [V]विष्णुक्रमान् [V]क्रमते इति [V]यत् [V]विष्णुः [V]एव [V]भूत्वा [V]इमान् [V]लोकान् [V]अभि [V]जयति[–८] ॥

विष्णोरिति ॥ तत्रत्यान् मन्त्रान् व्याचष्टे– 'विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभि जयति' इति ॥ गायत्र्यादिच्छन्दोदेवानां पृथिव्यादिलोकस्वामित्वेन तैः सह लोकानां जेतुं शक्यतया मन्त्रेषु 'गायत्रेण छन्दसा' इत्यादि पठितमित्यभिप्रायः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

८–८ क त.ति मै४–अतो यजमानोऽपि विष्णुक्रमैः तथा जयति, इ–अतो यजमानो विष्णुक्रमतया जयते, पा–अतो यजमानो विष्णुक्रमतया जयति, उ–' अतो ..अभिजयति ' नास्ति ।

अगन्म सुवः सुवरगन्मेत्याह सुवर्गमेव लोकमेति संदृशस्ते मा छिस्सि यत्ते तपस्तस्मै ते माऽऽवृक्षीत्याह यथायजुरेवैतत् सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहीत्याहाऽऽशिषमेवैतामा शास्ते प्र वा एषोऽस्माल्लोकाच्च्यवते यो (१) विष्णुक्रमान् क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते

अगन्म । सुवः । सुवः । अगन्म । इति । आह । सुवर्गमिति सुवः–गम् । एव । लोकम् । एति । संदृश इति सम्–दृशः । ते । मा । छिस्सि । यत् । ते । तपः । तस्मै । ते । मा । एति । वृक्षि । इति । आह । यथायजुरिति यथा-यजुः । एव । एतत् । सुभूरिति सु–भूः । असि । श्रेष्ठः । रश्मीनाम् । आयुर्धा इत्यायुः–धाः । असि । आयुः । मे । धेहि । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । प्रेति । वै । एषः । अस्मात् । लोकात् । च्यवते । यः (१) । विष्णुक्रमानिति विष्णु–क्रमान् । क्रमते । सुवर्गायेति सुवः–गाय । हि । लोकाय । विष्णुक्रमा इति विष्णु–क्रमाः । क्रम्यन्ते ।

‘अगन्म सुवः’ इत्याहवनीयोपस्थानम् ॥ ‘यथायजु’ इति । यथा यजुर्वदति तथैवैतत् सपद्यते । देवसदर्शनादनुध्यानलक्षणादविच्छेदन, [1]तपसश्च देवपरिचरणलक्षणात[1] अविच्छेदनमिति ॥

‘सुभूः’ इत्यादित्योपस्थानम् ॥ आशिषम “आयुर्मे धेहि वर्चो मयि धेहि” (तैस १ ६ ६) इति एताम आ शास्ते । अनेन मन्त्रेण लभते च यथाऽऽशासनमिति भाव ॥

‘प्र वा एष’ इत्यादि ॥ हेतुमाह—‘सुवर्गाय’ इति । उक्तमुपस्थानान्तं विष्णुक्रमाणां क्रमणम् । तत्रैवार्य विशेष उच्यते—ब्रह्म वदितुं शील येषां ते आहु । स विष्णु

आप्यायनादिमन्त्राः पञ्चमे व्याख्याताः । उपस्थानादिमन्त्राः षष्ठे व्याख्यायन्ते—

अगन्मेति ॥ तत्राऽऽहवनीयोपस्थानमन्त्रस्य पूर्वभाग व्याचष्टे—‘अगन्म सुवः सुवरगन्मेत्याह सुवर्गमेव लोकमेति’ इति ॥ द्विरुक्त्याऽऽदरस्य प्रतीते सर्वथा प्राप्नोत्येव ॥

संदृश इति ॥ उत्तरभाग व्याचष्टे—‘संदृशस्ते मा छिस्सि यत्ते तपस्तस्मै ते माऽऽवृक्षीत्याह यथायजुरेवैतत्’ इति ॥ अस्मिन् यजुषि तपःशब्ददर्शनात् तपसश्च विच्छिन्नो मा भूवमिति यत् प्रतीयते एतद्यजुरनतिक्रम्य तथैव प्रार्थ्यते ॥

सुभूरिति ॥ आदित्योपस्थानमन्त्रं व्याचष्टे—‘सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहीत्याहाऽऽशिषमेवैतामा शास्ते’ इति ॥ ‘आयुर्मे धेहि’ इत्यनेनाशीः प्रतीयते ॥

प्रेति ॥ ‘इदमहम्’ इत्यादिकं वैरिनि सारणमन्त्र व्याख्यातुं प्रस्तौति—‘प्र वा एषोऽस्माल्लोकाच्च्यवते यो विष्णुक्रमान् क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान् क्रमेत य इमाँल्लोकान् भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहेदिति’ इति ॥ विष्णुक्रमाणां

१–१ तं–तपश्च देवपरिचरणात्, ति–तपश्च देवपरिचरणम् ।

ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान् क्रमेत य इमाँल्लोकान् भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहेदित्येष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान् भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहति सं (२) ज्योतिषाऽभूवमित्याहास्मिन्नेव लोके प्रति तिष्ठत्यै-

ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । सः । तु । वै । विष्णुक्रमानिति विष्णु–क्रमान् । क्रमेत । यः । इमान् । लोकान् । भ्रातृव्यस्य । संविद्येति सम्–विद्य । पुनः । इमम् । लोकम् । प्रत्यवरोहेदिति प्रति–अवरोहेत् । इति । एषः । वै । अस्य । लोकस्य । प्रत्यवरोह इति प्रति–अवरोहः । यत् । आह । इदम् । अहम् । अमुम् । भ्रातृव्यम् । आभ्यः । दिग्भ्य इति दिक्–भ्यः । अस्यै । दिवः । इति । इमान् । एव । लोकान् । भ्रातृव्यस्य । संविद्येति सम्–विद्य । पुनः । इमम् । लोकम् । प्रत्यवरोहतीति प्रति–अवरोहति । समिति (२) । ज्योतिषा । अभूवम् । इति । आह । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति ।

क्रमान् क्रमितुमर्हति [v]य [v]इमान् [v]लोकान् पृथिवीप्रभृतीन् भ्रातृव्येण निजसुकृतैरर्जितान् [v]संविद्य लब्ध्वा आत्मसात्कृत्य तत्र तत्रारुह्य [v]पुनः [v]इमं मनुष्यलोकं [v]प्रत्यवरोहेत् [v]इति ।

'एष वै' इत्यादि । 'इदमहम्' इत्यस्य मन्त्रस्य वचनं भ्रातृव्यलोकानां संवेदनस्य पुनरिह प्रत्यवरोहस्य च साधनमित्यर्थः । [v]आभ्यः [v]दिग्भ्यः [v]अस्यै [v]दिवः इति द्वयोरुपादानेन सर्वान् [2] भ्रातृव्यस्य लोकानुपलक्षयन् [2] तेषां भूयस्त्वं गमयति । हस्ताग्रेण निदर्शयन्निदंशब्दं प्रयुङ्क्ते ॥

'सं ज्योतिषा' इत्यात्माभिदर्शनम् ॥ 'प्रति तिष्ठति' इति । प्रतिष्ठयाभिदीप्त्या सगच्छते ॥

स्वर्गार्थत्वाद्विष्णुक्रमैः [v]अस्मात् [v]लोकात् प्रच्युतिर्भवति । तस्याः प्रच्युतेः परिहारोपायं [v]ब्रह्मवादिनः परस्परमेवाहुः––[v]यः यजमानः वैरिणः [v]इमान् [v]लोकान् तेन संपादितान् वैरिनिःसारणेन लब्ध्वा विष्णुक्रमैः स्वर्गारोहणादूर्ध्वं [v]पुनः [v]इमं मनुष्यलोकं [v]प्रत्यवरोहेत् स एव यजमानो विष्णुक्रमेषु चतुरः [v]इति ॥

एष इति ॥ मन्त्रं व्याचष्टे––' एष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान् भ्रातृव्यस्य संविद्य पुनरिमं लोकं प्रत्यवरोहति ' इति ॥ 'इदमहम्' इत्यादिमन्त्रम् [v]आह इति [v]यत् [v]एष एव पाठः [v]अस्य भूलोकस्य संबन्धी [v]प्रत्यवरोहः ॥

समिति ॥ आत्माभिमर्शनमन्त्रं व्याचष्टे––' सं ज्योतिषाऽभूवमित्याहास्मिन्नेव लोके प्रति तिष्ठति ' इति ॥ एतल्लोकप्रापकेण [v]ज्योतिषा संगतोऽहमित्येवं मन्त्रे प्रतीयमानत्वात् ॥

२–२. तं ति–भ्रातृव्यलोकानुपलक्षयते ।

१ इ उ पा–लब्धान् ।

न्द्रीमावृतमन्वावर्त इत्याहासौ वा आदित्य इन्द्रस्तस्यैवाऽऽवृतमनु पर्यावर्तते दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते समहं प्रजया सं मया प्रजेत्याहाऽऽशिषमे(३)वैतामा शास्ते

ऐन्द्रीम् । आवृतमित्या–वृतम् । अन्वावर्त इत्यनु–आवर्ते । इति । आह । असौ । वै । आदित्य । इन्द्रः । तस्य । एव । आवृतमित्या–वृतम् । अन्विति । पर्यावर्तत इति परि–आवर्तते । दक्षिणा । पर्यावर्तत इति परि–आवर्तते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्तत इति परि–आवर्तते । तस्मात् । दक्षिण । अर्धः । आत्मनः । वीर्यावत्तर इति वीर्यावत्–तरः । अथो इति । आदित्यस्य । एव । आवृतमित्या- वृतम् । अन्विति । पर्यावर्तत इति परि–आवर्तते । समिति । अहम् । प्रजयेति प्र–जया । समिति । मया । प्रजेति प्र–जा । इति । आह । आशिषमित्या -शिषम् ( ३ ) । एव । एताम् । एति । शास्ते ।

'ऐन्द्रीमावृतम्' इत्युदक्पर्यावर्तनमन्त्र ॥ 'असौ वै' इत्यादि । ईश्वरत्वात् इन्द्र आदित्य तस्य आवृत पर्यावृत्तिं तेन परं कृत यजमान अनु पर्यावर्तते । लक्षणेऽनो कर्मप्रवचनीयत्वम् ( पा १ ४ ८४ ) । दक्षिणा दक्षिणेन शरीरभागेन प्रदक्षिणमिति यावत् । "दक्षिणादाच्" (पा ५ ३ ३६ ) । 'स्वमेव' इत्यादि । आत्मन शरीरस्य दक्षिण. एकदेशो वीर्यावत्तर इतरस्मात् । छान्दस दीर्घत्वम् । "दक्षिणस्यादिगाख्यायाम्" ( द्र फि ८,९ ) इत्याद्युदात्तत्वम् । अथो अपि च । पुनर्वचन प्रादक्षिण्यफलप्रदर्शनार्थम् ॥

'समहम्' इत्युपस्थानमन्त्र. ॥ 'आशिषम्' इति । "ससाधनां क्रियामुपसर्ग आह" इति ( द्र पाभा ५ २ २८ ) योग्यभूतगमनक्रियोपस्थानात् प्रजया सगसीयेति लाभादेवमुक्तम् ॥

**ऐन्द्रीमिति** ॥ प्रदक्षिणावृत्तिमन्त्रं व्याचष्टे––'ऐन्द्रीमावृतमन्वावर्त इत्याहासौ वा आदित्य इन्द्रस्तस्यैवाऽऽवृतमनु पर्यावर्तते' इति ॥ परमैश्वर्ययोगादादित्यस्येन्द्रत्वम् ॥

**दक्षिणेति** ॥ प्रदक्षिणावृत्तिं विधत्ते––'दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते' इति ॥ दक्षिणा प्रादक्षिण्येन । दक्षिणभागमवस्थाप्य वामभागस्य [2]परिभ्रमणं प्रादक्षिण्यम् । पुरुषस्य दक्षिणभागे सामर्थ्यातिशयसद्भावात् सदेवाऽनुसृत्याऽऽवृत्तिः कृता भवति । यस्माद्दक्षिणभागे वीर्यं श्रुतेरभिप्रेतं तस्मात् [3]लोकेऽपि सर्वेषु व्यापारेषु दक्षिणहस्तस्यैव[4] वीर्यातिशय उपलभ्यते । किं च, आदित्यो मेरुं प्रदक्षिणीकरोति तदप्यत्राऽनुसृत भवति ॥

१ तं–भूयोग्यभूत , ति–योग्यभूतक्रियोपस्थानात् ।

२ आ इ ज पा–परिभ्रामणात्, त ति–परिस्रावणम्, म४–पा भ्रमणम् । ३ आ–लोकेषु । ४ म४–दक्षिणभागस्यैव ।

समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याह यथायजुरेवैतद्वसुमान् यज्ञो वसीयान् भूयासमित्याहाऽऽशिषमेवैतामा शास्ते बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यत आग्निपावमानीभ्यां गार्हपत्यमुप तिष्ठते पुनात्येवाग्निं पुनीत आत्मानं द्वाभ्यां प्रतिष्ठित्या

समिद्ध इति सम्–इद्ध । अग्ने । मे । दीदिहि । समेद्धेति सम्- एद्धा । ते । अग्ने । दीद्यासम् । इति । आह । यथायजुरिति यथा–यजु । एव । एतत् । वसुमानिति वसु–मान् । यज्ञ । वसीयान् । भूयासम् । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । बहु । वै । गार्हपत्यस्येति गार्ह–पत्यस्य । अन्ते । मिश्रम् । इव । चर्यते । आग्निपावमानीभ्यामित्याग्नि–पावमानीभ्याम् । गार्हपत्यमिति गार्ह पत्यम् । उपेति । तिष्ठते । पुनाति । एव । अग्निम् । पुनीते । आत्मानम् । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति स्थित्यै ।

‘ समिद्ध ’ इति समिदाधानम ॥ यथायजुरेवैतद्भवति । ‘ दीद्यासम ’ इति दीप्तिमत्त्वाशासनम् ॥

‘ वसुमान् ’ इत्युपस्थानम् ॥ ‘ आशिषम् ’ इति । ‘ वसीयान् भूयासम ’ इत्यनेन vएताम् vआशिषम् vआ vशास्ते । लभते च यथाऽऽशासनमिति ॥

‘ बहु वै ’ इत्यादि ॥ vगार्हपत्यस्य vअन्ते समीपे vमिश्रम् vइव पापशबलमिव vबहु vचर्यते परद्रोहचिन्तादि[४] क्षुद्रजन्तुवधादि च, येन अग्निरप्यपूत स्यात् । तस्मात् vआग्निपावमानीभ्याम ऋग्भ्याम् “ अग्न आयूषि पवसे ” ( तैस १ ३ १४ ) इत्याभ्यां vगार्हपत्यम् vउप vतिष्ठते । vपुनाति vएव vअग्निं vपुनीते चैव vआत्मानम् । कर्त्रभिप्रायत्वादुत्तरत्रात्मनेपदम्* ।

समिति ॥ विपर्ययेणाऽऽवृत्तिमन्त्रं व्याचष्टे— ‘ समहं प्रजया सं मया प्रजेत्याहाऽऽशिषमेवैतामा शास्ते ’ इति ॥ स्वयं यथा प्रजादिना संगच्छते तथा प्रजादिरपि स्वेन संगच्छत इत्येतदुभयं द्वितीया वृत्त्या प्रार्थ्यते ॥

समिद्ध इति ॥ समिदाधानमन्त्रं स्पष्टार्थत्वेन व्याचष्टे— ‘ समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याह यथायजुरेवैतत् ’ इति ॥

वसुमानिति ॥ आहवनीयोपस्थानमन्त्रं व्याचष्टे— ‘ वसुमान् यज्ञो वसीयान् भूयासमित्याहाऽऽशिषमेवैतामा शास्ते ’ इति । vवसीयान् अतिशयेन धनवान् ॥

बह्विति ॥ विधत्ते—‘ बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यत आग्निपावमानीभ्यां गार्हपत्यमुप तिष्ठते पुनात्येवाग्निं पुनीत आत्मानं द्वाभ्यां प्रतिष्ठित्यै’ इति ॥ गार्हपत्योऽजस्रं धार्यः[५] । तथा सति तस्मिन्नग्नौ बहुविधजन्तुपातः[६] सभाव्यते । अतो यजमानेन गार्हपत्यस्य समीपे पापमिश्रमिव होमादि कर्मानुष्ठीयते ।

४ शुद्धीकृतः पाठः । लिखितपुस्तकेषु–‘ ‘चिन्तादिषु ’ । *( द्र पा १ ३ ७२ ) ।

५ आ–एतत्संनिधौ पाठः । ६ आ–‘पातकम् ।

अग्ने गृहपत इत्याह (४) यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो(५) जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति

अग्ने । गृहपत इति गृह–पते । इति । आह (४) । यथायजुरिति यथा–यजु । एव । एतत् । शतम् । हिमा । इति । आह । शतम् । त्वा । हेमन्तान् । इन्धिषीय । इति । वाव । एतत् । आह । पुत्रस्य । नाम । गृह्णाति । अन्नादमित्यन्न–अदम् । एव । एनम् । करोति । ताम् । आशिषमित्या–शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्र । अजात । स्यात् । तेजस्वी । एव । अस्य । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । पुत्र । जायते । ताम् । आशिषमित्या–शिषम् । एति । शासे । अमुष्मै । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः (५) । जात । स्यात् । तेज । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । दधाति ।

*–सतिशिष्टोऽपि विकरणस्वर' लसार्वधातुकस्वरेण बाध्यते इत्याद्युदात्तत्वम्–* । पुनातीत्यत्र तस्य पित्वाद्विकरणस्वर, समानवाक्ये पदात् परत्वाभावादुभयत्रापि निघाताभाव (पा ८ १ १६, १७, १८) । 'द्वाभ्याम्' इति । उपतिष्ठत इत्येव । 'प्रतिष्ठित्यै' इति । द्वित्वान्वयात् पद्भ्यामिव प्रतिष्ठितो भवति । पूर्ववद्गते' प्रकृतिस्वरत्वम् ॥

'अग्ने गृहपते' इत्युपस्थानमेव ॥ 'यथायजुः' इति । सुगृहपतिस्त्वावातिर्ज्योतिष्मदपत्यलाभश्चेत्येतद्यथायजुर्भवत्येव ॥

'शतं हिमाः' इत्यादि ॥ व्याख्यातम् अग्निहोत्राग्न्युपस्थाने "स पश्यामि" (तैसं १ ५ ६) इत्यत्र ॥

ततो "अग्न आयूंषि" (तैसं १ ३ १४) इत्याद्याभ्यामभिपवमानदेवताकाभ्यां शुद्धिहेतुभ्यामृग्भ्याम् अग्न्युपस्थाने वह्नेः स्वस्य च शुद्धिर्भवति ॥

अग्न इति ॥ अन्यमपि गार्हपत्योपस्थानमन्त्रं व्याचष्टे— 'अग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात्तेज एवास्मिन् ब्रह्मवर्चसं दधाति' इति ॥

*–*[अशुद्धमिदमिति प्रतीयते । 'सतिशिष्टोऽपि विकरणस्वरः लसार्वधातुकस्वरं न बाधते इत्यन्तोदात्तत्वम्' इति पाठः संभाव्यते । द्र पाभा ६ १ १५८; वा ९ ] ।

७. ति–तम; म४–अत्र । ८. भा इ उ पा–°देवकाभ्याम् ।

यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा वि मुञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति प्रजापतिना वि मुञ्चति प्रतिष्ठित्या ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रतमेव (६) वि सृजते शान्त्या अप्रदाहाय

य । वै । यज्ञम् । प्रयुज्येति प्र–युज्य । न । विमुञ्चतीति वि–मुञ्चति । अप्रतिष्ठान इत्यप्रति–स्थान । वै । स । भवति । क । त्वा । युनक्ति । स । त्वा । वीति । मुञ्चतु । इति । आह । प्रजापतिरिति प्रजा–पति । वै । क । प्रजापतिनेति प्रजा–पतिना । एव । एनम् । युनक्ति । प्रजापतिनेति प्रजा–पतिना । वीति । मुञ्चति । प्रतिष्ठित्या इति प्रति–स्थित्यै । ईश्वरम् । वै । व्रतम् । अविसृष्टमित्यवि–सृष्टम् । प्रदह इति प्र–दहः । अग्ने । व्रतपत इति व्रत–पते । व्रतम् । अचारिषम् । इति । आह । व्रतम् । एव (६) । वीति । सृजते । शान्त्यै । अप्रदाहायेत्यप्र–दाहाय ।

---

'यो वै यज्ञम्' इत्यादि ॥ गतम् (तैस १ ६ ८) । अप्रतिष्ठान प्रतिष्ठारहित । "नञ्सुभ्याम्" (पा ६ २.१७२) इत्युत्तरपदान्तोदात्तत्वम् । 'कस्त्वा' इति यज्ञविमोक । प्रजापतिनैवैन युनक्ति कस्त्वा युनक्ति स त्वा युनक्त्विति प्रजापतिरेव त्वां योक्तुमर्हति, अत स एव त्वां युनक्त्विति, पूर्वं प्रजापतिनैव योग कारित । एवमत्रापि प्रजापतिनैव विमुञ्चति—क त्वा युनक्ति सः त्वा विमुञ्चतु इति । प्रजापतिर्हि त्वां युनक्ति स्म । अतः स एव त्वां विमुञ्चतु तेन युक्त त्वा कोऽन्यो मोक्तु शक्नोतीति भाव । एव हि क्रियमाणं प्रतिष्ठित्यै भवति, इतरथा अप्रतिष्ठान स्यात्, अन्येन विमोकस्याविमोकतुल्यत्वात् 'अप्रतिष्ठान एव' इति । उक्तः स्वर । "चादिलोपे विभाषा" (पा ८ १ ६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते ॥

'ईश्वरम्' इत्यादि ॥ अविसृष्ट प्रदह प्रकर्षेण दग्धुमीश्वरं शक्तम् । "ईश्वरे तोसुन्कसुनौ" (पा ३ ४ १३) इति कसुन् । 'अग्ने व्रतपते' इति व्रतविमोक ॥

---

तदिदं मन्त्रब्राह्मणं स्पष्टार्थं पूर्वप्रपाठके (तैसं १ ६ ६) व्याख्यातं च । तत्र 'नाम गृह्णाति' इति विधिः । तद्ग्रहणे प्रकारविशेषमाहाऽऽपस्तम्बः—"तन्तव इत्यजातस्यामुष्मा इति जातस्य" (आपश्रौ ४ १६ ३) इति । [९]अजातस्य पुत्रस्य विशेषनामाभावात् तन्तवे इत्येतदेव सामान्यनाम गृह्णीयात् । [१०]जातस्य पुत्रस्य तु अमुष्मा इत्यनेन विशेषनामनिर्देशो विवक्ष्यते ॥

य इति ॥ यज्ञविमोकमन्त्रं व्याचष्टे— 'यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा विमुञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति प्रजापतिना वि मुञ्चति प्रतिष्ठित्यै' इति ॥

---

९ इ उ पा-अजात° । १० इ उ पा.तं.ति म४–जात° ।

परा॒ङ् वाव य॒ज्ञ ए॑ति॒ न नि व॑र्तते॒ पुन॒र्यो वै य॒ज्ञस्य॒ पुनराल॒म्भं वि॒द्वान् यज॑ते॒ तम॒भि नि व॑र्तते य॒ज्ञो ब॑भूव॒ स आ ब॑भूवेत्या॑है॒ष वै य॒ज्ञस्य॒ पुनराल॒म्भस्तेनै॒वैनं॒ पुन॒रा ल॑भ॒तेऽनवरु॒द्धा वा ए॒तस्य॑ वि॒राड्य आहि॑ताग्नि॒ः सन्न॑स॒भः प॒शव॒ः खलु॒ वै ब्रा॑ह्म॒णस्य॑

परा॒ङ् । वाव । य॒ज्ञ । ए॒ति॒ । न । नीति॑ । व॒र्तते॒ । पुन॑ । य । वै । य॒ज्ञस्य॑ । पु॒नरा॒ल॒म्भमिति॑ पुन –आ॒ल॒म्भम् । वि॒द्वान् । यज॑ते । तम् । अ॒भि । नीति॑ । व॒र्तते॒ । य॒ज्ञ । ब॒भू॒व । स । एति॑ । ब॒भू॒व । इति॑ । आ॒ह॒ । ए॒ष । वै । य॒ज्ञस्य॑ । पु॒नरा॒ल॒म्भ इति॑ पुन –आ॒ल॒म्भ । तेन॑ । ए॒व । ए॒न॒म् । पुन॑ । एति॑ । ल॒भ॒ते॒ । अन॑वरु॒द्धेत्यन॑व–रु॒द्धा । वै । ए॒तस्य॑ । वि॒राडिति॑ वि–राट् । य । आहि॑ताग्नि॒रित्याहि॑त–अ॒ग्नि॒ । सन् । अ॒स॒भ । प॒शव॑ । खलु॑ । वै । ब्रा॒ह्मणस्य॑ ।

---

'पराङ्' इत्यादि ॥ युक्तमुक्तो गौरिव पराचीनगतिरेव यज्ञो मुक्तो गच्छति न पुन र्निवर्तते । किं सर्वत्र? नेत्याह—Vय Vयज्ञस्य Vपुनरालम्भ Vविद्वान् Vयजते Vतम् Vअभि तदाभिमुख्येन Vनि Vवर्तते एव । 'यज्ञो बभूव' इत्यादि यज्ञस्य पुनरालम्भ ॥

'अनवरुद्धा' इति ॥ Vविराट् अन्नम् Vअसभ, अपशु स्यात् । "नञ्सुभ्याम्" (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तत्वम् । 'पशव खलु' इत्यादि । द्विपादश्चतुष्पादश्च

---

ईश्वरमिति ॥ व्रतविसर्जनमन्त्रं व्याचष्टे—'ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रतमेव वि सृजते शान्त्या अप्रदाहाय' इति ॥ यत् Vव्रतं गृहीतं सत्र विसृष्टं तद्व्रतं Vप्रदहः यजमानं प्रदग्धुम् Vईश्वरं समर्थम् । "अग्ने व्रतपते" (तैसं १ ६ ६) इत्यादिमन्त्रपाठ एव व्रतविसर्गः । तेन [11]शान्तं सत् तं न दहति ॥

पराङिति ॥ पुनरालम्भमन्त्रं व्याख्यातुं प्रस्तौति—'पराङ् वाव यज्ञ एति न नि वर्तते पुनर्यो वै यज्ञस्य पुनरालम्भं विद्वान् यजते तमभि नि वर्तते' इति ॥ Vपराङ् Vवाव विमुख एव पुनः Vन Vनि Vवर्तते, पुनरालम्भमन्त्रवादिने यजमानं प्रति तु पुनः Vनि Vवर्तते, पुनरप्यसावनुतिष्ठतीत्यर्थः ॥

यज्ञ इति ॥ मन्त्रं व्याचष्टे—'यज्ञो बभूव स आ बभूवेत्याहैष वै यज्ञस्य पुनरालम्भस्तेनैवैनं पुनरा लभते' इति ॥ Vएषः Vवै मन्त्रपाठ एव ॥

अवरुद्धा इति ॥ गोमतीमन्त्रं विधातुं प्रस्तौति—'अनवरुद्धा वा एतस्य विराड्य आहिताग्निः सन्नसभः पशवः खलु वै ब्राह्मणस्य सभा' इति ॥ Vयः यजमानः Vआहिताग्निः अपि सन्[12] सभारहितो

---

११ आ क–प्रीतम् । १२ ति–'सन्' नास्ति ।

[ उपस्थानादिमन्त्राः

सुभेष्ट्वा प्राङुत्क्रम्यं ब्रूयाद्गोमाँ२ अग्नेऽविमाँ२ अश्वी युज्ञ इत्युर्व सुभाँ२ रुन्द्धे प्र सहस्रं पशूनाप्नोत्याऽस्यं प्रजायां वाजी जायते ॥ ६ ॥

[य समाशिषं गृहपत इत्याहामुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्यं पुत्रो व्रतमेव खलु वै चतुर्विंशतिश्च]

सुभा । इष्ट्वा । प्राङ् । उत्क्रम्येत्युत्-क्रम्यं । ब्रूयात् । गोमानिति गो-मान् । अग्ने । अविमानित्यवि-मान् । अश्वी । यज्ञ । इति । अवेति । सुभाम् । रुन्द्धे । प्रेति । सहस्रम् । पशून् । आप्नोति । एति । अस्य । प्रजायामिति प्र-जायाम् । वाजी । जायते ॥ ६ ॥

[ मैसं १ ४ ७; कासं ३२ ५ ]

~~~~~~~~~~~~~~~~~~~~~~

तस्मात् [V]इष्ट्वा [V]प्राङ् [V]उत्क्रम्य उदेत्य "गोमाँ२ अग्ने" ( तैस १ ६ ६ ) इत्यादिकां गोमतीमृचं [V]ब्रूयात् जपेत्, [V]अव [V]रुन्द्धे च [V]सभाम्। [V]प्राप्नोति च [V]सहस्र [V]पशून्। [V]आ [V]जायते [V]वाजी [V]अस्य प्रजासु। वाजी अन्नवान् पुरुषः। पूर्ववत प्रथमा तिङ्विभक्तिर्न निहन्यते। "बर्हिषोऽह" ( तैस १ ७ ४ ) इत्यनुवाकान्ते तु "प्र सहस्र पशूनाप्नोति" ( तैसं १ ७ ४ ) इत्येकैव तिङ्विभक्ति, 'आ जायते' इत्यस्या वेदितृविषयत्वात्। तस्माच्चलोपाभावादुभयमपि तत्र निहन्यते ॥

इति सप्तमे षष्ठोऽनुवाक ॥

---

भवेत् [V]एतस्य यजमानस्य [V]विराट् विशेषेण राजमाना स्वोचितसभा कदाचिदपि [V]अनवरुद्धा अस्वाधीना भवति। यागकाले सभाधीनस्य लोकव्यवहारकालेऽपि सभा न संभवेदित्यर्थः। नात्र राज्ञ इवामात्यसेव भटरूपा सभा ब्राह्मणस्योचिता। किं तर्हि? यज्ञनिष्पादका द्विपादश्चतुष्पादश्च [V]पशवः अस्य सभा ॥

इष्ट्वेति ॥ मन्त्रं विधत्ते—'इष्ट्वा प्राङुत्क्रम्य ब्रूयाद्गोमाँ२ अग्नेऽविमाँ२ अश्वी यज्ञ इत्यव सभाँ२ रुन्द्धे प्र सहस्रं पशूनाप्नोत्याऽस्य प्रजायां वाजी जायते' इति ॥ "भूमनिन्दाप्रशंसासु" ( द्र पाभा ५ २ ९४ ) इति वैयाकरणैरुक्तत्वात् [V]गोमान् इत्यादिको मतुप्प्रत्ययो बाहुल्यवाची। अतः सहस्रप्राप्तिर्युक्ता। 'इडावान्, प्रजावान्' ( द्र तैसं १ ६ ६ ) इति मन्त्रे अभिधानादस्य प्रजायामन्नवतः पुत्रस्योत्पत्तिर्युक्ता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥
~~~~~~~~~~~~~~~~~~~~~~

इत्थं षट्स्वनुवाकेषु वार्शिकयाजमानब्राह्मणशेषो वर्णितः । अथ 'देव सवितः प्र सुव' इत्यादिषु षट्सु वाजपेयविषया आध्वर्यवमन्त्रा उच्यन्ते । तत्रास्मिन् सप्तमेऽनुवाके रथविषया मन्त्रा कथ्यन्ते [1]एतेषां वाजपेयमन्त्राणां व्याख्यानं ब्राह्मणग्रन्थे प्रथमकाण्डे तृतीयप्रपाठके द्वितीयमारभ्य नवमान्तेष्वष्टस्वनुवाकेष्वाम्नातम् । तत्र वाजपेयविधिर्ग्रहविधिः पशुविधिश्चाऽऽद्येषु त्रिष्वनुवाकेषु क्रमेणाऽऽम्नाताः । अनयोर्वाजपेयविषययोर्मन्त्रब्राह्मणयोरत्यन्तविप्रकृष्टदेशवर्तित्वेन बुद्धिसांनिध्याभावात् श्रोतॄणां प्रतिपत्ति सौकर्याय पूर्वोक्तवार्शिकसौमिककाण्डवद्ब्राह्मणेन सहैव मन्त्रा व्याख्यायन्ते ।

तस्य च ब्राह्मणस्य प्रथमानुवाके वाजपेयं विधातुं प्रस्तौति—"देवा वै यथादर्शं यज्ञानाहरन्त । योऽग्निष्टोमम् । य उक्थ्यम् । योऽतिरात्रम् । ते सहैव सर्वे वाजपेयमपश्यन् । ते । अन्योऽन्यस्मै नातिष्ठन्त । अहमनेन यजा इति । तेऽब्रुवन् । आजिमस्य धावामेति । तस्मिन्नाजिमधावन् । तं बृहस्पतिरुदजयत् । तेनायजत । स स्वाराज्यमगच्छत् । तमिन्द्रोऽब्रवीत् । मामनेन याजयेति । तेनेन्द्रमयाजयत् । सोऽग्रं देवताना पर्यैत् । अगच्छत् स्वाराज्यम् । अतिष्ठन्तास्मै ज्यैष्ठ्याय" (तैब्रा १ ३ २) इति । देवानां मध्ये कश्चिदग्निष्टोमं ददर्श । अन्य उक्थ्यमपरोऽतिरात्रम् । ते च स्वस्वदर्शनमनतिक्रम्य तान् यज्ञानाहरन्ता नुष्ठितवन्तः । ते देवाः सर्वे सहैव वाजपेयं [2]दृष्ट्वा अहमेव प्रथममनेन वाजपेयेन यजा इत्येवं विवदमानाः परस्परं प्रथमानुष्ठातृत्वलक्षणाय ज्यैष्ठ्याय नातिष्ठन्त । ज्यैष्ठ्यं नाङ्गीचक्रुः । तत एवं समयं चक्रुरस्माकं मध्ये आजिं धावनेन यः कश्चिज्जयति स एव ज्येष्ठोऽस्त्विति । आजिर्धावनप्रदेशस्यावधिः भूविशेषः[3] । एवं समयं कृत्वा तस्मिन् वाजपेयविषये विजयायाऽऽजिमधावन् । तत्र तं वाजपेयं प्रति धावन् बृहस्पतिरुत्कर्षेणाजयत् । इतरेभ्यः प्रथममवधिं पस्पर्श । ततः प्रथमं स एव तेन वाजपेयेनेष्ट्वा स्वाराज्यमपारतन्त्र्यरूपं माहाराज्यमगच्छत । तत इन्द्रस्तं बृहस्पतिं सम्प्रार्थ्य तेन वाजपेयेनेष्ट्वा [4]देवतानां मध्ये ज्येष्ठत्वमपारतन्त्र्येण स्वर्गाधिपत्यलक्षणं स्वाराज्यं चागच्छत् । अस्येन्द्रस्य ज्यैष्ठ्यमितरे सर्वे देवा मात्सर्यं परित्यज्याङ्गीचक्रुः ॥ स्वाराज्यादिकामिनो वाजपेयं विधत्ते—"य एवं विद्वान् वाजपेयेन यजते । गच्छति स्वाराज्यम् । अग्रं समानानां पर्येति । तिष्ठन्तेऽस्मै ज्यैष्ठ्याय" (तैब्रा १ ३ २) इति ॥ [5]अधिकारिविशेषमुन्नयति—"स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः" (तैब्रा १ ३ २) इति ॥ स बृहस्पतिनाऽनुष्ठितः । एष इन्द्रेणानुष्ठितः । देवानां मध्ये बृहस्पतिर्ब्राह्मणजात्यभिमानी । इन्द्रः क्षत्रियजात्यभिमानी, ताभ्यामेवानुष्ठितत्वात् मनुष्येष्वपि ब्राह्मणराजन्ययोरेवात्राधिकारो न तु वैश्यस्य । अत एवाऽऽपस्तम्ब आह—"शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो [6]वर्द्धिकामः" (आपश्रौ १८ १ १) इति ॥ नामनिर्वचनं दर्शयति—"तं वा एतं वाजपेय इत्याहुः । वाजाप्यो वा एषः । वाजं ह्येतेन देवा ऐप्सन्" (तैब्रा १ ३ २) इति । वाजो देवान्नरूपः सोमः पेयो यस्मिन् यागे स वाजपेय इत्येकं निर्वचनम् । यस्मादेतेन यज्ञेन[7] देवा वाजं फलरूपमन्नमाप्तुमैच्छंस्तस्मादन्नरूपो वाजः पेयः प्राप्यो येन स वाजपेय इत्यपरं निर्वचनम् ॥ सोमस्य [8]एतद्यागसाधनत्वात्तदभेदेन यागं तद्वेदनं च स्तौति—"सोमो वै वाजपेयः । यो वै सोमं वाजपेयं वेद । वाज्येवैनं पीत्वा भवति । आऽस्य वाजी जायते" (तैब्रा १ ३ २) इति । एनं वाजपेयगतं सोमम् ॥ फलभूतान्नाभेदोपचारेण स्तौति—"अन्नं वै वाजपेयः । य एवं वेद । अत्त्यन्नम् । आऽस्यान्नादो जायते" (तैब्रा १ ३ २) इति ॥ यागप्रतिपादकवेदाभेदोपचारेण स्तौति—"ब्रह्म वै वाजपेयः । य एवं वेद । अत्ति ब्रह्मणाऽन्नम् । आऽस्य ब्रह्मा जायते" (तैब्रा १ ३ २) इति । ब्रह्मणा [9]वेदाध्यापनसमार्जितया गुरुदक्षिणयेत्यर्थः । ब्रह्मा वेदाध्यापकः ॥ मन्त्रोच्चारणसाधनभूतवागभेदोपचारेण स्तौति—"वाग्वै वाजस्य प्रसवः । य एवं वेद । करोति वाचा

१ आ क–तेषाम् । २ तं ति–इष्ट्वा । ३ क–भूमिविशेषः । ४ आ–देवानाम् ।
५ आ–अधिकारविशेषविधिमुन्नयति, क तं म४–अधिकारिविधिमुन्नयति । ६ क तं ति–ऋद्धिकामः ।
७ तं–ति म४–यागेन । ८ म४–तद्रूपसाधनत्वात् । ९ तं–ति वेदाध्ययन ।

वीर्यम् । ऐनं वाचा गच्छति । अपिवर्ती वाच वदति " ( तैब्रा १ ३ २ ) इति । 'देव सवितः प्र सुव' इत्यादिमन्त्ररूपा वागेव वाजस्य वाजपेयस्य प्रसव उत्पत्तिहेतु । य एतद्वेविता स तया सभायां पाण्डित्य रूपया वाचा वीर्यमतिशयं करोति । सभागतश्च विद्वत्संघः स्तुतिरूपया वाचा युक्त एनमागच्छति बहुधा प्रशसतीत्यर्थः । पुनरपि वाजपेयवाक्यं श्रोष्यामि तदर्थं ज्ञास्याम्यनुष्ठास्यामीत्येतादृशीं पुनरपीत्यपिशब्दोपेतां वाच सर्वदा वदति श्रद्धालुर्भवतीत्यर्थः ॥

एकादशानुवाकगतानामुज्जितिमन्त्राणां पाठ विधातुं प्रस्तौति—

" प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् । स आत्मन् वाजपेयमधत्त । त देवा अब्रुवन् । एष वाव यज्ञः । यद्वाजपेयः । अप्येव नोऽत्रास्त्विति । तेभ्य एता उज्जितीः प्रायच्छत् " ( तैब्रा १ ३ २ ) इति ॥

प्रजापतिरितरेभ्यो देवेभ्योऽग्निष्टोमादीन् यज्ञान विभज्य दत्वा वाजपेय स्वस्मिन्नेव स्थापितवान् । देवाश्च वाजपेय एव मुख्यो यज्ञोऽतोऽस्माकमप्यत्र भागोऽस्त्वित्यब्रुवन्, स च तेभ्य उज्जितिमन्त्रान् प्रायच्छत् ॥

विधत्ते—" ता वा एता उज्जितयो व्याख्यायन्ते । यज्ञस्य सर्वत्वाय । देवतानामनिर्भागाय " ( तैब्रा १ ३ २ ) इति ॥

व्याख्यायन्ते व्याख्यायेरन पठनीया इत्यर्थः । तत्पाठेन यज्ञस्य सर्वत्वमवैकल्यं भवति । देवताश्च भागयुक्ता भवन्ति । तेषु मन्त्रेष्वग्निरश्विनौ विष्णुः सोम इत्येव तत्तद्भागभाजो देवता आम्नाताः । अयं विधिरापस्तम्बेन स्पष्टं दर्शितः—" अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति " ( आपश्रौ १८ ४ १९ ) इति । उज्जितिमन्त्राणां रथधावनकाले पठनीयत्वात् धावनविधिसमीप एवाय विधि रुत्कृष्टव्य ॥

अस्य च विध्युत्कर्षस्य प्रसङ्गेन ब्राह्मणस्थ पुरुषार्थत्वेन क्रतुप्रकरणादुत्कृष्टव्यं कंचित् प्रतिग्रहनिषेधं विधित्सुः प्रस्तौति—" देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन् । यद्ब्रह्मणः शमलमासीत् । सा गाथा नाराशंस्यभवत् । यदन्नस्य । सा सुरा " ( तैब्रा १ ३ २ ) इति ।

ब्रह्मणो वेदस्य शमलं [10]मलिनभागमपाघ्नन्नपनीतवन्त । नराणां राजामात्यादीनामा समन्तात् प्रशसनं नराशसस्तद्विषया [11]गीतिर्नाराशंसी ॥

प्रतिग्रहनिषेध विधत्ते—" तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यम् । यत् प्रतिगृह्णीयात् । शमल प्रतिगृह्णीयात् " ( तैब्रा १ ३ २ ) इति ।

यस्माल्लौकिकमनुष्यविषयगानसुरे मलरूपे तस्मात्तादृशगानपरस्य सुरापानमत्तस्य च धन न प्रतिगृह्णीयात् ॥

प्रकारान्तरेण वाजपेयं प्रशंसति—" सर्वा वा एतस्य वाचोऽवरुद्धाः । यो वाजपेययाजी । या पृथिव्यां याऽग्नौ या रथन्तरे । याऽन्तरिक्षे या वायौ या वामदेव्ये । या दिवि याऽऽदित्ये या बृहति । याऽप्सु यौषधीषु या वनस्पतिषु " ( तैब्रा १ ३ २ ) इति ।

पृथिव्यन्तरिक्षद्युरूपं यल्लोकत्रयं तदभिमानिदेवतात्रयं रथन्तरवामदेव्यबृहद्रूपमुक्तलोकाभिमानि देवताभिर्यत्सामत्रयमबोषधिवनस्पतिरूपं यद्यागोपयुक्तद्रव्यत्रयं तस्य सर्वस्य संबन्धिन्यो या वाचस्ताः सर्वा एतस्य वाजपेययाजिनोऽवरुद्धाः संपन्नाः । तत्र सामसंबन्धिन्यो वाचस्तदाश्रयभूता ऋच एव । " पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा " ( तैस १ ३·६ ) इत्येते यूपप्रोक्षणमन्त्राः पृथिव्यादिविषया वाचः । " अग्न आयूंषि " ( तैसं १·४ २९ ) इत्यादिराग्नेयातिग्राह्यमन्त्रोऽग्निविषया वाक् । " आ वायो भूष " ( तैस १ ४ ४ ) इति ग्रहान्तरमन्त्रो वायुविषया वाक् । " तुरीयाऽऽदित्यसवनं त इन्द्रियम् " इत्यादि ग्रहान्तरमन्त्र आदित्यविषया वाक् । " आप उन्दन्तु " ( तैसं १ २ १ ) इत्यादिरब्विषया वाक् । " ओषधे

१० ति–मलभाग° । ११ आ–क गीर्नारा° ।

त्रायस्वैनम्" (तैसं १ २ १) इत्योषधिविषया वाक्। "सूपस्था देवो वनस्पतिः" (तैसं १ २ २) इत्यादिर्वनस्पतिविषया वाक्। एवं "पृथिवी दीक्षा" (तैसं ३ ७ ७) इत्यादयो बहव उदाहार्याः। तदेव सर्ववागवरोधाद्वाजपेयः प्रशस्तः[१२] ॥

तामिमां प्रशंसामुपसंहरति—"तस्माद्वाजपेययाज्यार्त्विजीनः। सर्वा ह्यस्य वाचोऽवरुद्धाः।" (तैब्रा १ ३ २) इति। आर्त्विजीनो वाजपेय यष्टा प्रशस्तानृत्विजोऽर्हति। वाजपेयेनेष्ट्वा परार्थमार्त्विज्यं चार्हति ॥

इत्थमेकेनानुवाकेन वाजपेयो विहितः। अथान्येनानुवाकेन ग्रहविशेषा विधीयन्ते, तत्रातिग्राह्यान् विधातुं प्रस्तौति—"देवा वै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत। तदतिग्राह्यैरतिगृह्यावारुन्धत। तदतिग्राह्याणामतिग्राह्यत्वम्" (तैब्रा १ ३ ३) इति। अन्यैरैन्द्रवायवादिग्रहैर्यत्फलं न प्राप्नुवन् [१३]तद्दुष्प्रापं फलमतिग्राह्यसञ्ज्ञकैर्ग्रहैरतिशयेन गृहीत्वा स्वाधीनं कृतवन्तः। इतरग्रहानतिक्रम्य दुष्प्रापं फलं गृह्यत एभिरित्यतिग्राह्याः ॥

विधत्ते—"यदतिग्राह्या गृह्यन्ते। यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे। तदेव तैरतिगृह्यावरुन्धे" (तैब्रा १ ३ ३) इति।

प्रकृतिगतानामाग्नेयैन्द्रसौर्याणामतिग्राह्याणां चोदकादेव प्राप्तत्वात्तद्विधिरवभ्रान्तिव्युदासाय सङ्ख्याविशेषं विधत्ते— "पञ्च गृह्यन्ते। पाङ्क्तो यज्ञः। यावानेव यज्ञः। तमाप्त्वाऽवरुन्धे" (तैब्रा १ ३ ३) इति। 'धानाः करम्भः' इत्यादिब्राह्मणोदाहरणेन यज्ञस्य पाङ्क्तत्वमसकृद्दर्शितम् ॥ वक्ष्यमाणैः "इन्द्राय जुष्टं गृह्णामि" (तैब्रा १ ७ १२) इत्येतादृशैरिन्द्रलिङ्कैर्मन्त्रैरेव तद्ग्रहणं विधत्ते—"सर्वे ऐन्द्रा भवन्ति। एकधैव यजमान इन्द्रियं दधाति" (तैब्रा १ ३ ३) इति। सर्वेषामेकदेवताकत्वेनैकविधेन्द्रियधारकत्वम् ॥

ग्रहान्तराणि विधत्ते—

"सप्तदश प्राजापत्या ग्रहा गृह्यन्ते। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" (तैब्रा १ ३ ३) इति। प्रजापतेः सप्तदशत्वं "यो वै सप्तदशम्" (तैस १ ६ ११) इत्यत्रोपपादितम् ॥ वक्ष्यमाणाम् "अपां विष्ठा" (तैस १ ७ १२) इत्यादिकामृचं "कुविदङ्ग" (तैस १ ८ २१) इत्यादिकां च विषयविशेषेण व्यवस्थितां विधत्ते—"एकयर्चा गृह्णाति। एकधैव यजमाने वीर्यं दधाति" (तैब्रा १ ३ ३) इति ॥

तेषु ग्रहेषु द्रव्यद्वयं विधत्ते—"सोमग्रहांश्च सुराग्रहांश्च गृह्णाति। एतद्वै देवानां परममन्नम्। यत्सोमः। एतन्मनुष्याणाम्। यत्सुरा। परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे" (तैब्रा १ ३ ३) इति ॥

मनुष्याणामधमजातीनामिति शेषः शाल्मिमुद्गादिकं परमान्नं यावनालप्रियङ्ग्वादिकमवरम्। यदा परमान्नसंपत्तिस्तदानीमवरान्नसंपत्तिः किमु वक्तव्या। उक्तग्रहप्रकारश्चाऽऽपस्तम्बेन स्पष्टीकृतः— "ऐन्द्रमतिग्राह्यं गृहीत्वोपयामगृहीतोऽसि नृषदं त्वेति पञ्चैन्द्रानतिग्राह्यान् गृह्णाति। तेषां पूर्ववत्कल्पः। षोडशिनं गृहीत्वाऽपां विष्ठा जनयन् कर्वराणि इति सप्तदशप्राजापत्यान् सोमग्रहान्[१४] गृह्णाति। तेषां षोडशिवत् कल्पः। कुविदङ्गेत्यपरस्मिन् खरे प्रतिप्रस्थाता सप्तदशाभिरूपयामैः सुराग्रहान् गृह्णाति" (आपश्रौ १८ २ १-५) इति ॥

द्विविधग्रहविधिमनूद्य प्रशंसति—"सोमग्रहान् गृह्णाति। ब्रह्मणो वा एतत्तेजः। यत्सोमः। ब्रह्मण एव तेजसा तेजो यजमाने दधाति। सुराग्रहान् गृह्णाति। अन्नस्य वा एतच्छमलम्। यत्सुरा। अन्नस्यैव शमलेन शमलं यजमानादपहन्ति" (तैब्रा १ ३ ३) इति ॥

ब्रह्मणो ब्राह्मणस्योचितं तेजः सोमः। अत एव तदभावे व्रात्यत्वमाम्नायते— "यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्यः" (द्र मैस २.५.५; कास १३.५) इति ॥

---

१२ म४-प्रसिद्धः प्रशस्तः। १३ आ क-तदप्राप्यम्, तं ति-दुष्प्रापम्। १४ आ-'सोमग्रहान्' नास्ति।

प्रकारान्तरेण विधिद्वयं प्रशंसति— " सोमग्रहा᳡श्च सुराग्रहा᳡श्च गृह्णाति । पुमान् वै सोमः । स्त्री सुरा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । आत्मानमेव सोमग्रहैः स्पृणोति । जाया᳡ सुराग्रहैः । तस्माद्वाजपेययाज्यमुष्मि᳡ल्लोके स्त्रिय᳡ संभवति । वाजपेयाभिजित᳡ ह्यस्य " ( तैब्रा १ ३ ३ ) इति । स्पृणोति प्रीणयति । तस्माज्जायाभिमानिदेवतायाः सुराग्रहैस्तोषितत्वात् स्वर्गलोके स्वापेक्षितां रम्भादिस्त्रियमनुभवति । तदेतत्सामर्थ्यमस्य युक्तं वाजपेयेन संपादितत्वात् ॥

ग्रहद्वयस्य पूर्वोत्तरकालविशेषं स्थानविशेषं च विधत्ते— " पूर्वे सोमग्रहा गृह्यन्ते । अपरे सुराग्रहाः । पुरोऽक्ष᳡ सोमग्रहान् सादयति । पश्चादक्ष᳡ सुराग्रहान् । पापवस्यसस्य विधृत्यै " ( तैब्रा १ ३ ३ ) इति । पुरोऽक्ष शकटस्याधस्तादक्षस्य पुर[१५] । पापं सुराग्रहरूपं निन्दितं कर्म, वस्यसं वसुमत्तरं सोमग्रहरूपं पुण्यं कर्म । तयोर्विधृत्यै विभागेन धारणाय ॥

व्यतिषङ्गं विधत्ते— " एष वै यजमानः । यत्सोमः । अन्न᳡ सुरा । सोमग्रहा᳡श्च सुराग्रहा᳡श्च व्यतिषजति । अन्नाद्येनैवैनं व्यतिषजति " ( तैब्रा १ ३ ३ ) इति ।

व्यतिषङ्गप्रकार आपस्तम्बेन दर्शितः— " व्यतिषक्तं सोमग्रहैः सुराग्रहान् गृह्णाति । पूर्वोऽध्वर्युर्गृह्णाति । जघन्यः प्रतिप्रस्थाता " ( आपश्रौ १८ २ ७–८ ) इति । व्यतिषक्तं व्यतिषज्य[१६] व्यतिषज्येरयर्थः । अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति प्रतिप्रस्थाता प्रथमं सुराग्रहं गृह्णीयात । ततो द्वितीये द्वितीयं, सोऽयं व्यतिषङ्गः ॥ अध्वर्योरुद्द्रवणस्य विधास्यमानस्य मन्त्रमुत्पाद्य व्याचष्टे— " संपृचः स्थ सं मा भद्रेण पृङ्क्तेत्याह । अन्नं वै भद्रम् । अन्नाद्येनैवैन᳡ स᳡सृजति " ( तैब्रा १ ३ ३ ) इति । हे सोमग्रहाः, यूयं संपृचः स्थ संपर्कयोग्याः स्थ । अतो मां भद्रेण श्रेयसाऽन्नेन संपृङ्क्त संयोजयत ॥

प्रतिप्रस्थातुरुद्द्रवणस्य विधास्यमानस्य[१७] करणभूतं मन्त्रमुत्पादयितुं प्रस्तौति " अन्नस्य वा एतच्छमलम् । यत्सुरा । पाप्मेव खलु वै शमलम् । पाप्मना वा एनमेतच्छमलेन व्यतिषजति । यत्सोमग्रहा᳡श्च सुराग्रहा᳡श्च व्यतिषजति " ( तैब्रा १ ३ ३ ) इति ।

पाप्मेव पापरूपमेव लोकवेदनिषिद्धत्वात् ॥

मन्त्रमुत्पाद्य व्याचष्टे— " विपृचः स्थ वि मा पाप्मना पृङ्क्तेत्याह । पाप्मनैवैन᳡ शमलेन व्यावर्तयति । तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः " ( तैब्रा १ ३ ३ ) इति । हे सुराग्रहाः, यूयं विपृचः स्थ विभागयोग्याः स्थ । अतो मां पाप्मना विपृङ्क्त वियोजयत । तस्मात् पापव्यावृत्तत्वादयं शुद्धो यष्टुं दक्षिणां दातुं च योग्यः ॥

अध्वर्युप्रतिप्रस्थात्रोरुद्द्रवणं विधत्ते— " प्राङुद्द्रवति सोमग्रहैः । अमुमेव तैर्लोकमभिजयति । प्रत्यङ्सुराग्रहैः । इममेव तैर्लोकमभिजयति " ( तैब्रा १ ३ ३ ) इति ।

तदेतदुद्द्रवणमापस्तम्बः स्पष्टीचकार— " संपृचः स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति । विपृचः स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहैः । आहवनीयं न्यङ्क्ते सोमग्रहैरवतिष्ठन्ते ( ते ) मार्जालीयं न्यङ्क्ते सुराग्रहैः " ( आपश्रौ १८ ७ १–२ ) इति ॥

प्रचारं विधत्ते— " प्रतिष्ठन्ति सोमग्रहैः । यावदेव सत्यम् । तेन सूयते " ( तैब्रा १ ३ ३ ) इति ॥

प्रतिष्ठन्ति प्रचरन्ति जुह्वतीत्यर्थः । सत्यमवश्यभावि फलं तद्यावदस्ति तेन सर्वेणायं यजमानः सूयते प्रेर्यते[१८] । कृत्स्नं फलमुद्दिश्य सोमग्रहैर्हुतवान् भवतीत्यर्थः ॥

विधत्ते— " वाजसृद्भ्यः सुराग्रहान् हरन्ति । अनृतेनैव विश᳡ स᳡सृजति " ( तैब्रा १ ३ ३ ) इति । वाजसृतोऽन्नस्यार्जयितारो वैश्याः । तेभ्यः सुराग्रहान्[१९]होमरहितान् दद्युः ॥ सुरायाः शमलत्वेनानृतसदृशत्वाद्विशमधमजातिमनृतेनैव संयोजितवान् भवति ॥

[१५] तै ति–पुरतः । [१६] आ क–' व्यतिषज्य ' नास्ति । [१७] तै ति–' विधास्यमानस्य ' इत्यस्यानन्तरं ' सामस्य ' (?) । [१८] ति–प्रसूयते । [१९] आ.क–सोम° ।

दक्षिणाविशेषं विधत्ते—"हिरण्यपात्रं मधोः पूर्णं ददाति। मधव्योऽसानीति" (तैब्रा १ ३ ३ ) इति।

मधु माक्षिकम्। [20]मध्वादिभोग्यद्रव्ययुक्तो भवानीत्यनेनाभिप्रायेण मधुपूर्णं सुवर्णपात्रं दद्यात्॥

तद्दानस्य कृष्णलसाहित्यं विधत्ते—"एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुस्तेजो दधाति" (तैब्रा १ ३ ३ ) इति।

कृष्णलसाहित्यं चाऽऽपस्तम्बो दर्शयति—"कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति। तानि प्रत्यादाय ब्रह्मणे ददाति। मधुष्ठालं च सौवर्णं शतमानस्य कृतम्" (आपश्रौ १८ ५ ४-५ ) इति॥

ग्रहविधिमनेनानुवाकेन समाप्यानुवाकान्तरेण पशून् विधातुं प्रस्तौति—"ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यः। न षोडशी नातिरात्रः। अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति। पशुभिरिति ब्रूयात्" (तैब्रा १·३·४ ) इति।

यज्ञशब्देनोद्देशत्यागरूपाः प्रयाजादयः प्रत्येकमभिधीयन्ते। तत्समूहरूप एव फलसाधनात्मा कर्मविशेषः क्रतुः। वेदवादिनो मिलित्वा परस्परमेवं विचारयन्ति—यज्ञाश्च क्रतवश्च सर्वेऽपि वाजपेयेऽन्तर्भूता इत्यस्ति प्रसिद्धिः। तत्कथमुपपद्यते? तथा हि—प्रयाजादीनां दीक्षणीयादिद्वारा तत्राऽन्तर्भावेऽप्यग्निष्टोमादीनामनन्तर्भावात्। तेषां ब्रह्मवादिनां मध्ये कश्चिद्बुद्धिमानेवमुत्तरं ब्रूयात्। अग्निष्टोमादिगतैराग्नेयादिसवनीयपशुभिः क्रतवोऽन्तर्भूता इति॥

पशून् विधत्ते—"आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्नेनोक्थ्यम्। ऐन्द्रेण षोडशिनः स्तोत्रम्। सारस्वत्याऽतिरात्रम्। मारुत्या बृहतः स्तोत्रम्। एतावन्तो वै यज्ञक्रतवः। तान् पशुभिरेवावरुन्धे" (तैब्रा १ ३ ४ ) इति।

आग्नेयादयोऽग्निष्टोमादीनां व्यावर्तकाः पशवः। षोडशिनो ग्रहस्य यत् स्तोत्रं तेन स क्रतुरुपलक्ष्यते। सारस्वती मेषी, सा चातिरात्रस्य व्यावृत्तिहेतुः। मारुती वशा, तयाऽनूबन्ध्यया बृहत्सामसंबन्धि स्तोत्रमवरुन्धे, तेन च स्तोत्रेण वाजपेय उपलक्ष्यते। तस्य चासाधारणत्वात्।

तानेतान् पशुविधीन् बौधायन उदाहरति—"आश्विनं गृहीत्वा त्रिवृद्रशनां आदाय यूपमभ्यैति। स्वर्वन्तं यूपमुत्सृज्याथैतान् पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं [21]वशां सप्तदश प्राजापत्यांश्श्यामानेकरूपान् सारस्वतीमन्ततः" (बौश्रौ ११ ३ ) इति। आपस्तम्बस्त्वाग्नेयादीनां चोदकप्राप्तानामनुवादं मत्वा मेषीमारुत्योर्विधिमुदाहरति—"पशुकाले त्रीन् क्रतुपशूनुपाकृत्य मारुतीं वशामुपाकरोति। सारस्वतीं च मेषीम्" (आपश्रौ १८ २ १२ ) इति॥

आत्मादिप्रीतिहेतुत्वेन भूम्यादिलोकजयहेतुत्वेन तेजःप्रभृतिधारणहेतुत्वेन च क्रतुपशून् प्रशंसति "आत्मानमेव स्पृणोत्यग्निष्टोमेन। प्राणापानावुक्थ्येन। वीर्यꣳ षोडशिनः स्तोत्रेण। वाचमतिरात्रेण। प्रजां बृहतः स्तोत्रेण। इममेव लोकमभिजयत्यग्निष्टोमेन। अन्तरिक्षमुक्थ्येन। सुवर्गं लोकꣳ षोडशिनः स्तोत्रेण। देवयानानेव पथ आरोहत्यतिरात्रेण। नाकꣳ रोहति बृहतः स्तोत्रेण। तेज एवाऽऽत्मन् धत्त आग्नेयेन पशुना। ओजो बलमैन्द्राग्नेन। इन्द्रियमैन्द्रेण। वाचꣳ सारस्वत्या। उभावेव देवलोकं च मनुष्यलोकं चाभिजयति मारुत्या वशया" (तैब्रा १ ३ ४ ) इति।

अत्राग्निष्टोमेनेत्यादिशब्दैस्तन्निष्पादका आग्नेयादिपशवो विवक्षिताः पशुविधेः प्रस्तुतत्वात्, 'आग्नेयेन पशुना' इत्यन्तिमपर्यायेऽभिधानाच्च॥

विधत्ते—"सप्तदश प्राजापत्यान् पशूनालभते। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" (तैब्रा १ ३ ४ ) इति।

---

२०.६ उ पा-मध्वादिभोज्याय द्रव्ययुक्तो, आ-मध्वादिभोज्यद्रव्ययुक्तो। [21](बौश्रौसूत्रे-'गोवशाम्' इति।)।

तेषु पशुषु गुणद्वयं वाक्यभेदमङ्गीकृत्य विधत्ते—"श्यामा एकरूपा भवन्ति। एवमिव हि प्रजापतिः समृद्ध्यै" (तैब्रा १ ३ ४) इति।

पशूनामेकरूपत्वं नामैकविधशृङ्गपुच्छादिभिर्युक्तत्वम्। प्रजापतिशब्देनात्रेश्वरस्य हिरण्यगर्भशरीराद्यभिव्यक्तेः प्रागवस्था विवक्ष्यते। सा चावस्था श्यामेव भवति। "तम आसीत् तमसा गूळ्हम्" (ऋसं १०।१२९) इति श्रुतेः। जगद्रूपस्य नानात्वस्यानुत्पत्तेरेकरूपत्वम् "एकमेवाद्वितीयम्" (छाउ ६ २) इति श्रुतेः। पशूनां जगदीश्वरेण साम्ये सति समृद्धिर्भवति॥

प्रकृतिभूतेऽग्नीषोमीये पशौ पर्यग्निकरणादूर्ध्वमविलम्बेनाऽऽलम्भस्य विहितत्वादत्रापि चोदकपरम्परया तत्प्राप्तौ सहसाऽऽलम्भनं निषेधति—"तान् पर्यग्निकृतानुत्सृजति" (तैब्रा १ ३ ४) इति। तदानीं नाऽऽलभेतेत्यर्थः॥

आलम्भस्य व्यवधाने कारणमाह—"मरुतो यज्ञमजिघांसन् प्रजापतेः। तेभ्य एतां मारुतीं वशामालभत। तयैवैनानशमयत्" (तैब्रा १ ३ ४) इति। सप्तदशप्रजापतिरूपो यः प्रजापतेर्यज्ञस्तं यज्ञं मरुतः पर्यग्निकरणादूर्ध्वं हन्तुमुद्यताः। तदानीमुक्तोपद्रवरूपेण प्रजापतिर्मरुद्भ्यो वशामालभत, क्रुद्धान् मरुतस्तया वशया शमितवान्॥

प्राजापत्यानां संज्ञपनकालं विधत्ते—"मारुत्या प्रचर्य। एतान्संज्ञपयेत्। मरुत एव शमयित्वा। एतैः प्रचरति। यज्ञस्याघाताय" (तैब्रा १ ३ ४) इति। प्रचर्य मारुत्या वशाया वपा हुत्वेत्यर्थः॥

सप्तदशानां वपानां सह प्रचारं विदधाति—

"एकधा वपा जुहोति। एकदेवत्या हि। एते। अथो एकधैव यजमाने वीर्यं दधाति" (तैब्रा १ ३ ४) इति॥

विधत्ते—"नैवारेण सप्तदशशरावेणैतर्हि प्रचरति। एतत्पुरोडाशा ह्येते। अथो पशूनामेव छिद्रमपिदधाति" (तैब्रा १ ३ ४) इति।

नीवारैर्निष्पन्नश्चरुर्नैवारः, सप्तदशसंख्याकैः शरावैर्मितः सप्तदशशरावः, तेनैव चरुणैतर्हि प्राजापत्यवपाहोमादूर्ध्वं प्रचरेत्। एष एव चरुः पशुपुरोडाशस्थानीयो येषां प्राजापत्यपशूनां त एतत्पुरोडाशाः। अतः प्रकृतौ यथा वपया प्रचर्य पुरोडाशेन प्रचरति तद्वदत्रापि। किं च वपोत्खेदात् पशूनां यच्छिद्रं कर्मवैकल्यं भवति तदेतेन चरुणाऽपिहितं भवति॥

सारस्वत्या मेष्याऽङ्गप्रचारस्य कालविशेषं विधत्ते—"सारस्वत्योत्तमया प्रचरति। वाग्वै सरस्वती। तस्मात् प्राणानां वागुत्तमा। अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति। प्रजापतिर्हि वाक्" (तैब्रा १ ३ ४)।

सारस्वती यथोत्तमा चरमा भवति तथा प्रचरेत्। सप्तदशपश्वङ्गप्रचारादूर्ध्वं प्रचरेदित्यर्थः। यस्मात् सारस्वत्या उत्तमत्वं तस्माल्लोकेऽपि सरस्वतीरूपा वाक् प्राणानां चक्षुःश्रोत्रादीनां मध्ये उत्तमा, सभामध्ये विद्वदमात्यादे वाग्मिन प्रागल्भ्यदर्शनात्। किं च प्रजापतेः सरस्वतीपतित्वात्तदभेदोपचारेण वाग्रूपत्वे सति सारस्वत्या समापनेन प्रजापतावेव यज्ञः समापितो भवति॥

सारस्वत्या मेष्याः कंचिद्गुणं विधत्ते—"अपन्नदती भवति। तस्मान्मनुष्याः सर्वां वाचं वदन्ति" (तैब्रा १ ३ ४) इति।

अपतितदन्तोपेता मेषी कार्या। लोकेऽप्यपतितदन्ताः पुरुषाः सर्वाण्यक्षराणि यथोक्तस्थानप्रयत्नोपेतान्येवोच्चारयन्ति॥

सर्वेषं ब्राह्मणगतेनानुवाकत्रयेण वाजपेयगता विधयो निरूपिताः। अथ मन्त्रव्याख्यानरूपान् ब्राह्मणानुवाकांस्तत्तन्मन्त्रैः सहैवोदाहरामः।

देव॑ सवितः॒ प्र सु॑व य॒ज्ञं प्र सु॑व य॒ज्ञप॑तिं॒ भगा॑य दि॒व्यो ग॑न्ध॒र्वः ।
के॒त॒पूः केत॑ नः पुनातु वा॒चस्पति॒र्वाच॑म॒द्य स्व॑दाति नः ।

दे॒व । स॒वि॒तरिति । प्रेति॑ । सु॒व । य॒ज्ञम् । प्रेति॑ । सु॒व । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ-प॒ति॒म् । भगा॑य । दि॒व्यः । ग॒न्ध॒र्वः ।
के॒त॒पूरिति॑ केत-पूः । केत॑म् । न॒ः । पु॒ना॒तु॒ । वा॒चः । पतिः॑ । वाच॑म् । अ॒द्य । स्व॒दा॒ति॒ । न॒ः ॥

अथ वाजपेयकाण्डं सौम्यम् । तत्र सावित्रं जुहोति—' देव सवितः ' इति जगत्या ॥ "सावित्रं जुहोति कर्मणः कर्मणः पुरस्तात्" ( तैब्रा १ ३ ५ ) इत्यादि ब्राह्मणम् । हे [V]देव [V]सवितः सर्वस्य प्रसवितः, [V]प्र [V]सुव प्रेरय प्रवर्तय [V]यज्ञं वाजपेयम् उदयादिभिः । [V]यज्ञपतिं यजमानं च प्र सुव [V]भगाय ऐश्वर्याय अनुष्ठानसामर्थ्याय अन्नाय वा । अन्नेन हि यागः समाप्यते । [V]दिव्यः दिवमर्हतीति । "छन्दसि च" ( पा ५ १ ६७ ) इति यः । [V]गन्धर्वः गामुदकं धारयिता वृष्टिद्वारेण यागस्य प्रवर्तयितेति । एवमीदृशः त्वं प्र सुव इति । [V]केतपूः केतस्यान्नस्य ज्ञानस्य वा प्रजाया वा शोधयिता वायुः सोऽस्माकं [V]केतं [V]पुनातु पवमानः [V]वाचः [V]पतिः देवः प्रजापतिः मनो[1] वा । सोऽपि नः [V]अस्माकं [V]वाचम् [V]अद्य अस्मिन् कर्मणि [V]स्वदाति स्वदयतु सुमतिं श्रवणीयां करोतु । लेट्याडागमः ( पा ३ ४ ९४ ) ॥

देव इति ॥ तत्र प्रथममन्त्रस्य विनियोगं बौधायन आह— "दीक्षणीयां निर्वप्स्यन् सावित्रं जुहोति देव सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः स्वाहेति । दीक्षाहुतीर्होष्यन् सावित्रं जुहोति । प्रायणीयां निर्वप्स्यन् सावित्रं जुहोति" ( बौश्रौ ११ २ ) इति ॥ हे [V]सवितः [V]देव प्रेरकान्तर्यामिन्, अस्मदीयं वाजपेययागं प्रवर्तय । [V]यज्ञपतिं यजमानं [V]भगाय अनुष्ठानरूपायैश्वर्याय । दिवि भवो यः [V]गन्धर्वः सवितुरनुग्रहात् केतान् पुनाति प्राणिनां विज्ञानानि शोधयति सोऽस्माकं [V]केतं वाजपेयविज्ञानं [V]पुनातु शोधयतु[21] । [V]वाचः [V]पतिः च सवित्राऽनुज्ञातः [V]अद्य अस्मिन् कर्मणि [V]वाचम् अस्माभिः पठितान् वाजपेयमन्त्रान् [V]स्वदाति स्वदयतु यथावत् पाठयतु ॥

अनेन मन्त्रेण होमं विधत्ते—"सावित्रं जुहोति कर्मणः कर्मणः पुरस्तात्" ( तैब्रा १ ३ ५ ) इति ॥ तदेतद्बौधायनेनैवोदाहृतम् ( बौश्रौ ११ २ ) ॥ तस्य कर्मादौ होममुपपादयति—"कस्तद्वेदेत्याहुः । यद्वाजपेयस्य पूर्वं यदपरमिति । सवितृप्रसूत एव यथापूर्वं कर्माणि करोति" ( तैब्रा १ ३ ५ ) इति । [22]बहुभिश्चोपक्रमाद्यैः प्रत्यक्षविहितैश्चोपेतस्य वाजपेयस्य यदङ्गं पूर्वभावि यच्च पश्चाद्भावि तन्मनुष्यः को वेदेति बुद्धिमन्त आहुः । सावित्रहोमे तु कृते सवित्रा प्रेरित एव सन् क्रममनुलङ्घ्य कृतवान् भवति ॥ [23]-प्रतिकर्म तमेतं-[23] होमं कर्तुमशक्तं प्रति पक्षान्तरं विधत्ते—"सवने सवने जुहोति । आक्रमणमेव तत्सेतुं यजमानः

१ तं-मनसो ।

२१ आ,क-शोधयेत् । २२ आ,क-बहुकर्मैरङ्गैश्चो°; ६ उ पा-बहुकर्मैश्चो° । २३-२३ ति-तमेव ।

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात् ॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥

इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र—घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् ॥
वाजस्य । नु । प्रसव इति प्र—सवे । मातरम् । महीम् । अदितिम् । नाम । वचसा । करामहे ।
यस्याम् । इदम् । विश्वम् । भुवनम् । आविवेशेत्या—विवेश ।
तस्याम् । नः । देवः । सविता । धर्म । साविषत् ॥

रथमुपावहरति—' इन्द्रस्य ' इति यजुषा ॥ [V]इन्द्रस्य य [V]वज्र स एव त्वम् [V]असि । अमित्रवधसाधनत्वसामर्थ्यात् तद्भाव उपचर्यते । यद्वा—वजित्वा गतो (?) [ वज गतौ ] । वज्र । औणादिको रः ( उ १९६ ) । रथ उच्यते । इन्द्रस्य रथोऽसि ( इति ) स्तूयते । इन्द्रस्य रथो विशेष्यते—[V]वार्त्रघ्न वृत्रघ्नोऽयं वार्त्रघ्नः । उरसादित्वादञ् ( पा ४ १ ८६ ) । य रथमारुह्य वृत्रमसुरमिन्द्रो हतवान् स एव रथस्त्वमसीति । तस्मात् [V]त्वया [V]अय यजमान [V]वृत्र वारक छादयितारममित्रं [V]वध्यात् । ' आशिषि लिङ् ' ( पा ३ ३ १७३ ) । " हनो वध लिङि " ( पा २ ४ ४२ ) इति वधादेशः ॥

अन्तर्वेद्यभ्यावर्तयति—' वाजस्य ' इति जगत्या ॥ [V]वाजस्य अन्नस्य [V]प्रसवे उत्पत्तौ उत्पत्त्यर्थम् । थाथादिनोत्तरपदान्तोदात्तत्वम् ( पा ६ २ १४४ ) । [V]मातरम् अन्नस्य निर्मातारं

कुरुते । सुवर्गस्य लोकस्य समष्ट्यै " ( तैब्रा १ ३ ५ ) इति । [24]उक्तेन त्रयाणां सवनानामादौ होमेन स्वर्गं प्राप्तु सेतुस्थानीयमाक्रमणं कृतवान् भवति ॥ अस्य मन्त्रस्य चतुर्थपादे स्वदनस्यान्नविषयस्य वाग्विषयत्वम् अनुपयुक्तमिति[25] शङ्कां निराकर्तुं व्याचष्टे—" वाचस्पतिर्वाचमद्य स्वदाति न इत्याह । वाग्वै देवानां पुराऽन्नमासीत् । वाचमेवास्मा अन्नं स्वदयति " ( तैब्रा १ ३ ५ ) इति । स्तुत्या वचैस्तु( वाचां तु )स स्वाद्वाचो देवान्नत्वम् ॥

इन्द्रस्येति ॥ कल्पः—" रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति । तमुपसादयति[26] इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यादिति " ( बौश्रौ ११ ६ ) इति ॥ [V]वार्त्रघ्नः वैरिघाती[26] यः अयम् [V]इन्द्रस्य [V]वज्रः हे रथ, स एव त्वम् [V]असि । [V]त्वया सहकारिणा सहितः [V]अयं यजमानः [V]वृत्रं वैरिणं [V]वध्यात् ॥ रथवाहने काष्ठविशेषे स्थापिते गमनाय सज्जीकर्तुं तस्य रथस्य तस्मात् काष्ठादवरोहण विधत्ते—" इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै " ( तैब्रा १ ३ ५ ) इति ॥

वाजस्येति ॥ कल्पः—" अथैनं धूर्गृहीतमन्तर्वेद्यभ्यावर्तयन्ति वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषदिति" ( बौश्रौ ११ ६ ) इति ॥ दक्षिणवेदिश्रोण्यन्ते रथवाहनादवरोपित रथं सौमिकवेदिमध्ये प्रादक्षिण्येनाऽऽनयेदित्यर्थः । [V]वाजस्य [V]नु अन्नस्यैव [V]प्रसवे उत्पत्तिनिमित्तं [V]मातरम् अन्नस्य निर्मात्रीं [V]महीं

२४ तं ति म४—°तेन । २५ तं ति म४—°अयुक्तमिति । [26](बौश्रौसूत्रे—' उपावहरति ' इति ।) ।
२६. ति—वैरिणो घाती ।

[जपेये रथविषयकाः मन्त्राः ]

अप्स्व (१) न्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः ॥

अप्स्वित्यप्-सु (१)। अन्तः। अमृतम्। अप्स्वित्यप्-सु। भेषजम्।
अपाम्। उत। प्रशस्तिष्विति प्र-शस्तिषु। अश्वा। भवथ। वाजिन ॥

[V]महीं पृथिवीम् अदितिं [V]नाम। अदितिरदीनाऽखण्डना वा। एव स्वभाववन्नामधेयां [V]वचसा स्तुत्या [V]करामहे कुर्महे। अदितिस्वभावामेनामन्नप्रसवार्थं स्तुम इत्यर्थ। व्यत्ययेन शप्। किंच— [V]यस्याम् [V]इद [V]विश्व [V]भुवन भूतजातम् [V]आविवेश उपरि सुखेन वर्तते। [V]तस्याम् अस्यां [V]नः अस्माक [V]धर्म धारण रथस्य [V]देव [V]सविता [V]साविषत् अनुजानातु। सुवतेर्लेटि "सिब्ब हुळ लेटि" (पा ३ १ ३४) इति सिब्विकरणस्य लुक्। "इतश्च लोप°" (पा ३ ४ ९७)। गुणे कृते छान्दस दीर्घत्वम। यद्वा—छान्दसो लुङ्। सिचि वृद्धि। ईटोऽपवादोऽडागम (द्र पा ७ ३ ९३-१००)। "°अमाङ्योगेऽपि" (पा ६ ४ ७५) इति धातोरडभाव ॥

अश्वानप्सु स्नापयति—'अप्स्व त' इति पुरउष्णिहा ॥ [V]अप्सु [V]अन्त [V]अमृत वर्तते अमरणत्वम्। [V]अप्सु एव [V]भेषजम् अमृतत्वस्य साधनम्। "ऊडिदम्°" (पा ६ १ १७१) इति सप्तम्या उदात्तत्वम्। पूर्वत्र "उदात्तस्वरितयो°" (पा ८ २ ४) इति संहितायां स्वरितत्वम्। अमृतस्य स्वरः उक्त। तस्माद्या अन्या अपि [V]अपां प्रशस्तय प्रशस्तगुणा तासु सर्वास्वपि हे [V]अश्वा, [V]भवथ तत्सबन्धात् यूयमपि तत्स्वभावा भवथ। हे [V]वाजिन अन्नवन्त। अत्र पादादित्वादश्वा इति न निहन्यते, षाष्ठिकमामन्त्रिताद्युदात्तत्वम्[✻], तस्य च व्यत्ययेन विद्यमानवत्त्वाभाव। यद्वा—न 'अश्वा' इत्यामन्त्रितम्। अपां प्रशस्तिष्वश्वा व्याप्तिमन्तो भवथ हे वाजिन इति। सर्वमिष्टं सिद्धम्। "तादौ च निति°" (पा ६ २ ५०) इति गते प्रकृतिस्वरत्वम्।

वेदिरूपां पृथिवीम् [V]अदितिं [V]नाम अखण्डनीयामेव [V]वचसा स्तुत्या [V]करामहे कुर्मः। [V]यस्यां पृथिव्याम् [V]इदं सर्वं भूतजात प्रविश्यावतिष्ठते [V]तस्यां पृथिव्यां [V]न अस्माक [V]धर्म धारण [V]सविता [V]देवः [V]साविषत् अनुजानातु ॥ अनेन मन्त्रपाठेन भूमिं तदाश्रितं जगच्च स्वाधीनत्वेन सपादयतीत्येवं व्याचष्टे— "वाजस्य नु प्रसवे मातरं महीमित्याह। यच्चैवेयम्। यच्चास्यामधि। तदेवावरुन्धे। अथो तस्मिन्नेवोभयेऽभिषिच्यते" (तैब्रा १ ३ ५) न केवल तयोः स्वाधीनत्व किं त्वेतस्मिन्नुभयस्मिन् भूम्यां तदाश्रितजने च राजत्वेनाभिषिक्तो भवति ॥

अप्स्विति ॥ कल्पः—"[✻]अथाश्वान् पल्पूलयत्यप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिन इति" (बौश्रौ ११ ६) इति ॥ पल्पूलयति [27]जलेनाप्लावयति शरीरं [28]प्रक्षालयतीत्यर्थं।

[✻](द्र पा ६ १ १९८)।

[✻](बौश्रौसूत्रे-'अथाप्स्वश्वान्' इति।)। २७. आ क-जले प्लावयति, म४-जलैः प्लावयति। २८ म४-क्षालय°।

वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविꣳशतिः ।
ते अग्रे अश्वमायुञ्जन् ते अस्मिञ्जवमाऽदधुः ॥

वायु । वा । त्वा । मनु । वा । त्वा । गन्धर्वा । सप्तविꣳशतिरिति सप्त विꣳशति ।
ते । अग्रे । अश्वम् । आयुञ्जन् । ते । अस्मिन् । जवम । एति । अदधु ॥

---

प्रष्टिवाहिन रथ युनक्ति—' वायुर्वा त्वा ' इत्यनुष्टुभा ॥ वाशब्द समुच्चये, विकल्पा सभवात् । प्राणो मनु । तद्वानित्येके । प्रसिद्धा [ सिद्ध ] एवेत्यन्ये । [V]वायु च [V]मनु च [V]गन्धर्वा च । कति पुनस्ते? पञ्चविंशतिरिति ब्रूम । यदाहु —' सप्तविंशतिस्ते ' इति, सर्वे सभूय वायुमनुभ्यां सह सप्तविंशतिसङ्ख्यास्त इत्यर्थ । [V]ते सर्वेऽपि अग्रे प्रथममस्मत्त पूर्वम् [V]अश्व व्याप्नुवन्तम् [V]आयुञ्जन् अयुञ्जत । ततोऽह युनज्मीति । छान्दसे लङि छान्दस आडागम । अटि वा वर्णव्यत्ययेन दीर्घत्वम् । किंच—[V]ते वाय्वादय [V]अस्मिन् त्वयि [V]जव वेग च [V]आ [V]अदधु आदधातु । छान्दसो लिट् । वायुश्च त्वां मनुश्च त्वां गन्धर्वाश्च त्वामिति प्रत्येक योगसबन्ध ख्यापनाय युष्मच्छब्दावृत्ति ॥

---

[V]अप्सु मध्येऽपमृत्युनिवारकं रोगनिवारक च सारं वर्तते । हे [V]वाजिन अश्ववन्त [V]अश्वा, [V]अपां संबन्धिनीषु [V]उत [V]प्रशस्तिषु अमृतत्वभेषजत्वसदृशीष्वन्यास्वपि गुणवत्प्रशसासु यूयं संबद्धा [V]भवथ ॥ विधत्ते—"अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान् पल्पूलयति । अप्सु वा अश्वस्य तृतीय प्रविष्टम् । तदनु येनश्ववप्लवते । यदप्सु पल्पूलयति । यदेवास्याप्सु प्रविष्टम् । तदेवावरुन्धे " ( तैब्रा १ ३ ५ ) इति । स्नपयितु प्रवेशितोऽप्यश्व स्वेच्छया क्रीडन् जलस्योपरि प्लवते । तथैवमुपप्रेक्षते । "अप्सुयोनिर्वा अश्व" ( तैब्रा ३ ८ ४[M] ) इति श्रुते अश्वजन्मकाले गर्भसंबन्धि तृतीयमशजातं जलेऽवस्थित भवति । यथा मनुष्यगर्भे तद्वत् । अत एव हि मनुष्या नवप्रसूताया योषितो गर्भस्थानं समाधातुं बहुभिरौषधैश्चिकित्सा कुर्वन्ति । एष च सत्यश्वमप्यश्वस्तदंशजातमनु वेनन्तु कामयमानो नु प्रायेणावप्लवते[२९] यथा विनष्ट[३०] द्रव्यमन्विच्छन्[३१] पुरुषो जले पुन पुनर्मज्जनुत्तिष्ठति तद्वत् । एवं च सत्यध्वर्यु प्लावयतीति यत्तेनाप्सु प्रविष्टमश्वावयवजातं तत्सर्वं संपादितवान् भवति ॥ प्रकारान्तरेण प्लावनविधिं स्तौति—"बहु वा अश्वोऽमेध्यमुपगच्छति । यदप्सु पल्पूलयति । मेध्यानेवैनान करोति " ( तैब्रा १ ३ ५ ) इति । अश्व खलु पृथिव्यां यत्र काप्यशुचिप्रदेशे विपरिवर्तमानो बहुविधममेध्यमयज्ञार्हमुच्छिष्टादिकमुपगच्छति । अतोऽध्वर्यु प्रक्षालनेनाश्वान यज्ञयोग्यानेव करोति ॥

वायुरिति ॥ कल्प—"अथ दक्षिणं योग्य युनक्ति वायुर्वा त्वा मनुर्वा त्वा गन्धर्वा सप्त विꣳशति । ते अग्रे अश्वमायुञ्जन् ते अस्मिञ्जवमाऽदधुः इति " ( बौश्रौ ११.६ ) इति ॥ योग्य रथे योक्तुमर्हमश्व [V]वायुः च [V]मनुः च पञ्चविंशतिसख्याका [V]गन्धर्वा चेति मिलित्वा सप्तविंशतिसंख्याका ये पुरुषा [V]ते सर्वे [V]अग्रे अस्मत्त पूर्वं रथे सयोजितवन्त । ते पुनः सर्वे पृष्ठसंमार्जनाद्युपचारेण [V]अस्मिन्

---

[M](द्र तैसं २ ३ १२, ५ ३ १२) । २९ तं ति–प्रायेणोपप्लवते । ३० आ क–विनष्ट° ।
३१ तं ति–द्रव्यमन्विष्यन् ।

जपेये रथविषयकाः मन्त्राः ]

**अपां नपादाशुहेमन् य ऊर्मिः ककुद्मान् प्रतूर्तिर्वाजसातमस्तेनायं वाजं सेत् ॥**

अपाम् । नपात् । आशुहेमन्नित्याशु–हेमन् । यः । ऊर्मिः । ककुद्मानिति ककुत्–मान् । प्रतूर्तिरिति प्र–तूर्तिः । वाजसातम इति वाज–सातमः । तेन । अयम् । वाजम् । सेत् ॥

पृष्ठमश्वस्य प्रतिमार्ष्टि—'अपां नपात्' इति ककुदुष्णिहा ॥ द्वितीयस्य द्वादशाक्षरत्वात्, ऊर्मिरिति प्रथमपादान्त । अश्व आमन्त्र्यते—हे अपां नपात्, अपां नप्तश्चतुर्थ । यथा— 'अद्भ्य पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नादश्व' इति । हे आशुहेमन् आशुगन्त । हि गतौ । "अन्येभ्योऽपि दृश्यन्ते" (पा ३ २ ७५) इति मनिन् । "सुबामन्त्रिते°" (पा २ १ २) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६ १ १९८)। तस्य "नामन्त्रिते समानाधिकरणे°" (पा ८ १ ७३) त्यविद्यमानवत्त्वनिषेधात् पर न निहन्यते । ऊर्मि छादयिता अरणशीलो वा यस्तरङ्ग ककुद्मान् प्रधानभूत ककुत्संबन्धी वा प्रतूर्तिः त्वयि प्रतीर्ण त्वामभिगत । नसत्तनिषत्तादौ द्र पा ८ २ ६१) निष्ठायां निपतित निष्ठावद्भावात् क्तिनोऽपि भवति । "तादौ च°" पा ६ २ ५०) इति गते प्रकृतिस्वरत्वम् । वाजसातम अन्नस्य सभक्तृतमः दातृतम । 'जनसनखन°" (पा ३ २ ६७) इति विट् । "विड्वनो°" (पा ६ ४ ४१) इत्यात्वम् । तेन तादृशेन अय वाजम् अन्न सेत् साधय, यजमानस्य हे अश्व । छिङ्लेटोरन्यतर वैकरणस्य लुक् । यद्वा—अय यजमान तेन त्वदीयेन वाजं सेत् साधयतु बध्नातु वा । षिञ् बन्धने ॥

अश्वे वेगं संपादितवन्तः । वायुस्त्वामयोजयत् मनुस्त्वामयोजयत् इति पृथक्वाक्यकरणं तयोर्मुख्यत्वज्ञापनार्थम्[१२], [११]-अतो अहमपि-[११] युनज्मीत्यभिप्रायः ॥ 'अहं युनज्मि' इति पाठ परित्यज्य 'वायुर्वा त्वा' इति पाठस्याभिप्रायमाह— "वायुर्वा त्वा मनुर्वा त्वेत्याह । एता वा एतं देवता अग्रे अश्वमयुञ्जन् । ताभिरेवैनान् युनक्ति । सवस्योजित्यै" (तैब्रा १ ३ ५) इति ॥ योजयितॄणां देवानामनुग्रहाद्यज्ञस्योत्कर्षेण जयो भवति ॥ विधत्ते—"यजुषा युनक्ति व्यावृत्त्यै" (तैब्रा १ ३ ५) इति । अनुष्टुप्छन्दस्त्वात् ऋग्रूपोऽपि 'वायुर्वा त्वा' इति मन्त्रो यजुर्वेदपठितत्वात् यजुरित्युपचर्यते । लौकिके रथे मन्त्रमन्तरेणाश्वयोजनादत्र समन्त्रकत्वेन व्यावृत्तिर्भवति ॥

**अपामिति** ॥ कल्पः—"अथास्य पृष्ठं समृज्यते अपां नपादाशुहेमन् य ऊर्मिः ककुद्मान् प्रतूर्तिर्वाजसातमस्तेनायं वाजं सेत् इति" (बौश्रौ ११ ६) इति ॥ समृज्यते पुनः पुनः संमार्ष्टि ॥ हे अपां नपात्, प्लवनकाले जलस्य कालुष्यानापादनादविनाशयितः आशुहेमन् तीव्रगन्तः, तादृश हे अश्व, जले यः ऊर्मिः ककुद्मान् ककुदिवोन्नतः प्रतूर्तिः निमज्जनेन प्रसक्तस्योपद्रवस्य प्रकर्षेण हिंसकः वाजसातमः सस्योपकारित्वेनातिशयेनान्नप्रदः तेन स्वस्पृष्टलग्नेनोर्मिणाऽस्माकं वाजम् अन्नं सेत् साधय ॥ विधत्ते—

३२ म४–°त्वख्यापनार्थम् । ३३–३३ आ–अहम् ।

विष्णो॑: क्र॒मो॑ऽसि॒ विष्णो॑: क्रा॒न्तम॑सि॒ विष्णो॒र्विक्रा॑न्तमस्य॒ङ्कौ
न्य॒ङ्कावभि॒तो रथ॒ं यौ ध्वा॒न्तं वा॑ता॒ग्रमनु॒ सं॒चर॑न्तौ
दू॒रेहे॑तिरिन्द्रि॒यावा॑न् पत॒त्री ते नो॒ऽग्नय॒: पप्र॑य: पारयन्तु ॥ ७ ॥

[ अ॒प्सु न्य॒ङ्कौ पञ्च॑दश च ]

विष्णो॑ । क्रम॑ । अ॒सि॒ । विष्णो॑ । क्रा॒न्तम् । अ॒सि॒ । विष्णो॑ । विक्रा॑न्त॒मिति॒ वि क्रा॒न्त॒म् । अ॒सि॒ । अ॒ङ्कौ । न्य॒ङ्कावि॒ति॒ नि-अ॒ङ्कौ । अ॒भित॑ । रथ॑म् । यौ । ध्वा॒न्तम् । वा॒ता॒ग्रमिति॒ वात-अ॒ग्रम् । अन्विति॑ । सं॒चर॑न्ता॒विति॒ सम्-चर॑न्तौ । दू॒रेहे॑ति॒रिति॒ दू॒रे-हे॒ति॒ । इ॒न्द्रि॒यावा॒निती॑न्द्रिय-वा॒न् । प॒त॒त्री । ते । न॒ । अ॒ग्नय॑ । पप्र॑य । पा॒र॒यन्तु॒ ॥ ७ ॥

[ मैसं १ ११ १; कासं १३ १४; वास ९ १, ५-७ ]

विष्णुक्रमान् क्रमते, रथ यजमानोऽभ्येति---' विष्णो ' इति ॥ [v]विष्णो भगवत एव [v]क्रम: [v]असि गमनसाधनत्वात् । प्रकृष्टस्य विष्णो क्रमरूपेण स्तूयते रथ विष्णो क्रमवत् भविष्यसि जयहेतुरिति । [v]विष्णो [v]क्रान्तम् [v]असि यत् पूर्वं विष्णुना कृत क्रमण, तदेव त्वमसि तद्वज्जय-साधन भविष्यसि अस्माकम् । [v]विष्णो: [v]विक्रान्त विजय, तदेव त्वम् [v]असि तद्वद्विजय-साधनत्वात् । पूर्ववद्गतिस्वर ॥

रथस्य चक्रे पक्षसी वाऽभिमृशति---' अङ्कौ ' इति त्रिष्टुभा ॥ [v]अङ्कौ लक्षणभूतौ रथस्य । अकि लक्षणे । करणे घञ् । अञ्चतेर्वा । याभ्यां रथोऽञ्चति गच्छति तादृशौ । उञ्छादिर्द्रष्टव्य: ।

" अपां नपादाशुहेमन्निति संमार्ष्टि । मेध्यानेवैनान् करोति । अथो स्तौत्येवैनामाजिं सरिष्यत: " (तैब्रा १ ३ ५) इति । पृष्ठसमार्जनेन शोधितत्वाद्यागयोग्यत्वम् । किं च आवमार्थीया: सप्तदशशरपात-परिमिताया भूमेरवधि: आजिस्तं प्रति सरिष्यन्ति गमिष्यन्ति, तान् गमिष्यतोऽश्वान् पृष्ठसंमार्जनरूपेणोप-लालनेन स्तौत्येव प्रोत्साहयत्येव ॥

विष्णोरिति ॥ कल्प:--" अथ रथमभिप्रैति विष्णो: क्रमोऽसि विष्णो: क्रान्तमसि विष्णो विक्रान्तमसीति " (बौश्रौ ११ ७) इति । तदेतद्यजमानकर्म । तथा चाऽऽपस्तम्ब:---"विष्णो: क्रमोऽसीति रथं यजमानोऽभ्यैति " (आपश्रौ १८ ४ ५) इति ॥ यजमानस्य मम हे प्रथमप्रक्रम, त्वं [v]विष्णो: व्यापनशीलस्य जगदीश्वरस्य त्रिविक्रमावतारस्य [v]क्रम:[34] [v]असि । प्रथमपदप्रक्षेपेण जितो[35] भूलोकोऽसि । हे द्वितीयप्रक्रम, त्वं [v]क्रान्त विष्णोर्द्वितीयपदप्रक्षेपेण जितमन्तरिक्षम् [v]असि । हे तृतीयप्रक्रम, त्वं [v]विक्रान्त विष्णो: पराक्रमेण जितं त्रिविष्टपम् [v]असि ॥ विधत्ते--" विष्णुक्रमान् क्रमते । विष्णुरेव भूत्वेमाँल्लोकानभि-जयति " (तैब्रा १ ३ ५) इति ॥

अङ्काविति ॥ कल्प: --" अथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं याविति " (बौश्रौ ११ ७) इति । पक्षसी पार्श्वौ ॥ पाठस्तु---' अङ्कौ न्यङ्कावभितो रथ यौ ध्वान्तं वाताग्रमनु

३४ इ उ क तं ति पा म४-प्रक्रम: । ३५ तं-मित: ।

पङ्क्तौ नियतगमनौ निश्चितगमनौ वा । क ? अभित रथ रथस्य पार्श्वयो यौ नियतगमनौ । नेरनिधाने " (पा ६ २ १९२) इत्युत्तरपदान्तोदात्तत्वम् । ध्वान्त शब्दित शब्दवत् । चि व्यत्ययेनेडभाव । वाताग्र वातस्य पूर्वभाग अनु संचरन्तौ शीघ्रतया वातमतिलङ्घ्य रन्तौ तावङ्क्तौ । दूरेहेति, इन्द्रियावान्, पतत्री इत्येतन्नामानस्त्रयो नः अस्माक अग्नय प्रय पूरयितार कर्मणाम् । एतावङ्क्तौ पारयन्तु कर्मणि समर्थौ कुर्वन्तु । यद्वा—न स्माक[2] पप्रय अस्मद्विवक्षितार्थं तौ पारयन्तु । प्रा पूरणे । छान्दसस्य लिटि "आदृगमहन" पा ३ २ १७१ ) इति किन्प्रत्यय । 'ते' इति वा लिङ्गव्यत्ययः ताविस्यर्थ । पक्षसी विशेष्येते । अङ्कसाधने ते पक्षसी पारयन्त्विति । पार तीर कर्मसमाप्तौ ॥

इति सप्तमे सप्तमोऽनुवाक ॥

---

चरन्तौ दूरेहेतिरिन्द्रियावान् पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ' इति ॥ रथमभितो यौ अङ्क्तौ लक्षण तौ पार्श्वविशेषौ न्यङ्क्तौ नितरां लक्षणभूतौ चक्रविशेषौ । अत एवाऽऽपस्तम्ब आह—" अङ्क्तौ न्यङ्क्ताविति चक्रे अभिमृशति । पक्षसी वा " (आपश्रौ १८ ४ ६) इति । ध्वान्तं ध्वन्युपेत, वाताग्रं वायोरपि रोदेश शीघ्रतया वायुमप्यतिलङ्घ्यानुक्रमेण सञ्चरन्तौ, ताभ्यामुभाभ्याम् अग्नयः न अस्मान् पारयन्तु यावनावधि पारयन्तु । कीदृशा अग्नयः ? पप्रयः अपेक्षितमर्थं पूरयितारः । येऽग्नयो दूरहेतिः स्यादिनामोपेतास्ते ॥

एतन्मन्त्रगतमग्निपदं रथावस्थितदेवतापरत्वेन व्याचष्टे—" वैश्वदेवो वै रथः । अङ्क्तौ न्यङ्क्ताव-भितो रथ यावित्याह । या एव देवता रथे प्रविष्टाः । ताभ्य एव नमस्करोति । आत्मनोऽनार्त्यै " तैब्रा १ ३ ५ ) इति । दूरेहेतिरित्यादिनामका अग्नयोऽत्र विश्वे देवाः । तद्वाहनरूपोऽयं रथः । पारय-न्त्विति प्रार्थनैव नमस्कारः । तेन नमस्कारेण तदीय रथमारूढस्यापि स्वस्याऽऽर्तिर्न भवति ॥

वेदनं प्रशंसति—" अशमरथंभावुकोऽस्य रथो भवति । य एव वेद " (तैब्रा १ ३ ५) इति । शमयुक्तो रथः शमरथो मन्दगतिः । अशमरथः शीघ्रगतिः[३६] । तच्छीलोऽस्य वेदितू रथो भवति ॥

अत्र विनियोगसंग्रहः—

" देव होमोऽत्र कर्मान्ताविन्द्रस्य रथमाहरेत् ।
वाजस्य नेविमध्ये तमभ्यावर्तयते रथम् ॥ १ ॥
अप्स्वश्वान् प्लावयेद्वायुर्युनक्ति तुरग रथे ।
अपां तदश्वपृष्ठानि मार्ष्टि विष्णो रथ मजेत् ॥
अङ्क्तौ रथे मृशेत् पक्षावष्टौ मन्त्रा इहोदिताः " ॥ २ ॥ इति ॥

अथ मीमांसा ॥ प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः ।
नाम वा गुणता तत्प्रयोगाद्गुणफलद्वये ॥
साधारणयजेः कर्मकरणत्वेन तन्त्रता ।
त्रिकद्वय विरुद्ध स्यात्तन्त्रतायां फल प्रति ॥

---

२ तं अस्मान्

---

३६ आ क-शीघ्रगामी रथः ।

"[३७]उपादेयविधेयत्वगुणत्वाख्यत्रिकं यजेः ।
उद्देश्यानूक्तिमुख्यत्वत्रिकं[३८] तस्य गुणं प्रति ॥
व्यवस्था तन्त्र तवाप्तौ वाक्यं भिद्येत तेन सः ।
वाजपेयेतिशब्दोऽपि[३९] कर्मनामाग्निहोत्रवत् ॥" (जैन्या १ ४ १५-१८)॥

"वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयशब्देन गुणो विधीयते । अन्नवाच[४०] वाजशब्दः । तथाच[४०] पेयं सुराद्रव्यं तथात्र गुणः सुराग्रहाणामनुष्ठेयत्वात् । ननु गुणत्वे वाजपेयद्रव्यवता यागेन स्वाराज्यं भावयेदित्येवं मत्वर्थलक्षणा प्रसज्येत । नैवम् । सकृदुच्चरितस्य यजेतेस्तथात्वस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण संबन्धाङ्गीकारात् । वाजपेयद्रव्येण स्वाराज्याय यजेतेत्येवमुभयसबन्ध । ननु गुणसबन्धे सति वाजपेयेन गुणेन यागं कुर्यादिति यजेः कर्मकारकत्वं भवति । फलसंबन्धे । यागेन स्वाराज्यं सपादयेदिति करणकारकत्वं, ततः कथमुभयसंबन्धः इति चेन्नायं दोषः । यजेः साधारणत्वेन "[४१]द्विरूपत्वसंभवात् । यजेतेत्यत्र प्रकृत्या याग उक्तः, प्रत्ययेन भावमोक्ता । तयोस्तु समभिव्याहारात् संबन्धमात्रं गम्यते । तच्च कर्मत्वकरणत्वयोः साधारणम् । न खलु तत्र कर्मत्वस्यैव करणत्वस्यैव वा साक्षादभिधायिका काचिदसाधारणा विभक्तिः श्रूयते । अतः साधारणस्य यजेरुभाभ्यां गुणफलाभ्यां युगपत्संबन्धे सति यथोचितं संबन्धविशेषः पर्यवस्यति । एवं तन्त्रेण संबन्धाङ्गीकरणे[४२] वाजपेयद्रव्येण यागं कुर्यादित्यस्यार्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नास्ति मत्वर्थलक्षणा । यद्यन्त्रितादिष्वप्येवं गुणविधिः स्यात्तर्हि तान्यपि वाक्यान्यत्रोदाहृत्य तदीयः सिद्धान्तः पुनराक्षिप्यतामिति प्राप्ते ब्रूम —[४३]यजेस्तन्त्रेणोभयसबन्धे सति विरुद्धत्रिकद्वयापत्तिः स्यात् । उपादेयत्वं विधेयत्वं गुणत्वं चेत्येकं त्रिकम्, उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेत्यपरं त्रिकम् । तत्रोद्देश्यत्वादयः स्वाराज्यफलनिष्ठा धर्मा उपादेयत्वादयस्त्वयः साधनभूतयजिनिष्ठाः । फलमुद्दिश्य यजिरुपादीयते, फलमनूद्य यजिर्विधीयते । फलं प्रधानं यजिरुपसर्जनम् । फलस्योद्देश्यत्वं नाम मानसापेक्षाविषयत्वाकारो "[४३]यजेरुपादेयत्वं नामानुष्ठीयमानत्वाकारः"[४३] तावुभौ मनःशरीरोपाधिकौ धर्मौ । अनुवाद्यत्वविधेयत्वधर्मौ तु शब्दोपाधिकौ । ज्ञातस्य कथनमनुवादः । अज्ञातस्यानुष्ठेयत्वकथनं[४४] विधिः । "[४५]फलयागयोः साध्यसाधनरूपतया प्रधानत्वोपसर्जनत्वे । एवं सति फलतत्साधनयोः स्वाराज्ययागयोः स्वभावपर्यालोचनायां फलस्योद्देश्यत्वादित्रिकं यागस्योपादेयत्वादित्रिकं व्यवतिष्ठते । तथा यागस्य वाजपेयद्रव्यस्य च साध्यसाधनभावपर्यालोचनायां यागस्योद्देश्यत्वादित्रिकं द्रव्यस्योपादेयत्वादित्रिकं पर्यवस्यति । ततो यागस्य फलद्रव्याभ्यामुभाभ्यां प्रतियोगिभ्यां युगपत्संबन्धे सति विरुद्धत्रिकद्वयमापद्येत । ननु "[४६]तर्हि मा भूत्तन्त्रेणोभयसंबन्धः, पृथक्संबन्धाय यजिरावर्त्यतामिति चेत् । न । वाक्यभेदप्रसङ्गात् । द्रव्येण यागं कुर्यादित्येकं वाक्यम् । यागेन फलं कुर्यादित्यपरम् । तस्माद्वाजपेयशब्दो न गुणविधायकः, किंतु यथोक्तं द्रव्यं निमित्तीकृत्याग्निहोत्रशब्दवत् कर्मनामधेयम् ॥

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"आहुतीस्तिस्र इत्यत्र कर्मक्यमुत भिन्नता ।
एकत्वं सकृदाख्यानात् संख्यातुरया प्रयाजवत् ॥

---

३७ आ क-उपादानविधे' । ३८ इ उ पा म४-'मुख्यत्वं त्रिकम् । ३९ म४-'शब्दोऽयम् । ४०-४० इ उ क पा-वाजपेयशब्दः तथाह्यम्, म४-वाजशब्दः तथाह्यम् । ४१ इ उ क.पा-द्विरूपसंभवात् । ४२ ति म४-संबन्धाङ्गीकारे । ४३-४३ इ उ क पा-यजेस्तन्त्रेणोभयसंबन्धे सति विरुद्धमुपादेयत्वं नामानुष्ठीयमानत्वाकार । ४४ आ क-'ष्ठेयस्य कथनम् । ४५ ति-फलसाधनयोः । ४६ इ उ-'तर्हि' नास्ति ।

वाजपेये रथविषयका मन्त्राः ]

आख्यातमात्रं नो मानं सख्यया बहुकर्मता ।
आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः ॥
पशून् सप्तदश प्राजापत्यानित्यत्र भाष्यकृत् ।
विचारमाह पूर्वत्र क्रियात्रित्वस्फुटत्वतः ॥
बहुत्वोपेतपशुभिर्देवयोगादभिन्नता ।
रूपस्य तेन कर्मैक्यं सख्या नात्र क्रियागता ॥
देवतासगतस्यैव तद्धिताथस्य पश्चिम ।
बहुत्वसगमोरूपसख्ययाऽत क्रियाभिदा ॥ " ( जैन्या २ २ १७-२१ ) ॥

' तिस्र आहुतीर्जुहोति ' इति श्रूयते । तत्र जुहोतीत्येतदाख्यात ' समिधो यजति ' इत्यादिवन्ना भ्यस्त, किं तु सकृदेवाऽऽम्नातम् । तत एकमिदं कर्म । त्रित्वसख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या । यथा प्रयाजेष्वेकादशत्वसख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता तद्वदिति प्राप्ते ब्रूमः—किमिदमाख्यात पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणम् । उत पदान्तरान्वितम् । नाऽऽद्यः, वाक्यांशस्य पदमात्रस्य प्रमिति जनकत्वाभावात् । द्वितीये त्रित्वसख्यया विशेषितेनाख्यातेन कर्मबहुत्व गम्यते । प्रयाजाना तु पूर्वमेव [४७]पञ्चसख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्व दुःसपादम् । इह त्वेतद्विधित [४८] पूर्वं कर्मण एकत्वसंख्यावरोधो नास्तीति वैषम्यम् । तदेतद्वृत्तिकारोदाहरणं भाष्यकारो नानुमन्यते, कर्मवाचिन आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहुत्वस्य स्फुटतया पूर्वपक्षानुत्थानात् । इदं त्वत्रोदाजहार ' सप्तदश प्राजापत्यान् पशूनालभते ' इति । अत्र प्रजापतिर्देवता येषां पशूनां ते प्राजापत्या इति तद्धितव्युत्पत्तौ बहुत्वोपेताः पशव एकं द्रव्यम् । ततो द्रव्यैक्याद्देवतैक्याच्च यागस्य रूपमभिन्नमित्येकमिद कर्म । या तु सप्तदशेति सख्या सा पशुद्रव्यगता, न तु पूर्वोदाहृतत्रित्वसंख्येव क्रियागता । तस्मान्न कर्मभेदमापादयतीति प्राप्ते ब्रूमः—अत्र प्रजापतिर्देवता यस्य पशोः स प्राजापत्य इति तद्धितान्तं प्रातिपदिक व्युत्पाद्य पश्चात्तद्धितान्तप्रातिपदिकार्थस्य प्रजापतिदेवता विशिष्टपशोः कर्मत्वबहुत्वविवक्षायामुत्पन्ने इमे द्वितीयाविभक्तिबहुवचने । तत्र प्रथमभाविन्या द्वितीया विभक्तेरेव तावत्तद्धितोत्पत्तिवेलायामन्वयो नास्ति, कुतः पश्चाद्भाविनो बहुवचनस्यान्वय ? एव सति प्राजापत्येत्यनेन तद्धितान्तप्रातिपदिकेनैकपशुद्रव्यकमेकदेवतोपेतं यागस्य रूप समर्प्यते । तादृशानां च रूपाणां बहुत्वाय बहुवचनम् । बहुत्वविशेषश्च सप्तदशेति निर्दिश्यते । तस्मादत्र संख्यया कर्मभेदः । एव च सप्तमे वक्ष्यमाणं सप्तदशपशूनामैकादशिनपशुगणविकृतित्वमुपपद्यते ॥

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" उपाकृतानां किं सप्तदशानां यूपबन्धने ।
क्रमो नास्त्यस्ति वा नास्ति नियामकविवर्जनात् ॥
आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि ।
क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्थात्र नियामिका ॥ " ( जैन्या ५ १ १०-११ ) ॥

---

४७. आ.क.–' पञ्च° ' नास्ति । ४८ म४–एतद्विधेः ।

वाजपेये " सप्तदश प्राजापत्यान् पशूनालभते " ( तैब्रा १ ३ ४ ) इति विहितानां पशूनामुपाकरणनियोजनादय संस्कारा कर्तव्या । तत्रैकदेशे पशावुपक्रम एकदेशे च समाप्तिरिति नियमकारिण शास्त्रस्याभावादैच्छिकेन क्रमेणोपाकरणरूप प्रथम संस्कारोऽनुष्ठित । उपाकृतानां यूपे नियोजन संस्कारान्तरं कर्तव्यम् । तदानीमीदृश पशु प्रथम नियोक्तव्य इति क्रमनियमकारिणो श्रुत्यर्थपाठादीनामभावान्नास्ति [49]क्रमनियम इति चेत् । नैवम् । उपाकरणे य क्रम स्वीकृतस्तस्यैव नियोजनादिसंस्कारेषु स्वीकर्तव्यत्वात् । श्रुत्यर्थपाठा इव प्रथमप्रवृत्तिरपि क्रमं [50]नियन्तुमर्हति । प्रवृत्त्या बुद्धिस्थस्य क्रमस्य त्यागकारणाभावात् । प्रावृत्तिकक्रमस्वीकारे प्रथमपशावुपाकरणनियोजनयो प्रथमद्वितीयसंस्कारयोर्मध्ये पश्वन्तरेष्वनुष्ठितै षोडशभिरेवोपाकरणपदार्थैर्व्यवधानं भवति । तच्च व्यवधानं सप्तदशेतिविधिबलादभ्यनुज्ञातम् । प्रावृत्तिकं क्रमं परित्यज्य पश्वन्तराणां पूर्वं नियोजन कृत्वा पश्चात् प्रथमपशोर्यदि नियोजनं क्रियेत तदा द्वात्रिंशद्भि पदार्थैर्व्यवधान [51]स्यात् । तत्तु नाभ्यनुज्ञातम् । तस्मात् प्रवृत्त्या क्रमो नियम्यते ॥

तत्रैव द्वितीयपादे चिन्तितम्—

" वाजपेये किमेकैकपशो सर्वसमापनम् ।
सर्वेषु वैकैकधर्मो आद्य साहित्यसिद्धये ॥
वचनात् पशुसाहित्य प्रयोगोक्त्या तु कल्प्यते ।
धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते ॥ " ( जैन्या ५ २ १–२ ) ॥

वाजपेये सप्तदशसु प्राजापत्येषु पशुष्वेकैकस्मिन् पशावुपाकरणनियोजनादिसंस्कारा सर्वे समापनीया । तथा सति साङ्गं प्रधानं कर्तव्यमिति प्रयोगवचनेनावगतं धर्माणां साहित्य प्रसिध्यति । चोदकोऽपि धर्मसाहित्य प्रापयति । प्रकृतावुपाकरणनियोजनादीनां साहित्यदर्शनात । तस्मादत्र काण्डानुसमयो न तु पदार्थानुसमय इति प्राप्ते ब्रूम —' सप्तदश प्राजापत्यान् पशूनालभते ' इति वचनात् पशुसाहित्यमवगतम्, तच्च प्रबल, प्रत्यक्षेण पशूनित्यनेनैकशब्देन प्रापितत्वात् । धर्मसाहित्य तु न प्रत्यक्षशब्देन प्रापितम्, किं तु प्रयोगवचनेन परिकल्प्यते । [52]यद्येकस्मिन् प्रयोगे धर्मसाहित्य न स्यात्तदा कतिपयधर्मवैकल्येन साङ्गप्रधानानुष्ठानविधिर्नोपपद्येतेत्यर्थापत्तेश्चोदकेनापि विकृतौ धर्मसाहित्यवचनमनुष्ठीयते[53] । तदुभय प्रत्यक्षात् पशुसाहित्यवचनाद्दुर्बलम् । तस्मात् ' वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति ' इत्यनेन प्रत्यक्षवचनेनावगतं पशुसाहित्यमबाधितु [54] सर्वेषु [55]पशुष्वेकैक उपाकरणादिधर्म[55] कर्तव्य इत्येव पदार्थानुसमयोऽभ्युपेतव्यो न तु काण्डानुसमय ) अस्मिन्नपि पक्षे प्रयोगवचनचोदकाभ्यामवगतं धर्मसाहित्य न विरुध्यते । [56]एकस्मिन्नेव प्रयोगे कृत्स्नधर्माणामनुष्ठितत्वात् ॥

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" प्राजापत्यै पशूनां किं बाधो यद्वा समुच्चय ।
अक्रियार्थी पशूक्ति स्याच्छिन्न तेनास्तु बाधनम् ॥

---

४९ इ उ त ति म४–क्रम । ५० तं ति–नियोक्तुमर्हति । ५१ म४–भवति तच्च व्यवधानं सप्तदशेत्यपि स्यात् । ५२ ति–यद्येक°; म४–यद्येक° । ५३ तं ति म४–°मनुमीयते । ५४ त ति–मबाधितम् । ५५–५५ तं ति–पशुष्वेकैकमुपाकरणाभिधानम् । ५६ तं.ति–एकैकस्मिन्नेव ।

पशूनुद्दिश्य [57]-सङ्ख्याया देवस्य-[57] च विधौ भिदा ।
कर्मान्यत्वे ग्रहन्यायात् रोधनाच [58] समुच्चयः ॥" (जैन्या १० ४ ८–९) ॥

वाजपेये श्रूयते—"सप्तदश प्राजापत्यान् पशूनालभते" (तैब्रा १ ३ ४) इति । तैरेतैः प्राकृतपशूनामाग्नेयादीना बाधः स्यात् । कुतः ? पशुत्वलिङ्गात् । न हि पशुशब्दो ग्रहशब्दवदपूर्वां विधेय क्रियां ब्रूते, येन लिङ्गत्व हीयेतेति प्राप्ते ब्रूमः—किमत्र प्राकृतपश्वनुवादेन सप्तदशसङ्ख्या प्रजापतिदेवता चेति गुणद्वय विधीयते, आहोस्वित् विशिष्टमन्यत् कर्म । नाद्यो वाक्यभेदापत्तेः । द्वितीये तु न पशुशब्दो लिङ्गम् । ततोऽत्र ग्रहन्यायो योजनीयः । किं [59]चावरोधनमेवमाम्नायते—"ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यः । न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात् । आग्नेय पशुमालभते । अग्निष्टोममेव तेनावरुन्द्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनः स्तोत्रम् । सारस्वत्याऽतिरात्रम् । मारुत्या बृहतः स्तोत्रम् । एतावन्तो वै यज्ञक्रतवः । तान् पशुभिरेवावरुन्द्धे" (तैब्रा १ ३ ४) इति । अस्मिन्नवरोधनाम्नाये चोदकप्राप्ताग्नेयादिपशुसद्भावस्य सिद्धवदनुवादात् समुच्चयोऽवगम्यते ॥

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" प्राजापत्यवसानां किं भेदस्तन्त्रमुताग्रिमः ।
पशुभेदाद्देवपाकालैक्याच्छक्तितोऽन्तिमः ॥" (जैन्या ११ २ ७) ॥

वाजपेये सप्तदशसु प्रजापतिदेवताकेषु पशुषु[60] तद्भेदानुसारेण वसाहोमो भिद्यत इति चेत् । नैवम् । प्रजापतिरेक एव सप्तदशानां पशूनां देवता । तथा पाकोऽपि सहैव क्रियते । [61]प्रदानस्यापि पाक उप लक्षणम् । प्रदानेऽपि साहित्यमस्ति । कालश्चैकः । याज्याया अर्धर्चान्तस्य तत्कालत्वेन चोदकातिदेशात् । शक्यते च सह होमः । तस्मात्तन्त्रम् ॥

तत्रैव चतुर्थपादे चिन्तितम्—

" प्राजापत्येषु कुम्भ्यादेर्भेदो नो वाऽङ्गभेदतः ।
भेदो [62]नैवमशेषाङ्गश्रपणादौ प्रभुत्वतः ॥" (जैन्या ११ ४ ४४) ॥

वाजपेये सप्तदशसु प्राजापत्यपशुषु कुम्भ्या हृदयशूलस्य वपाश्रपण्योश्च[63] भेदः स्यात् । कुतः ? तत्तत्पश्व ङ्गानां भिन्नत्वात् । नैवम् । पश्वङ्गानां बहुत्वेऽपि प्रौढकुम्भ्यादेर्देष्टार्थश्रपणादौ प्रभुत्वात् । तस्मात्तन्त्रम् ॥

तत्रैव तृतीयपादे चिन्तितम्—

" प्राजापत्यप्रचारः किमार्भवे शस्त्रिसोमतः ।
ऊर्ध्वं वा विकृतौ चोत परस्तात्सर्वसोमत ॥
आर्भवे चोदकादुक्तप्राप्तसन्निध्यां तदनन्तरः ।
श्रुतिबाधस्तदा तस्मात्तृतीयो विकृतिस्थतः ॥
पशवो न हि सोमस्य विकारा अविशेषतः ।
उक्तत्वात् [64]सर्वसोमानामुपरिष्टात् प्रचर्यताम् ॥" (जैन्या ११ ३ १७–१९) ॥

---

५७–५७ इ उ पा क–संख्यानादेतस्य । ५८ तै–शोधनाच; क–मोधनाच । ५९ इ उ,त पा–च रोधन° । ६० इ उ–'पशुषु°' नास्ति । ६१ म४–अवदानस्यापि । ६२ म४–नैवम° । ६३ आ ति–वपाश्रपण्याश्च । ६४ तै–सर्वयागाना° ।

वाजपेये सप्तदशप्राजापत्यपशुप्रचारस्य काले चतुर्धा संशयः। तत्र तावदयं प्रयोगक्रमः---तृतीयसवने प्रथममार्भवः पवमानः, ततो वैश्वदेवग्रहपर्यन्ता शस्त्रवन्त सोमाः, ततोऽशस्त्रवदवशिष्टेषु सोमग्रहेषु प्रचीर्णष्वग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादयः सोमविकारा इति। एवं स्थिते प्राजापत्यपशूनामार्भवकाले प्रचारः। कुतः? प्रकृतौ तस्य पशुप्रचारकालत्वेन चोदकप्राप्तेरित्याद्यः पक्षः। 'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति' इति वचनेन सोमग्रहप्रचारादूर्ध्वः कालो विधीयते। यदि प्रातःसवनमाध्यन्दिनसवनसोमेभ्य ऊर्ध्वत्वमार्भव कालस्यास्तीति योज्येत तदा चोदकेनैव [६५]तत्कालप्राप्तेर्वचनमिदमनर्थकं स्यात्। अतस्तृतीयसवनगत सोमानामुपरीति वक्तव्यम्। यदि तत्र सर्वसोमानामुपरीति विवक्ष्येत तदा चोदकप्राप्तः कालो विप्रकृष्येत। ततः प्रत्यासत्तये शस्त्रिणां वैश्वदेवग्रहान्तानां सोमानामुपरीति द्वितीयः पक्षः। 'उपरिष्टात् सोमानाम्' इत्यविशेषप्रवृत्ता श्रुतिः कतिपयसोमोर्ध्वत्वविवक्षायां बाध्येत। तस्माच्छस्त्रवतां तद्रहितानां च सोमाना मुपरिष्टादग्निष्टोमे यज्ञायज्ञीयसाम्ना संस्थिते सति तत्प्रचारः कार्यः, तस्य विकृतिकालत्वात् प्राजापत्यपशूनां च विकृतिरूपत्वादिति तृतीयः पक्षः। सोमविकाराणामेवायं कालः, पशवस्तु न सोमविकाराः, तस्माद् विशेषवचनानुसारेण प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचार इति राद्धान्तः॥

तत्रैव द्वितीयपादे चिन्तितम्---

" पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि।
कर्मशेषनिषेधश्च कर्मान्तरविधिर्भवेत्॥
किं चोत्कर्षोऽवशिष्टस्य[६६] आरण्योक्तिवदादिमः।
अदृष्टवाक्यभेदाप्तद्रव्याभावेन चान्तिमः॥ " ( जैन्या ११ २ १४–१५ )॥

वाजपेये सप्तदश प्राजापत्यान् पशून् प्रकृत्य श्रूयते---'तान् पर्यग्निकृतानुत्सृजति, ब्रह्मसाम्न्या लभते[अ]' इति। तेषु सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते सत्युत्तरकालभावी कर्मशेष उत्सर्गशब्देन निषिध्यते। अश्वमेधे " पर्यग्निकृतानारण्यानुत्सृजन्ति " ( तैब्रा ३ ९ ४ ) इत्यत्र कर्मशेषनिषेधस्य संप्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समापनीयाः। आलभतिना च ब्रह्मसामकाले कर्मान्तरं विधीयत इति प्राप्ते ब्रूमः---कर्मान्तरविधौ सप्तदशपशुजन्यादृष्टाद्भिन्नं किंचिददृष्टं कल्प्येत, वाक्यभेदश्च प्राप्नुयात्। किं च 'ब्रह्मसाम्न्यालभते' इत्यत्र द्रव्यदेवतयोरश्रवणान्न कर्मान्तरविधिः संभवति। तस्मात् पर्यग्निकरणानन्तरमेव कर्तव्यस्य सप्तदशपशूनामालम्भादिशेषस्य ब्रह्मसामकाल उत्कर्षो विधीयते। तथा सत्यर्थप्राप्तः पर्यग्निकरणानन्तरभाविकर्मशेषव्यापारोपरम उत्सर्गशब्देनानूद्यते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

६५ तं–तत्काल°। ६६ ई उ क ति पा–°षो विशिष्टस्य। [अ](द्र आपश्रौ १८·६·७)।

देवस्याह९ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषं
देवस्याह९ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाक९ रुहेय-

देवस्य । अहम् । सवितुः । प्रसव इति प्र-सवे । बृहस्पतिना । वाजजितेति वाज-जिता । वाजम् । जेषम् । देवस्य । अहम् । सवितुः । प्रसव इति प्र-सवे । बृहस्पतिना । वाजजितेति वाज-जिता । वर्षिष्ठम् । नाकम् । रुहेयम् ॥

रथमातिष्ठति तमनुमन्त्रयते—'देवस्य' इति यजुषा ॥ [V]सवितु सर्वस्य प्रेरयितुः [V]देवस्य [V]अहं [V]प्रसवे अनुज्ञायाम् अनुज्ञां लब्ध्वैव न स्वातन्त्र्येण, [V]बृहस्पतिना ब्रह्मणा साधनभूतेन [V]वाजजिता अन्न जितवता वशीकृतसर्वान्नेन, अतस्तेन [V]अहं [V]वाजम् अन्न [V]जेष जयेयम् । लेटि "सिब्बहुलं लेटि" (पा ३ १ ३४) इति सिप् । मिपोऽडागम, इतश्च लोप (पा ३ ४ ९४, ९७) । बृहस्पतिशब्दे "तद्बृहतो॰" (द्र पाभा ६ १ १५७) इति सुट् । वनस्पत्यादित्वात् (पा ६ २ १४०) पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

चात्वाले रथचक्र निमित ब्रह्माऽधिरोहति तमभिमन्त्रयते—'देवस्य' इति ॥ गतम् । [V]वर्षिष्ठ वृद्धतम [V]नाक स्वर्गं स्वर्गस्थानीय चक्र [V]रुहेयम् आरोहामि नाकमेव वाऽनेन निमित्तेनाऽऽरुहेयम् । "लिङ्याशिष्यङ्" (पा ३·१ ८६) ॥

सप्तमे रथमन्त्रा वर्णिताः । अष्टमे रथस्य धावनमन्त्रा वर्ण्यन्ते ।

देवस्येति ॥ कल्पः— "रथमातिष्ठति देवस्याह९ सवितुः प्रसवे बृहस्पतिना वाजजिता वाज जेषमिति" (बौश्रौ ११ ७) इति । आतिष्ठत्यारोहेदित्यर्थः ॥ [V]वाजजिता अन्नजयकारिणा बृहस्पतिनाऽनुगृहीतोऽहं [V]वाजं [V]जेषम् अन्नं जेष्यामि ॥ एतन्मन्त्रगतं बृहस्पतिशब्दं ब्राह्मणजात्यभिमानिदेवपरत्वेन व्याचष्टे—"देवस्याह९ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्याह । सवितृप्रसूत एव ब्रह्मणा वाजमुज्जयति" (तैब्रा १ ३ ६) इति ॥

देवस्येति ॥ कल्पः— "चात्वाले रथचक्रं निमितं ब्रह्माऽऽरोहति । तमत एवानुमन्त्रयते देवस्याह९ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाक९ रुहेयमिति" (बौश्रौ ११ ७) इति । निमितं निखातस्य काष्ठस्याग्रे स्थापितम् ॥ [V]वर्षिष्ठम् अतिशयेन प्रवृद्धम् । पूर्वमन्त्रवद्व्याचष्टे— "देवस्याह९ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाक९ रुहेयमित्याह । सवितृप्रसूत एव ब्रह्मणा वर्षिष्ठं नाक९ रोहति" (तैब्रा १ ३ ६) इति ॥ विधत्ते—"चात्वाले रथचक्रं निमित९ रोहति । अतो वा अङ्गिरस उत्तमाः सुवर्गं लोकमायन् । साक्षादेव यजमानः सुवर्गं लोकमेति" (तैब्रा १ ३ ६) इति । [१]अतः [२-]उपरि स्थितात्[-२] रथचक्रात्, उत्तमा [३]उद्गततमाः । साक्षादेवाव्यवधानेनैव ॥ विधत्ते— "आवेष्टयति । वज्रो वै रथः । वज्रेणैव दिशोऽभिजयति" (तैब्रा १ ३ ६) । ऊर्ध्वकाष्ठाग्रे स्थापितं ब्रह्मणा समारूढं रथचक्रं त्रिः प्रदक्षिणं पर्यावर्तयेत् । रथस्य वज्रांशत्वात्[४] वज्रत्वम् । तच्चान्यत्राऽऽम्नातम्— "इष्यस्तृतीय९ रथस्तृतीयं यूपस्तृतीयम्" (तैसं ५ २ ६) इति । अतो भ्राम्यमाणेन वज्ररूपेण रथचक्रेणैव सर्वासां दिशां जयो भवति ॥ विधत्ते— "वाजिना९ साम गायते । अन्नं वै वाजः । अन्नमेवावरुन्धे"

१ तं.ति-'अतः' नास्ति । २-२ म४-उपरिष्टात् । ३ म४-उन्नततमाः । ४ तं ति-चक्रांशत्वात् ।
तैसं ३१

-मिन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयित् ।
अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजय ।

इन्द्राय । वाचम् । वदत । इन्द्रम् । वाजम् । जापयत । इन्द्रः । वाजम् । अजयित् ॥
अश्वाजनीत्यश्व–अजनि । वाजिनि । वाजेषु । वाजिनीवतीति वाजिनी–वति ।
अश्वान् । समत्स्विति समत्–सु । वाजय ॥

दुन्दुभिं संह्रादयति—'इन्द्राय' इति ॥ इन्द्राय इन्द्रार्थं सर्वे वाचं वदत तस्य स्वामित्वात् यथेन्द्रो जयति तथा शब्दयत । यजमान एव वा ऐश्वर्ययोगादिन्द्रः, तस्य शोभनां वाच वदत । इन्द्रं वाजं जापयत । "क्रीङ्जीनां णौ" (पा ६ १ ४८) इत्यात्वम्, "अर्तिह्री" (पा ७ ३ ३६) इत्यादिना पुक् । इन्द्रः स्म वाजम अन्नम् अजयित् अजयत् । जयतेश्छान्दसे लिङि वर्णव्यत्ययेन शप इकारः । शपो वा लुकि तिप इडागमः ॥

अश्वाजनीं प्रयच्छति—'अश्वाजनि' इति गायत्र्या ॥ याऽश्वानाजयति गमयति साश्वाजनी कशोच्यते । वाजिनी अन्नवती यज्ञसाधनद्वारेण । यद्वा—वेगवती, अश्वान

(तैब्रा १·३ ६) इति । वाजिनामश्वार्थिनां सबन्धि यत्साम तद्ब्रह्मा गायेत । अश्वप्रवत्सु सामविशेषः शाखान्तरे द्रष्टव्यः । ब्रह्मण इदं गानमित्यापस्तम्बः स्पष्टयति—"औदुम्बरं रथचक्रं ब्रह्माऽऽरोहति तमाह वाजिनां साम गायेति । तस्य चक्रं त्रिः प्रदक्षिणमावर्तयति । आवर्तमाने ब्रह्मा गायति" (आपश्रौ १८·४ ८–११) इति ॥

इन्द्रायेति ॥ कल्पः—"आघ्नन्ति दुन्दुभीन् । संप्रवदन्ति वाचः । संप्रवदितां वाचोऽनुमन्त्रयत इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदिति" (बौश्रौ ११ ८) इति ॥ यागलक्षणेन परमैश्वर्येण योगाद्यजमान इन्द्रस्तस्मै इन्द्राय हे सभ्या ब्राह्मणाः, आशीर्वादरूपां शुभां वाचं वदत । इन्द्रं यजमानं वाजं जापयत । अन्नविषयं जयं प्रापयत । अयम् इन्द्रः यजमानः वाजम् अन्नम् अजयित् जयतु । सोऽयं मन्त्र आपस्तम्बेन दुन्दुभिवादने विनियुक्तः—"इन्द्राय वाचं वदतेति दुन्दुभीन् संह्रादयन्ति" (आपश्रौ १८ ४ ७) इति ॥ तमेतं दुन्दुभिघातं विधातुं प्रस्तौति—"वाचो वर्ष्म देवेभ्योऽपाक्रामत् । तद्वनस्पतीन् प्राविशत् । सैषा वाग्वनस्पतिषु वदति । या दुन्दुभौ । तस्माद्दुन्दुभिः सर्वा वाचोऽतिवदति" (तैब्रा १ ३ ६) इति । वाग्देवताया वर्ष्म नादात्मकं प्रधानशरीरम्, तस्य प्रवेशादयं दुन्दुभिः सर्वा मनुष्यवाचोऽतिक्रम्य ध्वनिं करोति ॥ विधत्ते—"दुन्दुभीन्त्समाघ्नन्ति । परमा वा एषा वाक् । या दुन्दुभौ । परमयैव वाचाऽवरां वाचमवरुन्द्धे । अथो वाच एव वर्ष्म यजमानोऽवरुन्द्धे" (तैब्रा १ ३ ६) इति ॥ मन्त्रगतम् इन्द्रपदम् 'वाजमजयित्' इत्येतच्च व्याचष्टे—"इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदित्याह । एष वा एतर्हीन्द्रः । यो यजते । यजमान एव वाजमुज्जयति" (तैब्रा १·३ ६) इति ॥

अश्वाजनीति ॥ कल्पः—"अथास्मा अश्वाजनीं प्रयच्छत्यश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजयेति" (बौश्रौ ११ ७) इति ॥ अस्मै यजमानाय । अश्वमजति क्षिपतीत्यश्वाजनी

[इन्द्राय–तैब्रा १·३ ६ १२; सासं ...५ ५; ब्राम ११·२ ३० ।] । ५ आ.क पा म४–तत्रावर्तमाने; तं.ति–वर्तमानत्वेन; ( आपश्रौसूत्रे 'वर्तमाने' । ) । ६. आ.क–श्रुताम् । ७. आ क–अन्नविषये । ८. उ.पा–प्रवेशादयम् । ९ आ–इन्द्रिय(?)पदम् ।

अर्वाऽसि सप्तिरसि वाज्यसि

अर्वा । असि । सप्तिः । असि । वाजी । असि ।

वेगहेतुत्वात् । Vवाजेषु अन्नेषु साध्येषु Vवाजिनीवती वेगवत्या गत्या तद्वती । यद्वा—वेगवत्या अश्वपङ्क्त्या तद्वती । सा त्वम् Vअश्वान् Vसमत्सु सङ्ग्रामेषु Vवाजय गमय । सह माद्यन्त्यास्विति समद् ॥

तयाऽश्वान् समवक्षिणोति—' अर्वासि ' इति ॥ Vअर्वा अरणकुशलः । " अन्येभ्योऽपि दृश्यन्ते " ( पा ३ २ ७५ ) इति वनिप् । तादृश Vअसि इति दक्षिणम् । Vसप्तिः । षप समवाये । सङ्ग्रामेषु सहसा समवैति । तादृश Vअसि इति मध्यमम् । Vवाजी वेगवान् अन्नवान् वा । तादृश Vअसि इति उत्तरम् । उक्तमुदात्तयण परस्यानुदात्तस्य स्वरितत्वम् ( पा ८ २ ४ ) । " अग्निर्वा अर्वा । वायुः सप्तिः । आदित्यो वाजी " ( तैब्रा १ ३ ६ ) इत्यादि ब्राह्मणम् ॥

कशा । सा च विजयेनान्नप्रदत्वाद्वाजिनी । वाजिन्यो वेगवत्योऽश्वगतयस्ता अस्याः कशाया इति वाजिनीवती । यथोक्तगुणत्रयोपेते हे कशे, Vवाजेषु अन्नेषु निमित्तभूतेषु सत्सु त्वमश्वान् Vसमत्सु युद्धेषु Vवाजय गमय । [ ब्राह्मणेन ] अयं मन्त्रः स्पष्टत्वबुद्ध्योपेक्षितः ॥ त्रीन् विधेयान् विधत्ते—" सप्तदश प्रव्याधानाजिं धावन्ति । सप्तदशः स्तोत्रं भवति । सप्तदश सप्तदश दीयन्ते । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै " ( तैब्रा १ ३ ६ ) इति । प्रकर्षेण बलाधिक्येन विध्यन्ते मुच्यन्ते बाणा यावत्परिमाणेषु देशविशेषेषु तावत्परिमाणा देशाः प्रव्याधाः । ते च सप्तदशसङ्ख्याकाः । तेषामन्तेऽवधित्वद्योतनाय काचिदौदुम्बरी शाखा निखन्यते तत्काष्ठयुक्तोऽवधिराजिः । तत्पर्यन्तं रथारूढा धावेयुः । अस्मिन् वाजपेये सामवेदप्रसिद्धं यत्स्तोत्रं तत्सप्तदशसंख्याकावृत्तियुक्तं भवेत् । तदावृत्तिप्रकारस्त्वष्टमप्रपाठके " समिधमातिष्ठ " ( तैसं १ ८ १३ ) इत्यस्मिन्ननुवाके ब्राह्मणोदाहरणेन स्पष्टीकरिष्यते । दक्षिणात्वेन दातव्यानां रथादीनां गोशतान्तानां द्रव्याणां मध्य [10]एकैकद्रव्यं सप्तदशसङ्ख्यायुक्तं दद्यात् । तथाऽऽपस्तम्बो दर्शयति—" दक्षिणाकाले सप्तदश रथान् ददाति । सप्तदशानांसि सप्तदशाश्वान् सप्तदश हस्तिनः सप्तदश निष्कान् सप्तदश दास्यः सप्तदशाजाः सप्तदशावीः सप्तदश वासांसि सप्तदश गवां शतानि " ( आपश्रौ १८ ३ ४ ) इति । यद्यपि स्तोमविशेषविधेर्द्रव्यसङ्ख्याविधेश्च नायमवसरस्तथापि गन्तव्यदेशविशेषसंख्याविधिप्रसङ्गेन तदुभयं विहितम् । तथा सत्येकेनैव ' सप्तदशः प्रजापतिः ' इत्यनेनार्थवादेन विधित्रयस्य स्तोतुं शक्यत्वात् ॥

अर्वेति ॥ कल्पः—" तया यथायुक्तमश्वान् क्षिपति अर्वासीति दक्षिणं सप्तिरसीति मध्यमं वाज्यसीत्युत्तरम् " ( बौश्रौ ११ ७ ) इति । अर्वादयोऽश्वजातिविशेषाः । तदेवाभिप्रेत्याम्यत्राऽऽम्नायते—' हयो देवानवहदर्वाऽसुरान् वाजी गन्धर्वानश्वो मनुष्यान् ' ( ब्र बृउ १ १ २ ) इति । वामदक्षिणयोः अश्वयोर्मध्य ईषाग्रं प्रसार्य तयोर्मध्ये सप्त्याख्यजातिविशेषोपेतमश्वं युञ्ज्यात् ॥ त्रीनेतानश्वान्[11] देवतात्रयरूपेण स्तौति—" अर्वाऽसि सप्तिरसि वाज्यसीत्याह । अग्निर्वा अर्वा । वायुः सप्तिः । आदित्यो वाजी । एताभिरेवास्मै देवताभिर्देवरथं युनक्ति " ( तैब्रा १ ३ ६ ) इति ॥ पूर्वं " यजुषा युनक्ति " ( तैब्रा १ ३ ५ ) इत्यत्र मन्त्रो विहितः । इदानीं रथयोग विधत्ते—" प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देवरथमेवास्मै युनक्ति " ( तैब्रा १ ३ ६ ) इति ॥ प्रष्टिः पादत्रयोपेतो [12]भोजनपात्रादेराधारस्तद्वदश्वैस्त्रिभिर्वहतीति प्रष्टिवाही । अत एवोपरिष्टाद्वक्ष्यते—" त्रयोऽश्वा भवन्ति रथश्चतुर्थः " ( तैब्रा १ ७ ९ ) इति ॥

१० इ उ म४–एकैकं द्रव्यम् । ११ आ क–त्रीस्तान् । १२. आ क–भोजनपात्रस्याधार° ।

वाजि॑नो॒ वाजं॑ धावत म॒रुतां॑ प्रस॒वे ज॑यत॒
वि योज॑ना मिमीध्व॒मध्व॑नः स्कभ्नीत॒ ( १ ) काष्ठां॑ गच्छत॒

वाजि॑न॒ । वाज॑म् । धा॒व॒त॒ । म॒रुता॑म् । प्र॒स॒व इति॑ प्र-स॒वे । ज॒य॒त॒ ।
वीति॑ । योज॑ना । मि॒मी॒ध्व॒म् । अध्व॑न । स्क॒भ्नी॒त॒ ( १ ) । काष्ठा॑म् । ग॒च्छ॒त॒ ॥

अश्वान् आजिशिरोऽभ्यावर्तयति—' वाजिन ' इति द्वाभ्याम । तत्राद्या द्विपदा गायत्री हे वाजिन अश्वा, वाजम् अन्न प्रति धावत वाज साधयितु शीघ्र गच्छत । ' सर्तेर्वेगिता गतौ धावादेश ' ( द्र काशिका पा ७ ३ ७८ ) । मरुता प्रसवे अनुज्ञाया [1-]जयत अन्नम् । हि[-1] युष्मानाज्ञापयति, यूय चास्माक जयत । कथ धावतीति चेत्- ' वि योजना ' इति । ३ त्रिपदोपमा प्रतिष्ठा वा, " षट्कसप्तकाष्टकैर्विनर्धमाना । विपरीता प्रतिष्ठा " ( पिसू ३ १४, १५ इति । ककुमती वा, " एतस्मिन् पञ्चमे सर्वं छन्द शङ्कुमती । षट्के ककुमती " ( द्र पिसू ३ ५५) योजना योजनानि वि मिमीध्व बहून्यपि योजनानि मिमीध्वम । गमनशैघ्र्येण विमितानि परिमितानि अल्पानीव कुरुध्वम् । माङ् माने । किं च — अध्वनः मार्गान् स्कभ्नीत स्तम्भयत शीघ्रया गत्या [2]पीडितानि कुरुत । काष्ठाम् अध्वसमाप्तिम् आजिशिरो गच्छत । गन्तव्यमध्वान शीघ्रं लङ्घयतेति यावत् ॥

वाजिन इति ॥ कल्पः— " अथैतानाजिसृतो *विक्यापयति वाजिनो वाज धावत मरुतां प्रसवे जयत वि योजना मिमीध्वमध्वनः स्कभ्नीत काष्ठां गच्छतेति " ( बौश्रौ ११ ७ ) इति । हे वाजिनः अश्वाः, वाजम् अन्न संपादयितुं त्वरया धावत । मरुताम् अनुज्ञायां सत्यामन्न जयत । विशेषेण बहून्यपि योजनानि मिमीध्वं शीघ्रधावनेन परिमितान्यल्पानीव कुरुत । किं च अध्वनः मार्गान् स्कभ्नीत स्कम्भयत शीघ्रगत्या पीडितान् कुरुत । काष्ठाम् अध्वसमाप्तिमाजिशिरः गच्छत ॥ अस्मिन्मन्त्रे प्रथम भाग प्रतीकत्वेनोपादाय चतुर्थभागे काष्ठाशब्दं व्याचष्टे—" वाजिनो वाज धावत काष्ठां गच्छतेत्याह । सुवर्गो वै लोकः काष्ठा । सुवर्गमेव लोकं यन्ति " ( तैब्रा १·३·६ ) इति ॥ दिग्विशेषं विधातुं प्रस्तौति— " सुवर्गं वा एते लोकं यन्ति । य आजिं धावन्ति " ( तैब्रा १ ३ ६ ) इति ॥ विधत्ते— " प्राञ्चो धावन्ति । प्राङ्विव हि सुवर्गो लोकः " ( तैब्रा १ ३ ६ ) इति । प्राञ्चः [11-]पूर्वाभिमुखाः । ऐन्द्रत्वात्[-11] स्वर्गस्य प्राग्दिग्वर्तित्वम् ॥

वाजेवाज इति ॥ कल्पः— " अथ रथान् धावतोऽनुमन्त्रयते वाजेवाजेऽवत वाजिनो न इति चतसृभिरनुष्टुप्छन्दसम्भिः " ( बौश्रौ ११ ८ ) इति ॥ तत्रेयमृक् प्रथमा—' वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्व तृप्ता यात पथिभिर्देवयानैः ' इति । हे वाजिनः अश्वाः, वाजेवाजे सततमन्ननिमित्तं धननिमित्तं च नः अस्मान् अवत । विप्राः ब्राह्मणवत् स्नानेन

१-१. तै—जयतातोऽन्न देहि; ति—जयताश्नतो हि । २. मै—हितानि ।

*[ बौश्रौसूत्रे—' अवख्यापयति ' इति । ] । ११-११ म४—पूर्वाभिमुख्याः । इन्द्रस्य प्राग्दिग्वर्तित्वात् ।

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनः ॥

वाजेवाज इति वाजे--वाजे । अवत । वाजिन । न ।
धनेषु । विप्रा । अमृता । ऋतज्ञा इत्यृत--ज्ञा ।
अस्य । मध्व । पिबत । मादयध्वम् ।
तृप्ता । यात । पथिभिरिति पथि-भि । देवयानैरिति देव--यानै ॥
ते । न । अर्वन्त । हवनश्रुत इति हवन--श्रुत । हवम् । विश्वे । शृण्वन्तु । वाजिन ॥

अश्वान् धावतोऽनुमन्त्रयते— ‘वाजेवाजे’ इत्यादिभिश्चतसृभि । आद्या त्रिष्टुप् । ‘वाजिनो न:’ इति प्रथमपादान्त ॥ वाजेवाजे अन्नेऽन्ने साध्ये वाजिन अश्वा अस्मान् अवत रक्षत तल्लम्भयित्वा । किं च—धनेषु अवतेति धनानि चास्मान् लम्भयत । हे विप्रा मेधाविन, यथा तद्रागिण अमृता अमरणा ऋतज्ञा सत्यज्ञा सत्यवन्त अस्य मध्व मधुसदृशस्य घृतस्य पिबत । पूर्ववत् कर्मणि षष्ठी ( पा २ ३ ६५ ) । नुमभावश्छान्दस । पीत्वा च मादयध्व तृप्यत । मद तृप्तियोगे, चुरादिरनुदात्तेत् । तृप्ता च यात गच्छत । पथिभि मार्गै देवयानै देवा यैर्गच्छन्ति, तैर्मनोहरै । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । “ञ्निति” ( पा ६ १ १९३ ) इति प्रत्ययात् पूर्वस्योदात्तत्वम् ॥

‘ते नो अर्वन्तः’ इति द्विपदा विराट् । ‘विराड्जागतगायत्राभ्याम्’ इति ॥ हे अर्वन्तः, अरणकुशला । अर्ते “अन्येभ्योऽपि दृश्यन्ते” ( पा ३ २ ७५ ) इति वनिप् । “अर्वणस्त्र सावनञः” ( पा ६ ४ १२७ ) । हवनश्रुत आह्वानस्य श्रोतार[१] ते वाजिनोऽश्वा अस्माक हवम् आह्वान शृण्वन्तु विश्वे सर्वेऽपि । “भावेऽनुपसर्गस्य” ( पा ३ ३ ७५ ) इति अप्, सप्रसारण च ॥

शुद्धाः अमृताः मरणरहिताः श्रमरहिताः ऋतज्ञाः ऋतं सत्यमस्य गन्तव्यदेश जानन्तः । तादृगश्वाभिमानिनो हे देवाः, अस्य मध्वः पिबत, धावनात् पूर्वं पश्चाच्चावघ्राप्यमाण मधुसमान नैवारचरुरस पिबत। पीत्वा च मादयध्व हृष्टा भवत । ततः तृप्ताः सन्तो देवयानैः पथिभिः आजिं प्रति यात ॥

त इति ॥ अथ द्वितीया—‘ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिन ’ इति । ते अश्वाः अर्वन्तः गतिकुशलाः हवनश्रुतः अस्मदाह्वानश्रोतार वाजिनः अन्नवन्त विश्वे सर्वेऽपि हवम् आह्वानमस्मद्वचनं शृण्वन्तु ॥

१. तं.ति–‘श्रोतारः इत्यस्यानन्तरं ‘ विधेयाः ’ ।

मितद्रवः सहस्रसा मेधसाता सनिष्यवः ।
महो ये रत्नं[M] समिथेषु जभ्रिरे शं नो भवन्तु वाजिनो हवेषु ॥

मितद्रव इति मित-द्रव । सहस्रसा इति सहस्र-सा । मेधसातेति मेध-साता । सनिष्यव महः । ये । रत्नम् । [M]समिथेष्विति सम्-इथेषु । जभ्रिरे । शम् । न । भवन्तु । वाजिन । हवेषु

'मितद्रव.' इति परोष्णिक् आस्तारपङ्क्तिर्वा, "परो चेद्‌द्वादशाक्षरावास्तारपङ्क्ति (पिसू ३ ४०) इति ॥ मितमल्पमिव महान्तमपि पन्थान द्रवन्ति गच्छन्तीति [V]मितद्रव । यद्वा मित शीघ्र गच्छन्तीति मितद्रव । "°मितद्र्वादिभ्य उपसंख्यानम्°" (पा ३ २ १८० वा १) इति डुप्रत्यय । दासीभारादिर्द्रष्टव्य (पा ६ २ ४२)। मित द्रवण येषामिति वा बहुव्रीहि । [V]सहस्रसा सहस्रस्य धनराशे सनितार । पूर्ववद्विट्प्रत्यय[V] आकारश्च (पा ३ २ ६७, ६ ४ ४१) [V]मेधसाता मेधस्य सनन सभजन मेधसाति यज्ञप्राप्ति । तस्मिन्निमित्ते यतमाना । "जनसनखन सञ्झलो" (पा ६ ४ ४२) इत्यात्वम् । "सुपां सुलुक्°" (पा ७ १ ३९) इति सप्तम्या डादेश दासीभारादि (पा ६ २ ४२)। [V]सनिष्यव सनि सननीय धन वा सविभजनम् । सनेरिसिप्रत्यय (द्र. उ ५८९)। तदन्तात् "सुप आत्मन°" (पा ३ १ ८) इति क्यच् । इप्रत्ययान्ताद्वा क्यचि छान्दस सुडागमः । किं च—ये वाजिन [V]समिथेषु[M] सग्रामेषु । "समीण" (उ १७६) इति थक्प्रत्यय[5] । [V]मह महत महाबलस्य शत्रो [V]रत्न धन [V]जभ्रिरे हरन्ति । छान्दसो लिट् । "हग्रहोर्भः°" (द्र पाभा ८ २ ३२ वा १) इति भत्वम् ॥

'श नो भवन्तु' इति त्रिष्टुप् ॥ आस्तारपङ्क्तिपक्षे देवतातेत्यादि त्रिपदा त्रिष्टुप् ॥ [V]न अस्माक [V]श [V]भव तु सुखहेतवो भवन्तु [V]हवेषु आह्वानेषु । पूर्ववदप् (पा ३ ३ ७५)। [V]वाजिन. अश्वा [V]देवताता देवास्तायन्ते विस्तार्यन्ते पृथक्पृथगाराध्यन्तेऽस्मिन्निति देवतातिर्यज्ञ । परमप्यनुना सिकलोप बाधित्वा व्यत्ययेन "अनुनासिकस्य क्विझलो°" (पा ६ ४ १५) इति पूर्ववत्[6] दीर्घत्वम् । तत्रानुनासिकलोप । पूर्ववत् सप्तम्या डादेश (पा ७ १ ३९)। दासीभारादि (पा ६ २ ४२)।

मितद्रव इति ॥ अथ तृतीया—'मितद्रवः सहस्रसा मेधसाता सनिष्यवः । महो ये रत्न[४] समिथेषु जभ्रिरे शं नो भवन्तु वाजिनो हवेषु' इति ॥ महान्तमपि पन्थानं मितमल्पमिव द्रवन्ति गच्छन्तीति [V]मितद्रवः । [V]सहस्रसाः सहस्रस्य महतोऽश्वराशेः सनितारो दातारः । [V]मेधसाता यज्ञस्य प्रदातारः । [V]सनिष्यव सनिं द्रव्यदानमस्मास्विच्छन्तः । ईदृशा [V]ये अश्वाः [V]समिथेषु संग्रामेषु [V]महः [V]रत्नम् अत्यधिकं शत्रोर्धनं [V]जभ्रिरे [14]हृतवन्तः ते [V]वाजिनः [V]नः अस्माकं [V]शं [V]भवन्तु सुखकरा भवन्तु ॥

[M][ मैसूरमुद्रितपुस्तके संहितायां भट्टभास्करभाष्ये च 'समिधेषु', पदपाठे च 'समिधेष्विति सम् इधेषु' इति पाठः ।] । ४. [ शुद्धीकृतः पाठः ।] मै—°क्विप्प्रत्ययः; तं—°डुप्रत्ययः । ५ मै—थक्° । ६ मै—पूर्वपदस्य ।

१४ पा—जितवन्तः; इ—अभिजितवन्त ।

देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्न(२)मीवाः ॥
एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।
क्रतुं दधिक्रा अनु संतवीत्वत् पथामङ्काꣳस्यन्वापनीफणत् ॥

देवतातेति देव–ताता । मितद्रव इति मित–द्रव । स्वर्का इति सु–अर्का ।
जम्भयन्त । अहिम् । वृकम् । रक्षाꣳसि । सनेमि । अस्मत् । युयवन् (२) । अमीवाः ॥
एष । स्य । वाजी । क्षिपणिम् । तुरण्यति ।
ग्रीवायाम् । बद्ध । अपिकक्ष इत्यपि–कक्षे । आसनि ।
क्रतुम् । दधिक्रा इति दधि–क्रा । अन्विति । सतवीत्वदिति सम्–तवीत्वत् ।
पथाम् । अङ्काꣳसि । अन्विति । आपनीफणदित्या–पनीफणत् ॥

मितद्रव व्याख्यातम् । स्वर्का शोभनगमना शोभनस्तुतयो वा । “ नञ्सुभ्याम् ” ( पा ६ २ १७२ ) इति स्वर । जम्भयन्त भक्षयन्त अहिम् आगत्य हन्तार वृक हिंसक चोरादिक रक्षासि च । यद्वा–अहिमागत्य हन्तार वृकमपहर्तारम् । वृक वृक आदाने । इगुपधात् क (पा ३ १ १३५)। रक्षासि धर्मविघ्नकारीणि । सनेमि क्षिप्रमित्येके, पुराणमित्यन्ये । अस्मत् अस्मत्त युयवन् यावयन्तु पृथक्कुर्वन्तु । किं च—अमीवा रोगांश्च युयवन्नित्येव । आगत्य

देवतातेति ॥ अथ चतुर्थी–‘ देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ’ इति । देवताता देवानर्हन्तीति देवतातयः । मितद्रवः, पूर्ववत् । स्वर्काः शीघ्रधावनेन सुष्ठु अर्चनीयाः, ते वाजिनः अहिं वृक रक्षांसि सर्पवदरण्यश्ववद्बाधकान् राक्षसान् जम्भयन्तः, वर्णव्यत्ययः । सनेमि क्षिप्रमेव अमीवाः रोगान् अस्मत् युयवन् अस्मत्तो वियोजितवन्तः ।

एष इति ॥ तदेवमध्यापकसंप्रदायमनुसृत्य मन्त्रचतुष्टयं विभक्तम् । बौधायनाचार्यस्तु—‘ते नो अर्वन्तः’ इत्यादिः ‘वाजिनो हवेषु’ इत्यन्त एक एव मन्त्र इत्यभिप्रेत्य चतुर्थीम् ‘एष स्य वाजी’ इत्यादिकामृचं चतुष्टयेऽन्तर्भावयामास । तदीयपाठस्तु—‘एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु संतवीत्वत् पथामङ्काꣳस्यन्वापनीफणत्’ इति ॥ ग्रीवायां कक्ष आस्ये च तत्तदुचितरज्जुविशेषैः बद्धः सन् एष स्यः वाजी एषोऽश्वः क्षिपणिं तुरण्यति कशां त्वरयति, बहुधा बद्धत्वात् रथं भञ्जयितुमितस्ततो न गच्छति, कशयाऽश्व[15] शीघ्रं धावतीत्यर्थः । दधिक्राः धारकान् [16]मार्गविरोधकान् पाषाणादीनप्यतिक्रामन् क्रतुं सादिनोऽभिप्रायम् अनु सतवीत्वत् सम्यगनु सदधानः पथां मार्गाणाम् अङ्कांसि लक्षणानि कुटिलानि निम्नोन्नतानि [17]च वाजी[17] अनु आपनीफणत् अनुक्रमेण प्लुत्य समत्वं चाऽऽपादयन् तुरण्यतीति पूर्वेणान्वयः ॥

१५ ह उ पा–कशायास्तस्याः; क तं म४–कशायास्त्वस्याः, ति–कशायास्त्वरया । १६ म४–मार्गविरोधकान् । १७–१७ ति.म४–वा ।

हिंसन्तीत्यमीवा । मीयतेराङ्पूर्वाद्वप्रत्ययः । उपसर्गस्य च ह्रस्वत्वं निपात्यते । यौतेर्लेटि शपः श्लुः । "छन्दस्युभयथा" (पा ३ ४ ११७) इत्यार्धधातुकत्वात् ङित्त्वाभावे गुणः ॥

प्रत्याधावतोऽनुमन्त्रयते—'एष स्य' इति जगती । स्य अश्वः सामान्येनोच्यते । एष स्य स एष वाजी अश्वः । "स्यश्छन्दसि बहुलम्" (पा ६ १ १३३) इति सुलोपः । क्षिपणिः कशा क्षिप्यतेऽनयेत्यनि । तुरण्यति त्वरयन्निव शीघ्रं प्रस्थापयति । तुरण त्वरायाम्, कण्ड्वादिः (पा ३ १ २७), अन्तर्भावितण्यर्थः । विभक्तिव्यत्ययो वा । क्षिपण्या क्षिपणिप्रहारेण त्वरयते तूर्णं गच्छति । ग्रीवायां बद्ध उरोबद्ध्रेण अपिकक्षे कक्षेऽपि कक्ष्यया बद्ध इत्येव । 'सुप्सुपा' (द्र पाभा २ १ ४ वा १) इति समासः । यद्वा—कक्ष्यायामपीतः अपिकक्षः अवयवविशेषः यत्र कक्ष्यया बध्यते । निरुदकादित्वादुत्तरपदान्तोदात्तत्वम् (पा ६ २ १८४) । आसनि आस्ये च बद्धः खलीनेन । "पद्दन्°" (पा ६ १ ६३) इत्यादिना आसन्नादेशः । एवमेषु स्थानेषु बद्धोऽप्येष शीघ्रो भवतीति अन्यो ह्येषामेकत्रापि बद्धश्चलितुमपि न शक्नोति इति भावः । पुनश्च विशेष्यते—क्रतुं सादिनः प्रज्ञामभिप्रायं कर्म वात्मीयं यन्महाश्वानामुचितं भवति, तत् अनु संतवीत्वत् अनु संवर्धमानः अनुविदधानः इति यावत् । अनुक्रमेण वा संवर्धयन् । तु इति वृद्धिकर्मा । ततो यङ्लुकि "गुणो यङ्लुकोः" (पा ७.४ ८२) इति गुणे कृते अभ्यासस्येडागमः । शतरि "अभ्यस्तानामादिः" (पा ६.१ १८९) इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९) । दधिक्राः धारकान् पर्वतादीन् क्रामन् दूरस्थानपि सहसाऽऽक्रामन्निति यावत् । (पर्वतादीन् माक्षि वा) । "जनसन°" (पा ३ २ ६७) इत्यादिना विट् । "विड्वनोरनुनासिकस्यात्" (पा ६ ४ ४१) इत्यात्वम् । पुनश्च विशेष्यते—पथां मार्गाणाम् अङ्कांसि लक्ष्मस्थानीयानि कुटिलानि निम्नोन्नतत्वादीनि वा । अकि लक्षणे । असुन्[✱] । अनु अतु आपनीफणत् अनुक्रमेण ऋजुत्वं समत्वं च पथामापादयन् । दाधर्त्यादौ निपात्यते (पा ७ ४ ६५) । पूर्ववत् स्वरः । एवं कुर्वन् तुरण्यति ॥

'उत स्म' इत्यादि ॥ स्म इति पादपूरणे । अपि च अस्य प्रवतः गच्छतः तुरण्यतः त्वरमाणस्य "शतुरनुमः" (पा ६ १ १७३) इति षष्ठ्या उदात्तत्वम् । अस्येत्यन्वादेशानुदात्तत्वम्[✱] । प्रगर्धिनः गन्तव्याक्रमणाभिकाङ्क्षिणः अस्य अश्वस्य अङ्कः देहासक्तं चामरादिकं वस्त्रादिकं चास्य लक्षणभूतं तत्सर्वं परितः सर्वस्मिन्नपि देहे विद्यमानम् अनु वाति गच्छति । अङ्कते औणादिकोऽसिप्रत्ययः[✱] । कस्येव किमिव चेत्यत्राह[७] श्येनस्य इव वेः पक्षिणः ध्रजतः गच्छतः । ध्रज गतौ । पर्णं न पत्रमिव पत्रार्थं प्रगर्धिनः आमिषार्थिनः । अनेकेवशब्दात् वाक्यार्थोपमा भवतीति द्वयोरुपमार्थीययोरुपादानम् । अश्वो विशेष्यते—दधिक्राव्णः व्याख्यातः (तैसं १ ५ ११) । ऊर्जा बलेन सह तरित्रतः भृशं तरतः । यद्वा—ऊर्जा अन्नेन

[✱][द्र.उ ६६५ 'अञ्च्यञ्जियुजिमृजिभ्यः कुश्च' ।] । [✱][द्र. पा २.४ ३२] ७ मै—चेत्याह ।

उत स्मा॑स्य द्र॒वत॑स्तुरण्य॒तः प॒र्णं न वेरनु॑ वाति प्रग॒र्धिनः॑ ।
श्ये॒नस्ये॑व॒ ध्रज॑तो अङ्क॒सं परि॑ दधि॒क्राव्णः॑ स॒होर्जा तरि॑त्रतः ॥

उ॒त । स्म॒ । अ॒स्य॒ । द्र॒वत॑ । तु॒र॒ण्य॒त ।
प॒र्णम् । न । वे । अन्विति॑ । वा॒ति॒ । प्र॒ग॒र्धिन॒ इति॑ प्र-ग॒र्धिनः॑ ॥
श्ये॒नस्य॑ । इ॒व॒ । ध्रज॑त । अ॒ङ्क॒सम् । परीति॑ ।
द॒धि॒क्राव्ण॒ इति॑ दधि-क्राव्णः॑ । स॒ह । ऊ॒र्जा । तरि॑त्रत. ॥

---

आमिषादिना सह तरत श्येनस्येव । वेगवत्त्वातिशयप्रदर्शनार्थं चेदम् । तरतेर्यङ्लुगन्तस्य तत्रैव निपात्यते ( पा ७ ४ ६५ ) । " शतुरनुम° " ( पा ६ १ १७३ ) इत्येतद्बाधित्वा परत्वात् "अभ्यस्तानामादि" ( पा ६ १ १८९ ) इत्याद्युदात्तत्व भवति । " सावेकाच°" ( पा ६ १ १६८ ) इत्यूर्जस्तृतीयाया उदात्तत्वम् ॥

---

उतेति ॥ कल्पः—" स यथस्मै रथश्रेषमाचक्षत आग्नीध्र एतां जुहोत्युत स्मास्य द्रवतस्तुरण्यत इति " ( बौश्रौ ११८ ) इति । पाठस्तु—' उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः । श्येनस्येव ध्रजतो अङ्कस परि दधिक्राव्णः सहोर्जा तरित्रत ' इति । [V]उत [V]स्म अपि च [V]द्रवतः गच्छतः [V]तुरण्यतः त्वरयतः [V]प्रगर्धिनः अवधिं प्राप्तुं काङ्क्षतोऽस्याश्वस्य [V]अङ्कसं शृङ्गारचिह्नं वस्त्रचामरादिक [V]परि सर्वस्मिन्नपि देहे वर्तमानम् [V]अनु [V]वाति गच्छन्तमश्वमनूत्क्षिप्तत्वेन दृश्यमानं गच्छति । कस्य किमिव ? [V]वेः पक्षिणः [V]पर्णं न पक्ष इव । यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्यालङ्काररूप वस्त्रचामरादिकं विस्पष्टमवलोक्यते । पक्षिमात्रस्य पर्णमङ्कसस्य दृष्टान्तत्वेनाभिहितम् । शीघ्रधावने श्येनदृष्टान्त उच्यते । [V]ध्रजतः गच्छतः [V]श्येनस्य [V]इव [V]दधिक्राव्णः धारकपर्वताद्यतिक्रामिणः [V]ऊर्जा [V]सह अत्यन्तबलेन सह [V]तरित्रतः भृश तरतोऽश्वस्येति योज्यम् ॥

आपस्तम्बस्त्वेवमाह—" वाजिनो वाज धावतेति चतसृभिर्धावतोऽनुमन्त्रयते । अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति । लक्षण प्राप्योदञ्च आवृत्य प्रदक्षिणमावर्तन्ते । मितद्रव इति चतसृभि प्रत्याधावतोऽनु मन्त्रयते " ( आपश्रौ १८ ४ १८-२१ ) इति । ' वाजिनः ', ' वि योजना ', ' वाजेवाजे ', ' ते नो अर्वन्त ' इति चतस्रः ॥ प्रधावतोऽनुमन्त्रण विधत्ते—" चतसृभिरनुमन्त्रयते । चत्वारि छन्दांसि । छन्दोभिरेवैनान् सुवर्गं लोकं गमयति " ( तैब्रा १ ३ ६ ) इति ॥ गायत्रीत्रिष्टुप्जगत्यनुष्टुबिति छन्दसां [18]चतुष्कम् । उदङ्मुखत्वेनाऽऽवृत्तिं विधत्ते—" प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये आजिं धावन्ति । उदञ्च आवर्तन्ते । अस्मादेव तेन लोकान्नयन्ति " ( तैब्रा १ ३ ६ ) इति ।

पेति ॥ कल्पः—" रथविमोचनीय जुहोत्या मा वाजस्य प्रसवो जगम्यादिति " ( बौश्रौ ११८ ) इति ॥ पाठस्तु—' आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशंभू । आ मा गन्तां पितरा मातरा चाऽऽ मा सोमो अमृतत्वाय गम्यात् ' इति ॥ [V]वाजस्य अन्नस्य [V]प्रसवः उत्पत्तिर्मां प्रति

---

१८. आ,क—चतुष्टयम् ।

आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशंभू ।
आ मा गन्तां पितरा (३) मातरा चाऽऽ मा सोमो अमृतत्वाय गम्यात् ॥

एति । मा । वाजस्य । प्रसव इति प्र -सव । जगम्यात् ।
एति । द्यावापृथिवी इति द्यावा -पृथिवी । विश्वशंभू इति विश्व--शंभू ॥
एति । मा । गन्ताम् । पितरा ( ३ ) । मातरा । च ।
एति । मा । सोम. । अमृतत्वायेत्यमृत--त्वाय । गम्यात् ॥

रथविमोचनीयं जुहोति—'आ मा वाजस्य' इति त्रिष्टुभा ॥ वाजस्य अन्नस्य प्रसव प्रसूति· उत्पत्ति मा माम् आ जगम्यात् आगच्छेत् । लिङि शप श्लु । अन्न ममोत्पद्यता मित्यर्थ । किं च—द्यावापृथिवी द्यावापृथिव्यौ च मामागच्छेताम् । विश्वशंभू विश्वस्य श सुख भावयन्त्यौ । मितद्र्वादित्वात् डुप्रत्यय ( पा ३ २ १८० वा १ )। क्विपि वा द्विवचनस्य पूर्वसवर्णदीर्घत्वम् । किं च—पितरा मातरा च पिता माता च मामागच्छेताम् । लेटि शपो लुक् । "पितरामातरा च छन्दसि" ( पा ६ ३ ३३ ) इति निपात्यते । यद्वा —उभयत्रापि "सुपां सुलुक्" ( पा ७ १ ३९ ) इति सोराकार । किं च—सोम च माम् अमृतत्वाय अमरणत्वाय (आ) गम्यात् आगच्छेत् । लिङि शपो लुक् । आशिषि लिङ्वा ॥

आ जगम्यात् आगच्छतु । द्यावापृथिव्यौ च [१९-]विश्वशभू कृत्स्नस्य[-१९] जगतः सुखं भावयन्त्यौ मामागच्छताम् । पितरा मातरा अस्मदीयः पिता माता च मां प्रति आ गन्तां [२०-]चिरं जीवित्वाय[-२०] समागच्छताम् । किं च सोमः च अमृतत्वाय मम देवत्वजन्मने मां प्रति आ गम्यात् आगच्छतु । "अपाम सोमममृता अभूम" ( तैस ३ २ ५ ) इति ह्यन्यत्र श्रुतम् ॥ विधत्ते—"रथविमोचनीयं जुहोति प्रतिष्ठित्यै" ( तैब्रा १ ३ ६ ) इति । रथविमोकेनाश्वानाम् आयासं परिहृत्य स्वय प्रतिष्ठितो भवति ॥ मन्त्रे वाजप्रसवोक्तेरभिप्रायमाह—"आ मा वाजस्य प्रसवो जगम्यादित्याह । अन्नं वै वाजः । अन्नमेवावरुन्धे" ( तैब्रा १ ३ ६ ) इति ॥ इतरैः षोडशरथैर्धावद्भिः कृष्णलदानं विधातुं प्रस्तौति—"यथालोकं वा एत उज्जयन्ति । य आजिं धावन्ति" ( तैब्रा १ ३ ६ ) इति ।

ये रथान्तरवर्तिन आजिं धावन्ति, एते यथालोकं यथास्थानमुज्जयन्ति यस्मिन् यस्मिन् स्थाने यो यो धावत्यसावसौ तत्तत्स्थानं जयतीत्यर्थः ॥ विधत्ते—"कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति । यमेव ते वाजं लोकमुज्जयन्ति । तं परिक्रीयावरुन्धे" ( तैब्रा १ ३ ६ ) इति । यवत्रयपरिमितं सुवर्णं कृष्णलम् । वाजमन्नमुद्दिश्य सरन्ति धावन्तीति वाजसृतो रथान्तरवर्तिनः । अत एवाऽऽपस्तम्ब आह—"यजुर्युक्तं यजमान आरोहति । वाजसृत इतरान् रथान्" ( आपश्रौ १८ ४ १२-१३ ) इति । एकैकस्मै वाजसृते एकैकं कृष्णलं दद्यात्तेन तैः संपादितमन्नं निवासस्थानं च परिक्रीय स्वाधीनं करोति ॥

१९-१९ ति—विश्वशंभुवौ विश्वस्य । २०-२० आ—चिरजीवित्वाय, इ उ—चिरजीवितत्वाय, त ति—चिरं जीवित्वा

वाजिनो वाजजितो वाजं सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमव जिघ्रत

वाजिन । वाजजित इति वाज–जित । वाजम् । सरिष्यन्त । वाजम् । जेष्यन्त । बृहस्पते । भागम् । अवेति । जिघ्रत ।

〰〰〰〰〰〰〰〰

रथयुजोऽश्वान्नैवार चरुमवघ्रापयति—‘ वाजिन ’ इति यजुषा ॥ हे Vवाजिनः अश्वा Vवाजजित वाजम् अन्नं जेतुमुद्यता । “ विभाषित विशेषवचने बहुवचनम् ” ( पा ८ १ ७४ ) इति पूर्वस्याविद्यमानवत्त्वाभावः । Vवाजं वाजहेतुमाजिं Vसरिष्यन्त सर्तुकामा सृत्वा च Vवाजम् आजिं Vजेष्यन्त जेतुकामा । उभयत्रापि हेतौ शता ( पा ३ २ १२६ ) । सरणार्थं जयार्थं चेत्यर्थ ।

〰〰〰〰〰〰〰〰

तान् षोडश कृष्णलान् पुनरादायैकीकृत्य ब्रह्मणे तद्दान विधत्ते—“ एकधा ब्रह्मण उपहरति । एकधैव यजमाने वीर्यं दधाति ” ( तैब्रा १ ३ ६ ) इति ॥ चरुं विधातु प्रस्तौति—“ देवा वा ओषधीष्वाजि मयुः । ता बृहस्पतिरुदजयत् । स नीवारान्निरवृणीत । तन्नीवाराणां नीवारत्वम् ” ( तैब्रा १ ३ ६ ) इति । यथा पूर्वं प्रथमतो वाजपेययागार्थमाजिं धावतो बृहस्पतेर्जयस्तद्वदत्राप्योषधीषु सारस्वीकारायाऽऽजिप्रासौ बृहस्पतिर्जयं प्राप्यौषधीषु सारत्वेन नीवारानन्याभ्य ओषधीभ्यो निष्कृष्यावृणीत । निःशेषेण वृतत्वान्नीवारत्व सपन्नम् ॥ विधत्ते—“ नैवारश्चरुर्भवति । एतद्वै देवानां परममन्नम् । यन्नीवारा । परमेणैवास्मा अन्नाद्येना वरमन्नाद्यमवरुन्द्धे ” ( तैब्रा १ ३ ६ ) इति । शाल्यादिभ्योऽत्यन्तपूतत्वेन नीवाराणां देवान्नत्वम् ॥ चरोः परिमाणं विधत्ते–“ सप्तदशशरावो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै ” ( तैब्रा १ ३ ६ ) इति । चरोः सप्तदशशरावपरिमितत्व पूर्वं तत्प्रचारविधौ व्याख्यातम् । चरुनिष्पादनोपयुक्तं द्रव्यविशेषं विधत्ते—“ क्षीरे भवति । रुचमेवास्मिन् दधाति ” ( तैब्रा १ ३ ६ ) इति । रुच स्वादुत्वम् ॥ निष्पन्ने चरौ घृतप्लावनं विधत्ते—“ सर्पिष्वान् भवति मेध्यत्वाय ” ( तैब्रा १ ३ ६ ) इति । एतदेवाभिप्रेत्याश्व देवानुद्दिश्य ‘ अस्य मध्वः पिबत मादयध्वम् ’ इत्यस्य मन्त्रस्यार्थो व्याख्यातः ॥ चरोर्देवतां विधत्ते—“ बार्हस्पत्यो वा एष देवतया । यो वाजपेयेन यजते । बार्हस्पत्य एष चरु ” ( तैब्रा १ ३ ६ ) इति । कर्तव्य इत्यध्याहारः । वाजपेययाजिनो बृहस्पतिर्देवतेति तत्रत्यचरोरपि सा देवता युक्ता ॥

वाजिन इति ॥ कल्पः—“ तमेतान् यजुर्युजोऽश्वानवघ्रापयति वाजिनो वाजजितो वाज सरिष्यन्तो वाज जेष्यन्तो बृहस्पतेर्भागमवजिघ्रतेति ” ( बौश्रौ ११ ७ ) इति ॥ Vवाजजितः अन्नं जेतुमुद्यता Vवाजिनः हे अश्वाः, Vवाजम् अन्नं जेतुमाजिमुद्दिश्य Vसरिष्यन्त धावनं करिष्यन्त Vवाजम् अन्नं जेष्यन्तः यूयं Vबृहस्पतेः Vभागम् इमं चरुम् Vअवजिघ्रत ॥

वाजिन इति ॥ कल्पः–“ यजुर्युजोऽश्वान् प्रत्याधावतोऽवघ्रापयति । वाजिनो वाजजितो वाज ससृवांसो वाज जिगिवांसो बृहस्पतेर्भागे नि मृड्ढ्वमिति ” ( बौश्रौ ११·१९ ) इति ॥ यजमानार्थे रथे यजुर्भिर्मन्त्रैर्योजनीया अश्वा यजुर्युजः । Vससृवांसः धावनं कृतवन्तः । Vजिगिवांसः जय कृतवन्त । Vनि Vमृड्ढ्वं शुद्धा भवत । आपस्तम्बमते तु ‘ जिगिवांसः ’ इत्यन्तो मन्त्रः । तदर्थपूरणाय ‘ बृहस्पते

वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाजं जिगिवाꣳसो बृहस्पतेर्भागे नि मृड्ढ्वमि

वः सा सत्या संधाऽभूद्यामिन्द्रेण समधद्ध्वम्-

वाजिन । वाजजित इति वाज जित । वाजम् । ससृवाꣳसः । वाजम् । जिगिवाꣳसः बृहस्पतेः । भागे । नीति । मृड्ढ्वम् । इयम् । वः । सा । सत्या । संधेति सम -धा । अभूत् याम् । इन्द्रेण । समधद्ध्वमिति सम् -अधद्ध्वम् ।

बृहस्पते बार्हस्पत्यस्य चरोर्नैवारस्य भागम् अव जिघ्रत । बृहस्पतिशब्दे सुट्स्वरावुक्त (द्र पाभा ६ १ १५७, पा ६ २ १४० )। " कर्षात्वत " ( पा ६ १ १५९ ) इति भागशब्दोऽन्तोदात्त ॥

आगतवतोऽवघ्रापयति ॥ हे वाजिन वाजजित वाज ससृवांस सृतवन्त वाज जिगिवांस जितवन्त । " अभ्यासाच्च " ( पा ७ ३ ५५ ) इति कुत्वम् । बृहस्पते भा नि मृड्ढ्व निमार्जयध्व शुद्धा भवथ । मृजू शौचालङ्कारयो चुरादिराधृषीय अनुदात्ते अकर्मक। । " बहुल छन्दसि " ( पा २ ४ ७३ ) इति शपो लुक् । मार्ष्ट्यां व्यत्ययेनात्मनेपदम् आत्मान शोधयतेति ॥

दुन्दुभीन् विमुच्यमानाननुमन्त्रयते—' इय व ' इति यजुषा ॥ हे दुन्दुभय , इय व युष्माक सा सधा सन्धान सत्या अमोघफला अभूत् । केत्याह— यां सन्धाम् इन्द्रेण

भागमवजिघ्रत ' इति पूर्वस्मात् मन्त्रात् अनुवर्तनीयम् । अवशिष्टभागो मन्त्रान्तरम् , तस्य विनियोग इ एवाऽऽह—" बृहस्पतेर्भागे निमृड्ढ्वमिति प्रप्रोथेषु च लेपाभिमार्ष्टि " ( आपश्रौ १८ ४ १५ ) इति प्रप्रोथा ओष्ठाग्राणि ॥ आजिधावनात् पुरा पश्चादवघ्रापणं विधत्ते—" अश्वान्त्सरिष्यतः सद्गुपश्चादवघ्राप यति । यमेव ते वाजं लोकमुज्जयन्ति । तमेवावरुन्धे " ( तैब्रा १ ३·६ ) इति ॥

इयमिति ॥ कल्पः—" अथ रथान् विमुच्यमानाननुमन्त्रयत इयं वः सा सत्या संधाऽभूद्या-मिन्द्रेण समधद्ध्वमिति " ( बौश्रौ ११९ ) इति ॥ हे रथाः, वः युष्माकम् इय संधा आजि धावनप्रतिज्ञा सा सत्या अभूत् । यां प्रतिज्ञाम् इन्द्रेण इन्द्रानुग्रहेण समधद्ध्वं सम्यग्धारितवन्तः । इन्द्रानुग्रहायैव ' इन्द्रस्य वज्रोऽसि ' इति रथमन्त्रः आम्नातः ॥

अजीजिपतेति ॥ कल्पः—" दुन्दुभीनवस्यतोऽनुमन्त्रयत अजीजिपत वनस्पतय इन्द्रं वाजं वि मुच्यध्वमिति " ( बौश्रौ ११९ ) इति ॥ हे वनस्पतयः वनस्पतिविकारा दुन्दुभयः, इन्द्र यागस्वामिनं वाजम् अन्नमुद्दिश्य अजीजिपत यथा जितवान् भवति तथा जितवन्तः । तादृशा यूयं पूर्वं यत्र बद्धास्ततो वि मुच्यध्व विमुक्ता भवत । बन्धनप्रदेशस्त्वापस्तम्बेन दर्शितः—' दक्षिणस्यां वेदिश्रोण्यां सप्तदश दुन्दुभीन् प्रबध्नाति " ( आपश्रौ १८·४ ४ ) इति ॥ विधत्ते—" अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन् विमुञ्चति । यमेव ते वाजं लोकमिन्द्रिय दुन्दुभय उज्जयन्ति । तमेवावरुन्धे " ( तैब्रा १ ३ ६ ) इति ॥

-मजीजिपत वनस्पतय इन्द्रं वाजं वि मुच्यध्वम् ॥ ८ ॥

[ स्कभ्नीत युयवन् पितरा द्विचत्वारिंशच्च । ] ॥ ८ ॥

अजीजिपत । वनस्पतय । इन्द्रम् । वाजम् । वीति । मुच्यध्वम् ॥ ८ ॥

[ मैसं १ ११ २,३, कासं १२ १४ १४ १, वास ९ ९–१९ ]

[v]समधद्ध्वम् [v]इन्द्रेण सह कृतवन्त "इन्द्राय वाच वदत" ( तैस १ ७ ८ ) इत्यादिका सा सत्याऽभूदिति । किं च—हे [v]वनस्पतय । विकारे प्रकृतिशब्द । वनस्पतिविकारा हि दुन्दुभय । [v]इन्द्र [v]वाजम् [v]अजीजिपत इन्द्र वाजस्यान्नस्य जेतारं कृतवन्त । यथोक्त पूर्वम्—"इन्द्रं वाज जापयत" ( तैसं १ ७ ८ ) इति, तच्च तथा कृतवन्त स्थेत्यर्थ । सम्प्रति विमुच्यध्व विश्राम्यत विमुक्ता । जयतेर्णौ "क्रीङ्जीनां णौ" ( पा ६ १ ४८ ) इत्यात्वम् । वर्णव्यत्ययेन धातोरिकार । वनस्पतिशब्द पारस्करादि ( पा ६ १ १५७ ) ॥

इति सप्तमे अष्टमोनुवाक ॥

अत्र विनियोगसंग्रहः—

"देवाऽऽरोहेद्रथ स्वामी अक्षारोहणमन्त्रणम् ।
देवेतीन्द्रा दुन्दुभीना घोषोऽश्वाज कशाग्रह ॥ १ ॥
अर्वासीति त्रिभिर्मन्त्रैर्युनक्त्यश्वत्रय रथे ।
वाजीत्येतैर्मन्त्रयेत चतुर्भिर्धावतो रथान् ॥ २ ॥
मितेत्याभिश्चतसृभिस्तान् प्रत्याधावतो रथान् ।
आ मा रथविमुक्त्याख्य जुहुयाद्वाजिनद्वयात् ॥ ३ ॥
गतेः पुरोपरिष्टाच्च ग्रापयेच्चरुमश्वकान् ।
वृहादि जिघ्रतेत्यन्तो द्वितीयेऽप्यनुषज्यते ॥ ४ ॥
बृहेति मार्ष्टि घोणायामिय तु रथमन्त्रणम् ।
अजी दुन्दुभिमन्त्रः स्यादेकविंशतिरीरिताः" ॥ ५ ॥

अथ मीमांसा ॥ दशमाध्यायस्य तृतीयपादे चिन्तितम्—

"यजुर्युक्तोऽध्वर्युभागं बाधते धमयत्युत ।
बाधः प्राकाशवन्मैवं पक्षे प्राप्तो नियम्यते ॥" ( जैन्या १० ३ ३३ ) ॥

वाजपेये श्रूयते—"यजुर्युक्तं रथमध्वर्यवे ददाति" ( द्र आपश्रौ १८ ३ १० ) इति । [21]तस्या यमथः । रथशकटदासीनिष्कादीनि सप्तदश द्रव्याणि प्राकृतगवाश्वादिदक्षिणाबाधकान्यत्र विहितानि । तेषु च प्रतिद्रव्य सप्तदशसङ्ख्या विहिता । ततो रथाः सप्तदश । तेषु मुख्यं रथं यजमानारोहणाय 'इन्द्रस्य वज्रोऽसि' ( तैसं १ ७ ७ ) इत्यादिभिर्यजुर्वेदोक्तैर्मन्त्रैः सज्जीकरोति । सोऽय यजुर्युक्तो रथ । तं च दक्षिणाकालेऽध्वर्यवे दद्यादिति । 'प्राकाशावध्वर्यवे ददाति' ( द्र शब्रा ५ ४ ५ २२, तांब्रा १८ ९ १० ) इत्यत्र यथा चोदकप्राप्तस्याध्वर्युभागस्य बाध एवमत्रापि । ननु सप्तदशद्रव्यविधानेनैव[22] प्राकृतद्रव्यबाध

२१ म४–अस्या° । २२ म४–°विधाने केवल° ।

सिद्धः । बाढम् । तथाऽप्यर्थिनः पादिन इत्यादि समाख्या प्रापिता विषमविभागविशेषक्लृप्तिर्न द्रव्यान्तरमात्रेण[23] बाधितुं शक्या । विरोधिनो विधान्तरस्याविधानात्[24] । अतश्चोदकप्राप्ता [25]येयमध्वर्योर्भागविशेषक्लृप्तिः सा यजुर्युक्तरथरूपभागविशेषविधिना बाध्यते । तस्मादध्वर्योर्न रथान्तरभागोऽस्ति नापि शकटदास्याविभाग इति पूर्वः पक्षः । नैतद्युक्तम् । प्राकाशदृष्टान्तवैषम्यात् । अत्यन्तमप्राप्तौ हि प्राकाशौ तत्र विधेयौ । यजुर्युक्तरथस्तु पक्षे प्राप्तः । तथा हि—' सप्तदश रथान् ददाति ' इत्युक्ते ' कस्य को रथः ' इति [26]विवक्षायां यजमानेच्छाया नियामकत्वाद्यदाऽध्वर्यवे तं दातुमिच्छति तदा प्राप्नोति यदा नेच्छति तदा न प्राप्नोतीति पक्षे प्राप्तिः । ततो यजुर्युक्तो यो रथः सोऽध्वर्यवेऽवश्यं देय इति नियम्यते । अतो न कस्याप्यनेन बाधः ॥

तत्रैव द्वितीयपादे चिन्तितम्—

" शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः ।
चत्वारः सन्ति नो वात्र स्यादेकं मुष्टिसंख्ययोः ॥
तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्न सः ।
द्वितीयोऽस्त्विति चेन्मैवं द्विलोपे बाधगौरवात् ॥
तृतीयोऽस्त्वेकलोपोऽत्र धर्मः संख्यैव लुप्यताम् ।
क्रियायोगान्न तद्धर्मः प्राथम्यात् साऽनुगृह्यताम् ॥ " (जैमि। १० २ ३२-३४)॥

प्रकृतौ "चतुरो मुष्टीन्निर्वपति" इति [27]मुष्टितत्संख्ये श्रुते । तथा वाजपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः । तत्र चरौ मुष्टितत्संख्ये द्वे अपि विद्येते किं वा द्वे अपि न विद्येते । आहोस्विदुभयोरेकमस्त्यन्यन्नास्ति । यद्येकं तदाऽपि किं मुष्टिरेव किं वा संख्यैवेति संशयः । चोदकप्राप्तमुभयमस्तीत्याद्यः पक्षः प्राप्नोति । चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरणसमर्थस्य[28] चरोरनिष्पत्तेः स पक्षो न युक्तः । तर्हि मुष्टिसंख्ये द्वे अपि बाध्येते इति द्वितीयः पक्षोऽस्त्विति चेत् । नैवम् । एकतरबाधेनैव पूरणाभावपरिहारे सिद्धे सति द्वयोर्बाधे गौरवप्रसङ्गात् । नन्वत्रोपदिष्टेन शरावद्रव्येणातिदिष्टं मुष्टिद्रव्यं बाध्यते तथा सप्तदशसंख्यया चतुःसंख्या बाध्यत इत्युभयबाधोऽवश्यंभावी । नैवम् । भिन्नविषयत्वेन बाधाऽसंभवात् । शरावसप्तदशसंख्ये यागसंबद्धे मुष्टिचतुःसंख्ये तु निर्वापसंबद्धे इति विषयभेदः । कथं तर्ह्यत्र बाधप्रसङ्गः । अन्यथाऽनुपपत्त्येति वदामः । अनुपपत्तिश्च पूरणासंभवेन दर्शिता । पूरणं चैकबाधेनाप्युपपद्यते । मुष्टिबाधे यथोचितं चतुःसंख्योपेतैः कुडवादिभिः पूर्तिः स्यात् । चतुःसंख्याबाधे यथोचितमधिकसंख्योपेतैर्मुष्टिभिः पूर्तिर्भविष्यति । एवं तर्हि एकलोप इति तृतीयः पक्षोऽस्तु । तत्र संख्या धर्मः, मुष्टिर्धर्मी । तथा सति मुष्टौ लुप्ते सति [29]निराश्रयस्य धर्मस्यासिद्धेः संख्यालोपोऽवश्यभावी । संख्यायां तु लुप्तायां मुष्टिः शक्नोत्यवस्थातुम् । तस्मात् संख्यैव लुप्यतामिति प्राप्ते ब्रूमः—चतुःसंख्या तावन्न मुष्टिमात्रेऽन्वेति, कर्मकारकवाचिद्वितीयाविभक्त्यन्तस्य चतुःशब्दस्य सहकर्मकारकेण* निर्वपतिधातुना सहान्वयात्[30] । अतः संख्या न मुष्टिधर्मः । [31]पार्ष्णिकान्वयेन तु मुष्टिविशेषणं [32]भविष्यति । संख्यामुष्ट्योः क्रियासंबन्धे समाने सत्यपि प्रथमश्रुतत्वात् साऽनुगृह्यते चरमश्रुतत्वेन दुर्बलो मुष्टिर्बाध्यत इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

२३ आ म४—द्रव्यान्तरविधिमात्रेण । २४ तं ति म८—विभागान्तरस्य । २५ इ उ पा—इयम्° । २६ आ क—वीक्षायाम् । २७ आ क—मुष्टिसंख्ये । २८ आ—°पूरणे समर्थस्य । २९ म४—तदाश्रयस्य । *( सकर्मकेणेत्यर्थः । ) । ३० तं ति म४—साक्षादन्वयात् । ३१ आ क—पार्ष्णिका° । ३२ ति—भवति ।

क्षत्रस्योल्बमसि क्षत्रस्य योनिरसि जाय एहि सुवो रोहाव
रोहाव हि सुवरहं नावुभयोः सुवो रोक्ष्यामि

क्षत्रस्य । उल्बम् । असि । क्षत्रस्य । योनिः । असि । जाये । एति । इहि । सुवः । रोहाव ।
रोहाव । हि । सुवः । अहम् । नौ । उभयोः । सुवः । रोक्ष्यामि ।

यजमानं ताप्यं घृताक्तं वस्त्रं परिधापयति— 'क्षत्रस्य' इति ॥ केचित् तरुत्वचं ताप्यमाहुः । $^{V}$क्षत्रस्य धनस्य शरीरलक्षणस्य $^{V}$उल्बं रक्षाधिकरणस्थानीयं वा परिवासः त्वम् $^{V}$असि ॥

दर्भमयं पत्नीं—'क्षत्रस्य' इति ॥ $^{V}$क्षत्रस्य धनस्य $^{V}$योनिः कारणम् $^{V}$असि दर्भमूलत्वाद्धनसाधनानां कर्मणाम् ॥

जायामामन्त्रयते—'जाये' इति ॥ हे $^{V}$जाये, $^{V}$आ $^{V}$इहि आगच्छ, $^{V}$सुवः स्वर्गं स्वर्गहेतुं निश्रेणिं $^{V}$रोहाव त्वं च अहं च रोहाव इति । "चादिलोपे विभाषा" (पा ८ १ ६३ ) इति तिङन्तस्य निघातप्रतिषेधः । "स्वरो रोहतौ छन्दसि" ( पा ६ ३ १०९ वा ६ ) इत्युत्वम् ॥

जाया पतिम्यामा[ पतिं प्रत्या ]ह—'रोहाव हि' इति ॥ एवं भवत्या[ त्वा ] $^{V}$रोहाव $^{V}$सुवः आवाम् । हिशब्दो यस्मादर्थे । यस्मात् सुवः तस्माद्रोहाव इति । अपदात् परत्वान्न निहन्यते, ( द्र पा ८·१ १६,१७,२८ ), हियोगाच्च ( पा ८ १ ५६ ) ॥

यजमान आह—'अहम्' इति ॥ तर्हि $^{V}$नौ आवयोः $^{V}$उभयोः $^{V}$अहं $^{V}$सुवः रोक्ष्यामि । पूर्ववदुत्वम् ॥

अष्टमे रथधावनमुक्तं नवमे यूपारोहणमुच्यते ।

क्षत्रस्येति ॥ कल्पः—"अथ यजमानं ताप्यं परिधापयति क्षत्रस्योल्बमसीति । क्षत्रस्य योनिरसीति दर्भमयं पत्नीम्" (बौश्रौ ११ ११ ) इति ॥ घृताक्तं वस्त्रं ताप्यम् । [1]हे ताप्य [1] $^{V}$क्षत्रस्य राजस्थानीयस्य यजमानस्य गर्भत्वेनोपचर्यमाणस्य $^{V}$उल्बम् आवरणम् $^{V}$असि । "उल्बावृतो गर्भः" ( छाउ ५ ९ १ ) इति छन्दोगा आमनन्ति । हे दर्भमय पट, $^{V}$क्षत्रस्य राजमहिषीस्थानीयस्य पत्नीशरीरस्य $^{V}$योनिः $^{V}$असि शीतनिवारणकारणमसि । तदेतत् परिधानद्वयं [2]क्रमेण विधत्ते—"ताप्यं यजमानं परिधापयति । पवित्रं वै दर्भाः । पुनात्येवैनान् । वाजं वा एषोऽवरुरुत्सते । यो वाजपेयेन यजते । ओषधयः खलु वै वाजः । यद्दर्भमयं परिधापयति । वाजस्यावरुद्ध्यै" (तैब्रा १ ३ ७ ) इति । ताप्यस्य यज्ञसाधनत्वाद्यज्ञत्वम् । एवं पत्नीवेदम् । वाजपेययाजिनोऽन्नावरोधकामिन ओषधिरूपदर्भमयेनान्नमवरुद्धं भवति ॥

जाय इति ॥ कल्पः—"अथ जायामामन्त्रयते जाय एहि सुवो रोहावेति । रोहाव हि सुवरितीतरा प्रत्याह । अहं नावुभयोः सुवो रोक्ष्यामीति यजमानः" (बौश्रौ ११ ११ ) इति । स्पष्टार्थो मन्त्रः ॥ एहीत्याह्वानस्य तात्पर्यमाह—"जाय एहि सुवो रोहावेत्याह । पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" (तैब्रा १ ३ ७ ) इति । आह्वानेन यजमानस्य यज्ञारम्भमनु पत्न्या अपि यज्ञारम्भे सति यज्ञोऽनवच्छिन्नो भवति ॥ पूर्वमन्त्रैः स्वर्गत्वेन [3]निरूपितस्याऽऽरोहणीयस्य रूपस्य चोदकप्राप्तं परिमाणमपवदितुं परिमाणा

१–१ आ क म४–'हे ताप्य' नास्ति । २ आ क–'क्रमेण' नास्ति । ३ ति–निरूपिता-रोह°; इ उ.पा–निरुपितस्य रोह° ।

वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायनश्चान्त्यः भौवनश्च भुवनश्चाधिपतिश्च ।

वाजं । च । प्रसव इति प्र–सव । च । अपिज इत्यपि–ज । च । क्रतुः । च । सुवः । च मूर्धा । च । व्यश्नियः इति वि–अश्नियः । च । आन्त्यायनः । च । अन्त्यः । च । भौवनः च । भुवनः । च । अधिपतिरित्यधि–पतिः । च ।

वाजप्रसवीया द्वादश स्रुवाहुतीर्जुहोति— ' वाजश्च ' इत्यादि ॥ प्राजापत्याः सर्वाः, तस्य सर्वमयत्वात् । [V]वाज अन्नम् । [V]प्रसव तस्योत्पत्ति अनुज्ञा वा । वायादिनोत्तरपदान्तोदात्तत्वम् (पा ६ २ १४४ ) । [V]अपिज तस्यैव पुन.पुनरुत्पत्ति । " अन्येष्वपि दृश्यते " ( पा ३ २ १०१ इति ड । [V]क्रतु सकल्प भोगादिविषय , यागो वा । [V]सुव आदित्य तस्योत्पत्तो हेतुः । [V]मूर्ध अह , प्रथमोपलब्धे. प्राधान्यात् । [V]व्यश्निय रात्रि विविधमन्न व्याप्तिर्वा व्यश्न तत्र साधु। व्यश्निय सर्वपरिणामहेतुत्वात् । [V]आन्त्यायनः मास , रविगत्यो अन्ते भवे अयने अन्त्ये, तयोरपत्यस्थानीयत्वात् सवत्सरो वा अन्त्यः, सर्वमासान्तर्भवत्वात् । तस्यापत्यस्थानीयो मास आन्त्यायन । नडादिर्द्रष्टव्य (पा ४ १ ९९ ) । अन्तशब्दाद्वा गर्गादियञन्तात् " यञिञोश्च " ( पा ४ १ १०१ ) इति फक् ।

न्तरं विधत्ते–" सप्तदशारत्निर्यूपो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै " ( तैब्रा १·३ ७ ) इति । चतुर्विंशत्यङ्गुलिपरिमितोऽरत्निः, सप्तदशसंख्याका अरत्नयः परिमाणं यस्य यूपस्येति विग्रहः ॥ अन्यद्गुणद्वयं यूपस्य विधत्ते–" तूपरश्चतुरश्रिर्भवति " ( तैब्रा १ ३ ७ ) इति । इतरेषां यूपानामग्रे शृङ्गस्थानीयः काष्ठशेषोऽणीयांश्चषालप्रतिमोकायावशेष्यते । सोऽस्य नास्तीति तूपरत्वम् । अष्टाश्रित्व मपवदितु चतुरश्रित्वम् । चषालनामकस्य यूपकटकस्य दारुमयत्वापवादाय विधत्ते– " गोधूमं चषालम् । न वा एते व्रीहयो न यवाः । यद्गोधूमाः । एवमिव हि प्रजापतिः समृद्ध्यै । अथो अमुमेवास्मै लोकमन्नवन्तं करोति " ( तैब्रा १ ३ ७ ) इति । गोधूमं कुर्यादिति शेषः । यथा व्रीहिभ्यो यवेभ्यश्च गोधूमानां लोके प्रशस्तत्वमेवमेवान्येभ्यो देवेभ्यः प्रशस्तः प्रजापतिः । किं च गोधूमसंपत्त्या स्वर्गोऽन्नवान् भवति ॥ यूपस्य वेष्टनं विधत्ते–" वासोभिर्वेष्टयति । एष वै यजमानः । यद्यूपः । सर्वदेवत्यं वासः । सर्वाभिरेवैनं देवताभिः समर्धयति । अथो आक्रमणमेव तत्सेतुं यजमानः कुरुते । सुवर्गस्य लोकस्य समष्ट्यै " ( तैब्रा १ ३ ७ ) इति । वाससां संख्यामापस्तम्ब आह–" रशनाकाले सप्तदशभिर्वासोभिर्यूपं वेष्टयति " ( आपश्रौ १८ १ १२ ) इति । [V]वाससां सर्वदेवत्यत्वम् " अग्नेस्तूषाधानम् " ( तैसं १ १ १ ) इत्यादौ सौमिकदीक्षाप्रकरणे विस्पष्टम् । आक्रमणं स्वर्गारोहण सोपानसदृशम् ॥

वाज इति ॥ कल्पः— " आहवनीये जुहोत्यन्वारब्धे यजमाने वाजश्च प्रसवश्चेति द्वादश स्रुवाहुतीः " ( बौश्रौ ११ ११ ) इति । पाठस्तु–' वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ' इति । वाजादयः सर्वे मम सन्त्विति शेषः । [V]वाजः अन्नं, [V]प्रसवः तस्योत्पत्तिः । [V]अपिजः तस्यैव पुनःपुनरुत्पत्तिः । [V]क्रतुः संकल्पो भोगादिविषयो यागो वा । [V]सुवः तस्यैवोत्पत्तौ हेतुरादित्यः । अथवा वाजादयश्चैत्रादिमासानां नामविशेषाः । तथाहि

छं. तं.म४–वासस. ।

आयुर्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतामपा॒नो(१)य॒ज्ञेन॑ कल्पतां व्या॒नो य॒ज्ञेन॑ कल्पतां॒ चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ꣳ श्रोत्रं॑ य॒ज्ञेन॑ कल्पतां॒ मनो॑ य॒ज्ञेन॑ कल्पतां॒ वाग्य॒ज्ञेन॑ कल्पतामा॒त्मा य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पता॒ꣳ सुव॑र्दे॒वाꣳ अ॑गन्मा॒मृता॑ अभूम प्र॒जाप॑तेः प्र॒जा अ॑भूम

आयुः । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । प्रा॒ण इति॑ प्र—अ॒नः । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । अ॒पा॒न इत्य॑प—अ॒नः (१) । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । व्या॒न इति॑ वि—अ॒नः । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । चक्षुः॑ । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । श्रोत्र॑म् । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । मनः॑ । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । वाक् । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । आ॒त्मा । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । य॒ज्ञः । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । सुवः॑ । दे॒वान् । अ॒ग॒न्म॒ । अ॒मृताः॑ । अ॒भू॒म॒ । प्र॒जाप॑ते॒रिति॑ प्र॒जा—प॒तेः॒ । प्र॒जा इति॑ प्र—जाः । अ॒भू॒म॒ ।

Vअन्य Vसंवत्सर मासानामन्ते भव । Vभौवन प्रजापति, भुवनात् विश्वोपादानादुत्पन्नत्वात् । भवत्यस्माद्विश्वमिति Vभुवन । औणादिक क्युन्प्रत्यय (उ २४७) । Vअधिपति ततोऽप्यधिको विश्वस्य पति विश्वाधिको देव । एते वाजादयो मम सन्तु इति शेष ॥

दशभि कल्पै रोहति—'आयुर्यज्ञेन' इति ॥ Vआयु जीवनम् अन्न वा तत् Vयज्ञेन अनेन Vकल्पतां मम सपद्यतां यथाश्रुत भूयात् । प्राणादीनां कल्पन स्वकार्यकरणसामर्थ्यम् । पदानि व्याख्यातानि । यज्ञस्य कल्पन अविच्छेदेन प्रवर्तनम् ॥

सर्वे ते प्रीणन्त्विति वाक्यशेषः । चकाराः परस्परसमुच्चयार्थो अनुक्तकालादिदेवतासमुच्चयार्थो वा । विधत्ते— "द्वादश वाजप्रसवीयानि जुहोति । द्वादश मासाः संवत्सरः । संवत्सरमेव प्रीणाति । अथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्यै" (तैब्रा १ ३ ७) इति । वाजशब्दप्रसवशब्दौ येषु कर्मसु मन्त्रत्वेन श्रूयेते तानि कर्माणि वाजप्रसवीयानि । अन्नोत्पत्तिहेतुत्वाद्वा वाजप्रसवीयत्वम् । न केवलमनेन होमेन संवत्सरदेवतायाः प्रीतिः किं त्वस्य यजमानस्य स्वर्गप्राप्तये संवत्सरदेवतां निश्रेणिवदुपधानमाधारमपि करोति ॥

आयुरिति ॥ कल्पः—"*तं दशभिः कल्पै रोहत्यायुर्यज्ञेन कल्पतामिति" (बौश्रौ ११ ११) इति । तं यूपम् । कल्पैः कल्पशब्दोपेतैः ॥ पाठस्तु—'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्' इति । Vआत्मा[5] जीवः । Vयज्ञेन यज्ञसंबन्धिना यूपारोहणेन । आयुरादयः स्वस्वप्रयोजनसमर्था भवन्तु ॥ विधत्ते—"दशभि कल्पै रोहति । नव वै पुरुषे प्राणाः । नाभिर्दशमी । प्राणानेव यथास्थानं कल्पयित्वा । सुवर्गं लोकमेति । एतावद्वै पुरुषस्य स्वम् । यावत् प्राणाः । यावदेवास्यास्ति । तेन सह सुवर्गं लोकमेति" (तैब्रा १ ३ ७) इति । अन्यत्र "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" (तैस ५ ३ २) इति श्रुतत्वादिहापि छिद्राभिप्रायः प्राणशब्द । अनेन कल्पमन्त्रपाठेन प्राणापानचक्षुःश्रोत्रादीन् [6]सर्वान् प्राणान् स्वस्वस्थाने स्थापयित्वा तैस्तदीयस्थानैः[7] सह स्वर्गं प्राप्तो भवति ॥

सुवरिति ॥ कल्पः—"बाहू उद्गृह्णाति सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूमेति" (बौश्रौ ११·११) इति । उद्गृहीताभ्यां बाहुभ्यां स्वर्गप्राप्तिमभिनयता[8] यजमानेनेदमुच्यते । वय

*[ बौश्रौसूत्रे 'ताम्' इति । ] ।५ म४-आयु । ६ आ क-'सर्वान्' नास्ति । ७ ति म४-°स्थानेन च । ८ ति-°भिनीय ।

[ यूपाहरणम

वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायनश्चान्त्
भौवनश्च भुवनश्चाधिपतिश्च ।

वाज. । च । प्रसव इति प्र–सव. । च । अपिज इत्यपि ज । च । क्रतु । च । सुव । मूर्धा । च । व्यश्निय इति वि–अश्निय । च । आन्त्यायन । च । अन्त्य । च । भौवन च । भुवन. । च । अधिपतिरित्यधि–पति । च ।

वाजप्रसवीया द्वादश स्रुवाहुतीर्जुहोति— ' वाजश्च ' इत्यादि ॥ प्राजापत्या' सर्वा, सर्वमयत्वात् । $^{v}$वाज अन्नम् । $^{v}$प्रसव तस्योत्पत्ति अनुज्ञा वा । थाथादिनोत्तरपदान्तोदात्त (पा ६ २ १४४) । $^{v}$अपिज तस्यैव पुन.पुनरुत्पत्ति । " अन्येष्वपि दृश्यते " (पा ३ २ १० इति ड । $^{v}$क्रतु सकल्प. भोगादिविषय, यागो वा । $^{v}$सुव आदित्य तस्योत्पत्तौ हेतु । $^{v}$म् अह्न, प्रथमोपलब्धे प्राधान्यात् । $^{v}$व्यश्निय रात्रि विविधमन्न व्याप्तिर्वा व्यश्न तत्र साधु। व्यश्नि सर्वपरिणामहेतुत्वात् । $^{v}$आन्त्यायन। मास, रविगत्यो अन्ते भवे अयने अन्त्ये, तयोरपत्यस्थानीयत्वात् सवत्सरो वा अन्त्य।, सर्वमासान्तभवत्वात् । तस्यापत्यस्थानीयो मास आन्त्यायन । नडादिभ्य (पा ४ १ ९९) । अन्तशब्दाद्वा गर्गादियञन्तात् " यञिञोश्च " (पा ४ १ १०१) इति फक् न्तरं विधत्ते—" सप्तदशारत्निर्यूपो भवति । सप्तदश। प्रजापति। । प्रजापतेराप्त्यै " (तैब्रा १ ३ ७ इति । चतुर्विंशत्यङ्गुलिपरिमितोऽरत्नि।, सप्तदशसंख्याका अरत्नय। परिमाणं यस्य यूपस्येति विग्रह अन्यद्गुणद्वयं यूपस्य विधत्ते—" तूपरश्चतुरश्रिर्भवति " (तैब्रा १ ३ ७) इति । इतरेषां यूपानाम शृङ्गस्थानीय। काष्ठशेषोऽणीयांश्चषालप्रतिमोकायावशेष्यते । सोऽस्य नास्तीति तूपरत्वम् । अष्टाश्रित्व मपवदितु चतुरश्रित्वम् । चषालनामकस्य यूपकटकस्य दारुमयत्वापवादाय विधत्ते—" गोधूमं चषालम् न वा एते व्रीहयो न यवा। । यद्गोधूमा। । एवमिव हि प्रजापति। समृद्ध्यै । अथो अमुमेवास्मै लोकमन्नवत् करोति " (तैब्रा १ ३ ७) इति । गोधूमं कुर्यादिति शेष। । यथा व्रीहिभ्यो यवेभ्यश्च गोधूमानां लो प्रशस्तत्वमेवमेतेभ्योऽन्येभ्यो देवेभ्य। प्रशस्त। प्रजापति। । किं च गोधूमसंपत्त्या स्वर्गोऽन्नवान् भवति ॥ यूपस्य वेष्टनं विधत्ते—" वासोभिर्वेष्टयति । एष वै यजमान। । यद्यूप। । सर्वदेवत्यं वास। । सर्वाभिरेवै देवताभि। समर्धयति । अथो आक्रमणमेव तत्सेतुं यजमान। कुरुते । सुवर्गस्य लोकस्य समष्ट्यै " (तैब्रा १ ३ ७) इति । वाससां संख्यामापस्तम्ब आह—" रशनाकाले सप्तदशभिर्वासोभिर्यूपं वेष्टयति ' (आपश्रौ १८ १ १२) इति । $^{v}$वाससां सर्वदेवत्यत्वम् " अग्नेस्तूषाधानम् " (तैसं ६ १ १) इत्यादौ सौमिकदीक्षाप्रकरणे विस्पष्टम् । आक्रमणं स्वर्गारोहण सोपानसदृशम् ॥

वाज इति ॥ कल्प।— " आहवनीये जुहोत्यन्वारब्धे यजमाने वाजश्च प्रसवश्चेति द्वादश स्रुवाहुती। " (बौश्रौ ११ ११) इति । पाठस्तु—' वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा व्यश्नियश्चाऽऽन्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ' इति । वाजादय। सर्वे मम सन्त्विति शेष। । $^{v}$वाज। अन्नं, $^{v}$प्रसव। तस्योत्पत्ति। । $^{v}$अपिज। तस्यैव पुन।पुनरुत्पत्ति। । $^{v}$क्रतु। संकल्पो भोगादिविषयो यागो वा। $^{v}$सुव। तस्यैवोत्पत्तौ हेतुरादित्य। । अथवा वाजादयश्चैत्रादिमासानां नामविशेषा। । तदानीं

७.तै.म४–वासय। ।

आयुर्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतामपा॒नो(१)य॒ज्ञेन॑ कल्पतां व्या॒नो य॒ज्ञेन॑ कल्पतां॒ चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ꣳ श्रोत्रं॑ य॒ज्ञेन॑ कल्पतां॒ मनो॑ य॒ज्ञेन॑ कल्पतां॒ वाग्य॒ज्ञेन॑ कल्पतामा॒त्मा य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पता॒ꣳ सुव॑र्दे॒वाꣳ अ॑गन्मा॒मृता॑ अभूम प्र॒जाप॑तेः प्र॒जा अ॑भूम

आयुः॑ । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । प्रा॒ण इति॑ प्र—अ॒न । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । अ॒पा॒न इत्य॑प—अ॒नः (१) । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । व्या॒न इति॑ वि—अ॒न । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । चक्षुः॑ । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । श्रोत्र॑म् । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । मनः॑ । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । वाक् । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । आ॒त्मा । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । य॒ज्ञः । य॒ज्ञेन॑ । क॒ल्प॒ता॒म् । सुवः॑ । दे॒वान् । अ॒ग॒न्म॒ । अ॒मृताः॑ । अ॒भू॒म॒ । प्र॒जाप॑ते॒रिति॑ प्र॒जा—प॒ते॒ । प्र॒जा इति॑ प्र—जा । अ॒भू॒म॒ ।

ᵛअन्य ᵛसवत्सर मासानामन्ते भव. । ᵛभौवन प्रजापति , भुवनात् विश्वोपादानादुत्पन्नत्वात् । भवत्यस्माद्विश्वमिति ᵛभुवन । औणादिक क्युन्प्रत्यय ( उ २४७ ) । ᵛअधिपति ततोऽप्यधिको विश्वस्य पति विश्वाधिको देव । एते वाजादयो मम सन्तु इति शेष ॥

दशभि कल्पै रोहति—‘ आयुर्यज्ञेन ’ इति ॥ ᵛआयु जीवनम् अन्न वा तत् ᵛयज्ञेन अनेन ᵛकल्पतां मम सपद्यतां यथाश्रुत भूयात् । प्राणादीनां कल्पन स्वकार्यकरणसामर्थ्यम् । पदानि व्याख्यातानि । यज्ञस्य कल्पन अविच्छेदेन प्रवर्तनम् ॥

सर्वे ते प्रीणन्त्विति वाक्यशेषः । चकाराः परस्परसमुच्चयार्था अनुक्तकालादिदेवतासमुच्चयार्था वा । विधत्ते—“ द्वादश वाजप्रसवीयानि जुहोति । द्वादश मासाः संवत्सरः । संवत्सरमेव प्रीणाति । अथो संवत्सरमेवास्मा उपदधाति सुवर्गस्य लोकस्य समष्ट्यै ” ( तैब्रा १ ३ ७ ) इति । वाजशब्दप्रसवशब्दौ येषु कर्मसु मन्त्रत्वेन श्रूयेते तानि कर्माणि वाजप्रसवीयानि । अन्नोत्पत्तिहेतुत्वाद्वा वाजप्रसवीयत्वम् । न केवलमनेन होमेन संवत्सरदेवतायाः प्रीतिः किं त्वस्य यजमानस्य स्वर्गप्राप्तये संवत्सरदेवतां निश्रेणिवदुपधातमाधारमपि करोति ॥

आयुरिति ॥ कल्पः—“ *तं दशभिः कल्पै रोहत्यायुर्यज्ञेन कल्पतामिति ” ( बौश्रौ ११ ११ ) इति । तं यूपम् । कल्पैः कल्पशब्दोपेतैः ॥ पाठस्तु—‘ आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ’ इति । ᵛआत्मा[5] जीवः । ᵛयज्ञेन यज्ञसंबन्धिना यूपारोहणेन । आयुरादयः स्वस्वप्रयोजनसमर्था भवन्तु ॥ विधत्ते—“ दशभिः कल्पै रोहति । नव वै पुरुषे प्राणाः । नाभिर्दशमी । प्राणानेव यथास्थानं कल्पयित्वा । सुवर्गं लोकमेति । एतावद्वै पुरुषस्य स्वम् । यावत् प्राणाः । यावदेवास्यास्ति । तेन सह सुवर्गं लोकमेति ” ( तैब्रा १ ३ ७ ) इति । अन्यत्र “ सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ ” ( तैस ५ ३ २ ) इति श्रुतत्वादिहापि छिद्राभिप्रायः प्राणशब्दः । अनेन कल्पमन्त्रपाठेन प्राणापानचक्षुःश्रोत्रादीन् [6]सर्वान् प्राणान् स्वस्वस्थाने स्थापयित्वा तैस्तत्तत्स्थानैः[7] सह स्वर्गं प्राप्तो भवति ॥

सुवरिति ॥ कल्पः–“ बाहू उद्गृह्णाति सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूमेति ” ( बौश्रौ ११ ११ ) इति । उद्गृहीताभ्यां बाहुभ्यां स्वर्गप्राप्तिमभिनयता[8] यजमानेनेदमुच्यते । वयं

*[ बौश्रौसूत्रे ‘ ताम् ’ इति । ] ।५ म४–आयुः । ६ आ क–‘ सर्वान् ’ नास्ति । ७ ति म४–°स्थानेन च । ८ ति–°भिनीय ।

[ यूपारोहणमन्त्र

समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषोऽन्नाय त्वा न्नाद्याय त्वा वाजाय त्वा वाजजित्यायै त्वाऽमृतमसि पुष्टिरसि प्रजननमसि ॥ ९

[ अपानो वाजाय नव च ]

समिति । अहम् । प्रजयेति प्र—जया । समिति । मया । प्रजेति प्र जा । समिति । अहम् राय । पोषेण । समिति । मया । राय । पोष । अन्नाय । त्वा । अन्नाद्यायेत्यन्न—अद्याय त्वा । वाजाय । त्वा । वाजजित्याया इति वाज—जित्यायै । त्वा । अमृतम । असि । पुष्टि असि । प्रजननमिति प्र—जननम् । असि ॥ ९ ॥

[ मैसं १ ११ ३, कासं १४ १, वासं ९ २०–२१ ]

आरुह्य बाहू उद्गृह्णाति—‘ सुव ’ इति ॥ सुव स्वर्गं देवान् च तत्रस्थान् सर्वा अगन्म गतवन्त वयम् । “ अस्मदो द्वयोश्च ” ( पा १ २ ५९ ) इत्येकस्मिन् बहुवचनम् अनेन निश्रेण्यारोहणेन स्वर्गं देवांश्च प्राप्ता वयमिति । छान्दसो भविष्यति लङ् । अनेन रोहणेन स्वर्गं देवांश्च गमिष्यामो वयमिति । “ आशंसायां भूतवच्च ” ( पा ३ ३ १३२ इति वा भविष्यति भूतप्रत्यय । सांहितिकौ रुत्वानुनासिकौ । अमृता अमरणा अभू भविष्यामो वा । “ नञो जरमर° ” ( पा ६ २ ११६ ) इत्युत्तरपदाद्युदात्तत्वम् । प्रजाप सर्वस्य पितु प्रजा. अभूम वय संप्रति प्रजा संजाता , प्रजाकार्यकरत्वात् । पूर्वमप्रजा इ भाव । “ पत्यावैश्वर्ये ” ( पा ६ २ १८ ) इति प्रजापतौ पूर्वपदप्रकृतिस्वरत्वम् ॥

इमं लोक प्रत्यवेक्षते—‘ समहम् ’ इति ॥ “ ससाधनां क्रियामुपसर्ग आह ( द्र पाभा ५ २ २८ ) । अहं प्रजया अपत्यादिना सं गच्छेय । प्रजा मया सं गच्छताम्

[९]–स्वर्गावस्थितदेवान् प्रति–[९] अगन्म प्राप्ताः स्मः । प्राप्य च अमृताः देवाः अभूम । अतः प्रजाप प्रीतिविषयाः प्रजाः अस्मिन् [१०]भूलोके यज्ञानुष्ठानपरा अभूम ॥ मन्त्रस्य त्रीन् भागान् पृथग्व्याचष्टे– “ सुवर्देवाꣳ अगन्मेत्याह । सुवर्गमेव लोकमेति । अमृता अभूमेत्याह । अमृतमिव हि सुवर्गो लोक प्रजापतेः प्रजा अभूमेत्याह । प्राजापत्यो वा अयं लोकः । अस्मादेव तेन लोकान्नैति ” ( तैब्रा १ ३·७ इति । तेन तृतीयभागपाठेन भूलोकात् सर्वात्मना निर्गतो न भवति ॥

समिति ॥ कल्पः—“ अथेमं लोकं प्रत्यवेक्षते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण स मया रायस्पोष इति ” ( बौश्रौ ११ ११ ) इति ॥ संगतोऽस्मि । संगम्यतामिति यथायोग्यमध्याहर्तव्यम् । आशीःपरत्वेन व्याचष्टे–“समह प्रजया सं मया प्रजा इत्याह । आशिषमेवैतामाशास्ते” (तैब्रा १ ३·७) इति।

अन्नायेति ॥ कल्पः—“ [१३]तमेवमासपुटैर्घ्नन्ति । अन्नाय त्वेति पुरस्तादध्वर्युः, अन्नाद्याय त्वेति दक्षिणतो ब्रह्मा, वाजाय त्वेति पश्चाद्धोता । वाजजित्यायै त्वेत्युत्तरत उद्गाता ” ( बौश्रौ ११ ११–१२ ) इति ॥ [११]ऊषसमपांसव आसाः तानश्वत्थपत्रैः पुटीकृत्य तैरासपुटैर्यूपादवरोहन्तं यजमानं घ्नन्तु । अत एवाऽऽ पस्तम्ब आह—“ तमाश्वत्थैरासपुटैरूषपुटैरन्यैर्वा वैश्या प्रतिदिशमपघ्नन्ति । महर्त्विजो वा दीर्घवंशेऽ प्रबध्य ” ( आपश्रौ १८ ५ १६ ) इति । सामान्येन प्राणिभिर्भोज्यमन्न[१२], राजामात्यादिभिर्भोज्यमन्नाद्यम् ।

९–९ तै ति–स्वर्गं लोकमुपस्थितान् देवान् । १० तै.ति म४–लोके । [१३][ बौश्रौसूत्रे–‘ तवेनम् ’ इति पाठः ] । ११ तै ति म४–ऊषक्षेत्रपांसवः । १२. इ.उ पा–प्राणिभिर्भोग्यं भोज्यमन्नम् ।

तथा [v]राय धनस्य [v]पोषेण [v]अह सगच्छेय । [v]राय च [v]पोष च [v]मया सगच्छताम् । रायो विभक्त्युदात्तत्व सख्व चोक्तम् ( पा ६ १ १७१,८ ३ ५३ ) ॥

यजमानमासपुटैर्घ्नन्ति ऋत्विज —' अन्नाय त्वा ' इत्यादिभि ॥ प्राच्यादिषु अध्वर्युब्रह्म-होत्रुद्गातार । [v]अन्नाय अन्नार्थम् अन्न तव स्यादिति, त्वामह हन्मीति शेष । हनन ताडनम् । अन्नाद्यम् अन्नादनसामर्थ्यम् । छान्दसो यत् । वाज सग्रामसामर्थ्यम् । अन्नमेव वा । वाजजित्या सग्रामे विजय । अन्नविजयो वा । छान्दस क्यप् । व्यत्ययेनान्तोदात्तत्वम् । पित्त्वस्य वा तुगर्थत्वात् ॥

दक्षिण पाद हिरण्य उपावहरति—' अमृतम् ' इति ॥ [v]अमृतम् अमरणहेतु, त्वम् [v]असि ॥

सव्य बस्ताजिने—' पुष्टि ' इति ॥ [v]पुष्टि, पुष्टिहेतु [v]असि [v]प्रजनन प्रजाहेतु [v]असि ॥

इति सप्तमे नवमोऽनुवाक ॥

---

तन्नाप्यपूपादिविशेषो वाजः । तस्य सर्वस्यान्नस्य संपादनं वाजजित्या ॥ त्रिविधं हनन क्रमेण विधत्ते—"आसपुटैर्घ्नन्ति । अन्न वा इयम् । अन्नाद्येनैवैनꣳ समर्धयन्ति । ऊषैर्घ्नन्ति । एते हि साक्षादन्नम् । यदूषाः । साक्षादेवैनमन्नाद्येन समर्धयन्ति " (तैब्रा १ ३ ७) इति । ऊषाणामाधानादिसाधनत्वेन पारलौकिकान्नं प्रति साक्षात् साधनत्वम् ॥ हनने प्रकारविशेषं विधत्ते—" पुरस्तात् प्रत्यञ्च घ्नन्ति । पुरस्ताद्धि प्रतीचीनमन्नमद्यते " (तैब्रा १ ३ ७) इति । हन्यमानस्य पुरस्तादवस्थितो हन्ता प्रत्यञ्च स्वाभिमुख हन्यात् । लोकेऽपि हि पुरतोऽवस्थितात् पात्रात् [13]ग्रासमादाय स्वाभिमुखं तदन्नमद्यते ॥ एतदापस्तम्बेन स्पष्टीकृतम्—" मुखतोऽभिघ्नन्ति । हन्तारं हन्तारमभिपर्यावर्तते " ( आपश्रौ १८ ५ १८–१९ ) इति ॥ ताड्यमानं प्रदेश विधत्ते—" शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते " (तैब्रा १ ३ ७) इति । चतुर्दिक्षु हननं विधत्ते—" दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते " (तैब्रा १ ३ ७) इति ॥

अमृतमिति ॥ कल्पः—" अत्रास्मै *प्रत्यवरोहत आसन्दीं निदधाति । तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यम् । **दक्षिण पादꣳ हिरण्य उपावरोहयत्यमृतमसीति, पुष्टिरसीति प्रजननमसीति सव्यं बस्ताजिने " ( बौश्रौ ११ १२ ) इति ॥ हे हिरण्य, त्व विनाशरहितम् [v]असि । नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्विनश्यति । हे बस्ताजिन, त्वं [v]पुष्टिः [v]असि संवत्सरे बहुपत्योत्पादकत्वात् । एतदेवाभिप्रेत्य [v]प्रजननम् [v]असि इत्युच्यते ॥ हिरण्येऽवरोह विधातु प्रस्तौति—" ईश्वरो वा एष पराङ्प्रदघः । यो यूपꣳ रोहति " (तैब्रा १ ३ ७) इति । यूपमारूढो यजमानः पराङ्भूलोकात् विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति । अथवा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरावर्तते इत्यर्थः ॥ विधत्ते—" हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतꣳ सुवर्गो लोकः । अमृत एव सुवर्गे लोके प्रतितिष्ठति " (तैब्रा १ ३ ७) इति ॥ हिरण्यस्य परिमाण विधत्ते—" शतमान भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति " (तैब्रा १ ३ ७) इति । मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्त भवति । शतसङ्ख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रियाणां मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ॥ बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति—" पुष्ट्यै वा एतद्रूपम् । यदजा । त्रिः संवत्सरस्यान्यान् पशून् परिप्रजायते " (तैब्रा १ ३ ७) इति । संवत्सरे सकृत्प्रसवोपेतानन्यान् गवादिपशून् परित्यज्य संवत्सरे त्रिरपत्यानि [14]प्रसूते, [15]अतोऽस्याः पुष्टिरूपत्वम् ॥ विधत्ते—" बस्ताजिनमध्यवरोहति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति " (तैब्रा १·३ ७) इति ॥

अत्र विनियोगसंग्रहः—

" क्षत्र ताभ्यां क्षत्र दाभ्यां परिधत्तोऽत्र दंपती ।
जाये स्वाम्याह्वयेज्जायी रोहा त प्रतिवक्ति सा ॥ १ ॥

---

१३. आ.क–समादाय । *[ बौश्रौसूत्रे–' प्रत्यवरोहणत ' इति ।] । **[ बौश्रौसूत्रे ' अथ दक्षिणं ' इति ।] । १४ तं.ति–प्रसूयन्ते । १५. तं.ति.म४–ततोऽस्याः ।

अहं स्वाम्याह वाजश्च जुहुयाद्द्वादशाऽऽहुतीः ।
आयुर्दशभिरारोहेत् [१६]स्वयं बाहूद्ग्रहः[१७] सुवः ॥ २ ॥
[१८]समहं प्रेक्षतेऽन्नाय चतुर्भिस्तु महर्त्विजः ।
दिग्भ्यो घ्नन्त्यासपुटकैरमूपुष्टिद्वयात्पदे ॥
स्वर्णबस्तत्वचोर्दद्यात् पञ्चत्रिंशत्त्विहोदिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" [१९]ताप्र्यायहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः ।
गुह्याच्छादनकार्यैक्यादयोग्यत्वात् समुच्चयः ॥ " ( जैन्या १०·४·१४ ) ॥

महाव्रते श्रूयते—" तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी " ( द्र. तैब्रा १·३·७ ) इति। प्रकृतौ " अहतं वासः परिधत्ते " ( बौश्रौ ६·२, तैब्रा ३·८·१ ) इति। घृताक्तं वस्त्रं तार्प्यमित्युच्यते। ताभ्यां तार्प्यदर्भमयाभ्यां दंपत्योरहतं वस्त्रं बाध्यते। कुतः? परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात्। मैवम्। तार्प्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात् परिधानं त्वत्रोपरितनं प्रावरणम्। [२०]तस्मात् कार्यभेदात् समुच्चयः ॥

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

" भवेत् सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥
आनन्तर्यात् प्रकरणात् कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥ " ( जैन्या ३·१·१७–१९ ) ॥

वाजपेयप्रकरणे श्रूयते—" सप्तदशारत्निर्वाजपेयस्य यूपो भवति " ( द्र. तैब्रा १·३·७ ) इति। अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गम्, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात्। प्रकरणं चैवमनुगृह्यते। यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणाऽन्वेतीति प्राप्ते ब्रूमः—सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात् संबध्यते। तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति। तस्यापि पशोर्वाजपेयाङ्गत्वात् पशुद्वारा कर्मणोऽङ्गम्। यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात् पशुव्यवधानमभ्युपेयम्। वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमपि असावभिधत्ते, देवदत्तस्य नप्तेति प्रयोगवत्। ननु सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयमविरुद्धं, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात्। किं च पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम्। सिद्धान्ते तु नासौ दोषः ॥

तत्रैवाष्टमपादे चिन्तितम्—

" वाचयेत् स्वामिनं ज्ञाज्ञौ वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥ " ( जैन्या ३·८·१३ ) ॥

वाजपेये श्रूयते—" क्लृप्तीर्यजमानं वाचयति " इति। ' आयुर्यज्ञेन कल्पताम् ' ( तैसं १·७·९ ) इत्यादयो मन्त्राः क्लृप्तयः। तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्; ' [२१]विद्वांसं वाचयेत् ' इत्येवं[२२] विशेषस्याश्रवणात्। अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं शक्यत्वादिति चेत्। मैवम्। अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात्। तस्मादभिज्ञमेव वाचयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

१६. ति.म४–रूपम्। १७. तं.ति–बाहूद्ग्रहः। १८. शुद्धीकृतः पाठः; हस्तलिखितेषु मुद्रितपुस्तकयोश्च ' स्वं भुवम् ' इति। १९. आ.क.पा–तार्प्यमहतवस्त्रस्य। २०. आ.क.म४–तत्। २१. इ.उ–विद्वांसं वा; पा–विज्ञं वा। २२. इ.उ.पा–' इत्येवम् ' इतस्यानन्तरं ' संशयः '।

वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजानमोषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः ॥
वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः ।
स विराजं पर्येति प्रजानन् प्रजां पुष्टिं वर्धयमानो अस्मे ॥

वाजस्य । इमम् । प्रसव इति प्र—सव । सुषुवे । अग्रे । सोमम् । राजानम् । ओषधीषु । अप्स्वित्यप्—सु ।
ता. । अस्मभ्यमित्यस्म—भ्यम् । मधुमतीरिति मधु—मती । भवन्तु ।
वयम् । राष्ट्रे । जाग्रियाम । पुरोहिता इति पुरः—हिता. ॥
वाजस्य । इदम् । प्रसव इति प्र—सव । एति । बभूव । इमा । च । विश्वा । भुवनानि । सर्वत ।
स । विराजमिति वि—राजम् । परीति । एति । प्रजानन्निति प्र—जानन् ।
प्रजामिति प्र—जाम् । पुष्टिम् । वर्धयमान । अस्मे इति ॥

सप्त वाजप्रसवीयान् जुहोति—‘वाजस्य इमम्’ इति ॥ तत्राद्यास्तिस्रस्त्रिष्टुभ, अन्या अनुष्टुभ । ᵛवाजस्य अन्नस्य ᵛप्रसव उत्पत्ति', उत्पत्तिहेतुर्वा इदं कर्म, देवो वा सविता । इम ᵛसोम राजानम् ᵛओषधीषु ᵛअप्सु च ᵛसुषुवे उदपीपदत् आधिपत्येन तासु प्रवर्तयामास । ᵛअग्रे प्रथममेव ᵛता: तादृश्य सोमसबन्धा ओषधय आपश्च ᵛअस्मभ्यम् अस्मदर्थे ᵛमधुमती मधुमत्य मधुरसवत्यो वा ᵛभवन्तु । “वा छन्दसि” (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् । ᵛवय च तद्वत्तया ᵛराष्ट्रे ᵛजाग्रियाम प्रबुध्येमहि अप्रमत्ता भवेम । “छन्दस्युभयथा” (पा ३ ४ १७) इत्युभयभावात् “रिङ् शयग्लिङ्क्षु” (पा ७ ४ २८), सकोपश्च । ᵛपुरोहिता धर्मकार्येष्वग्रत कृता प्रधानभूता इत्यर्थ । “पुरोऽव्ययम्” (पा १ ४ ६७) इति गतित्वात् “गतिरनन्तर” (पा ६ २ ४९) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

नवमे यूपारोहणमुक्तं दशमेऽन्नहोमा उच्यन्ते । कल्पः—“अथास्यैतत् पुरस्तादौदुम्बरे द्रोणे *सर्वौषधमाज्येन समुदायुतं भवति । तस्यौदुम्बरेण स्रुवेणोपघात सप्तान्नहोमान् जुहोति वाजस्येम प्रसवः सुषुवे अग्रे सोममिति” (बौश्रौ ११७) इति ॥

वाजस्येति ॥ तत्रेयमृक्प्रथमा—‘वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः’ इति ॥ ᵛवाजस्य अन्नस्योत्पादकः परमेश्वरः ᵛओषधीषु ᵛअप्सु च सारभूतमिमं ᵛसोमं [1]वह्निरूपं ᵛराजानं दीप्तिमन्तं पदार्थम् ᵛ[2]-अग्रे सृष्ट्यादौ-[2] ᵛसुषुवे उत्पादयामास । ᵛताः ओषधयः आपश्चास्मदर्थं ᵛमधुमतीः माधुर्योपेता ᵛभवन्तु । ᵛवयमपि अस्मिन् राष्ट्रे ᵛपुरोहिताः यागानुष्ठानार्थौ पुरोगामिनः ᵛजाग्रियाम जागरूका भूयास्म ॥

वाजस्येति ॥ अथ द्वितीया—‘वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः । स विराजं पर्येति प्रजानन् प्रजां पुष्टिं वर्धयमानो अस्मे’ इति ॥ ᵛवाजस्य ᵛप्रसवः परमेश्वरः ᵛइदम्

*[बौश्रौसूत्रे—‘सर्वौषधं दध्नाऽऽज्येन’ इति ।] । १ आ.क तं ति—वह्निरूपम् । २–२ इ.ख तै ति.पा म४—‘अग्रे सृष्ट्यादौ’ नास्ति ।

वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।
अदित्सन्तं दापयतु प्रजानन् रयिं (१) च नः सर्ववीरां नि यच्छतु ॥

वाजस्य । इमाम् । प्रसव इति प्र-सव । शिश्रिये । दिवम् ।
इमा । च । विश्वा । भुवनानि । सम्राडिति सम्-राट् ।
अदित्सन्तम् । दापयतु । प्रजाननिति प्र-जानन् ।
रयिम् (१) । च । नः । सर्ववीरामिति सर्व-वीराम् । नीति । यच्छतु ॥

अथ द्वितीया—वाजस्य प्रसव प्रसवहेतु इदं कर्म आ बभूव उदपादि अनन्तर चेमानि विश्वानि भुवनानि भूतजातानि आ बभूवु । सर्वत सर्वेण प्रकारेण "शेश्छन्दसि" ( पा ६ १ ७० ) इति शेर्लोप । स वाजस्य प्रसव अन्न वा कर्म व विराज प्रजापतिं कर्मपक्षे अन्न पर्येति प्राप्नोति । प्रजानन् प्रजानन्निव मयैतद् कर्तव्यमिति विद्वानिव प्रजां पुष्टिं च वर्धयमान वर्धयितुम् । हेतौ शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वर । अस्मे अस्माक अस्मदर्थे । "सुपां सुलुक्" ( पा ७ १ ३९ ) इति शे-आदेश । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् ॥

अथ तृतीया—वाजस्य प्रसव यथोक्तस्वरूप इमां दिव पृथिवीम् । त्रिष्वपि लोकेषु दिव्शब्दो वर्तते । यथा "तृतीयस्यामितो दिवि" ( तैसं ३ ५ ७ ) । शिश्रिये श्रितवान् इम लोक धारयितुम् । अनेन हि इहस्थानां स्थिति भवति कर्मणा वा वृष्ट्यादिद्वारेण तत

अनुष्ठीयमानं कर्म आ बभूव भावितवान् उत्पादितवान् । इमानि सर्वाणि भुवनानि सर्वत उत्पादितवान् । सः परमेश्वरः अस्मे अस्मदर्थं प्रजां पुष्टिं च वर्धयमानः प्रजानन् अस्मदभिप्रायं प्रकर्षेण जानानः विराजं हूयमानमन्नं परि एति सर्वतः प्राप्नोतु । "अन्नं वै विराट्" ( पैत्रा १५ ) इति श्रुतिः ॥

वाजस्येति ॥ अथ तृतीया—'वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्सन्तं दापयतु प्रजानन् रयिं च नः सर्ववीरां नि यच्छतु' इति ॥ वाजस्य प्रसवः ईश्वरः इमां दिवम् इमानि चान्यानि सर्वाणि भुवनानि शिश्रिये आश्रितवान् ।[4]'स च सम्राट्'[5] सर्वेषां भुवनानां राजा भूत्वा अदित्सन्तं हविर्दातुमनिच्छन्तं मां प्रजानन् मदीयबुद्धिप्रेरणेन हविः दापयतु । ततः नः अस्मभ्यं सर्ववीरां पुत्रभृत्यादयः सर्वे वीरा यस्याः सा सर्ववीरा तादृशीं रयिं धनं च नि यच्छतु नियमेन ददातु ॥

१. ति-सत्वानाम् ।

[3] ते ति म४-किं च इमानि । ४ इ उ ते ति.पा म४-'च' नास्ति । ५ आ.क-'स च सम्राट्' नास्ति ।

अग्ने अच्छा वदेह नः प्रति नः सुमना भव ।
प्र णो यच्छ भुवस्पते धनदा असि नस्त्वम् ॥
प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः ।
प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः ॥

अग्ने । अच्छ । वद । इह । न । प्रतीति । न । सुमना इति सु-मना । भव ।
प्रेति । न । यच्छ । भुव । पते । धनदा इति धन-दा । असि । न । त्वम् ॥
प्रेति । न । यच्छतु । अर्यमा । प्रेति । भग । प्रेति । बृहस्पति ।
प्रेति । देवा । प्रेति । उत । सूनृता । प्रेति । वाक् । देवी । ददातु । न ॥

इमानि विश्वानि भुवनानि सप्रसव शिश्रिये । अनेन हि कर्मणा वृष्ट्यादिद्वारेण विश्वेषा भुवनानां स्थितिर्भवति, यथा—"तस्मादित प्रदान देवा उपजीवन्ति" (तैसं ३ २ ९) इति । सम्राट् सहतदीप्ति न अस्मभ्यम् अदित्सन्त दातुमनिच्छन्त दापयतु । यो हि दित्सन् भवति स हि स्वयमेव ददाति । प्रजानन् प्रज्ञावानिव अस्मद्विषये प्रवर्तताम् । किं च रयिं धन च सर्ववीरपुरुषान् नि यच्छतु नियमयतु ददातु अस्मासु स्थापयतु वा ॥

अथ चतुर्थी—'अग्ने' इति ॥ हे अग्ने, इह अस्मिन् कर्मणि अच्छ वद आभिमुख्येन वद अस्मद्धित ब्रूहि । किं च—न. अस्मान् प्रति सुमना कल्याणमतिश्च भव मनसा च अस्मद्धितमनुचिन्तयेत्यर्थ । किं व क्रियतामिति चेत् । न अस्मभ्य प्र यच्छ देहि, धनमिति गम्यते, 'धनदा असि' इति वक्ष्यमाणत्वात् । "उपसर्गाद्बहुलम्" (पा ८ ४ २८) इति नसो णत्वम् । भुव पते पृथिव्या पते । "षष्ठ्या पतिपुत्र॰" (पा ८ ३ ५३) इति सत्वम् । धनदा धनस्य दाता धन दातु समर्थ त्वम् अस्माकम् असि । तस्माद्देहीति ॥

अथ पञ्चमी—'प्र ण' इति ॥ न. अस्मभ्यम् अर्यमा प्र यच्छतु यावद्दातव्य तत्सर्वं ददातु भग च बृहस्पति च देवा च । उत अपि च सूनृता प्रियवाक् यश

**अग्न इति** ॥ अथ चतुर्थी—'अग्ने अच्छा वदेह नः प्रति न सुमना भव । प्र णो यच्छ भुवस्पते धनदा असि नस्त्वम्' इति ॥ हे अग्ने, इह अस्मिन् कर्मणि नः अस्माकम् अच्छ आभिमुख्येन वद हितं कथय । नः अस्मान् प्रति सुमनाः करुणार्द्रचित्तो भव । हे भुवस्पते भूमिपते, नः अस्मभ्यं प्रकर्षेण यच्छ धनं देहि । यस्मात् त्वम् अस्मत्स्वामी सन् न अस्मभ्यं धनदाः असि ॥

**प्रेति** ॥ अथ पञ्चमी—'प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः । प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः' इति ॥ षड्भिः प्रशब्दैः '¹यच्छत्विति पदे अन्विते¹' सत्येतानि षड्वाक्यानि भवन्ति । अर्यमभगबृहस्पतयो देवेषु समस्वाह्निप्रपरिव्राजकन्यायेन पृथङ्निर्दिश्यन्ते, तेभ्योऽन्ये स्वत्र देवशब्देनोच्यन्ते ।

१–१ आ क—प्रयच्छत्विति प्रददात्वित्यन्वये ।

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वाचं विष्णुꣳ सरस्वतीꣳ सवितारं (२) च वाजिनम् ॥
सोमꣳ राजानं वरुणमग्निमन्वारभामहे ।
आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥

अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ।
वाचम् । विष्णुम् । सरस्वतीम् । सवितारम् (२) । च । वाजिनम् ॥
सोमम् । राजानम् । वरुणम् । अग्निम् । अन्वारभामह इत्यनु—आरभामहे ॥
आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम ॥

[V]वाक् [V]देवी सरस्वती च [V]प्र [V]ददातु अस्मभ्यम् । बृहस्पतिशब्दे सुट्स्वरायुक्तौ (द्र पाभा ६ १ १५७, पा ६ २ १४० ) । शोभना ऋता च सूनृता । पृषोदरादि (पा ६ ३ १०९)॥

षष्ठी—'अर्यमणम्' इति ॥ हे अग्ने, [V]दानाय [V]चोदय अभिमतानि दापय । वाग्ग्रहण सरस्वतीविशेषण नदीनिवृत्त्यर्थम् । सवितृविशेषण वाजिग्रहणम् ॥

सप्तमी—'सोमम्' इति ॥ सोमादीन् [V]अग्निं च त्वाम् [V]अन्वारभामहे । यूयमेव प्रथमं कर्म आरभध्वम्, अभिमतप्रदत्वात्, वय तु युष्मानन्वारभामहे । यद्वा—अन्वारम्भणमवलम्बनम् ।

ते[7] सर्वे [V]नः अस्मभ्य धन प्रयच्छन्तु । उतापि च [V]सूनृता प्रियवागभिमानिनी देवता या चान्यवाङ्मात्राभिमानिनी देवता ते उभे धनं प्रयच्छताम् ॥

अर्यमणमिति ॥ अथ षष्ठी—'अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनम्' इति ॥ हे [V]ईश्वर, पुनरस्मभ्यं दातुं धनस्य [V]दानाय अर्यमादीन् [V]चोदय प्रेरय । वाक्सरस्वत्योः पूर्वोक्तसूनृतावाचोरिव भेदो द्रष्टव्यः । वाजिनमन्नाधिपतिम् ॥

सोममिति ॥ अथ सप्तमी—'सोमꣳ राजानं वरुणमग्निमन्वारभामहे । आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम्' इति ॥ वयं सोमराजादीन् देवान्[8] प्रथमतः कर्मारम्भकाननुसृत्य पश्चादारभामहे अतस्ते[9] सर्वेऽनुगृह्णन्तु ॥ विधत्ते—"सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्येवान्नानि । तान्येवावरुन्धे । सप्त ग्राम्या ओषधयः । सप्ताऽऽरण्याः । उभयीषामवरुद्ध्यै" (तैब्रा १ ३ ८) इति । अन्नहेतूनामोषधीनां सप्तत्वात्तत्कार्याणामन्नानामपि सप्तत्वम् । ओषधीनां द्वेधा[10] सप्तत्वमापस्तम्बोऽग्निचयने दर्शयति—"तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमा वेणुः श्यामाका नीवारा जर्तिलाश्च गवीधुका आरण्यजा मार्कटका विज्ञेयाः । गार्मुतसप्तमाः कुलत्थसप्तमा वा सप्त ग्राम्याः कृष्टे । सप्ताऽऽरण्या अकृष्टे" (आपश्रौ १६.१९ १३–१४) इति ॥ एकैकस्यान्नस्य पृथगेव होमं विधत्ते—"अन्नस्यान्नस्य जुहोति । अन्नस्यान्नस्यावरुद्ध्यै" (तैब्रा १ ३ ८) इति । तमिमं पक्षमापस्तम्बो दर्शयति—"वाजप्रसवीयं जुहोति । सप्त ग्राम्या ओषधयः सप्ताऽऽरण्याः । पृथगन्नानि मवीकृत्यौदुम्बरेण स्रुवेण वाजस्येमं प्रसवः सुषुव इति

७ इ.उ.तै ति म४-एते । ८ आ क पा हा-'देवान्' नास्ति । ९ तै.ति म४-ततस्ते । १० म४-द्विधा, आ क,पा-'द्वेधा' नास्ति ।

[अभिषेकहोमाः ]

**यस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या॰ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभि षिञ्चामीन्द्रस्य* बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामि॥ १०॥**

[ रयि॰ सवितार॰ षट्त्रिꣳशच्च । ]

यस्य । त्वा । सवितुः । प्रसव इति प्र–सवे । अश्विनोः । बाहुभ्यामिति बाहु–भ्याम् । पूष्णः । हस्ताभ्याम् । सरस्वत्यै । वाचः । यन्तुः । यन्त्रेण । अग्नेः । त्वा । साम्राज्येनेति साम्–राज्येन । अभीति । सिञ्चामि । इन्द्रस्य । बृहस्पतेः । त्वा । साम्राज्येनेति साम्–राज्येन । अभीति । सिञ्चामि ॥ १० ॥

[ मैस १ ११ ४, कासं १४ २; वासं ९ २३–३० ]

अस्मिन् कर्मणि सोमादीनेवावलम्बामह इति । यद्वा—अन्वारम्भण पश्चादारम्भणम् । रभिश्च याञ्चायाम्[M] । युष्मद्दानानन्तर पुन पुनर्युष्मानेव वय याचामहे, न अन्यान् याचिष्महीति । ʳआदित्यान् अप्येत्रमिति ॥

अभिषेकमन्त्रा —'देवस्य' इत्यादय ॥ सावित्रो व्याख्यात ( तैस १ १ ४ ) । ᵛसवितु ʳदेवस्य अनुज्ञाने ᵛअश्विनो एव ᵛबाहुभ्यां ᵛपूष्ण एव ᵛहस्ताभ्यां, न तु आत्मीयाभ्यामिति । ʳसरस्वत्यै सरस्वत्या । षष्ठ्यर्थे चतुर्थी ( पा २ ३ ६२ वा १ ) । सरस्वत्या ᵛवाच सबन्धिना ᵛयन्तु ᵛयन्त्रेण यन्तुरप्यन्यस्य यन्त्रणेन यमनेन । सामान्येन वा विवक्ष्यते । यन्त्र्या वाच सरस्वत्या यन्त्रणेन, ᵛअग्ने च ᵛसाम्राज्येन त्वाम् ᵛअभि ᵛषिञ्चामि । सगत राजतीति सम्राट् । 'मो राजि सम क्वौ" ( पा ८ ३ २५ ) । "गुणवचनब्राह्मणादिभ्य°" ( पा ५ १ १२४ ) इति ष्यञ् । एवम् 'इन्द्रस्य त्वा साम्राज्येन', 'बृहस्पतेस्त्वा साम्राज्येन' इत्येतौ गतौ ॥

इति सप्तमे दशमोऽनुवाक ॥

ग्राम्याणि हुत्वाऽऽरण्यानि जुहोति" (आपश्रौ १७ १९ १–३) इति ॥ इदानीं बौधायनाभिमतं [11]सर्वाण्यन्नान्येकीकृत्य होम विधत्ते—"यद्वाजपेययाज्यनवरुद्धस्याश्नीयात् । अवरुद्धेन व्यृध्येत । सर्वस्य समवदाय जुहोति । अनवरुद्धस्यावरुद्ध्यै" (तैब्रा १ ३ ८) इति । होमकाले यदन्नमवरुद्धं स्वीकृतं तदुपेक्ष्य यदस्वीकृतं[12] वाजपेययाजी कालान्तरेऽश्नीयात् । तदानीमुपक्षितेन यागकालीनेनान्नेनासौ वियुक्तो भवेत् । अतः सर्वमेकीकृत्य होमे सर्वस्यापि यागकाले स्वीकृतत्वेन दोषापादकमस्वीकृतं किंचिन्न भवेत् । अत अस्वीकृतस्य सर्वस्यापि यागकाले स्वीकाराय[13] मिलित्वा होम इत्यर्थः ॥ होमे साधनविशेषं विधत्ते—"औदुम्बरेण स्रुवेण जुहोति । ऊर्ग्वा अन्नमुदुम्बरः । ऊर्जं एवान्नाद्यस्यावरुन्धे" (तैब्रा १,३,८) इति ॥ ऊर्ग्वा अन्नं बलप्रदमन्नमत एव देशविशेषे [14]व्याह्रियते ॥

देवस्येति ॥ कल्पः—"अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[15] । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य *पुरस्तात् प्रत्यञ्चमभिषिञ्चति । शीर्षतोऽभिषिञ्चन्नामुखादन्ववस्रावयति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या॰ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभि षिञ्चामीन्द्रस्य त्वा बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामि" (बौश्रौ ११ ७) इति ॥ अत्र 'इन्द्रस्य' इत्यस्मिन् मध्यममन्त्रेऽनुषङ्गसूचनायामाम्नातोऽपि त्वाशब्दः सूत्रकारेण पठितः । 'देवस्य त्वा' इत्यादिव्याख्यातः (तैसं १ १·५) । या सरस्वती वागभिमानिदेवता या च वाक्शब्दा

[M][ याच्ञायां रभि धातुपाठे नोपलभ्यते । ] ।

*संहितायामनुषङ्गस्येदं चिह्नम् । ११ आ क-सर्वाण्येकीकृत्य । १२ इ उ तं ति म४—यदस्वीकृतम् । १३ इ उ पा—स्वीकारोऽयम् । १४ तै– न व्याह्रियते, ति– न ह्याह्रियते; आ क–व्यहृयते । १५ आ.क.म४.ढा–लोमाऽऽस्तृणाति । * [ बौश्रौसूत्रे–'सर्वौषधेन पुरस्तात्' इति । ]

अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत् सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत् पूषा पञ्चाक्षरेण पङ्क्तिमुदजयद्-

अग्निः । एकाक्षरेणेत्येक–अक्षरेण । वाचम् । उदिति । अजयत् । अश्विनौ । द्व्यक्षरेणेति द्वि–अक्षरेण । प्राणापानाविति प्राण–अपानौ । उदिति । अजयताम् । विष्णुः । त्र्यक्षरेणेति त्रि–अक्षरेण । त्रीन् । लोकान् । उदिति । अजयत् । सोमः । चतुरक्षरेणेति चतुः–अक्षरेण । चतुष्पद इति चतुः–पदः । पशून् । उदिति । अजयत् । पूषा । पञ्चाक्षरेणेति पञ्च–अक्षरेण । पङ्क्तिम् । उदिति । अजयत् ।

---

उज्जितीः सप्तदश वाचयति—'अग्नि' इत्याद्याः ॥ एकमक्षरमस्य तेन एकाक्षरेण छन्दसा अग्निः वाचम् उदजयत् उज्जितवान् तद्वदहमप्येकाक्षरेण वाचमुज्जीयासमिति । एवमुक्तादीन्यष्टयन्तानि द्रष्टव्यानि । सप्तदश छन्दांसि स्तूयन्ते । केचिदाहुः—"आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदश प्रजापतिः" (तैसं १ ६ ११) इत्यस्यैकाक्षरादारभ्योच्यन्ते इति । तेषां बहुव्रीहिस्वरो (पा ६ २ १) नोपपद्यते । "ता वा एता उज्जितयो व्याख्यायन्ते । यज्ञस्य सर्वत्वाय । देवतानामनिर्भागाय" (तैब्रा १ ३ २) इत्यादि ब्राह्मणम् ॥

'अश्विनौ' इत्यादयो निगदसिद्धाः । चतुष्पदः चत्वारः पादा येषाम् । "संख्यासुपूर्वस्य" (पा ५ ४ १४०) इति पादस्य लोपे "पादः पत्" (पा ६ ४ १३०) इति

---

दशमे [1]"अन्नहोमाः उक्ताः"[1] । एकादश उज्जितिमन्त्रा उच्यन्ते ।

अग्निरिति ॥ कल्पः—"अथ यजमानमन्वारभ्यायोज्जितीर्वाचयत्यग्निरेकाक्षरेण वाचमुदजयदिति सप्तदश" (बौश्रौ ११ ७) इति । पाठस्तु—'अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रील्लोँकानुदजयत सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत् पूषा पञ्चाक्षरेण पङ्क्तिम

---

१–१ आ क हा—अन्नहोमा उक्ताः ।

धाता षडक्षरेण षडृतूनुदजयन्मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्वरीमुदजयन् बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयद्-(१) वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन् वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन्रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत् प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत् ॥ ११ ॥

[ त्रिवृतꣳ स्तोममुदजयत्त षट्चत्वारिꣳशच्च । ]

धाता । षडक्षरेणेति षट्-अक्षरेण । षट् । ऋतून् । उदिति । अजयत् । मरुतः । सप्ताक्षरेणेति सप्त-अक्षरेण । सप्तपदामिति सप्त-पदाम् । शक्वरीम् । उदिति । अजयन् । बृहस्पतिः । अष्टाक्षरेणेत्यष्टा-अक्षरेण । गायत्रीम् । उदिति । अजयत् । मित्रः । नवाक्षरेणेति नव-अक्षरेण । त्रिवृतमिति त्रि-वृतम् । स्तोमम् । उदिति । अजयत् (१) । वरुणः । दशाक्षरेणेति दश-अक्षरेण । विराजमिति वि-राजम् । उदिति । अजयत् । इन्द्रः । एकादशाक्षरेणेत्येकादश-अक्षरेण । त्रिष्टुभम् । उदिति । अजयत् । विश्वे । देवाः । द्वादशाक्षरेणेति द्वादश-अक्षरेण । जगतीम् । उदिति । अजयन् । वसवः । त्रयोदशाक्षरेणेति त्रयोदश-अक्षरेण । त्रयोदशमिति त्रयः-दशम् । स्तोमम् । उदिति । अजयन् । रुद्राः । चतुर्दशाक्षरेणेति चतुर्दश-अक्षरेण । चतुर्दशमिति चतुः-दशम् । स्तोमम् । उदिति । अजयन् । आदित्याः । पञ्चदशाक्षरेणेति पञ्चदश-अक्षरेण । पञ्चदशमिति पञ्च-दशम् । स्तोमम् । उदिति । अजयन् । अदितिः । षोडशाक्षरेणेति षोडश-अक्षरेण । षोडशम् । स्तोमम् । उदिति । अजयत् । प्रजापतिरिति प्रजा-पतिः । सप्तदशाक्षरेणेति सप्तदश-अक्षरेण । सप्तदशमिति सप्त-दशम् । स्तोमम् । उदिति । अजयत् ॥ ११ ॥

[ मैसं १ ११·१०, कासं १४ ४; कासं ९·२१-२४ ]

ाव । पङ्क्ति पञ्चपदा । सप्तपदा । " टाबृचि " ( पा ४ १ ९ ) इति टाप् । [*]बृहस्पति ख्यात ( तैसं १ ७ १० ) । ' त्रिवृतम् ' इति । अवयवेषु अवयविनि च तिस्रो वृत्तयो यस्य । बहुव्रीहौ त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् ( पा ६ २ १९९ वा १ ) । नवस्तोत्रीयस्तोम वृत् । विराट् दशाक्षरा, अत्र चोच्यते । त्रयोदश स्तोमा यथासभव द्रष्टव्याः । यथा द्वाभ्यां ष्टकाभ्यामेकेन च त्रिकेण त्रयोदशेत्यादि । तत्र त्रयोदश स्तोत्रीया परिमाणमस्येति " स्तोमे डविधि पञ्चदशाद्यर्थम् " ( पा ५ १ ५८ वा ८ ) इति ड । एव सर्वत्र । त्रयोदशषोडशाना स्तित्वे इदमेव प्रमाणम् ॥

इति सप्तमे एकादशोऽनुवाक ॥

---

उदजयन्धाता षडक्षरेण षडृतूनुदजयन्मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्वरीमुदजयन् बृहस्पतिरष्टाक्षरेण गायत्री उदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयद्वरुणो दशाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयद्वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण गतीमुदजयन् वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन् रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयन्ना स्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत् प्रजापतिः सप्त ताक्षरेण सप्तदशꣳ स्तोममुदजयत् ' इति ॥ ' आ श्रावय ' ( तैस १ ६ ११ ) इत्यादिक सप्तदशाक्षरे न्त्रसंघ [२]-एकैकाक्षरवृद्ध्या तत्तन्मन्त्रं-[२] पठित्वा तत्सामर्थ्यादग्न्यादयो वागादीनुदजयन् । अथ वा न्यन्तर एकाक्षरो [३]मन्त्रः शास्त्रप्रसिद्ध्या [४]वागग्निबीजं[*] तेन [५]एकाक्षरेण मन्त्रेणाग्निर्वागुज्जयः । [५]द्व्यक्षरेण अपानमन्त्रेण प्राणापानात्मकेनाश्विनोः प्राणापानोज्जयः । एवमन्येऽपि त्र्यक्षरादिमन्त्रा यथायोग्यमुन्नेयाः । न्त्राक्षरसंख्यानुसारेण लोकत्रयादिजयो विज्ञेयः । त्रिवृत्स्तोमगतानामृचां नवसंख्योपेतत्वात् तज्जयो ष्टव्यः । त्रयोदशस्तोमादावपि तिसृणामृचामावृत्तिविशेषेण[६] तत्तत्संख्या द्रष्टव्या । एतदुज्जितिविधिस्तु ता या एता उज्जितयो व्याख्यायन्ते " ( तैब्रा १ ३ २ ) इत्येतावता पूर्वमेवास्माभिर्व्याख्यातः ोऽयमत्रोत्कर्षणीयः ॥

अत्र विनियोगसंग्रहः—

" अग्निः सप्तदशाम्नाता उज्जितीर्वाचयेदमू ।
यजमान [६]रथेष्वेषु धावत्स्वध्वर्युरादरात् ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

२ ति-एकैकाक्षरसंख्यया तन्मन्त्रम्, म४-एकैकाक्षरवृद्ध्या यन्मन्त्रम । ३ आ-ह्रा,मन्त्र° । ४ तं म८-वाग्बीजम् । *( महीदासविरचित मातृकानिघण्टुः —" क्रोधिनी च भुजङ्गेशो वाली रुधिर पावकौ । रोचिष्मान् दक्षिणांशश्च रुचिरो रेफ इरितः" । द्र मध्वाचार्यकृतनिघण्टुः—" असृग् यातुष इषघ्नो भुजङ्गेशो हुताशनः । दीपको ज्वलनश्चैव " । द्र भूतडामरतन्त्रम्– " नादबिन्दुसमायुक्तो द्वादशस्तु स्वरो भगः । योनिः सरस्वतीबीजमधरं वाग्भव च वाक् ॥ ऐं ॥ ) । ५ इ उ पा–°त्तिशेषेण । ६, तं-रथेष्टेषु; ति-रथेष्टेषु ।

उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽस्यप्सुषदं त्वा

उपयामगृहीत इत्युपयाम-गृहीत । असि । नृषदमिति नृ सदम् । त्वा । द्रुषदमिति द्रु-सदम् । भुवनसदमिति भुवन-सदम् । इन्द्राय । जुष्टम । गृह्णामि । एष । ते । योनिं । इन्द्राय । त्वा । उपयामगृहीत इत्युपयाम-गृहीत । असि । अप्सुषदमित्यप्सु-सदम् । त्वा ।

पश्चैन्द्रानतिग्राह्यान् ग्रहान् गृह्णाति—' उपयामगृहीतोऽसि ' इत्यादिभि ॥ ' उपयाम गृहीतोऽसि ' इति व्याख्यातम् ( तैसं १ ४ २ ) । " इयं वा उपयाम " ( तैस ६ ५ ८ ), तयैव गृहीतोऽसीति हे ग्रह, त्वा त्वां नृषद नृषु प्रजासु सीदति स्थित्यर्थं तेषां नृषत् । एवमुत्तरत्र । सुषामादित्वात षत्वम ( पा ८.३ ९८ ), " सदिरप्रतेः " ( पा ८ ३ ६६ ) इति वा सर्वविषय द्रष्टव्यम् । द्रुषदं " वनस्पतयो वै द्रु " ( तैब्रा १ ३ ९ ) । भुवनसदं भुवन सर्वभूतजातम् । इन्द्राय जुष्ट प्रिय गृह्णामि इति व्याख्यातप्रायम् ॥

गृहीत्वा यथायतन सादयति—एष ते योनि कारण इन्द्राय त्वा सादयामि । व्याख्यातमेव ( तैसं १ ४.१२ ) ॥

द्वितीयम्—' उपयामगृहीतोऽसि ' इति ॥ त्वा त्वाम् अप्सुषदम । " तत्पुरुषे कृति बहुलम " ( पा ६.३.१४ ) इत्यलुक् । अन्नादीनामुत्पादकतया तत्र सीदतीति । [1]यथा— " अग्नौ प्रास्ताहुतिः सम्यक् " ( मनुस्मृति ३ ७६ ) इत्यादि । शेष समानम् ॥

पञ्चदशो वज्रितिसंज्ञा उक्ताः । द्वादशोऽतिग्राह्यमन्त्रा उच्यन्ते ।

उपयामगृहीत इति ॥ कल्पः—" आग्रयणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान् गृह्णात्युपयाम गृहीतोऽसि नृषदं त्वा द्रुषदमित्येताभिः पञ्चभिः " ( बौश्रौ ११ ६ ) इति ॥ तत्र प्रथममन्त्रपाठस्तु— ' उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा ' इति । हे प्रथमातिग्राह्य, त्वमुपयामेन पृथिव्यात्मकेन पात्रेण गृहीतः असि । " इयं वा उपयामः " ( तैसं ६ ५ ८ ) इति पूर्वमुदाहृतम् । मनुष्येषु वनस्पतिषु भुवनेषु च [1]स्वामित्वेनावस्थितम् इन्द्राय प्रियं त्वां गृह्णामि । एषः स्वरप्रदेशः ते स्थानं तस्मात् इन्द्राय त्वामहं सादयामि । ' एषः ' इत्यादिः सादनमन्त्रः ॥

नृषदमित्यादिपदाभिप्रायं [2]व्याचष्टे—" नृषदं त्वेत्याह । प्रजा वै नृन् । प्रजानामेवैतेन सूयते । द्रुषदमित्याह । वनस्पतयो वै द्रु । वनस्पतीनामेवैतेन सूयते । भुवनसदमित्याह । यदा वै वसीयान् भवति । भुवनमगन्निति वै तमाहुः । भुवनमेवैतेन गच्छति " ( तैब्रा १ ३ ९ ) इति । नृन् नरस्तेषु

१. मै–' यथा ' नास्ति ।

१. इ स पा–स्वस्वामित्वेन । २. आ.क.हा–आह ।

[स]दं व्योमसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽसि [पृ]थिविषदं त्वाऽन्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा ।

[घृत]सदमिति घृत–सदम् । व्योमसदमिति व्योम–सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा । उपयामगृहीत इत्युपयाम गृहीतः । असि । पृथिविषदमिति पृथिवि–सदम् । त्वा । अन्तरिक्षसदमित्यन्तरिक्ष–सदम् । नाकसदमिति नाक–सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा ॥

अथ तृतीयम्—‘ उपयामगृहीतोऽसि ’ इति ॥ पृथिविषदम् । “ ङ्यापोः संज्ञा-[छन्द]सोः ” (पा ६·३·६३) इति ह्रस्वम् । पूर्ववत् भूतिहेतुत्वेन पृथिव्यादिषु सदनम् । गतमन्यत् ॥

अथ चतुर्थम्—‘ ये ग्रहाः ’ इति पञ्चपदया पङ्क्त्या ॥ ये ग्रहाः पञ्चजनीनाः पञ्च-[ज]नेभ्यो देवादिभ्यो वा हिताः । “ पञ्चजनादुपसंख्यानम् ” ( पा ५·१·९, वा १ ) इति खः । सर्वे-[ष]ामिति प्राप्ताः पञ्चजनीनाः येषां मध्ये तिस्रः परमजाः प्रकृतयः परमायां प्रकृत्यवस्थायां जाताः [आ]म्नाताः परमजाः आग्नेयेन्द्रसौर्याः ; प्रकृतिरूपेण विवक्षितत्वात् । ग्रहेष्वपि वर्तमानस्त्रिलिङ्गो [व]र्तते । “ तिसृभ्यो जसः ” ( पा ६·१·१६६ ) इति जस उदात्तत्वम् । किंच—येषां प्रभावेन

[वर्ष]तीति नृषत्तं नृषदम् । एतेन यजुष्पाठेन प्रजानां मध्ये सूयते । स्वामित्वेनाऽभिषिच्यते । यदा लोके [व]सीयान् धनाढ्यो भवति तदा तं पुरुषं स्वामित्वेन कृत्स्नं भुवनमगन् प्राप्तवानिति जना आहुः ॥

उपयामगृहीतोऽसि ॥ अथ द्वितीयग्रहमन्त्रः—‘ उपयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योम-[स]दमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा ’ इति ॥ पूर्ववद्व्याख्येयम् ॥ एतद्वाभिप्रेत्य तथैव व्याचष्टे– “ अप्सुषदं त्वा घृतसदमित्याह । अपामेवैतेन घृतस्य सूयते । व्योमसदमित्याह । यदा वै वसीयान् भवति । [व्य]ोमागमिति वै तमाहुः । व्योमैवैतेन गच्छति ” ( तैब्रा १·३·९ ) इति ॥ अप्स्वित्यादिपाठेन तत्स्वा-[मित्व]त्वेनाभिषेकः । धनाढ्यस्य व्योमगामित्वं नाम गजाश्वाद्यारोहणम् ॥

उपयामगृहीतोऽसि ॥ अथ तृतीयग्रहमन्त्रः—‘ उपयामगृहीतोऽसि पृथिविषदं त्वाऽन्तरिक्ष-[स]दं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा ’ इति । पूर्ववद्व्याचष्टे—“ पृथिविषदं त्वान्तरिक्ष-[स]दमित्याह । एषामेवैतेन लोकानां सूयते । तस्माद्वाजपेययाजी न कंचन प्रत्यवरोहति । अग्नीव हि देवतामा[भि]षि[च्य]ते । नाकसदमित्याह । यदा वै वसीयान् भवति । नाकमगमिति वै तमाहुः । नाकमेवैतेन गच्छति ” ( तैब्रा १·३·९ ) इति । तस्मादयं वाजपेययागेनाग्न्यादिदेवतानामपि मध्येऽभिषिक्त इव भवति । [‘अ]ग्नेस्त्वा साम्राज्येनाऽभिषिञ्चामि ’ इत्यादिमन्त्रेष्वग्न्यादीनां यत्तत् साम्राज्यं तेन निमित्तेनाभिषेक-[प्र]योक्तत्वान्न प्रत्यवरोहति । अपि तस्माद्देवतानां मध्येऽभिषिक्तत्वाद्वषट्देव कमपि मनुष्यं प्रति गजादि-[वा]हनात् नावरोहेत् । नावरोहेदिति विधिः । अत एवाऽऽपस्तम्ब आह—“ यावज्जीवं न कंचन प्रत्यव-[रो]हेत् । बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत ” ( आपश्रौ १८·७·१६–१७ ) इति ॥

२. मै–‘ जसः ’ नास्ति ।

३. तै,ति.म४–पदपाठेन । ४. तै.ति.म४–प्राहुः । ५. म४–अप्स्वादि° । ६. म४–आढ्यस्य । [७]. ति.म४.हा–गजाश्वारो° । ८. आ.हा–°ग्रहणमन्त्रः । ९. इ.उ.पा–च; तै–इह । १०. आ.क–नावरोहति ।

ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः ।
दैव्यः कोशः (१) समुब्जितः ।
तेषां विशिप्रियाणामिषमूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा ॥

ये । ग्रहाः । पञ्चजनीना इति पञ्च-जनीनाः ।
येषाम् । तिस्रः । परमजा इति परम-जाः ।
दैव्यः । कोशः (१) । समुब्जित इति सम्-उब्जितः ।
तेषाम् । विशिप्रियाणामिति वि-शिप्रियाणाम् । इषम् । ऊर्जम् । समिति । अग्रभीम् ।
एषः । ते । योनिः । इन्द्राय । त्वा ॥

Vदैव्यः दिवि भवः Vकोषः मेघः Vसमुब्जितः अधोमुखः जलस्रावणाय आर्जवमासादितः वर्षाभिमुखः कृत इत्यर्थः । जलकवद्रक्तस्रावणाय । उब्ज आर्जवे । Vतेषां तेभ्यः । तादर्थ्यचतुर्थ्याः षष्ठी । Vविशिप्रियाणां विविधहनुपर्यन्तानाम् Vइषम् अन्नम् Vऊर्जं रसं च Vसमग्रभीं संगृह्णामि । 'उपयामगृहीतोऽसि' इति गृह्णाति । छान्दसे लुङि "अमो मश्" (पा ७·१·४० ), "हृग्रहोर्भः°" (पा. ८·२·३२ वा १) ॥

'एष ते' इत्यादि ॥ गतम् ॥

**य इति** ॥ अथ चतुर्थग्रहमन्त्रः[११]—'ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः । दैव्यः कोशः समुब्जितः । तेषां विशिप्रियाणामिषमूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा' इति ॥ V[१२]ये एते[१२] अतिग्राह्यरूपाः Vग्रहाः Vपञ्चजनीनाः पञ्चजनेभ्यो देवमनुष्यासुररक्षोगन्धर्वेभ्यो निषादपञ्चमेभ्यो वर्णेभ्यो वा हिताः । Vयेषाम् अतिग्राह्याणां Vतिस्रः आग्नेयैन्द्रसौर्याख्यातिग्राह्यरूपाः Vपरमजाः प्रकृतयः । किं च Vयेषां प्रभावेण Vदैव्यः दिवि भवः Vकोशः मेघः Vसमुब्जितः सम्यङ्न्युब्जीकृत[१३] वर्षाभिमुखः कृत इत्यर्थः । विविधानि शिप्रियाणि[१४] [१५]हनुस्थानीयानि पात्राग्राणि तैरुपेता[१५] विशिप्रियास्तादृशानां तेषामतिग्राह्याणां पूरणाय Vइषम् अन्नसदृशम् Vऊर्जं बलप्रदं सोमरसं Vसमग्रभीं सम्यक् गृह्णामि ॥ पञ्चजनीनशब्दाभिप्रायं दर्शयति—"ये ग्रहाः पञ्चजनीना इत्याह । पञ्चजनानामेवैतेन सूयते" (तैब्रा १·३·९) इति । एतेन मन्त्रपाठेन निषादपञ्चमानां वर्णानां स्वामित्वेनाभिषिच्यते ॥

**अपामिति** ॥ अथ पञ्चमग्रहमन्त्रः[१६]—'अपाꣳ रसमुद्वयसꣳ सूर्यरश्मिꣳ समाभृतम् । अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा' इति ॥ हे अतिग्राह्याः, Vवः युष्माकं मध्ये Vउत्तमं चरमं ग्रहं Vतं तथाविधं गृह्णामि । किंविधम्? Vअपां रसं [१७]सारम् । उदकस्यैव सोमरसत्वेन [१८]परिणतत्वात् । उद्भूतं वयोऽन्नं जीवनं वा यस्य तम् Vउद्वयसम् । सोमरसो ह्यन्नभूतो जीवनहेतुश्च ।

११. आ-ग्रहणमन्त्रः । १२-१२. आ.क.हा-ये; ति-एते । १३. इ.उ.तं.ति.म४-ऋजूकृतः । १४. आ.क.म४.हा-शिप्राणि । १५-१५. इ-हनुस्थानानि पात्राग्राणि तत्पर्यन्ता; उ-हनुस्थानानि ग्रहपात्राणि तत्पर्यन्ता; पा.हा-हनुस्थानानि पात्राग्राणि तैरुपेता; तं.ति.म४-हनुस्थानीयानि पात्राग्राणि तत्पर्यन्ता । १६. इ.उ.पा.हा-°ग्रहः; आ-°ग्रहणमन्त्रः । १७. आ.क.हा-'सारम्' नास्ति । १८. आ.क.हा-परिणामात् ।

अपाꣳ रसमुद्वयसꣳ सूर्यरश्मिꣳ समाभृतम् ।
अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा ॥
अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।

अपाम् । रसम् । उद्वयसमित्युत्–वयसम् ।
सूर्य–रश्मिमिति सूर्य–रश्मिम् । समाभृतमिति सम्–आभृतम् ।
अपाम् । रसस्य । यः । रसः । तम् । वः । गृह्णामि । उत्तममित्युत्–तमम् ।
एषः । ते । योनिः । इन्द्राय । त्वा ॥
अया । विष्ठा इति वि–स्थाः । जनयन् । कर्वराणि ।
सः । हि । घृणिः । उरुः । वराय । गातुः ।

अथ पञ्चमम्—‘ अपां रसम् ’ इत्यनुष्टुप् ॥ [v]अपां [v]रसं सारम् [v]उद्वयसम् उद्गतान्नम् उद्गतजीवनं वा, [v]सूर्यरश्मिं पावकरश्मिम् । यद्वा—सूर्यो रश्मिस्थानीयो यस्य । यद्वा—तृतीयाबहुवचनस्य स्थाने व्यत्ययेन द्वितीयैकवचनम् । सूर्यरश्मिभिः [v]समाभृतं सम्यक् समन्ताच्च धृतं, सम्यगाहृतं वा । “ हृग्रहोर्भः° ” ( पा ८·२·३२ वा १ ) । किं च—तस्य [v]अपां [v]रसस्य [v]यः [v]रसः अन्नं [v]तम् [v]उत्तमं तस्मादुत्तमाय प्रशस्ताय जलरसायान्नाय च [v]वः युष्मान् [v]गृह्णामि इति । ‘ उपयामगृहीतोऽसि ’ इति गृह्णाति । क्रियाविशेषणं वा ‘ उत्तमं गृह्णामि ’ इति । तादर्थ्यात् ताच्छब्द्यम् । उत्तमशब्द उञ्छादिः ( पा ६·१·१६० ) । “ ऊडिदम्° ” ( पा ६·१·१७१ ) इत्यद्भ्यः षष्ठ्या उदात्तत्वम् । गतमन्यत् ॥

सुराग्रहान् गृह्णाति—‘ अया विष्ठाः ’ इति त्रिष्टुभा यजुरन्तया ॥ [v]अया अनेन ग्रहणेन । इदमस्तृतीयाया याजादेशः । “ हलि लोपः ” ( पा ७·२·११३ ) । यद्वा—अया अस्मिन् जगति विष्ठाः । सप्तम्या याजादेशः ( पा ७·१·३९ ) । [v]विष्ठाः विविधं तिष्ठन्तीति । “ क्विप् च ”

“ अपाम सोमममृता अभूम ” ( तैसं ३·२·५ ) इत्युक्तत्वात् । [19]सूर्यस्य रश्मिः परिपाकहेतुर्यस्य तं [v]सूर्यरश्मिम् । वृष्टिक्लिन्ना ओषधय आतपेन पच्यन्तेऽन्यथा वृष्ट्याधिक्येन पूयेयुः । [v]समाभृतं गायत्र्या द्युलोकात् सम्यगानीतम् । किं चापां यो रसः सोमवल्लिरूपेण[20] परिणतः[21], तस्यापि रसस्य[22] [v]यः [v]रसः सारस्तादृशमुदकरसम् ॥ स्वामित्वं तेजोयुक्तत्वं च भागद्वयपाठेन भवतीति दर्शयति—“ अपाꣳ रसमुद्वयसमित्याह । अपामेवैतेन रसस्य सूयते । सूर्यरश्मिꣳ समाभृतमित्याह सशुक्रत्वाय ” ( तैब्रा १·३·९ ) इति ॥

अयेति ॥ कल्पः—“ अया विष्ठा जनयन् कर्वराणीति सप्तदश प्राजापत्यान् सोमग्रहान् गृह्णाति ” ( आपश्रौ १८·२·३ ) इति । पाठस्तु—‘ अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः । स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वायां यत्तनुवां तनूमैरयत । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं

१९. आ.क.ति.म४–सूर्य° । २०. ति.म४–°वल्लीरूपेण । २१. ह्वा–परिणामः । २२. आ.ह–‘ रसस्य ’ नास्ति ।

स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वायां यत्तनुवां तनूमैरयत ।
उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा ॥ १२ ॥

[ कोशस्तनुवां त्रयोदश च ]

सः । प्रति । उदिति । ऐत् । धरुणः । मध्वः । अग्रम् । स्वायाम् । यत् । तनुवाम् । तनूम् । ऐरयत । उपयामगृहीत इत्युपयाम--गृहीतः । असि । प्रजापतय इति प्रजा--पतये । त्वा । जुष्टम् । गृह्णामि । एषः । ते । योनिः । प्रजापतय इति प्रजा--पतये । त्वा ॥ १२ ॥

[ मैसं १·११·४; कासं १४·३ ; वासं ९·२,४ ]

(पा ३·२·७६) इति क्विप् । सर्वात्मतया स्थित इत्यर्थः । जनयन् उत्पादयन् कर्वराणि कर्माणि (नि २·१·८) कार्यजातानि वा य एवं करोति प्रजापतिः सः हि घृणिः दीप्यमानः । घृणु दीप्तौ । "इन् सर्वधातुभ्यः" (उ ५५७) इतीन् । हेतौ हिः । घृणिमान् वा घृणिः । मत्वर्थीयो लुप्यते । उरुः महान् वराय वरिष्ठाय फलाय गातुः मार्गः प्राप्तेः पुरुपार्थप्राप्तिमार्गः । तादर्थ्ये चतुर्थी (पा २·३·१३ वा १) । सः तादृशः प्रत्युदैत् प्रत्युद्गच्छतु । छान्दसो लुङ् । किम्? मध्वः उदकस्य अग्रं सारम् । नुमभावश्छान्दसः । "जसादिषु वावचनं प्राङ् णौ चङ्युपधायाः" (पा ७·३·१०९ वा १) इति गुणाभावः । धरुणः धारयिता स तादृशः मधुनोऽग्रं प्राप्नोतु । यद्यस्मात् स्वायाम् आत्मीयायां तनुवां शरीरभूतेऽस्मिन् ग्रहे तनूं स्वशरीरम् ऐरयत प्रेरयति; तस्मादेतद्ग्रहात्मा अस्मदभिमतं साधयत्विति । 'उपयामगृहीतोऽसि' इत्यादि गतम् । प्रजापतिशब्दे "पत्यावैश्वर्ये" (पा ६·२·१८) इति पूर्वपदप्रकृतिस्वरत्वम् । वाजपेयमन्त्राः समाप्ताः ॥

इति सप्तमे द्वादशोऽनुवाकः ॥

गृह्णाम्येष ते योनिः प्रजापतये त्वा' इति ॥ अया अयं प्रजापतिः विष्ठाः [23]विशेषेणावस्थितः कर्वराणि एतानि कर्माणि जनयन् संपादयन् [24]वर्तते । यस्मात् सः प्रजापतिः घृणिः दीप्तिमान् प्रकाशको भूत्वा वराय श्रेष्ठाय कर्मफलाय उरुः गातुः विस्तीर्णो मार्गो भवति, तस्मात् सः प्रजापतिः मध्वः मधुनः कर्मफलस्य धरुणः धारयिता सन् अग्रं प्रति अस्मत्समीपं प्रति उदैत् उत्कर्षेण प्राप्नोतु । यदि अस्मात् स्वायां तनुवां स्वकीये शरीरे तनूम् अस्मच्छरीरम् ऐरयत प्रापयति, तस्माद्वयं फलं प्राप्स्याम इति शेषः । 'एकयर्चा गृह्णाति' (तैब्रा १·३·३) इत्येतस्य विधिः । स च पूर्वमेव व्याख्यातः (तैसं १·७·७) ॥

अत्र विनियोगसंग्रहः—

"उपेत्यतिग्राह्यमैन्द्रं गृहीत्वैषेति सादयेत् ।
उत्तरेषु चतुर्ष्वेवमया सप्तदश ग्रहान् ॥
प्राजापत्यान् प्रगृह्णाति मन्त्रा द्वादश वर्णिताः ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

२३. आ.हा-विशेषेणात्र स्थितः । २४. इ.उ.तं.ति.म४-वर्तताम् ।

**अन्वह॒ मासा॒ अन्विद्व॒नान्यन्वोष॑धीरनु॒ पर्व॑तासः ।**
**अन्विन्द्र॒ꣳ रोद॑सी वावश॒ाने अन्वापो॑ अजिहत॒ जाय॑मानम् ॥**

अन्विति॑ । अह॑ । मासाः॑ । अन्विति॑ । इत् । वना॑नि ।
अन्विति॑ । ओष॑धीः । अन्विति॑ । पर्व॑तासः ।
अन्विति॑ । इन्द्र॑म् । रोद॑सी इति॑ । वावशाने इति॑ ।
अन्विति॑ । आपः॑ । अजिहत । जाय॑मानम् ॥

---

अथ याज्याकाण्डं वैश्वदेवम् । तत्र "इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकामः" ( तैसं २·२·८ ) इत्यस्य पुरोऽनुवाक्या—'अन्वह' इति त्रिष्टुप् । [v]अह इति पादपूरणे प्रसिद्धौ वा । [v]इत् इति समुच्चये । [v]मासाः च [v]वनानि च [v]ओषधीः ओषधयश्च । पूर्ववत् पूर्वसवर्णदीर्घत्वम् । [v]पर्वतासः पर्वताः । पूर्ववदसुक् ( पा ७·१·५० ) । [v]रोदसी रोदस्यौ द्यावापृथिव्यौ च [v]वावशाने कामयमाने [v]इन्द्रम् एव परस्परं वा । यङ्लुगन्तात् ( पा २·४·७४ ) ताच्छीलिकश्चानश् ( पा ३·२·१२९ ) । "न वशः" ( पा ६·१·२० ) इति संप्रसारणाभावः । [v]आपः च इन्द्रमेव [v]जायमानम् [v]अन्वजिहत अनुजिहते अनुगच्छन्ति अनुजायन्ते इत्यर्थः । यद्वा—स्वामित्वेन जायमानमिन्द्रमेवेन्द्रं भजन्ते । छान्दसो लङ् । "भृञामित्" ( पा ७·४·७६ ) इत्यभ्यासस्येत्वम् । स इन्द्र एवं महाप्रभावः अस्माकं ग्रामं साधयत्विति ॥

---

द्वादशे वाजपेयमन्त्राः [1]समापिताः । त्रयोदशे काम्ययाज्या उच्यन्ते ॥

काम्येष्टिकाण्डे काचिदिष्टिरेवमाम्नायते—"इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकाम इन्द्रमेवान्वृजुꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजाताननुकान् करोति ग्राम्येव भवति" ( तैसं २·२·८ ) इति । अनुकूलश्चासावृजुश्चेत्यन्वृजुः, साहाय्यकरणमानुकूल्यं विरोधानाचरणमृजुत्वं, [2]-स तादृशः-[2] इन्द्रोऽस्मै यजमानाय सजातान् ज्ञातिप्रभृतीन्[3] बन्धूननुकानेतस्मिन्ननुकूलान् करोति । ततोऽयं ग्रामस्वामी भवत्येव ॥

अन्विति ॥ तत्र पुरोनुवाक्यामाह—'अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः । अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानम्' इति ॥ अहशब्द इच्छब्दश्च [4]समुच्चयार्थौ । चैत्रादयो ये [v]मासाः ते च जायमानमिन्द्रमनुसृत्य [v]अजिहत अस्माननुग्रहीतुं प्राप्तवन्तः । एवं वनान्योषधयः पर्वता वावशाने अस्मान् कामयमाने रोदसी द्यावापृथिव्यावापश्चाजिहतेति [5]योजनीयम् । षोढा वाक्यानि भेत्तुं षडनुशब्दाः । स च भेद आदरार्थः ॥

---

१. तं—समाप्ताः । २-२. द्वा—तादृशः; तं—स तादृशम्; आ—तादृशम् । ३. आ.क.द्वा—ज्ञातिप्रभृति°, म४—ज्ञातीन् । ४. आ.क.द्वा—समुच्चये; तं—समुच्चयार्थः । ५. .आ.क.द्वा—योजना ।

अनु॑ ते दायि म॒ह इ॑न्द्रि॒याय॑ स॒त्रा ते॒ विश्व॒मनु॑ वृत्र॒हत्ये॑ ।
अनु॑ क्ष॒त्रमनु॒ सहो॑ यजत्रेन्द्र॑ दे॒वेभि॒रनु॑ ते नृ॒षह्ये॑ ॥

अन्विति॑ । ते॒ । दा॒यि॒ । म॒हे । इ॒न्द्रि॒याय॑ ।
स॒त्रा । ते॒ । विश्व॑म् । अन्विति॑ । वृ॒त्र॒ह॒त्य॒ इति॑ वृत्र-ह॒त्यै॑ ।
अन्विति॑ । क्ष॒त्रम् । अन्विति॑ । सहः॑ । य॒ज॒त्र ।
इन्द्र॑ । दे॒वेभिः॑ । अन्विति॑ । ते॒ । नृ॒ष॒ह्य॒ इति॑ नृ-सह्यै॑ ॥

तत्रैव याज्या—‘ अनु ते दायि ’ इति त्रिष्टुप् ॥ व्याख्यातेयं षष्ठान्ते (तैसं १·६·१२))। हे [v]इन्द्र [v]यजत्र यष्टव्य, तुभ्यं देवैः ऋत्विग्भिः [v]दायि दीयते सामर्थ्याद्धविः । [v]विश्वं कृत्स्नमपि [v]सत्रा सर्तव्येषु यज्ञेषु महदिन्द्रियमनुवीक्ष्य, महतेन्द्रियेण तद्वानिति कृत्वा, वृत्रहत्या चानुवीक्ष्य, [v]क्षत्रं धनं [v]सहः बलं चानुवीक्ष्येति ॥

अन्विति ॥ अथ याज्यामाह—‘ अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये ’ इति ॥ [v]यजत्र यष्टव्य हे [v]इन्द्र, [v]महे महते सर्वेभ्यो देवेभ्योऽधिकाय [v]ते तुभ्यं [v]सत्रा सत्रेषु [v]विश्वं सर्वं हविर्देवेभिरग्न्यादिभिः [v]अनु [v]दायि अनुक्रमेण दीयते । किमर्थम् ? [v]वृत्रहत्ये वृत्रवधम् [v]अनु [v]ते तव [v]इन्द्रियाय बलसिद्ध्यर्थम् । न केवलं वृत्रवधमनुसृत्य, किंतु[6] [v]क्षत्रम् [v]अनु त्वदीयं क्षत्रियत्वजात्यभिमानम् [7]अनुसृत्य, [v]सहः [v]अनु त्वदीयमेव बलमनुसृत्य, [v]नृषह्ये वैरिमनुष्यतिरस्कारशीलमनुसृत्य, त्वयि यथोक्तान् गुणानवेक्ष्य [v]ते तुभ्यं पुनः पुनर्दीयत इति शेषः ॥

इष्ट्यन्तरं विधत्ते—“ इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसꣳशितेव स्यादिन्द्राणी वै सेनायै देवतेन्द्राणीमेव स्वेन भागधेयेनोप धावति सैवास्य सेनाꣳ सꣳश्यति ” (तैसं २·२·८) इति । असंशिता तीक्ष्णा न भवति स्वकार्यक्षमा [8–]न भवतीत्यर्थः[–8] ॥ [9]तस्यामिष्टौ कंचिदङ्गविशेषं विधत्ते—“ बल्वजानपीध्मे सं नह्येद्गौर्यत्राधिष्कन्ना न्यमेहत्ततो बल्वजा उदतिष्ठन् गवामेवैनं न्यायमपिनीय गा वेदयति ” (तैसं २·२·८) इति । बल्वजास्तृणविशेषाः । तानपि चोदकप्राप्त इध्मे सम्यग्बध्नीयात् । अधिष्कन्ना [10–]अधिकं पुरीषं प्राप्ता[–10] गौर्यत्र देशे न्यमेहत् नितरां[11] मूत्रं करोति, ततो देशात् बल्वजा उत्पद्यन्ते । तेषां च बल्वजानां बन्धत्वेन[12] यजमानं गवामेव न्यायमपिनीय प्रापय्य गा वेदयति लम्भयति । गवां न्यायः स्वाधीनतया शिक्षितत्वम् । यथा धेनवः शिक्षिताः प्रतिदिनमरण्ये गत्वा यत्र क्वापि [illegible] चापलं परित्यज्य काले [13]स्वगृहमेव [14]आगत्यानायासेन दुह्यन्ते, यथा वा बलीवर्दाः शिक्षिताः सन्तो रथादीन् स्वामिन इच्छानुसारेण वहन्ति, तथा सेनायाः स्ववशत्वेन कार्यकारित्वं गोन्यायः । गा वेदयति गोवत् [15–]शिक्षिताः स्वाधीनाः कार्यकारिणीः सेनाः[–15] प्रापयतीत्यर्थः ॥

६. आ.क.हा–‘ किन्तु ’ नास्ति । ७. आ.क.हा–चानुसृत्य । ८–८. आ.हा–नैव भवेदित्यर्थः । ९. म४–अस्यामिष्टौ । १०–१०. इ.उ.तं.ति.म४–अधिकपुरीषप्रापणी । ११. इ.उ.पा.हा–निरन्तरम् । १२. तं.ति.म४–बन्धादेनम् । १३. इ.उ.तं.ति–स्वगृह एव । १४. आ.क.हा–आयान्त्यना° । १५–१५. आ.क.हा–हितां स्वाधीनां कर्मकारित्वेन ।

इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् ।
न ह्यस्या अपरं चन जरसा (१) मरते पतिः ।
नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यꣳ हविः प्रियं देवेषु गच्छति ।

इन्द्राणीम् । आसु । नारिषु । सुपत्नीमिति सु–पत्नीम् । अहम् । अश्रवम् ।
न । हि । अस्याः । अपरम् । चन । जरसा (१)। मरते । पतिः ॥
न । अहम् । इन्द्राणि । रारण । सख्युः । वृषाकपेरिति वृषा–कपेः । ऋते ।
यस्य । इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति ॥

"इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसꣳशितेव स्यात्" ( तैसं २·२·८ ) इत्यस्य पुरोनुवाक्या—'इन्द्राणीम्' इत्यनुष्टुप् ॥ इन्द्राणीम् इन्द्रस्य पत्नीम् । "इन्द्रवरुण°" ( पा ४·१·४९ ) इति ङीष् । आसु नारिषु मध्ये । छान्दसं ह्रस्वत्वम् । सुपत्नीं शोभनपतिकां । "विभाषा सपूर्वस्य" ( पा ४·१·३४ ) इति ङीप् । "आद्युदात्तं द्व्यच् छन्दसि" ( पा ६·२·११९ ) इत्युत्तरपदाद्युदात्तत्वम् । अहम् अश्रवं श्रुतवानस्मि । शृणोतेर्लङि व्यत्ययेन शप् । लुग्वा शपः । अपरं चन किंचन किंचान्यदित्यर्थः । अयमस्या अन्यो विशेषः । चनेति समुच्चये । न हि अस्याः पतिः जरसा वयोहान्या मरते म्रियते । व्यत्ययेन शप् । "हि च" ( पा ८·१·३४ ) इति निघातप्रतिषेधः । सैव [१]महाभागा इन्द्राणी अस्मत्सेनामुत्साहवतीं करोत्वित्यर्थः ॥

तत्रैव याज्या—'नाहम्' इत्यनुष्टुप् ॥ हे इन्द्राणि, तव सख्युः वृषाकपेः इन्द्रात् ऋते वा मम सख्युः वृषाकपेः आदित्याद्विष्णोर्वा ऋते कंचिदपि न अहं रारण न रणामि न कीर्तयामि ततोऽन्यं न नौमीत्यर्थः । ततोऽन्येन वा केनचिदपि न रमे । छान्दसो

इन्द्राणीति ॥ तत्र पुरोनुवाक्यामाह—'इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरं चन जरसा मरते पतिः' इति ॥ आसु नारिषु देवस्त्रीषु मध्ये सेनास्वामिभूताम् इन्द्राणीं सुपत्नीं पतिव्रतां अहम् [१६]अश्रवम् । अपरं चन अन्यदप्येकमस्ति । अस्याः इन्द्राण्याः पतिः जरसा न हि मरते नैव म्रियते ॥

नेति ॥ तत्रैव याज्यामाह—'नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यꣳ हविः प्रियं देवेषु गच्छति' इति । हे इन्द्राणि, अहं तव[१७] सख्युः वृषाकपेः ऋते स्वत्पतिमिन्द्रं[१८] विना यं

१. तं.ति–महानुभावा ।

१६. ति–अश्रौषम् । १७. आ.क.हा–'तव' नास्ति । १८. आ.क.हा–त्वत्प्रियमिन्द्रम् ।

[ काम्येष्टियाज्यापुरोनुवाक्याः

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । पर्यभूषदिति परि–अभूषत् । यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ।

लिट् । तुजादित्वादभ्यासस्य दीर्घत्वम् ( पा ६·१·७ ) । "णलुत्तमो वा" ( पा ७·१·९१ ) इति वृद्ध्यभावः । रमतेरन्त्यविकारश्छान्दसः । आत्मानं विशिनष्टि [V]यस्य [V]हविः मम संबन्धि हविः [V]अप्यम् अद्भ्यो हितं*, वृष्टिहेतुत्वात् । अप्सु वा भवं सोमपुरोडाशादिकं, तत्कारणत्वात् । छान्दसो यत् । [V]प्रियम् इष्टं भूत्वा [V]देवेषु [V]गच्छति सर्वान् देवान् प्राप्नोति । एवं सर्वदेवप्रीणनसमर्थोऽपि अहं वृषाकपेः ऋते न कंचित् रारण न वा केनचित् रमे[2], सखित्वात् । सोऽहमिदानीम् अनेन हविषाऽऽराधयामि, अतोऽस्मत्सेनां संशितां कुर्विति ॥

"इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत् संग्रामे संयत्ते" ( तैसं २·२·८ ) इत्यस्य पुरोनुवाक्या—'यो जातः' इति ॥ [V]यः [V]जातः [V]एव जातमात्र एव अन्येन संस्कारेण विनैव [V]प्रथमः देवानां प्रधानभूतः [V]मनस्वान् मनस्वी तेजस्वी [V]देवः दीप्तिमान् [V]क्रतुना कर्मणा वृत्रवधादिना प्रज्ञया वा [V]पर्यभूषत् अत्यक्रामत् पर्यगृह्णाद्वा स्वामित्वेन । भवतेर्लुङ् । व्यत्ययेन क्सः । "श्युकः किति" ( पा ७·२·११ ) इतीट्प्रतिषेधः । [V]यस्य [V]शुष्मात् [V]रोदसी द्यावापृथिव्यावपि, किमुतान्यः ? [V]अभ्यसेताम् अबिभीताम् । [M]भ्यस भये

कमप्यन्यं देवं [V]न [V]रारण नैव कीर्तयामि । [V]यस्य मम [V]अप्यम् अप्सु भवम्* [V]इदं [V]हविः सोमपुरोडाशादिकं [V]प्रियम् इष्टं भूत्वा [V]देवेषु [V]गच्छति सर्वान् देवान् प्राप्नोति, तादृशोऽहमिति पूर्वत्राऽन्वयः ॥

इष्ट्यन्तरं विधत्ते—"इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत् संग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तꣳ मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ संग्रामम्" ( तैसं २·२·८ ) इति । मनस्वते धैर्योपेताय, संग्रामे युद्धे संयत्ते सम्यक्प्रवृत्ते सति, इन्द्रियेण पाणिपादादीन्द्रियपाटवेन, मन्युना वैरिविषयकोपाधिक्येन, मनसा पलायनभीत्यादिवर्जनरूपेण धैर्येण ॥

य इति ॥ तत्र पुरोनुवाक्यामाह—'यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः' इति ॥ [V]यः [V]देवः [V]इन्द्रः [V]जातः [V]एव उत्पन्नमात्र एव [V]प्रथमः देवानां मध्ये मुख्यः [V]मनस्वान् धैर्यवांश्च भूत्वा [V]क्रतुना वृत्रवधादिकर्मणा [V]देवान् अन्यानग्न्यादीन् [V]पर्यभूषत् अतिक्रान्तवान् । [V]यस्य इन्द्रस्य [V]शुष्मात् बलात् [V]रोदसी द्यावापृथिव्यौ [V]अभ्यसेताम् अबिभीताम् । [M]भ्यस भय इति धातुः । [V]जनासः हे जनाः, स [V]इन्द्रः [V]नृम्णस्य स्वकीयबलस्य [V]मह्ना महिम्ना युष्मानवत्विति[19] शेषः ॥

*[द्र. पा ४·४·१३४ 'अद्भिः संस्कृतम्'; काशिकाऽप्यत्र द्रष्टव्या ] । २. ति.मै–रणे । [M]( धापा ६२८ ) । १९. तं.ति.म४–युष्मान् रक्षत्विति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

**आ ते॑ म॒ह इ॑न्द्रो॒त्यु॑ग्र॒ सम॑न्यवो॒ यत् स॒मर॑न्त॒ सेनाः॑ ।**

**पता॑ति दि॒द्युन्नर्य॑स्य बा॒हुवो॒र्मा ते॒ ( २ ) मनो॑ विष्व॒द्रिय॒ग्वि चा॑रीत् ॥**

एति॑ । ते॒ । म॒हः । इ॒न्द्र॒ । ऊ॒ती । उ॒ग्र॒ ।

सम॑न्यव॒ इति॒ स–म॒न्य॒वः । यत् । स॒मर॒न्तेति॑ सम्–अर॑न्त । सेनाः॑ ।

पता॑ति । दि॒द्युत् । नर्य॑स्य । बा॒हुवोः॑ । मा । ते॒ ( २ ) । मनः॑ ।

वि॒ष्व॒द्रि॒य॒गिति॑ विष्व–द्रि॑यक् । वीति॑ । चा॒री॒त् ॥

अनुदात्तेत् । हे vजनासः जनाः । पूर्ववदसुक् । vस तादृशः vइन्द्रः vनृम्णस्य बलस्य vमह्ना महत्त्वेन इत्थंभूतस्तादृशो महाबलोऽन्यो नास्ति तस्मान्मा भैष्ट जनाः । दास्यत्यस्मभ्यमिन्द्रियं बलं चेति । महतेरौणादिको नप्रत्ययः । तृतीयैकवचनस्य " सुपां सुलुक्° " ( पा ७.१.३९ ) इत्याकारः ॥

तत्रैव याज्या—' आ ते महः ' इति पुरस्ताज्ज्योतिस्त्रिष्टुप् , त्रिष्टुबेव वा । प्रथमः पादो दशाक्षरः कार्यः । ' बाहुवोः ' इति तृतीयपादान्तः ॥ हे vइन्द्र vउग्र उद्गीर्णायुध, vते तव vमहः महती vऊती गतिः प्रभावः । " ऊतियूति° " ( पा ३.३.९७ ) इति क्तिन उदात्तत्वम् । प्रथमायाः पूर्वसवर्णदीर्घत्वम् । ' महः ' इत्यस्यन्तोदात्तत्वं मृग्यम्* । यद्वा—ते तव महः महतः प्रभावस्य । " सावेकाचः° " ( पा ६.१.१६८ ) इति षष्ठ्या उदात्तत्वम् । ऊत्या प्राप्त्या । तृतीयायाः पूर्वसवर्णः । vसमन्यवः सामर्षाः सेनाः, सामर्थ्यात् परकीयाः, vयत् यस्मात् vआ vसमरन्त सर्वाः संभूयागताः । " समो गम्यृच्छि° " ( पा १.३.२९ ) इत्यात्मनेपदम् । " सर्तिशास्त्यर्तिभ्यश्च " ( पा ३.१.५६ ) इत्यङ् । तस्य vते vनर्यस्य नरीभ्यो[३] हितस्य बाह्वोः vदिद्युत् दीप्यमानः शत्रुः vपताति पतेत् , अग्नौ शलभ इव । लेट्याडागमः* । यद्वा—दिद्युत् आयुधविशेषः तव बाह्वोः संबन्धी इतश्चेतश्च पततु । किंच—vते तव vमनः vविष्वद्रियक् विष्वग्गतं स vमा vवि vचारीत् विचलितं मा भूत् अस्मज्जयायैव भवतु ।

**एति ॥ तत्रैव[२०] याज्यामाह—' आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः । पताति दिद्युन्नर्यस्य बाहुवोर्मा ते मनो विष्वद्रियग्वि चारीत् ' इति ॥ vउग्र हे vइन्द्र, आसमन्तात् vते तव vऊती रक्षणं vमहः अधिकम् । यद्यस्माद्रक्षणादस्मदीयाः vसेनाः vसमन्यवः वैरिविषयकोपयुक्ताः सत्यः vसमरन्त सम्यगरमन्त [२१]क्रीडा अकुर्वन् परबलं नैवागणयन्नित्यर्थः । [२२]नर्यस्य मनुष्यहितस्य vते तव vबाहुवोः vदिद्युत् खड्गादिदीप्तिः vपताति सर्वत्र प्रसरति । vते vमनः vविष्वद्रियक् बहुमुखं सत् vमा vवि vचारीत् मा विचरतु ॥**

*[ महेरसुन् (उ ६३८), असुनश्च नित्त्वात् आदिरुदात्तः (पा ६.१.१९७) इत्यर्थः । ] । ३. तं.ति-नरेभ्यो । *(द्र. पा ३.४.९४) ।

२०. आ.क.हा–' तत्रैव ' नास्ति । २१. क.तं.ति.म४–क्रीडाम् । २२. आ.हा–स च नर्यस्य ।

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते ।
नव्ये देष्णे शस्ते अस्मिन् त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ॥

मा । नः । मर्धीः । एति । भर । दद्धि । तत् । नः ।
प्रेति । दाशुषे । दातवे । भूरि । यत् । ते ॥
नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे । प्रेति । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥

" विष्वग्देवयोश्च° " ( पा ६·३·९२ ) इत्यद्र्यादेशः । अद्रिसध्र्योरन्तोदात्तत्वनिपातनं स्वरनिवृत्त्यर्थमित्युक्तम् ( पा ६·३·९५ वा १ ) ॥

" इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युः " ( तैसं २·२·८ ) इत्यस्य पुरोनुवाक्या—' मा नः ' इति त्रिष्टुप् ॥ हे [v]इन्द्र, [v]नः अस्मान् [v]मा [v]मर्धीः कलहिनो मा कार्षीः । किं तु [v]नः अस्मभ्यं [v]आ [v]भर आहर । पूर्ववद्भत्वम् । " द्व्यचोऽतस्तिङः " ( पा ६·३·१३५ ) इति संहितायां दीर्घत्वम् । आहृत्य तदस्मभ्यं [v]प्र [v]दद्धि प्रदेहि । व्यत्ययेन एत्वाभ्यासलोपाभावः । [4]तदित्युक्तं किमित्याह[4]—[v]यत् [v]ते तव संबन्धि [v]भूरि बहु [5]तत्तु ' दातवे ' इति [6]संनिधेर्धनमिति गम्यते । प्रदातव इति वा [7]समस्तमेव संबध्यते ।

पूर्वोक्तामेवेष्टिं फलान्तराय विधत्ते—" एतामेव निर्वपेद्यो हतमनाः स्वयंपाप इव स्यादेतानि हि वा एतस्माद[illegible]न्यथैष हतमनाः स्वयंपाप इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति न हतमनाः स्वयंपापो भवति " ( तैसं २·२·८ ) इति । यः पुरुषो रोगेण द्रव्यहान्यादिना वा हतमना नष्टचित्तः सन् स्वयंपाप इव भ्रान्त इव स्यात्, एतस्मात् पुरुषादेतानीन्द्रियमन्युधैर्याणि अपक्रान्तानि । [23]अथेदानीमेष पुरुषो नष्टचित्तः स्वयं भ्रान्तो भवति तादृश एतामेव निर्वपेदिति पूर्वत्रान्वयः । [24]एतस्यामपीष्टौ पूर्वोक्ते एव याज्यानुवाक्ये ॥

इष्ट्यन्तरं विधत्ते—" इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरितीन्द्रमेव दातारꣳ स्वेन भागधेयेनोप धावति स एवास्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्ति " ( तैसं २·२·८ ) इति ॥

**मेति** ॥ तत्र पुरोनुवाक्यामाह—' मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते । नव्ये देष्णे शस्ते अस्मिन् त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ' इति ॥ हे [v]इन्द्र, [v]नः अस्मानस्मदीयाः प्रजाश्च [v]मा [v]मर्धीः कलहार्थिनीर्मा कार्षीः । किंतु प्रकर्षेण [v]दाशुषे [25]हविर्दत्तवते यजमानाय [v]दातवे दातुं [v]ते त्वदीयं [v]यत् [v]भूरि धनं संचितमस्ति तदाभर[26] तदाहर[27] । आहृत्य च [v]नः अस्मभ्यं [v]दद्धि देहि । हे इन्द्र, [v]नव्ये नूतने [v]देष्णे त्वद्दानसाधने [v]शस्ते प्रशस्ते [v]अस्मिन् कर्मणि [v]ते उक्थे त्वदीये शस्त्रे [v]स्तुवन्तः [v]वयं [v]प्र [v]ब्रवाम प्रकर्षेण प्रार्थयामहे ॥

४-४. तदित्युक्तमित्याह । ५. तं.ति–यत्तत् । ६. ति–संनियोगाद्धन° । ७. तं.ति–असमस्तमेव ।

२३. तं.ति.म४–तदानीमेव । २४.म४–अस्याम° । २५. आ.क.हा–हव्यं दत्त° । २६. ति.म४–' तदाभर ' नास्ति । २७. इ.उ.तं.पा–' तदाहर ' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

आ तू भ॑र॒ माकि॑रे॒तत् परि॑ ष्ठाद्वि॒द्मा हि त्वा॒ वसु॑पतिं॒ वसू॑नाम् ।

इन्द्र॒ यत्ते॒ माहि॑नं॒ दत्र॒मस्त्य॒स्मभ्यं॒ तद्ध॑र्यश्व॒ ( ३ ) प्र य॑न्धि ॥

एति॑ । तु । भ॒र॒ । माकिः॑ । ए॒तत् । परीति॑ । स्थात् ।

वि॒द्म । हि । त्वा॒ । वसु॑पति॒मिति॒ वसु॑-प॒तिम् । वसू॑नाम् ।

इन्द्र॑ । यत् । ते॒ । माहि॑नम् । द॒त्रम् । अस्ति॑ ।

अ॒स्मभ्य॒मित्य॒स्म-भ्य॒म् । तत् । ह॒र्य॒श्वेति॑ हरि-अ॒श्व ( ३ ) । प्रेति॑ । य॒न्धि ॥

दाशुषे पुरोडाशादीनि हवींषि दत्तवते यजमानाय । "दाश्वान्°" ( पा ६·१·१२ ) इति निपात्यते । तस्मै दातवे दातुं दानार्थमेव यत् त्वया कल्पितं प्रभूतं धनमस्मभ्यं प्रदेहीति । "तुमर्थे सेसेन्°" ( पा ३·४·९ ) इति तवेन्प्रत्ययः । यस्मात् त्वां स्तुवन्तः वयं प्र ब्रवाम प्रकर्षेण ब्रूमः—'देहि नः देहि नः' इति, तस्मात् तदाहृत्य ते वयम् अपि दाश्वांस इति । कदा दातव इत्याह—नव्ये अभिनवे देष्णे दानसमर्थे । औणादिके स्नप्रत्यये[*] धातोरिकारान्तादेशः । यद्वा—देष्णे दात्रे तुभ्यम् । औणादिके कनिप्रत्यये[*] धातोरेकारः षुगागमश्च । उदात्तनिवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । ते तव उक्थे स्तोत्रे अस्मिन् स्तोत्रस्थानीये शस्ते प्रशस्ते दाशुषे दातुं यत्तव भूरि तदस्मभ्यं देहीति । ब्रुवो लोटि "आडुत्तमस्य°" ( पा ३·४·९२ ) इत्याडागमः । लेटि वा "लेटोऽडाटौ" ( पा ३·४·९४ ) इत्याडागमः । "छन्दस्युभयथा" ( पा ३·४·११७ ) इत्यार्धधातुकत्वात् ङित्वाभावः । सार्वधातुकत्वात् वच्यादेशो न प्रवर्तते ॥

तत्रैव याज्या—'आ तू भर' इति तृतीयपादान्तम् । 'तू' इति पादपूरणार्थम् । हे इन्द्र, आ भर । 'विद्मा हि त्वा वसुपतिम्' इति वक्ष्यमाणत्वात् वस्विति गम्यते । पूर्ववद्भत्वम् । एतत् वसु माकिः परि स्थात् परत्र मा स्थात् अस्मास्वेव तिष्ठतु । यद्वा—यदस्मभ्यमाहृतं वसु त्वया एतत् परिष्ठितं समाप्तं मा भूत् अनुपक्षीणमस्तु । माकिरिति माशब्दपर्यायो निपातः । "गातिस्था°" ( पा २·४·७७ ) इति सिचो लुक् । कस्मादेवमुच्यसे ? इति चेत्, हि यस्मात् त्वां सर्वेषां वसूनां संबन्धिनं वसुपतिं धनपतिं विद्म विजानीमः । "द्व्यचोऽतस्तिङः"

एति ॥ तत्रैव याज्यामाह—'आ तू भर माकिरेतत् परि ष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम् । इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व प्र यन्धि' इति ॥ हे इन्द्र, त्वम् आ तू भर धनमाहरैव । एतत्त्वदाहृतं धनं माकिः मैव परि ष्ठात् परत्र मा तिष्ठतु । यस्मात् त्वा त्वां 'वसूनां वसुपतिः' इति विद्म । कस्यचिदेव धनस्य पतिर्न भवसि, किं तु सर्वेषामिति विवक्षया 'वसूनां वसुपतिम्' इत्युक्तम् । यस्मादेवं विद्म तस्मादाहरेत्यन्वयः । हे इन्द्र, ते त्वदीयं माहिनं महनीयं दत्रं दातव्यं यद्धनम् अस्ति, हे हर्यश्व, हरिनामकाभ्यामश्वाभ्यामुपेतेन्द्र, तत् धनम् अस्मभ्यं प्र यन्धि प्रयच्छ ॥

[*] ( द्र. उ ३०३ गादाभ्यामिष्णुच् । ) ८. मै–अस्मभ्यमा°; ति–तुभ्यमा° ।

प्रदातारꣳ हवामह इन्द्रमा हविषा वयम् ।
उभा हि हस्ता वसुना पृणस्वाऽऽ प्र यच्छ दक्षिणादोत सव्यात् ॥

प्रदातारमिति प्र—दातारम् । हवामहे । इन्द्रम् । एति । हविषा । वयम् ।
उभा । हि । हस्ता । वसुना । पृणस्व । आ । प्रेति । यच्छ । दक्षिणात् । एति । उत । सव्यात् ॥

(पा ६·३·१३५) इति संहितायां दीर्घत्वम् । सर्ववसुपतित्वप्रतिपादनार्थं वसूनामित्युक्तम्, समासे संख्याविशेषाप्रतीतेः । "पत्यावैश्वर्ये" (पा ६·२·१८) इति पूर्वपदप्रकृतिस्वरत्वम् । "इन्द्रो दिव इन्द्र ईशे पृथिव्याः" (ऋसं १०·८९·१०) इत्यादिषु त्वामेव सर्ववसुपतिं शृणुमः, तस्मादुच्यते 'आ तू भर' इति । किंच—हे इन्द्र, [v]यत् [v]ते तव [v]माहिनं महत् महनीयं वा हिरण्यादिकम् । महेरिन्* वृद्धिश्च । यद्वा—माहिनं महाप्रमाणम् । माह्र माने । स एव प्रत्ययः । [v]दत्रं दातव्यम् । औणादिकस्त्रन्प्रत्ययः । ईदृशं यत्तव धनम् [v]अस्ति दानायैव कल्पितं, [v]तत् [v]अस्मभ्यं [v]प्र [v]यन्धि प्रयच्छ । छान्दसो धिभावः । शपो लुक् । हे [v]हर्यश्व हरिवाहन ॥

"इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेत" (तैसं· २·२·८·) इत्यस्य पुरोनुवाक्या—'प्रदातारम्' इति बृहती ॥ द्वाभ्यामष्टाक्षराभ्यां दशाक्षराभ्यां च बृहती । [v]प्रदातारम् [v]इन्द्रम् इति त्वामनेन [v]हविषा [v]वयं [v]हवामहे आह्वयामहे । "बहुलं छन्दसि" (पा ६·१·३४) इति संप्रसारणम् । स त्वम् उभौ हस्तौ [v]वसुना धनेन [v]पृणस्व पूरय । पृण प्रीणने । तौदादिकः, व्यत्ययेनात्मनेपदम् । "हि च" (पा ८·१·३४) इति निघातप्रतिषेधः । पूरयित्वा चास्मभ्यं [v]प्र [v]यच्छ देहीति यावत् । [v]आ [v]दक्षिणात् [v]आ च [v]सव्यात् प्रसारिताद्धस्तात् ताभ्यां प्रसारिताभ्यां यावद्गृह्यते तावद्देहीति यावत् ॥

इष्टयन्तरं विधत्ते—"इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेन्द्रमेव प्रदातारꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्र दापयति" (तैसं २·२·८) इति । [v]प्रदात्रे प्रदापयित्रे वाक्यस्यान्ते प्रदापयतीति श्रवणात् । यस्मा उत्तमर्णाय प्रतिग्रहीत्रे दायादाय वाऽधमर्णादिः पुरैव प्रकर्षेण दत्तमित्येवं दातव्यं धनमपलपति तद्धनं स्वत्वेन व्यवह्रियते, वस्तुतस्तु नैव प्रत्तं, तादृश उत्तमर्णादिर्निर्वपेत् ॥

प्रदातारमिति ॥ तत्र पुरोनुवाक्यामाह—'प्रदातारꣳ हवामह इन्द्रमा हविषा वयम् । उभा हि हस्ता वसुना पृणस्वाऽऽ प्र यच्छ दक्षिणादोत सव्यात्' इति ॥ प्रकर्षेण दातारं दापयितारमिन्द्रं [v]हविषा युक्ता वयं [v]आ [v]हवामहे आह्वयामः । हे इन्द्र, उभावपि हस्तौ धनेन [28][v]पृणस्व पूरय । ततो ममाऽऽभिमुख्येन दक्षिणाद्धस्तात् [v]प्र [v]यच्छ, सव्यादप्याभिमुख्येन प्र यच्छ ॥

*( द्र.उणादि २१४–महेरिनण् च । ) ।

२८. इ.उ.तं.ति.पा.म४–'पृणस्व' नास्ति ।

प्रदाता वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
अस्मिन् यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शं योः ॥

प्रदातेति प्र-दाता । वज्री । वृषभः । तुराषाट् ।
शुष्मी । राजा । वृत्रहेति वृत्र-हा । सोमपावेति सोम-पावा ।
अस्मिन् । यज्ञे । बर्हिषि । एति । निषद्येति नि-सद्य । अथ । भव । यजमानाय । शम् । योः ॥

तत्रैव याज्या—'प्रदाता' इति त्रिष्टुप् ॥ Vप्रदाता प्रकर्षेण दाता Vवज्री वज्रवान्, Vवृषभः वर्षिताऽभिमतानां धनानां, Vतुराषाट् तूर्णम् अभिभविता शत्रूणाम् । तुर त्वरासंभ्रमयोः । भिदादिलक्षणोऽङ् । "छन्दसि सहः" ( पा ३·२·६३ ) इति ण्विः । "सहेः साडः सः" ( पा ८·३·५६ ) इति षत्वम् । Vशुष्मी बलवान् Vराजा दीप्यमानः Vवृत्रहा वृत्रं हतवान् Vसोमपावा सोमस्य पाता । "आतो मनिन्°" ( पा ३·२·७४ ) इति वनिप् । ईदृशस्त्वम् Vअस्मिन् Vयज्ञे Vबर्हिषि सीदसि । आगत्य Vनिषद्य आसित्वा Vअथ अनन्तरं Vयजमानाय Vशं च Vयोः च Vभव रोगाणां शमयिता भयानां च यावयिता । शाम्यतेर्यौतेश्च विच् । "निपातस्य च" ( पा ६·३·१३६ ) इति संहितायामथशब्दस्य दीर्घत्वम् ॥

"इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वाऽपरुध्यमानो वा" ( तैसं २·२·८ ) इत्यस्य पुरोनुवाक्या—'इन्द्रः सुत्रामा' इति त्रिष्टुप् ॥ Vइन्द्रः Vसुत्रामा सुष्ठु त्राता सर्वेषाम् । तेनैव मनिन् । Vस्ववान् धनवान् । "दीर्घादटि समानपादे" ( पा ८·३·९ ) इति रुत्वम् । Vअवोभिः रक्षणैः Vसुमृडीकः सुसुखः सुष्ठु सुखयितास्माकं Vभवतु । मृडीकादयश्च ( द्र. उ ४७२ ) इति कन् । "नञ्सुभ्याम्°" ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । Vविश्ववेदाः । "गतिकारकयोरपि" ( द्र. उ ६७६ ) इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं च । सर्वधनो वा । "बहुव्रीहौ विश्वं संज्ञायाम्" ( पा ६·२·१०६ ) इति विश्वशब्दस्या-

प्रदातेति ॥ तत्र याज्यामाह—'प्रदाता वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा । अस्मिन् यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शं योः' इति ॥ Vप्रदाता प्रकर्षेण दाता Vवज्री वज्रवान् Vवृषभः अभिमतानां धनानां वर्षिता, Vतुराषाट् शत्रूणां [29]शीघ्रमभिभविता, Vशुष्मी बलवान्, Vराजा दीप्यमानः, Vवृत्रहा वृत्रं हतवान्, Vसोमपावा सोमस्य पाता, ईदृशस्त्वम् Vअस्मिन् Vयज्ञे Vबर्हिषि वेद्यां स्तीर्णदर्भे Vआ Vनिषद्य आगत्योपविश्यानन्तरं Vशं सुखकरः Vयोः अनिष्टवियोजयिता च Vभव ॥

इष्ट्यन्तरं विधत्ते—"इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वाऽपरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायतेऽनपरुध्यो भवति" ( तैसं २·२·८ ) इति । सुत्राम्णे सुष्ठु त्रात्रे । अपरुद्धश्चिरं राज्याद्भ्रष्टः । अपरुध्यमान इदानीमेव [30]भ्रश्यमानः । अनपरुध्यो भ्रंशाविषयः ॥

२९. तं.ति.म४–तूर्णमभि° । ३०. ति.म४–भ्रश्यन् ।

इन्द्रः सुत्रामा स्ववाꣳ अवोभिः सुमृडीको भवतु विश्ववेदाः ।

बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य (४) पतयः स्याम ॥

इन्द्रः । सुत्रामेति सु–त्रामा । स्ववानिति स्व–वान् । अवोभिरित्यवः–भिः ।

सुमृडीक इति सु–मृडीकः । भवतु । विश्ववेदा इति विश्व–वेदाः ।

बाधताम् । द्वेषः । अभयम् । कृणोतु । सुवीर्यस्येति सु–वीर्यस्य ( ४ ) । पतयः । स्याम ॥

न्तोदात्तत्वम् । किं च—बाधतां नाशयतु द्वेषः द्वेष्टॄन् । " अन्येभ्योऽपि दृश्यन्ते " ( पा ३.२.७५ ) [९–]इति विच् । असुनि वा[–९] जातावेकवचनम् । अभयं चास्माकं कृणोतु । " धिन्विकृण्व्योर च " ( पा ३.१.८० ) इत्युप्रत्ययः । सुवीर्यस्य सुसारस्य सर्वस्य वयं पतयः स्याम भूयास्म । " वीरवीर्यौ च " ( पा ६.२.१२० ) इत्युत्तरपदाद्युदात्तत्वम् ॥

इन्द्र इति ॥ तत्र पुरोनुवाक्यामाह—' इन्द्रः सुत्रामा स्ववाꣳ अवोभिः सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ' इति ॥ अयमिन्द्रः सुत्रामा सुष्ठु त्राता स्ववान् धनवान् अवोभिः रक्षणैः सुमृडीकः सुखकरः विश्ववेदाः अस्मदनुष्ठितकृत्स्नपरिचर्याभिज्ञो भवतु । बाधताम् अस्मान् बाधमानानां वैरिणां द्वेषः विद्वेषी स इन्द्रोऽस्माकम् अभयं कृणोतु करोतु । तत्प्रसादाद्वयं सुवीर्यस्य [३१]वैर्यभिभवक्षमस्य सामर्थ्यस्य पतयः स्याम स्वामिनो भवेम ॥

तस्येति ॥ याज्यामाह—' तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाꣳ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ' इति ॥ वयं यज्ञियस्य यज्ञसंबन्धिनस्तस्येन्द्रस्य सुमतौ अनुग्रहयुक्ते चित्ते स्थिता भवेम । अपि च भद्रे परममङ्गले सौमनसे मनःसमाधानेऽवस्थिताः स्याम । सुत्रामा सुष्ठु त्राता स्ववान् धनवान् सः इन्द्रः अस्मे अस्माकं द्वेषो द्वेष्यान् आराच्चित् दूरादेव युयोतु पृथक्करोतु । कीदृशानामस्माकं सनुतः [३२]सनुतां हविर्दातॄणाम् ॥

इष्ट्यन्तरं [३३]विधत्ते—" इन्द्रो वै सदृङ्देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमेकादशकपालं निरवपत्तेनैवास्मिन्निन्द्रियमदधाच्छक्करी याज्यानुवाक्ये अकरोद्वज्रो वै शक्करी स एनं वज्रो भूत्या ऐन्द्ध सोऽभवत् सोऽबिभेद्भूतः प्र मा धक्ष्यतीति स प्रजापतिं पुनरुपाधावत् स प्रजापतिः शक्वर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय " ( तैसं २.२.८ ) इति । पुरा कदाचिदिन्द्रो [३४–]इतराभिः अग्न्यादिदेवताभिः[–३४] सदृश [३५]एव आसीत्तदाधिपत्यलक्षणां व्यावृत्तिं न प्राप्तवान् । कश्चिदपि देव एतदीयं भृत्यत्वं नाङ्गीचकार । स इन्द्रः खिन्नः प्रजापतिमुपाजगाम । स प्रजापतिर्व्यावृत्तिकामाय तस्मा इन्द्रायातीतसृष्टिगतेन्द्रदेवताकमेकादशकपालं पुरोडाशं निरवपत् । स प्रजापतिः स्वयमिन्द्रस्य यजमानस्य याग आध्वर्यवमकरोत् । तेनैव यागेनास्मिन् व्यावृत्तिकाम इन्द्रे सामर्थ्यं स्थापितवान् । तत्सिद्ध्यर्थं [३६]शक्करीछन्दसा युक्ते द्वे ऋचौ याज्यानुवाक्ये अकरोत् । यद्यप्यत्र ' प्रो ष्वस्मा ' इत्येकैव शक्करी तथाऽप्यावृत्ता सती सैव शक्करी याज्या पुरोनुवाक्या च भविष्यतीति । सा च शक्करी वज्ररूपा । स च वज्र एनं व्यावृत्तिकामिनमिन्द्रं भूत्यै आधिपत्यलक्षणायैश्वर्यायैन्द्ध प्रकाशितवान् । स चेन्द्रोऽधिपतिरभवत् । भूत ऐश्वर्यं प्राप्तः स इन्द्रः पुनरबिभेदियमत्युग्रा शक्करी मां [३७]प्रधक्ष्यतीति विचार्य तच्छान्तये[३८]

९–९. मै–इत्यसुनि वा; तं–इति विचि असुनि वा ।

३१. आ.क–वैर्यमिभव° । ३२. क–सनूनाम् । ३३. म४–विधातुं प्रस्तौति । ३४–३४. आ.क.हा–देवताभिरितराभिर्हि । ३५. आ.क.हा–' एव ' नास्ति । ३६. तं.म४–शाक्कर° । ३७. तं–दह्यतीति; ३५. म४–धक्ष्यतीति । ३८. तं–तच्छान्त्यै ।

तस्य॑ व॒यꣳ सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ।
स सु॒त्रामा॒ स्ववा॒ꣳ इन्द्रो॑ अ॒स्मे आ॒राच्चि॒द्द्वेषः॑ सनु॒तर्यु॑योतु ॥

तस्य॑ । व॒यम् । सु॒म॒ताविति॑ सु–म॒तौ । य॒ज्ञिय॑स्य । अपीति॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म ।
सः । सु॒त्रामेति॑ सु–त्रामा॑ । स्ववा॒निति॒ स्व–वा॒न् । इन्द्रः॑ । अ॒स्मे इति॑ ।
आ॒रात् । चि॒त् । द्वेषः॑ । स॒नु॒तः । यु॒यो॒तु ॥

तत्रैव याज्या—' तस्य वयम् ' इति त्रिष्टुप् ॥ तस्य इन्द्रस्य यज्ञियस्य यज्ञार्हस्य यज्ञसंपादनार्हस्य । " यज्ञर्त्विग्भ्यां घखञौ " ( पा ५·१·७१ ) । तस्य सुमतौ कल्याण्यां मतौ । " मन्क्तिन् व्याख्यान° " ( पा ६·२·१५१ ) इत्युत्तरपदान्तोदात्तत्वम् शोभनायां वा बुद्धौ । " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । तत्र विषयत्वेन वयं स्याम, तस्येन्द्रस्य भद्रे भजनीये कल्याणे सौमनसे सौमनस्ये च स्याम । एतदुक्तं भवति—यागसंपादिनः तस्य सुमतौ स्याम यथा सर्वकालं यागकारिणो भवाम । अपि च—तस्य भद्रे सौमनसे सौमनस्ये च फलं स्याम यथा सर्वकालाभिमतभाजः सर्वकालं मोदेमहीति । छान्दसः अण्प्रत्ययः । इन्द्रः सुत्रामा सुष्ठु त्राता स्ववान् धनवान् अस्माकं द्वेषः द्वेष्टॄन् सनुतः अन्तर्हितान् कृत्वा आरात् चित् दूरादेव युयोतु यापयतु नाशयतु । व्यत्ययेन शपः श्लुः । " सुपां सुलुक्° " ( पा ७·१·३९ ) इत्यस्मच्छब्दात् परस्याः षष्ठ्याः ' शे ' आदेशः, " शे " ( पा १·१·१३ ) इति प्रगृह्यत्वम् ॥

" योऽलꣳ श्रियै सन्त्सदृङ्समानैः स्यात् तस्मा एतमैन्द्रमेकादशकपालं निर्वपेत् " ( तैसं २·२·८ ) इत्यस्य पुरोनुवाक्या—' रेवतीर्नः ' इति गायत्री ॥ " रेवती पुरोनुवाक्या " ( तैसं २·२·८ ) इति ब्राह्मणम् । रेवत्यः धनवत्यः सर्वधनसाधनभूताः । पूर्ववत् पूर्वसवर्णदीर्घत्वम् । नः अस्माकं सधमादः अस्माभिः सह माद्यन्तः । मद तृप्तियोगे चुरादिः । ततो ण्यन्तात् क्विप् । " सध मादस्थयोः " ( पा ६·३·९६ ) इति सहस्य सधादेशः । आपश्चोच्यन्ते ।

स इन्द्रः प्रजापतिं पुनरुपाधावत् । स च प्रजापतिः [३९]-शक्वर्या अधि-[३९] अधिकत्वेन रेवतीं ' रेवतीर्नः सधमाद ' इत्येतामृचं निर्मितवान् । किमर्थम् ? शक्वर्या उग्रत्वशान्त्या इन्द्रस्याप्रदाहाय च ॥

ऐश्वर्ययोग्यराजकुमारादेरैश्वर्याप्राप्तावैश्वर्यप्राप्त्यर्थमिष्टिमिदानीं विधत्ते—" योऽलꣳ श्रियै सन्त्सदृङ्समानैः स्यात्तस्मा एतमैन्द्रमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं दधाति " ( तैसं २·२·८ ) इति । यः पुमान् राजकुमारादिः श्रियै ऐश्वर्यायालं सन् योग्यः[४०] सन्नपि तदैश्वर्यमप्राप्य समानैः साधारणैरैश्वर्यरहितैः प्राणिभिः सदृशः स्यात्तस्मै तदर्थमियमिष्टिः ॥ तामेतामिष्टिं विधाय याज्यानुवाक्ये विधत्ते—" रेवती पुरोनुवाक्या भवति शान्त्या अप्रदाहाय शक्वरी याज्या वज्रो वै शक्वरी स एनं वज्रो भूत्वा इन्धे भवत्येव " ( तैसं २·२·८ ) इति ॥

३९–३९. तं–शक्वर्याम्; म४–शक्वर्या । ४०. आ.क.हा–समर्थः ।

रे॒वती॑र्नः सध॒माद॒ इन्द्रे॑ सन्तु तु॒विवा॑जाः । क्षु॒मन्तो॒ याभि॒र्मदे॑म ॥

रे॒वतीः॑ । नः॒ । स॒ध॒माद॒ इति॑ सध–मादः॑ । इन्द्रे॑ । स॒न्तु॒ । तु॒विवा॑जा इति॑ तु॒वि–वा॒जाः॒ । क्षु॒मन्तः॑ । याभिः॑ । मदे॑म ॥

तुविवाजाः बह्वन्नाः चरुपुरोडाशादिबह्वन्नसंपादिन्यः अस्माकम् इन्द्रे इन्द्रनिमित्तं सन्तु याभिः विषयं क्षुमन्तः इन्द्रमेव स्तुवन्तो मदेम माद्येम । व्यत्ययेन शप् । क्षौतेः क्विपि छान्दसस्तुगभावः । " ह्रस्वनुड्भ्यां मतुप् " ( ६·१·१७६ ) इति मतुप उदात्तत्वम् ॥

तत्रैव याज्या—' प्रोष्वस्मै ' इति शक्वरी सप्तपदा ॥ " शक्वरी याज्या " ( तैसं २·२·८ ) इति ब्राह्मणम् । अस्मै इन्द्राय । षष्ठ्यर्थे चतुर्थी ( पा २·३·६२ ) । अस्येन्द्रस्य पुरोरथं रथस्य पुरस्तात् । " पुरोऽव्ययम् " ( पा १·४·६७ ) इति गतित्वम् । रथस्याग्रतो यथा शूषं बलं प्रो सु अर्चत प्रकर्षेण सुखेन च वाग्भिरभ्यर्चयत । प्रो इति निपातसमुदाय ओदन्तः । " सुञः " ( पा ८·३·१०७ ) इति सोः षत्वम् । स चास्माभिरर्चितबलः अस्माकं बोधि अस्मद्बुध्यतां रक्ष्यत्वेन स्मरतु । " अधीगर्थ° " ( पा २·३·५२ ) इति कर्मणि षष्ठी । बुधेश्छान्दसे लुङि " दीपजनबुध° " ( पा ३·१·६१ ) इति च्लेश्चिणादेशः । " बहुलं छन्दस्यमाङ्योगेऽपि " ( पा ६·४·७५ ) इत्यडभावः । इन्द्रो विशेष्यते अभीके चित् अभ्यर्णेऽपि परबले योद्धुं कामयमानोऽपि लोककृत् स्थानकृत् एवमेव वैमुख्यं भजते । केशाकेश्यवस्थायामपि परबलेनार्दितोऽपि युद्धभूमौ स्थितिमानेव भवतीति । केत्यत्राह— समत्सु संग्रामेषु सङ्गे सति यदा समत्सु सङ्गं करोति तदाभीके अन्तिकेऽपि लोककृदेव । वृत्रहा वृत्रं हतवान् खल्वसाविति । " अनुकाभिकाभीकः कमिता " ( पा ५·२·७४ ) इति निपात्यते । सह माद्यन्त्वा-

**रेवतीरिति** ॥ रेवत्याः पाठस्तु—" रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ' इति ॥ रेवतीः धनवत्यः सधमादः अस्माभिः सह मादयन्त्यो हर्षयुक्ताः तुविवाजाः बह्वन्नोपेताः शक्वरीप्रापितदाहशान्तिप्रदा आपः नः अस्माकं स्वामिनि इन्द्रे सन्तु अस्मत्सुखाय तिष्ठन्तु । याभिः अद्भिः सह वयं क्षुमन्तः शब्दायन्त इन्द्रं स्तुवन्तो मदेम हृष्यास्म ॥

**प्रोष्विति** ॥ शक्वर्योः पाठस्तु—' प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् । ज्याका अधि धन्वसु ' इति ॥ अस्मै इन्द्राय अस्येन्द्रस्य पुरोरथं रथस्य पुरोभागे शूषं बलं प्रो पु अर्चत प्रकर्षेण सुष्ठु पूजयत । कथं बलस्य पूजा इत्युच्यते । अयमिन्द्रो वृत्रहा वैरिघाती समत्सु संग्रामेषु सङ्गे योद्धुमिर्वैरिभटैः सङ्गे सति संयोगे सति अभीके चित् उ हन्तुं कामयमानेऽपि वैरिणि लोककृत् स्थितिं करोत्येव न तु पलायते, इत्थं बलस्य पूजा । तथा पूजित इन्द्रोऽस्माकमितरव्यावृत्तये चोदिता प्रेरयिता सन् बोधि बुध्यतां सावधानो भवतु । अन्यकेषां कुत्सितानां वैरिणां धन्वसु अधिश्रित्य वर्तमाना ज्याकाः कुत्सिता ज्याः नभन्तां [41]नश्यन्तु [42]त्रुट्यन्त्वित्यर्थः ॥

[41]. तं.म४-हिंस्यताम् । [42]. म४-त्रुटचन्तामित्यर्थः ।

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहा ।
अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् ।
ज्याका अधि (५) धन्वसु ॥ १३ ॥
[ जरसा मा ते हर्यश्व सुवीर्यस्याध्येकं च ]

प्रो इति । स्विति । अस्मै । पुरोरथमिति पुरः-रथम् । इन्द्राय । शूषम् । अर्चत । अभीके । चित् । उ । लोककृदिति लोक-कृत् । सङ्गे । समत्स्विति समत्-सु । वृत्रहेति वृत्र-हा । अस्माकम् । बोधि । चोदिता । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधीति (५) । धन्वस्विति धन्व-सु ॥ १३ ॥

[ पाकयज्ञꣳ सꣳश्रवाः परोक्षं बार्हिषोऽहं ध्रुवामगन्मेत्याह देव सवितर्देवस्याहं क्षत्रस्योल्बं वाजस्येममग्निरेकाक्षरेणोपयामगृहीतोऽस्यन्वह मासास्त्रयोदश ] [ पाकयज्ञं परोक्षं ध्रुवां वि सृजते च नः सर्ववीरा पतयः स्यामैकपञ्चाशत् ] [ पाकयज्ञं धन्वसु ]

स्विति समदः । समानं मादयन्ति वा । “ समानस्य सः ” ( द्र. पा ६·३·८४ ) इति सभावः । स खलु इन्द्रः $^{v}$चोदिता सर्वेषां धनानां दाता प्रेरयिता । चुद सञ्चोदने । ण्यन्तात् तृचि “ बहुलं संज्ञाछन्दसोः ” ( द्र. उ १९० ) इति णिलुक् । किंच—तस्येन्द्रस्य प्रसादेन $^{v}$अन्यकेषां परेषां $^{v}$ज्याकाः । उभयत्रापि कुत्सायां प्रागिवीयः कः ( पा ५·३·७० ) । $^{v}$अधि $^{v}$धन्वसु धनुःषु आरोपिताः कुत्सिता ज्याः $^{v}$नभन्तां नश्यन्तु । नभ हिंसायाम् । व्यत्ययेन शप् ॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

॥ समाप्तश्च प्रपाठकः ॥

अत्र विनियोगसंग्रहः —

“ अन्वहान्वृजुमत्यैन्द्र इन्द्राणीति तु (मिति) तच्चरौ ।
यो जातो मन्युमत्यैन्द्रे मा नो दातृमदैन्द्रके ॥ १ ॥
प्रदा प्रदातृमत्यैन्द्र इन्द्रः सुत्रामसंयुते ।
रेवतीः श्रीप्रदैन्द्रे स्यादत्र मन्त्राश्चतुर्दश ॥ २ ॥ ” इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमः प्रपाठकः ॥

# ( अथ प्रथमकाण्डे अष्टमः प्रपाठकः )

अथ राजसूयब्राह्मणं वैश्वदेवं काण्डम् । ऋचो यजूंषि चात्र भवन्ति, प्रायिकत्वात् ब्राह्मणमुच्यते । [1]द्विविधं ब्राह्मणं[1] कर्मब्राह्मणं कल्पब्राह्मणं चेति । तत्र कर्मब्राह्मणं, यत् केवलानि कर्माणि विधत्ते, मन्त्रान् विनियुङ्क्ते, न प्रशंसां करोति न निन्दां, यथेदमेव— " अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा " इत्यादि । कल्पब्राह्मणं भवति, यथा— " संवत्सरमेतद्व्रतं चरेत् । द्वौ वा मासौ " ( तैआ १·३२ ) इत्यादि । कृतयः " प्रजापतिः प्रजा असृजत " ( तैसं २·१·२ ) इत्यादयः, तदपि कल्पब्राह्मणम् । [2]गाथा इतिहासाः पुराकल्पाश्च ब्राह्मणान्येव । [2]गाथा वैदिकाः श्लोकाः अर्थप्रधाना: न प्रशंसानिन्दापराः " स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयम् " ( तैआ १·२ ) इत्याद्याः । इतिहासाः परकृतयः मनुष्यकृतयः " विश्वरूपो वै त्वाष्ट्रः " ( तैसं २·५·१ ) इत्येवमादयः । पुराकल्पाः प्रजापत्यादिकृतयः, " प्रजापतिः प्रजा असृजत " ( तैसं २·१·२ ) इत्येवमादयः । सर्वाण्येतानि ब्राह्मणान्युच्यन्ते । एतदुक्तं भवति—कर्ममन्त्रचोदना ब्राह्मणम् । तत्त्वविषयमर्थवादादियुक्तं कर्मविधानं कल्पं ब्राह्मणमित्युच्यते । अतत्त्वविषयं कर्मविधानं कल्पब्राह्मणमेव, यथा—" सावित्रं जुहोति प्रसूत्यै " ( द्र तैसं ५·१ ) इत्यादि । आहुश्च—' क्वचिद्विधिः प्रशंसा च केषुचिद्विधिरेव हि । केषुचित्स्तुतिरेव स्यात् एवं निन्दानिषेधयोः ' इति । तत्रास्मिन् प्रश्ने कर्माणि विधीयन्ते मन्त्राश्च केवलमाम्नायन्ते, न विनियुज्यन्ते । औपानुवाक्ये तु कर्माणि च विधीयन्ते मन्त्राश्चाम्नायन्ते तदानीमेव च ते विनियुज्यन्ते इति विशेषः । तत्र राजसूये पवित्रेऽग्निष्टोमे पञ्चम्यां संस्थिते

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठकेऽथाष्टमेऽस्मिन् राजसूयो निगद्यते ।
द्वाविंशत्यनुवाकेषु विंशत्या राजसूयके ॥ २ ॥
अनेकानि प्रधानानि कर्माणि विहितान्यथ ।
द्वाभ्यां सौत्रामणीमन्त्राः काम्या याज्याश्च वर्णिताः ॥ ३ ॥
अष्टमे मन्त्रकाण्डस्थे कर्मणां बहुलत्वतः ।
तत्तत्संनिधये प्रोक्ता मन्त्रा विधिपुरःसराः ॥ ४ ॥
अनूद्य तान् विधीनर्थवादो ब्राह्मण ईरितः ।
संप्रदायविदोऽतोऽत्र ब्राह्मणद्वयमूचिरे ॥ ५ ॥
ब्राह्मणं मन्त्रकाण्डस्थविधिजातमितीरित. ।
अनुब्राह्मणमन्यत्तु कथितं सार्थवादकम् ॥ ६ ॥

१. ति–तद्विविधं ब्राह्मणं धाम इतिहासाः पुराकल्पाश्च । २–२. ति.त्रि.मै–गाथाः ।

राजसूये अनुमत्यादयो यागाः ]

हरिः ॐ ।   अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा

अनुमत्या इत्यनु--मत्यै । पुरोडाशम् । अष्टाकपालमित्यष्टा--कपालम् । निरिति । वपति । धेनुः । दक्षिणा ।

षष्ठीमारभ्यान्वहमनुमत्यादयोऽष्टौ यागाः सन्ति, तान् विदधाति—'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' इत्यादि ॥ अनुब्राह्मणं च भवति "अष्टावेतानि हवींऽषि भवन्ति" (तैब्रा १·६·१) इति । तत्र षष्ठ्यामानुमतमष्टाकपालं निर्वपति । यया सर्वं क्रियते [साऽनुमतिः] । अनुमतिरिति "इयमेवास्मै राज्यमनुमन्यते" (तैब्रा १·६·१) इत्यनुमत्यभिमानिनी वा काचिद्देवता पृथिवीत्वेन रूप्यते । "तादौ च निति°" (पा ६·२·५०) इति गतेः प्रकृतिस्वरत्वम् । तस्यै ᵛपुरोडाशम् ᵛअष्टाकपालं ᵛनिर्वपति तदुद्देशेन पृथक्करोति । अष्टसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः । "द्विगोर्लुगनपत्ये" (पा ४·१·८८) इति प्राग्दीव्यतीयस्य लुक् । "अष्टनः कपाले हविष्युपसंख्यानम्" (पा ६·३·४६ वा २) इति पूर्वपदस्यात्वम् । "इगन्तकालकपाल°" (पा ६·२·२९) इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र ᵛधेनुः प्रत्यग्रप्रसवा गौः ᵛदक्षिणा देया । "दक्षिणस्यादिगाख्यायाम्" (द्र. फिसू ८,९,१८) इत्याद्युदात्तत्वम् ॥

**अनुमत्या इति** ॥ तत्र प्रथमानुवाके प्रथमं तावद्ब्राह्मणेन कर्मद्वयं विधीयते—'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा' इति ॥ चतुर्दशीमिश्रितायाः पौर्णमास्या अभिमानिनी देवताऽनुमतिः । "अमावास्या सिनीवाली पौर्णमास्यनुमतिः" (तैसं ३·४·९) इति श्रुतेः । "कलाहीने साऽनुमतिः पूर्णे राका निशाकरे" (अमरकोश १·३·८) इत्यभिधानाच्च[1] । सा चानुमतिरत्र देवता, पुरोडाशो द्रव्यमित्येतदेकं कर्म, दक्षिणाभिधानेन वक्ष्यमाणेभ्यः कर्मभ्यो भिन्नाधिकारावगमात् । अस्मिन् कर्मणि पुरोडाशार्थं तण्डुलेषु पिष्यमाणेषु पश्चिमायां दिशि दृषदमभ्याधातुमधः स्थापितायाः ᵛशम्यायाः पश्चात् ये तण्डुलपिष्टलेशाः ᵛअवशीयन्ते[2] अधः[3] पतन्ति तल्लेशजातं द्रव्यं नैर्ऋतं[4] निर्ऋतिदेवताकं तदिदमपरं कर्म, पृथग्दक्षिणाभिधानात् । ᵛकृष्णं ᵛवासः अत्र दक्षिणा, तच्च ᵛकृष्णतूषं कृष्णदशान्तम् । केषांचिद्वस्त्राणां वैचित्र्याय दशाभागमुपेक्ष्य मध्यमभाग एव काषायहरिद्रादिभी रञ्जितो भवति [5]तद्वन्मा भूदिति कृष्णतूषत्वेन विशेष्यते । एतस्मिन् मुख्ये ब्राह्मणे प्रधानकर्ममात्रं[6] विहितम् । अनुब्राह्मणं तु ग्रन्थान्तरे प्रथमकाण्डे षष्ठसप्तमाष्टमप्रपाठकरूपम् ॥ तत्र [7]षष्ठप्रपाठकस्याऽऽदौ पूर्वोदाहृतं कर्मविधिमनूद्य प्रशंसति—"अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । ये प्रत्यञ्चः शम्याया अवशीयन्ते । तं नैर्ऋतमेककपालम् । इयं वा अनुमतिः । इयं निर्ऋतिः" (तैब्रा १·६·१) इति । भूमिर्द्विविधा शालिगोधूमादि-

१. आ.क.ना.हा–'च' नास्ति । २. ना.पा.हा–अवशीर्यन्ते । ३. त्रि४–अधस्तात् । ४. आ.क.ना.हा–'नैर्ऋतं' नास्ति । ५. क.ना.पा.हा–तन्मा । ६. आ.क.ना.हा–प्रधानं कर्म । ७. ना.पा.हा–प्रपाठकस्या° ।

ये प्र॒त्यञ्चः॒ शम्या॑या अव॒शीय॑न्ते॒ तं नैर्ऋ॒तमेक॑कपालं कृ॒ष्णं वासः॑ कृ॒ष्णतू॑षं॒ दक्षि॑णा॒

ये । प्र॒त्यञ्चः॑ । शम्या॑याः । अ॒व॒शीय॑न्त॒ इत्य॑व--शीय॑न्ते । तम् । नै॒र्ऋ॒तमिति॑ नैः--ऋ॒तम् । एक॑कपाल॒मित्येक॑--क॒पा॒ल॒म् । कृ॒ष्णम् । वासः॑ । कृ॒ष्णतू॑ष॒मिति॑ कृ॒ष्ण--तू॒ष॒म् । दक्षि॑णा ।

तथास्मिन्नेव नैर्ऋतं विधातुमाह—'ये प्रत्यञ्चः' इत्यादि ॥ अत्र "नैर्ऋतेन पूर्वेण प्रचरति" ( तैब्रा १·६·१ ) इत्यनुब्राह्मणदर्शनादानुमतात् पूर्वमेव नैर्ऋतेन प्रचरितव्यं, तत्रानुमतस्य प्रथमाम्नानसामर्थ्यात् प्रथममानुमतमासाद्यते । प्रचरणं तु नैर्ऋतयागात् पश्चादिति विवेकः । तत्रानुमतं पिंषन् पश्चादुत्तरतश्च व्यवशातयति तण्डुलान्, तत्र [v]ये [v]शम्यायाः [v]प्रत्यञ्चः प्रत्यग्गताः [v]अवशीयन्ते अवपतन्ति तान् [v]नैर्ऋतम् [v]एककपालं निर्वपेत्, निर्वपतीति प्रकृतत्वात् । निर्वपतिस्तु तूष्णीमुपचारादित्याहुः । निर्वपतिर्वा धात्वर्थसामान्ये करोत्यर्थे वर्तते । तान् प्रतीचीनांस्तण्डुलान् नैर्ऋतं कुर्यादित्यर्थः । 'तम्' इत्येककपालापेक्षयैकवचनम् । पूर्ववत् समासादिः । [3]विबाधनपृथिव्येव[4] निर्ऋतिः, पृथिव्येव विश्वमनुगृह्णाति निगृह्णाति च । ब्राह्मणं च भवति "इयं निर्ऋतिः" ( तैब्रा १·६·१ ) इति । देवतान्तरं वा पूर्ववत् । तत्र [v]कृष्णं [v]वासः [v]कृष्णतूषं कृष्णदशान्तं [v]दक्षिणा ॥

सर्वसस्याढ्या तद्योग्या वा[c] । तत्राऽऽद्यभूमिरूपाऽनुमतिर्द्वितीयभूमिरूपा निर्ऋतिः ॥ पश्चान्निरूपस्य नैर्ऋतस्याऽऽनुमतादुत्तरकाले न्यायप्राप्तं प्रधानयागप्रचारं बाधितुं पूर्वकालं विधत्ते—"नैर्ऋतेन प्रचरति । पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते" ( तैब्रा १·६·१ ) इति । लोके [9]-रुग्णानां पुरुषाणामनिष्टं रोगं प्रथमं-[9] निवार्य पश्चादिष्टा शरीरपुष्टिः संपाद्यते तद्वदत्रापि पाप्मानं प्रतिकूलां निर्ऋतिं प्रथमतो भागदानेन निवारयति ॥ विधिवाक्यगतं कपालैक्यमनूद्य प्रशंसति—"एककपालो भवति । एकधैव निर्ऋतिं निरवदयते" ( तैब्रा १·६·१ ) इति । एकधैवैकेनैव प्रयत्नेन, कपालबाहुल्ये हि प्रयत्नबाहुल्यं प्रसज्येतेति । [10]तदिदमानुमतनैर्ऋतादिकमन्वारम्भणीयास्थानीयात् पवित्राख्यादग्निष्टोमादूर्ध्वमनुष्ठेयम् ॥

[11]तथात्राऽऽपस्तम्ब आह—"राजा स्वर्गकामो राजसूयेन यजेत । [12]शतसहस्रं दक्षिणा । अग्निष्टोमः पञ्चापवर्गः प्रथममहः । पञ्च सहस्राणि पवित्रे ददाति । त्रिंशतमभिषेचनीये । त्रिंशतं दशपेये । दश केशवपनीये । विंशतिं व्युष्टिद्विरात्रे । पञ्च क्षत्रस्य धृतौ । अपि वा चत्वार्यभिषेचनीये । प्रतिसाहस्राणीतराण्यहानि । [13]-षष्टिश्च त्रीणि शतानि सहस्राणां-[13] ददानीति बह्वृचब्राह्मणं* भवति । तथा दक्षिणा अतिनयेद्यथाऽस्याहानि [+]समकालानि स्युः । शेषमनुदिशति । श्वो भूत आनुमतादिभिरष्टाभिरन्वहं यजेत । पिंषन्नानुमतं पश्चादुत्तरतश्च व्यवशातयति । ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालम्" ( आपश्रौ १८·८·१–१२ ) इति । अत्र च—"आनुमतमासाद्य नैर्ऋतेन प्रचरति" ( आपश्रौ १८·८·१५ ) इति च[14] । बौधायनोऽप्येतदेव विशदयति—"राजसूयेन यक्ष्यमाणो भवति । [+]पुरस्तात्फाल्गुन्यै पौर्णमास्यै चैत्र्यै वा पौर्णमास्या आमावास्येन

३. तं–निबाधन°; त्रि–विबाधन° । ४. ति–'पृथिव्येव' नास्ति ।

८. त्रि४–च । ९–९. म४–यथा वा रोगिणामनिष्टं प्रथमं रोगम् । १०. त्रि४–तदिद° । ११. तं. त्रि.ना.म४–तथा चाऽऽप°; हा–'अत्र' नास्ति । १२. आ.क.ना.हा–गवां शतसहस्रम् । १३–१३. आ.क–षष्टिं शतानि सहस्राणि । *[ द्र. ऐब्रा २·१७ त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । ] । +[ आपश्रौसूत्रे–'स्वकालानि' । ] । १४. आ.ना.हा–'च' नास्ति । +[ बौश्रौसूत्रे 'स पुरस्तात्' । ] ।

**वीहि स्वाहाऽऽहुतिं जुषाण**

वीति । इहि । स्वाहा । आहुतिमित्या–हुतिम् । जुषाणः ।

तत्र नैर्ऋतेन प्रचरितुं दक्षिणमपरमवान्तरदेशं गमिष्यन् गार्हपत्ये जुहोति—' वीहि ' इति ॥ [v]वि [v]इहि विगच्छ विगच्छद्भिरस्माभिः विश्लिष्टो भव माऽस्माननूत्थाय बाधिष्ट । हे गार्हपत्य, तुभ्यं [v]स्वाहा स्वाहुतं करोमीदमाज्यम् । तस्मादिमाम् [v]आहुतिं [v]जुषाणः सेवमानः शान्तो भूत्वा इहैवास्स्व इत्यर्थः । स्वाहाकृतामिमामाहुतिं जुषाण इति वा । " तादौ च " ( पा ६·२·५० ) इति गतः प्रकृतिस्वरत्वम् । जुषेः शानचि " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । व्यत्ययेन सार्वधातुकत्वादनुदात्तत्वाभावः । ताच्छीलिको वा चानश् ( पा ३·२·१२९ ) । " यदहुत्वा गार्हपत्य ईयुः " ( तैब्रा १·६·१ ) इत्यादि ब्राह्मणम् ॥

हविषेष्ट्वा दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः । संतिष्ठत एष प्रायणीयोऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तः । अथाऽष्टमेऽहन्यनुमतं निर्वपति । . . . . . । हविःपेष्यै प्रयच्छन्नाह प्राचश्च[15] प्रतीचश्च व्यवशातयेति " ( बौश्रौ १२·१ ) इति, " ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समोप्य[¤] संयुत्याऽऽनुमतं श्रपयति । अथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान् प्रतिप्रस्थाता समोप्य[¤] संयुत्य नैर्ऋतं श्रपयति " ( बौश्रौ १२·१ ) इति च ॥

वीहीति ॥ प्रधानकर्ममात्राभिधायकेन[16] मुख्यब्राह्मणेनोपेते प्रकृते मन्त्रकाण्डे नैर्ऋतयागविधिसंनिधौ[17] ' वीहि ' इत्यादयस्त्रयो मन्त्रा आम्नातास्तेषां विनियोगं बौधायन आह—" गार्हपत्ये स्रुवाहुतिं जुहोति वीहि स्वाहाऽऽहुतिं जुषाण इति । अथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्यात्प्रदरो वा । तदेतदेकोल्मुकमुपसमाधाय अङ्गुष्ठाभ्यां* परिगृह्य नैर्ऋतं जुहोति एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहेति । अत्र कृष्णं वासः कृष्णतूषं निदधाति[M] । अथापो व्यतिषिच्य परास्य पात्रं निदधात्यनवेक्षमाणा आयन्त्यथ हस्तपादान् प्रक्षाल्य । एतेनैव पथा यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेति । अथाऽऽनुमतेन सꣳस्थां करोति । धेनुं ददाति " ( बौश्रौ १२·१ ) इति ।

हे गार्हपत्य, [v]स्वाहा तुभ्यं दत्ताम् [v]आहुतिं [v]जुषाणः सेवमानः [v]वीहि दक्षिणां दिशं जिगमिषुभिरस्माभिर्विगतो भव माऽस्माननूत्थाय बाधिष्ठाः ॥ कृत्स्नाऽङ्गविधायके सार्थवादेऽनुब्राह्मणे यथोक्ताहुतिविधिरन्वयव्यतिरेकाभ्यामुन्नीयते—" यदहुत्वा गार्हपत्य ईयुः । रुद्रो भूत्वाऽग्निरनूत्थाय । अध्वर्युं च यजमानं च हन्यात् । वीहि स्वाहाऽऽहुतिं जुषाण इत्याह । आहुत्यैवैनꣳ शमयति । नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानः" ( तैब्रा १·६·१ ) इति । यद्यदि । रुद्रः क्रूरदेवः । " रुद्रो वै क्रूरः " ( तैसं ६·१·७,६·२·३ ) इति श्रुतेः । अध्वर्युयजमानयोरार्त्तिनिवारणाय जुहुयादित्यर्थः ॥ दक्षिणाग्नेरुल्मुकनयनं विधत्ते—" एकोल्मुकेन यन्ति । तद्धि निर्ऋत्यै भागधेयम् " ( तैब्रा १·६·१ ) इति । उल्मुकेन युक्ता इत्यध्याहारः । निर्ऋतेरेकोल्मुकप्रियत्वमर्थवादान्तरगतं हिशब्देन[18] सूच्यते ॥ दक्षिणपश्चिमयोरवान्तरदेशमङ्गुलिनिर्देशेन विधत्ते—" इमां

१५. इ.उ.ना.पा.हा–प्राञ्चश्च । [¤][ बौश्रौसूत्रे ' समुप्य ' । ] । १६. तं–'कर्मविधायकेन; त्रि४–कर्ममात्रविधायकेन । १७. म४– 'यागसंनिधौ । *[ बौश्रौसूत्रे ' संपरिस्तीर्याङ्गुष्ठाभ्याम् ' । ] । [M][ बौश्रौसूत्रे–' ददाति ' इति । ] । १८. म४–विशेषेण ।

**एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहा नमो य इदं चकार-**

एषः । ते । निर्ऋत इति निः--ऋते । भागः । भूते । हविष्मती । असि ।

मुञ्च । इमम् । अꣳहसः । स्वाहा । नमः । यः । इदम् । चकार ।

नैर्ऋतं सर्वं जुहोति—‘ एष ते ’ इति गायत्री । यजुरिति केचित् ॥ मुञ्चेति तिङः परत्वात् पादादित्वान्न निहन्यते ( पा ८·१·१८,२८ ) । हे निर्ऋते, एषः ते भागः, त्वयेदं हविर्भुज्यताम् । कर्मणि घञ् । “ कर्षात्वतः° ” ( पा ६·१·१५९ ) इत्यन्तोदात्तत्वम् । हे भूते भूतरूपे निर्ऋतिभूते वा । यद्वा—सर्वेषां भूतिहेतो । ब्राह्मणं च भवति—“ भूतिमेवोपावर्तते ” ( तैब्रा १·६·१ ) इति । पादादित्वान्न निहन्यते ( ८·१·१८,१९ ) । यस्मादनेन हविषा हविष्मती त्वम् असि, तस्मात् इमं हविषोऽस्य दातारं यजमानम् अꣳहसः पापात् मुञ्च इति । “ अꣳहस एवैनं मुञ्चति ” ( तैब्रा १·६·१ ) इति ब्राह्मणम् ॥

पुनरेत्य गार्हपत्ये जुहोति—स्वाहा स्वाहुतमिदमाज्यमस्तु, नमः नमस्कारश्चास्तु । कस्मै ? यः ह वा इदम् अस्मत्प्रार्थितं चकार तथैव कृतवान् । निर्ऋतिं यष्टुं गच्छतोऽस्मान् सोढ्वा अननूत्थाय अत्रैव शान्तोऽवस्थित इति यावत् । यद्वा—इदं विश्वं चराचरं जगच्चकार ॥

दिशं नयन्ति । एषा वा निर्ऋत्यै दिक् । स्वायामेव दिशि निर्ऋतिं निरवदयते ” ( तैब्रा १·६·१ ) इति ॥ [19]नीतस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते—“ स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । स्व एवाऽऽयतने निर्ऋतिं निरवदयते ” ( तैब्रा १·६·१ ) इति । इरिणमूषरक्षेत्रं तच्च स्वकृतं स्वतःसिद्धं न तु यतः कुतश्चिदादायोषाः[20] प्रक्षिप्ताः । प्रदरः स्वतःसिद्धं भूछिद्रम्[21] ॥

द्वितीयमन्त्रस्यायमर्थः—हे निर्ऋते पाप्मदेवते[22] एषः एककपालपुरोडाशस्तव भागः । हे भूते, स्वकीयभागे परितोषेणास्मदीयैश्वर्यहेतो, त्वमिदानीं हविष्मती असि । अत इमं यजमानम् अꣳहसो दारिद्र्यप्रदात् पापात् मुञ्च । अत्र स्वाहाकारो बौधायनेनाध्याहृतः ॥ निर्ऋतिमुद्दिश्य प्रत्यक्षमेव भागं समर्पयितुमेतच्छब्द इत्यभिप्रेत्य व्याचष्टे—“ एष ते निर्ऋते भाग इत्याह । निर्दिशत्येवैनाम् ” ( तैब्रा १·६·१ ) इति ॥ भूतिशब्देन निर्ऋतिपरामर्शस्याभिप्रायमाह—“ भूते हविष्मत्यसीत्याह । भूतिमेवोपावर्तते ” ( तैब्रा १·६·१ ) इति । प्राप्नोतीत्यर्थः ॥ मन्त्रसामर्थ्यात् सर्वथा मुञ्चतीत्यमुमभिप्रायं दर्शयति—“ मुञ्चेममꣳहस इत्याह । अꣳहस एवैनं मुञ्चति ” ( तैब्रा १·६·१ ) इति ॥ चोदकप्राप्तं जुह्वा होममपवदितुं विधत्ते—“ अङ्गुष्ठाभ्यां जुहोति । अन्तत एव निर्ऋतिं निरवदयते ” ( तैब्रा १·६·१ ) इति । अन्तत एव हस्ताग्रेणैव निर्ऋतिमपसारितवान् भवति । मुख्यब्राह्मणे विहितां दक्षिणां प्रशंसति—“ कृष्णं वासः कृष्णतूषं दक्षिणा । एतद्वै निर्ऋत्यै रूपम् । रूपेणैव निर्ऋतिं निरवदयते ” ( तैब्रा १·६·१ ) इति । राक्षसजातेः [23]-पापरूपाया निर्ऋतेर्देहः-[23] कृष्णवर्णः ॥ पृष्ठभागदर्शनरहितं प्रत्यागमनं विधत्ते—“ अप्रतीक्षमायन्ति । निर्ऋत्या अन्तर्हित्यै ” ( तैब्रा १·६·१ ) इति । अदर्शनायेत्यर्थः ॥

१९. त्रि४—तस्यो° । २०. तं.त्रि४–°दानीयोषाः । २१. तं–तच्छिद्रम् । २२. म४—पापदेवते । २३–२३. म४—पापरूपत्वात् निर्ऋतिर्देहः ।

राजसूये अनुमत्यादयो यागाः ]

**ऽऽदित्यं चरुं निर्वपति वरो दक्षिणाऽग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणाग्नीषोमीयमे(१)कादशकपालꣳ हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणाऽऽग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही**

आदित्यम् । चरुम् । निरिति । वपति । वरः । दक्षिणा । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । वामनः । वही । दक्षिणा । अग्नीषोमीयमित्यग्नी-सोमीयम् (१) । एकादशकपालमित्येकादश-कपालम् । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । ऋषभः । वही । दक्षिणा ।

श्वोभूते आदित्यं चरुं निर्वपति । अदितिः देवमाता* पृथिवी वा, सा देवताऽस्य⚹ आदित्यः । " दित्यदिति° " ( पा ४.१.८५ ) इति ण्यः । " उभयीष्वेव प्रजासु " ( तैब्रा १.६.१ ) इत्यादि ब्राह्मणम् । तत्र [v]वरः [v]दक्षिणा । गौर्वरः ॥

श्वोभूते [v]आग्नावैष्णवम् [v]एकादशकपालं निर्वपति । " अग्निः सर्वा देवताः " ( तैब्रा १.६.१ ) इत्यादि ब्राह्मणम् । अत्र [v]वामनः [v]वही [v]दक्षिणा । वामनो ह्रस्वाङ्गः । वही वहनदेशवान् । " यद्वही । तेनाऽऽग्नेयः " ( तैब्रा १.६.१ ) इत्यादि ब्राह्मणम् ॥

श्वोभूते [v]अग्नीषोमीयम् [v]एकादशकपालं निर्वपति—" अग्नीषोमाभ्यां वा इन्द्रः " ( तैब्रा १.६.१ ) इत्यादि ब्राह्मणम् । " द्यावापृथिवीशुनासीर° " ( पा ४.२.३२ ) इति छः । तत्र [v]हिरण्यं [v]दक्षिणा, " हिरण्यं दक्षिणा समृद्ध्यै " ( तैब्रा १.६.१ ) भवति ।

श्वोभूते [v]ऐन्द्रम् [v]एकादशकपालं निर्वपति । " इन्द्रो वृत्रꣳ हत्वा " ( तैब्रा १.६.१ ) इति ब्राह्मणम् । तत्र [v]ऋषभो [v]वही [v]दक्षिणा । ऋषभः सेक्ता खेल( स्वैर? )गतिर्वा । अत्रायं पञ्चम ऐन्द्रो विधीयते, अनुब्राह्मणे तु ऐन्द्राग्नः, अत्र कथं भाव्यमिति भाव्यं; विकल्पो वा तुल्यबलत्वात् ॥

तृतीयमन्त्रस्यायमर्थः—यो गार्हपत्य इदमस्माभिर्वाहीनि शब्देन प्रार्थितमनुष्ठानं तथैव चकार, तस्मै [v]स्वाहा हविर्दत्तं नमस्कारश्च कृतः ॥ विधत्ते—" स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति । आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते " ( तैब्रा १.६.१ ) इति ॥ नैर्ऋतप्रचारादूर्ध्वं लब्धावसरस्याऽऽनुमतहविषः प्रचारं विधत्ते—" आनुमतेन प्रचरति । इयं वा अनुमतिः । इयमेवास्मै राज्यमनुमन्यते " ( तैब्रा १.६.१ ) इति । सर्वसस्याढ्यायां भूमावयमनुमतिशब्दोऽन्वर्थ इत्यभिप्रायः ॥ नवसूतिकाया गोर्दानं प्रशंसति—" धेनुर्दक्षिणा । इमामेव धेनुं कुरुते " ( तैब्रा १.६.१ ) इति । इमामेवानुमतिरूपां भूमिमेव ॥

**आदित्यमिति** ॥ ' आनुमतादिभिरष्टाभिः ' इति यदुदाहृतं तत्रैकस्मिन् दिनेऽनुष्ठितादानुमतादन्यान् क्रमेण दिनान्तरेष्वनुष्ठेयानादित्यादीन् सप्त मुख्यान् यागान् विधत्ते—' आदित्यं चरुं निर्वपति वरो

*[ द्र. निरुक्त ४.२२ अदितिः अदीना देवमाता । ] । ⚹[ द्र. पा ४.२.२४ ] ।

दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दक्षिणा ॥ १ ॥

[ अग्नीषोमीयं चतुस्त्रिꣳशच्च ]

आग्नेयम् । अष्टाकपालमित्यष्टा–कपालम् । ऐन्द्रम् । दधि । ऋषभः । वही । दक्षिणा । ऐन्द्राग्नमित्यैन्द्र–अग्नम् । द्वादशकपालमिति द्वादश–कपालम् । वैश्वदेवमिति वैश्व–देवम् । चरुम् । प्रथमज इति प्रथम–जः । वत्सः । दक्षिणा । सौम्यम् । श्यामाकम् । चरुम् । वासः । दक्षिणा । सरस्वत्यै । चरुम् । सरस्वते । चरुम् । मिथुनौ । गावौ । दक्षिणा ॥ १ ॥

[ मैसं २·६·१–२; कासं १५·१; शब्रा ५·२·३·२–९, वासं ९·३५ ]

श्वोभूते [v]आग्नेयम् [v]अष्टाकपालं निर्वपति, [v]ऐन्द्रं च [v]दधि । द्विहविष्कोऽयं यागः । " अग्निर्वै यज्ञमुखम् " ( तैब्रा १·६·१ ) इत्यादि ब्राह्मणम् । [v]ऋषभो [v]वही [v]दक्षिणा ॥

श्वोभूते [v]ऐन्द्राग्नं [v]द्वादशकपालं निर्वपति, [v]वैश्वदेवं [v]चरुं निर्वपति । " देवा वा ओषधीष्वाजिमयुः " ( तैब्रा १·६·१ ) इत्यादि ब्राह्मणम् । [v]तत्र[५] [v]प्रथमजः प्रथमजातः [v]वत्सः [v]दक्षिणा । अस्मिन् यागे [v]सौम्यं [v]श्यामाकं [v]चरुं निर्वपति । " सोमो वा अकृष्टपच्यस्य राजा " ( तैब्रा १·६·१ ) इत्यादि ब्राह्मणम् । श्यामाकशब्दात् विकारे " कोपधाच्च " ( पा ४·३·१३७ ) इत्यण् । तत्र [v]वासः [v]दक्षिणा । " सौम्यꣳ हि देवतया वासः " ( तैब्रा १·६·१ ) । त्रिहविष्कोऽयं यागः । " अष्टावेतानि हवींꣳषि " ( तैब्रा १·६·१ ) इति ब्राह्मणानुसारेण व्याख्यायते ' वत्सवाससी दक्षिणा ' इति ॥

श्वोभूते [v]सरस्वत्यै [v]चरुं निर्वपति, [v]सरस्वते [v]चरुम् । स्त्रीपुंसात्मके द्वे देवते । अयमपि द्विहविष्कः । [v]मिथुनौ स्त्रीपुंसौ [v]गावौ [v]दक्षिणा ॥

इत्यष्टमे प्रथमोऽनुवाकः ॥

दक्षिणाऽऽग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणाऽग्नीषोमीयमेकादशकपालꣳ हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणाऽऽग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दक्षिणा ' इति ॥ ' गौर्वै वरः ' ( आपश्रौ ५·११·५ ) इति सूत्रकारेणोदाहृतत्वात् [v]वरः गौः[*] । [v]वही

५. मै–अत्र ।

[*][ द्र. तैसं २.५.२–' आ एनं वरो गच्छति....क इदमच्छैति गौरित्यब्रुवन् । ] ।

भारवाही बलीवर्दः । ऋषभः सेचनसमर्थः साण्डः । आग्नेयैन्द्राभ्यां हविर्भ्यामुपेत एको यागः । ऐन्द्राग्नवैश्वदेवसौम्यैस्त्रिभिर्हविर्भिर्युक्त आग्रयणरूप एक एव यागः । सरस्वतीसरस्वद्देवताकाभ्यां[२४] [२५]हविर्भ्यां युक्तो याग एकः । तदेवमादित्यादयः सप्त संपद्यन्ते । अदितिदेवताकं कर्म प्रशंसति—"आदित्यं चरुं निर्वपति । उभयीष्वेव प्रजास्वभिषिच्यते । दैवीषु च मानुषीषु च" ( तैब्रा १·६·१ ) इति । अनुमतिर्मानुषभूमिः[२६] । अत एव राज्यमनुमन्यत इत्युक्तं भवति । अदितिर्देवभूमिरित्यभिप्रेत्य दैवीषु प्रजास्वभिषेकं दर्शयति । अतः पूर्वराज्येन सह समुच्चित्योभयीष्वित्युच्यते ॥ श्रेष्ठस्य गोर्दानं प्रशंसति—"वरो दक्षिणा । वरो हि राज्यꣳ समृद्ध्यै" ( तैसं १·६·१ ) इति । वरः श्रेष्ठो गौस्तस्य राजगृहार्हत्वाद्राज्यत्वम् ॥ अग्निं विष्णुं च पृथक् प्रशंसति—"आग्नावैष्णवमेकादशकपालं निर्वपति । अग्निः सर्वा देवताः । विष्णुर्यज्ञः । देवताश्चैव यज्ञं चावरुन्द्धे" ( तैब्रा १·६·१ ) इति । अग्नेः सर्वदेवतारूपत्वमन्यत्रोपपादितं—"ते देवा अग्नौ तनूः संन्यदधत । तस्मादाहुः अग्निः सर्वा देवताः" ( तैसं ३·२·८ ) इति । पुनरप्यन्यत्राम्नातं—"ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुः । अग्नि सर्वा देवताः" ( तैसं ६·२·२ ) इति । फलव्यापित्वात् यज्ञस्य विष्णुत्वम् ॥ अग्नेर्विष्णोश्च प्रीतिकरं वहित्वं वामनत्वं च दर्शयति—"वामनो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यद्वामनः । तेन वैष्णवः समृद्ध्यै" ( तैब्रा १·६·१ ) इति ॥ अग्नीषोमीयस्य वैरिघातित्वं याजमानमन्त्रब्राह्मणयोर्वृत्रवधब्राह्मणे च प्रसिद्धमित्यभिप्रेत्याऽऽह—"अग्नीषोमीयमेकादशकपालं निर्वपति । अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति । यदग्नीषोमीयमेकादशकपालं निर्वपति । वार्त्रघ्नमेव विजित्यै" ( तैब्रा १·६·१ ) इति । तत्कर्म शत्रुघ्नमेव भूत्वा विजयाय पर्याप्तं भवति ॥ हिरण्यस्य समृद्धिहेतुत्वं लोकप्रसिद्धमेव दर्शयति—"हिरण्यं दक्षिणा समृद्ध्यै" ( तैब्रा १·६·१ ) इति ॥ मुख्यब्राह्मणगतेनेन्द्रेण[२७] सह विकल्पितमैन्द्राग्नं विधातुं[२८] प्रस्तौति—"इन्द्रो वृत्रꣳ हत्वा । देवताभिश्चेन्द्रियेण च व्यार्ध्यत । स एतमैन्द्राग्नमेकादशकपालमपश्यत् । तं निरवपत् । तेन वै स देवताश्चेन्द्रियं चावारुन्द्ध" ( तैब्रा १·६·१ ) इति । व्यार्ध्यत व्यृद्धो वियुक्तोऽभूत् ॥ विधत्ते—"यदैन्द्राग्नमेकादशकपालं निर्वपति । देवताश्चैव तेनेन्द्रियं च यजमानोऽवरुन्द्धे" ( तैब्रा १·६·१ ) इति ॥ देवद्वयप्रीत्यर्थं गुणद्वयमित्येतद्दर्शयति—"ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै" ( तैब्रा १·६·१ ) इति ॥ एकस्मिन् यागे विहितं हविर्द्वयं गोगतं गुणद्वयं च पृथक् प्रशंसति—"आग्नेयमष्टाकपालं निर्वपति । ऐन्द्रं दधि । यदाग्नेयो भवति । अग्निर्वै यज्ञमुखम् । यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते । यदैन्द्रं दधि इन्द्रियमेवावरुन्द्धे । ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै" ( तैब्रा १·६·१ ) इति । अग्निमन्तरेण यज्ञस्याप्रवृत्तेरग्नेर्यज्ञमुखत्वं [२९]तादृशस्याग्नेः [३०]प्रथमहविःप्रदानेन यागस्याऽऽदावेव समृद्धिं धृतवान् भवति ॥ हविर्द्वये दक्षिणाद्वये श्रूयमाणेऽपि कर्मैकत्वसिद्ध्यर्थमाग्रयणतां संवरूपां विधातुं प्रस्तौति—"यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः पराभवन्" ( तैब्रा १·६·१ ) इति । [३१]यावत्यः प्रजाः[३१] ओषधीनां संबन्धिन्य[३२] इति शेषः ॥

२४. आ.क.ना.हा–देवताभ्याम् । २५. तं–'हविर्भ्याम्' नास्ति । २६. त्रि४–मानुषी भूमिः । २७. त्रि४–इन्द्रशब्देन । २८. आ.क.ना.हा–'विधातुम्' नास्ति । २९. आ.क.ना.हा–तादृशाग्नेः । ३०. तं–प्रथमतो हविः प्राशनेन; म४–प्रथमतो हविः°; त्रि४–प्रथमतो हविर्दाने । ३१–३१. आ. क–यावत्यः; तं–यावतीः यावत्याः; त्रि४–यावतीः यावत्यः । ३२. तं.त्रि४.म४–संबन्ध्यन्नम् ।

विधत्ते—“ आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय ” ( तैब्रा १·६·१ ) इति । तस्मिन् संघे स्थितस्यैन्द्राग्नस्योपाख्यानेन जयहेतुत्वं दर्शयति— “ देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् । तावेतमैन्द्राग्नं द्वादशकपालं निरवृणाताम् । यदैन्द्राग्नो भवत्युज्जित्यै ” ( तैब्रा १·६·१ ) इति ॥ माससामान्येन कपालसंख्यां प्रशंसति—“ द्वादशकपालो भवति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्द्धे ” ( तैब्रा १·६·१ ) इति । [33]वैश्वदेवमन्नं रुचिहेतुः[33] इत्येतद्दर्शयति— “ वैश्वदेवश्चरुर्भवति । वैश्वदेवं वा अन्नम् । अन्नमेवास्मै स्वदयति ” ( तैब्रा १·६·१ ) इति ॥ प्रथमजस्य जनिष्यमाणवत्सापेक्षया[34] समृद्धिहेतुत्वमित्याह—“ प्रथमजो वत्सो दक्षिणा समृद्ध्यै ” ( तैब्रा १·६·१ ) इति ॥ तृतीयहविषः सोमदेवतायाः स्वीकारे कारणमाह—“ सौम्यꣳ श्यामाकं चरुं निर्वपति । सोमो वा अकृष्टपच्यस्य राजा । अकृष्टपच्यमेवास्मै स्वदयति ” ( तैब्रा १·६·१ ) इति ॥ प्रतिग्रहमन्त्रे[35] ‘ सोमाय वासः ’ इति श्रुतिमनुसंधाय[36] दक्षिणां प्रशंसति “ वासो दक्षिणा । सौम्यꣳ हि देवतया वासः समृद्ध्यै ” ( तैब्रा १·६·१ ) इति ॥ [37]स्त्रीपुरुषरूपौ देवौ तथाविधदक्षिणां[37] च प्रशंसति—“ सरस्वत्यै चरुं निर्वपति । सरस्वते चरुम् । मिथुनमेवावरुन्द्धे । मिथुनौ गावौ दक्षिणा समृद्ध्यै ” ( तैब्रा १·६·१ ) इति ॥ अत्र द्रव्यदेवतासंबन्धानामष्टभ्योऽधिकत्वात् यागेष्वप्याधिक्यशङ्काभ्रमवारणायाष्टसंख्यां विधातुं प्रस्तौति—“ एति वा एष यज्ञमुखादृद्ध्याः । योऽग्नेर्देवताया एति ” ( तैब्रा १·६·१ ) इति । एति पृथग्भवति अपगच्छतीत्यर्थः । वक्ष्यमाणप्रकारेणाग्नेरष्टसंख्यात्मकत्वात्[38] तत्संख्याया अपगम एवाग्निसकाशादपगमः । योऽग्नेरपगच्छति स यज्ञमुखाद्यज्ञप्रारम्भादृद्ध्या यज्ञसमाप्तेश्चापगच्छति[39] ॥ विधत्ते—“ अष्टावेतानि हवीꣳषि भवन्ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति ” ( तैब्रा १·६·१ ) इति । गायत्र्या अग्नेश्च मुखजत्वेन [40]सहोत्पन्नत्वलक्षणः संबन्धः । तेनैव तेषां[41] हविःशब्दवाच्यानां कर्मणामष्टत्वेनैव[42] यज्ञप्रारम्भसमाप्तिभ्यामग्निदेवतायाश्च नापगच्छति ॥

अथ[43] विधिविवेकसहितो विनियोगसंग्रहः—

“ आदावानुमतं तस्य मध्ये नैर्ऋतमत्र च ।
व्रीहीत्याद्यास्त्रयो मन्त्रा विनियोगस्तु वर्ण्यते ॥ १ ॥
व्रीह्येष नम इत्यग्निप्रदराग्निषु हूयते ।
सहैवाऽऽनुमतेनाष्टौ यागाः प्रथम ईरिताः ॥ २ ॥ ” इति ॥

अथ मीमांसा । चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

“ राजसूयेऽनुमत्यादि देवनादि च ते उभे ।
मुख्ये उतैकमुख्यत्वं स्यादाद्यः प्रक्रियैक्यतः ॥
यागानां राजसूयत्वादङ्गित्वं फलवत्त्वतः ।
देवनाद्यफलं यत्तदङ्गं फलवतो यजेः ॥ ” ( जैन्या ४·४·१—२ ) ॥

---

३३-३३. तं-वैश्वदेवत्वमन्नरुचिहेतुः; त्रि४-वैश्वदेवरूपित्वमन्नरूपिहेतुः; ना.म४.हा-वैश्वदेवत्वमन्नं रुचिहेतुः । ३४. त्रि४.ना.म४-°वत्सापेक्षतया । ३५. तं-°मन्त्रेषु; त्रि४-प्रतिग्रहे । ३६. आ.इ.उ-श्रुतिमभिसं° । ३७-३७. आ.क-समृद्धिहेतुत्वेन सरस्वतीसरस्वतौ चरुमिथुनदक्षिणाम् । ३८. आ.क.ना.हा-°रष्टत्वसंख्या° । ३९. म४-°गच्छतीत्यर्थः । ४०. तं.त्रि४.म४-सहोदरत्व° । ४१. म४-एतेषाम् । ४२. आ.क.ना.हा-‘ एव ’ नास्ति । ४३. आ.क.ना.हा-तत्र ।

राजसूये अनुमत्यादयो यागाः ]

राजसूयप्रकरणे यागरूपा अनुमत्यादयो [४४]बह्वयः इष्टयः श्रुताः—' अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति ' ' नैर्ऋतमेककपालम् ' ' आदित्यं चरुं निर्वपति ' ' आग्नावैष्णवमेकादशकपालम् ' ( तैसं १·८·१ ) [४५]इत्यादयः। यथैता इष्टयस्तथा पशवोऽपि श्रुताः—" आदित्यां मह्लां गर्भिणीमा लभते मारुतीं पृश्निं पष्ठौहीम् " ( तैसं १·८·१९, तैब्रा १·८·३ ) इति। मह्ला [४६]"मणिला गले स्तनयुक्तेत्यर्थः"[४६]। तस्या अदितिर्देवता। पृश्निरल्पतनुस्तस्या मरुतो देवता। यावता वयसा वर्षत्रयरूपेण पृष्ठे भारं वोढुं शक्तिर्भवति तावद्वयस्का पष्ठौही। एवमभिषेचनीयदशपेयादयः[४७] सोमयागाः श्रुताः। तथा वल्मीकवपायां होम इत्यादयो दार्विहोमाः श्रुताः। यथैत इष्टिपशुसोमदार्विहोमाश्चतुर्विधा यागरूपा एवमयागरूपा अपि द्यूतादयः श्रुताः ' पष्ठौहीं दीव्यति ', ' अक्षैर्दीव्यति राजन्यं जिनाति ', ( द्र. मैसं ४·४·६,७ ) ' शौनःशेपमाख्यापयते ' ( तैब्रा १·७·१० ) इत्येवमादयः। तत्र यागा यथा मुख्यास्तथा देवनादीनामपि मुख्यत्वं युक्तं, प्रकरणपाठस्योभयत्र समानत्वादिति प्राप्ते ब्रूमः–' राजा स्वाराज्यकामो राजसूयेन यजेत ' इत्यत्राऽऽख्यातवाच्यायां भावनायां धातुवाच्यो यागः करणम्। राजसूयशब्दश्चाप्रसिद्धार्थत्वाद्यागसामानाधिकरण्येन तन्नामधेयं भवति। तथा सति राजसूयेन यागेन स्वाराज्यं भावयेदिति वाक्यार्थपर्यवसानात् अनुमत्यादीनां यागानामेव फलवत्त्वादङ्गित्वं तत्संनिधौ श्रूयमाणमफलं देवनादिकं यागाङ्गम् ॥

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

" सा किमस्त्यनुमत्यादौ न वाऽस्त्यङ्गिन्युपक्रमात्।
संघस्योपक्रमो *नेष्टो द्वारलोपान्न सा भवेत् ॥ " ( जैन्या १०·१·८ ) ॥

' अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति ' इत्यादिना राजसूये दर्शपूर्णमासेष्टिविकृतयो बह्वयो विहिताः, तास्वारम्भणीयाऽस्ति न वेति संशयः[४८]। दीक्षणीयादिवदनुमत्यादीनामन्याङ्गत्वाभावात् सोमयागवत् सर्वासामङ्गित्वेनोपक्रमसंभवात् तद्द्वारेणाऽऽरम्भणीयाऽस्तीति पूर्वः पक्षः। यद्यप्यङ्गिभूता अनुमत्यादयः तथाप्येकैकस्या इष्टेः पृथगारम्भो नास्ति। अन्यथा प्रधानेष्वाग्नेयादिषु आरम्भणीयायाः[४९] षट्कृत्वोऽनुष्ठानं प्रसज्येत। अथोच्यते[५०] प्रधानानां षण्णामाग्नेयादीनां संघस्य दर्शपूर्णमासेष्टित्वात् तस्यैक आरम्भ इति, [५१]तर्ह्यत्रापीष्टिपशुसोमदर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य राजसूयत्वात् [५२]संघस्यैवोपक्रमोऽस्तु, न चासौ संघो दर्शपूर्णमासविकृतिर्येन तत्राऽऽरम्भणीयाऽऽशङ्क्येत। अस्ति चात्रापरः सर्वारम्भार्थो यागः। ' अग्निष्टोममग्रे ज्योतिष्टोममाहरति ' इति ज्योतिष्टोमावान्तरसंस्थाभेदरूपस्याग्निष्टोमस्याऽऽम्नातत्वात्। तस्मादनुमत्यादिष्विष्टिष्वारम्भद्वारलोपात् साऽऽरम्भणीया न भवेत् ॥

अत्रैव तृतीयपादेऽन्यच्चिन्तितम्—

" वासो वत्सं समुच्चेयमन्वाहार्येण वा न वा।
अविरोधात् समुच्चेयं न कार्यैक्याद्विरोधतः ॥ " ( जैन्या १०·३·१० ) ॥

---

४४. आ–बहवः। ४५. म४–इत्येवमादयः ४६–४६. ते–मणिगलस्तनयुतेत्यर्थः; म४–मणिनीला। गले स्तनयुतेत्यर्थः। ४७. आ.क.ना.हा–°भिषेचनीयादयः। *[ जैन्या--नेष्टेः। ] ४८. आ.क.ना.हा-संदेहः। ४९. आ.क.ना.हा–अन्वारम्भणीयायाः। ५०. त्रि४.ना–अथोच्येत। ५१. म८–तद्वदत्रा°। ५२. आ.क.ना.हा-संघस्योप°।

आग्रयणे श्रूयते--‘ वासो दक्षिणा ’, ‘ वत्सः प्रथमजो दक्षिणा ’ ( तैसं १.८.१ ) इति। तदेतत् प्राकृतेनान्वाहार्येण सह विरोधाभावात् समुच्चीयत इति मन्दः[53] पूर्वपक्षः। एककार्यत्वेन विरोधित्वान्न समुच्चयः किं तु बाध इति राद्धान्तः॥

[54]तत्रैवान्यच्चिन्तितम्—

“ अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथवा।
न तद्धर्मत्वतो मैवं साधनत्वप्रयुक्तितः॥ ” ( जैन्या १०.३.११ )॥

सन्त्यन्वाहार्यधर्मास्तान् कल्पसूत्रकार उदाजहार--“ दक्षिणसद्म्य उपहर्तवा इति संप्रेष्यति। ये ब्राह्मणा उत्तरतस्तान् यजमान आह दक्षिणत एतेति। तेभ्योऽन्वाहार्यं ददाति ब्राह्मणा अयं व ओदन इति। प्रतिगृहीत उत्तरतः परीतेति संप्रेष्यति ” ( आपश्रौ ३.४.१-४ ) इति। सोऽयं धर्मो वासोवत्से न कार्यस्तस्यान्वाहार्यनिमित्तत्वात्। मैवम्। अन्वाहार्यस्य दक्षिणारूपत्वेनानतिसाधनत्वप्रयुक्त्या [55]-ते धर्माः-[55] क्रियन्ते। तत्साधनत्वं वासोवत्सेऽपि समानम्। तस्मादत्रापि सन्ति ते धर्माः॥

[56]तत्रैवान्यच्चिन्तितम्—

“ पाकोऽस्ति नो वा वत्से स्यादन्वाहार्यस्य दर्शनात्।
न वत्सनाशादश्रौती दक्षिणा मांसदानतः॥ ” ( जैन्या १०.३.१२ )॥

अन्वाहार्ये पाकोऽस्ति, पूर्वन्यायेन तद्धर्मातिदेशात् वत्सेऽपि पाकः स्यादिति चेत्। न। वत्सनाशप्रसङ्गात्। अस्त्विति चेत्। न। तथा सति मांसदानेन श्रुतहान्यश्रुतकल्पने प्रसज्येयाताम्। तस्मान्नास्ति [57]-वत्से पाकः-[57]॥

तत्रैवान्यच्चिन्तितम्—

“ *वाससोऽस्ति न वा पाको विनाशाभावतोऽस्त्यसौ।
वैयर्थ्यादप्यशक्यत्वात् पाको वाससि नोचितः॥ ” ( जैन्या १०.३.१३ )।

वाससः उष्णोदकभाण्डप्रक्षेपेण वत्सस्येव विनाशो नास्ति। तस्मादन्वाहार्यवत् पाकोऽस्तीति चेत्। न[58]। ओदनत्वार्थो हि पाकः। न हि वाससः सहस्रधा पच्यमानस्यौदनता संभवति। न च पाकः कर्तुं शक्यते। नह्युष्णोदकसंबन्धः पाकशब्दार्थः[59] किं तु तण्डुलादीनां विक्लित्तिं जनयितुं कृतः पुरुषप्रयत्नः न च विक्लित्तिर्वाससोऽस्ति। तस्मादतिदिष्टः[60] पाको बाध्यते॥

तत्रैवान्यच्चिन्तितम्—

“ अभिघारोऽस्ति नो वाऽत्र शक्यत्वाद्वत्सवाससोः।
अस्त्यन्वाहार्यवन्मैवं स्वादुताया असंभवात्॥ ” ( जैन्या १०.३.१४ )॥

स्पष्टोऽर्थः॥

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

“ वासोऽनर्मी वानतक्षणातिदेशकरे न वा।
आद्यः क्रियानिमित्तत्वाज्जातिवाचित्वतोऽन्तिमः॥ ” ( जैन्या ७.३.२१ )॥

---

५३. म४-रूढः। ५४. आ.क.ना.हा-अत्रैव। ५५-५५. आ.क.ना.हा-तद्धर्माः ५६. आ.क.ना.हा-अत्रैव। ५७-५७. आ.क.ना.हा-वत्सपाकः। * जैन्या-‘ वासस्यस्ति ’। ५८. आ.क.ना.हा-मैवम्। ५९. त्रि४-पाकशब्दस्यार्थः। ६०. म४-तस्मादस्त्वित्यतिदिष्टः।

राजसूये अनुमत्यादयो यागाः ]

'वासो ददाति' 'अनो ददाति' इति श्रूयते। तत्र यूपशब्दस्य यथा शास्त्रीयच्छेदनतक्षणादिक्रिया प्रवृत्तिनिमित्तं तथा वासःशब्दस्य लौकिकी कुविन्दकर्तृका तन्तुवानक्रिया[61]। अनःशब्दस्य वर्धकिकर्तृका दारुतक्षणादिक्रिया। तस्माद्वासोऽनःशब्दयोः क्रियातिदेशकत्वाद्वानतक्षणे कारयित्वा तदुभयं दातव्यमिति चेत्। न। गवाश्वादिशब्दवज्जातिवाचित्वात्। पाचकादिशब्दानां क्रियामुपलभ्य[62] प्रयुज्यमानत्वात् क्रियैव प्रवृत्तिनिमित्तम्। वासःशकटादिषु क्रियामनुपलभ्यापि[63] जातिमुपलभ्य[64] शब्दं प्रयुञ्जते। तस्माद्वासोऽनःशब्दौ न क्रियामतिदिशतः॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"बर्हिराग्रयणे किंचित् प्रसूनं बहुलत्वतः।
प्राथम्याच्चाग्रिमो मैवमलोपात् कांस्यभोजिवत्॥" (जैन्या १२·२·१९)॥

ऐन्द्राग्नवैश्वदेवद्यावापृथिव्ययागा आग्रयणेष्टौ सह प्रयुज्यन्ते। तत्रैन्द्राग्नवैश्वदेवयोर्बर्हिर्मात्रं चोदकप्राप्तं, तत्प्रकृतौ बर्हिर्विशेषस्यानुक्तत्वात्। द्यावापृथिव्ये तु स्वप्रकृत्यनुसारेण प्रसूनं बर्हिरतिदिश्यते[65]। प्रसूनं पुष्पितं लूनशेषान्मूलात् पुनरुत्पन्नं वा। तत्राऽऽग्रयणे यत्किंचिद्बर्हिर्मात्रमाहर्तव्यम्[66]। ऐन्द्राग्नवैश्वदेवयोरनेकत्वेन प्रथमत्वेन च तदानुगुण्यस्य न्याय्यत्वादिति प्राप्ते ब्रूमः—बर्हिरन्तरस्वीकारे द्यावापृथिव्ये प्रमाणप्राप्तः प्रसूननियमो लुप्येत। प्रसूनस्वीकारे त्वैन्द्राग्नवैश्वदेवयोर्न किंचिल्लुप्यते। तस्मादलोपाय कांस्यभोजिन्यायेन प्रसूनमेव कर्तव्यम्। शिष्यस्य कांस्यभोजनव्रतमस्ति, गुरोस्तु तन्नास्ति। तयोस्तु सहभोजने यथोपसर्जनमपि शिष्यमनुसृत्य व्रतमलोपयितुं कांस्यमाद्रियते तथाऽत्रापि द्रष्टव्यम्॥

तत्रैवान्यच्चिन्तितम्—

"द्यावापृथिव्यस्तन्त्री स्यात् सर्वे वा तन्त्रिणोऽग्रिमः।
प्रैषन्यायात् प्रसूनस्य तन्त्रित्वापादकत्वतः॥
प्रसूनत्वं नोपदिष्टमविरोधात् समाश्रितम्।
तन्त्रित्वनियतौ शक्तं नातः सर्वेऽत्र तन्त्रिणः॥" (जैन्या १२·२·२०–२१)॥

यथा मैत्रावरुणप्रैषमन्त्रविकारः पशुसंबन्धात् पशोस्तन्त्रित्वमापादयति तथा [67]प्रसूनं द्यावापृथिव्यसंबन्धित्वात् द्यावापृथिव्यस्य तन्त्रित्वमापादयतीति प्राप्ते ब्रूमः—उक्तप्रैषमन्त्रविकारः प्रत्यक्षश्रुतः। इह तु प्रसूनत्वमतिदिष्टत्वान्न तन्त्रित्वमापादयितुं क्षमम्। न च प्राबल्याभावे कथं तदाश्रयणमिति वाच्यम्। ऐन्द्राग्नादिना सह विरोधाभावमात्रेण तदाश्रयणात्। तस्मादेकस्य तन्त्रित्वनियमाभाव[68] आग्नेयादिवत् सर्वेऽप्यत्र तन्त्रिणः॥

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके प्रथमोऽनुवाकः॥ १॥**

---

**६१.** क-तन्तुवायक्रिया। **६२.** आ.क.ना.हा–°मुपलक्ष्य। **६३.** आ.क.ना.हा–°नुपलक्ष्यापि। **६४.** इ.उ.क.ना.पा.हा–°मुपलक्ष्य। **६५.** इ.उ.क.ना.पा.हा-बर्हिः प्रतिदिश्यते। **६६.** त्रि४–कर्तव्यम्। **६७.** त्रि४.मै४ (जैन्या)-प्रसूनत्वम्। **६८.** तं.त्रि४.म४–°नियमाभावेन।

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णम् चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् ॥ २॥

[ आग्नेयꣳ सौम्यं मारुतमष्टादश ]

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । सारस्वतम् । चरुम् । पौष्णम् । चरुम् । मारुतम् । सप्तकपालमिति सप्त—कपालम् । वैश्वदेवीमिति वैश्व—देवीम् । आमिक्षाम् । द्यावापृथिव्यमिति द्यावा—पृथिव्यम् । एककपालमित्येक—कपालम् ॥ २ ॥

[ मैसं १.१०.१; कासं ९.४; कपिसं ८.७; शब्रा ५.२.३.१० ]

सन्ति तावत् राजसूयान्तर्भावीनि चातुर्मास्यहवींषि; तत्र तावद्वैश्वदेवहवींषि विदधाति—'आग्नेयमष्टाकपालं निर्वपति' इत्यादि ॥ एतानि यथासमाम्नातमष्टौ हवींषि निर्वपति । अष्टहविष्कोऽयमेको यागः । एषां च पौष्णान्तानि पञ्च सञ्चराणि वरुणप्रघासादिष्वपि उपयोक्ष्यन्ते । "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत" ( तैब्रा १.६.२ ) इति ब्राह्मणम् । "ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते" ( तैब्रा १.६.२ ) इति च । "अग्नेर्ढक्" ( द्र.पाभा ४.२.८ वा १ ) । [१]सौम्यम् । पूर्ववट्ट्यण् ( पा ४.२.३० ) । तप्ते पयसि दध्यानयति यत्संवर्तते साऽऽमिक्षा । 'द्यावापृथिव्यम्' इति । "द्यावापृथिवीशुनासीर°" ( पा ४.२.३२ ) इति यत् । सर्वेषां यागानामन्त्य एककपालः ॥

इत्यष्टमे द्वितीयोऽनुवाकः ॥

प्रथमानुवाके प्रायणीयादह्न उत्तरभाविन आनुमतादयोऽष्टाविष्टयो[१] नैर्ऋतमन्त्राश्चोक्ताः । द्वितीये चातुर्मास्येषु प्रथमपर्वरूपं हविरष्टकं विधत्ते—'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम्' इति ॥ स्पष्टोऽर्थः । एतेषां वैश्वदेवादीनां चातुर्मास्यानामानुमताद्यनन्तरभावित्वं [२]पाठक्रमप्राप्तमापस्तम्बो विशदयति—"एताभिरन्वहमिष्ट्वा चातुर्मास्यान्यारभते तैः संवत्सरं यजते" (आपश्रौ १८.९.३—४) इति । तेषु चातुर्मास्येषु [३]प्रथमपर्वणो वैश्वदेवस्य देशकालौ स एवाऽऽह— "प्राचीनप्रवणे वैश्वदेवेन यजते" ( आपश्रौ ८.१.५ ) इति, "फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते" ( आपश्रौ ८.१.२ ) इति [ च ] ॥ तस्मिन् वैश्वदेवकर्मणि प्रथमभावीन्याग्नेयादीनि पञ्च हवींष्युपाख्याने प्रशंसति— "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ताः सृष्टा न प्राजायन्त । सोऽग्निरकामयत । अहमिमाः प्रजनयेयमिति । स प्रजापतये शुचमदधात् । सोऽशोचत् प्रजामिच्छमानः । तस्माद्यं च प्रजा भुनक्ति यं च न । तावुभौ शोचतः प्रजामिच्छमानौ । तास्वग्निमप्यसृजत् । ता अग्निरध्यैत् । सोमो रेतोऽदधात् । सविता प्राजनयत् । सरस्वती वाचमदधात् । पूषाऽपोषयत् । ते वा एते त्रिः संवत्सरस्य

१. आ.क.ना.पा—अष्टौ यागाः । २. आ.क.ना.हा—पाठप्राप्त° । ३. ति—प्रथमकर्मणो ।

प्रयुज्यन्ते । ये देवाः पुष्टिपतयः । संवत्सरो वै प्रजापतिः । संवत्सरेणैवास्मै प्रजाः प्राजनयन् " ( तैब्रा १.६.२ ) इति ॥ पुरा कदाचित् प्रजापतिः प्रजाकामः संस्तत्साधनत्वेनेदं वैश्वदेवाख्यं कर्मानुष्ठाय तेनैव प्रजा असृजत । ताश्च सृष्टाः प्रजा न प्राजायन्त । स्वकीयान्यपत्यानि न लेभिरे । तदानीं प्रजापतिसृष्टाववस्थितः सोऽग्निर्मनस्येवमकामयत किमित्यपत्यरहिता इमाः प्रजा अहं प्रजनयेयमपत्योत्पादिकाः करिष्यामीति । एवं कामयमानः सोऽग्निः प्रजाः सृष्टवते प्रजापतये शोकमुत्पादितवान् । प्रजापतिसृष्टानां प्रजानामपत्याभावस्यापत्योत्पादनकामिना वह्निना स्मारितत्वात् प्रजापतौ वह्निः शोकोत्पादक उच्यते । सोऽग्निः प्रजापतेः शोकमुत्पाद्य स्वस्याऽप्यपत्याभावेन प्रजामपत्यरूपामिच्छमानोऽशोचत् । यस्मात् पुत्रवान् प्रजापतिः पौत्रमिच्छन्नशोचत् यस्मात् पुत्राभावादग्निरशोचत् तस्मात् लोकेऽपि यं पितरमुत्पन्ना पुत्ररूपा प्रजा भुनक्ति पालयति, यं चापत्यरहितमनुत्पन्ना प्रजा न पालयति तावुभावपि पौत्ररूपां पुत्ररूपां च प्रजामिच्छन्तौ तदलाभाच्छोचतः[4] । प्रजापतिस्तासु प्रजासु प्रजामपत्यमुत्पादयितुम् [5]इममग्निमप्यसृजदभ्यनुज्ञातवान् । अनुज्ञातः सोऽग्निस्ताः प्रजा अध्यैत्[6] प्राप्तवान् मिथुनभावेन संगतवानित्यर्थः । ततः सोम आग्नेयं रेतस्तासु प्रजासु [7]गर्भभावेन धारितवान् । ततः सविता प्रसवकाले प्राजनयत् प्रजाः । तेष्वपत्येषु सरस्वती वाचमदधात् संभाषितुमभ्यासं कारयामास । ततः संभाषमाणान् बालान् पूषाऽभ्यवर्धयत् । ये देवा अग्निसोमादयोऽपत्यपोषा अपत्यपालकास्त एतेऽग्न्यादयः पूषान्ताः पञ्च देवाः [8]पुष्टिकरत्वेन संवत्सरस्य मध्ये चातुर्मास्येषु त्रिः प्रयुज्यन्ते । वैश्वदेववरुणप्रघाससाकमेधाख्येषु [9]त्रिषु पर्वसु पञ्चानामेतेषामाग्नेयादीनां संचारित्वात् । सोऽयं प्रयोगत्रयकालः संवत्सर एव प्रजापतिरूपः[10] । अतः प्रजापतिरूपेण प्रयोगत्रययुक्तेन संवत्सरेणैवास्मा अनुष्ठात्रे प्रजा उत्पादितवान् भवति ॥ पञ्च यागान् प्रशस्य षष्ठं प्रशंसति—" ताः प्रजा जाता मरुतोऽघ्नन् । अस्मानपि न प्रायुक्षतेति । स एतं प्रजापतिर्मारुतः सप्तकपालमपश्यत् । तं निरवपत् । ततो वै प्रजाभ्योऽकल्पत । यन्मारुतो निरुप्यते यज्ञस्य क्लृप्त्यै । प्रजानामघाताय " ( तैब्रा १.६.२ ) इति । एकोनपञ्चाशन्मरुत उत्पन्नास्ताः प्रजा हतवन्तः । [11]केनाऽभिप्रायेण, अस्मानप्येतस्मिन् वैश्वदेवकर्मण्येताः प्रजा न प्रयुक्तवत्य इति । प्रजाभ्योऽकल्पत तासां प्रजानां रक्षणाय समर्थोऽभूत् । अतोऽयं षष्ठो यागो यज्ञस्य संपूर्त्यै प्रजानामहिंसायै च संपद्यते ॥ कपालसंख्यां प्रशंसति—" सप्तकपालो भवति । सप्तगणा वै मरुतः । गणश एवास्मै विशं कल्पयति " ( तैब्रा १.६.२ ) इति । सप्तानां समूह एकैको गणः तादृशाश्च गणाः सप्तसंख्याकाः । [12]तया सप्तसंख्ययाऽस्मै यजमानाय बहुगणरूपां प्रजां संपादयति ॥ सप्तमयागे द्रव्यं प्रशंसति—" स प्रजापतिरशोचत् । याः पूर्वाः प्रजा असृक्षि । मरुतस्ता अवधिषुः । कथमपराः सृजेयेति । तस्य शुष्म आण्डं भूतं निरवर्तत । तद्व्युदहरत् । तदपोषयत् । तत्प्राजायत । आण्डस्य वा एतद्रूपम् । यदामिक्षा । यद्व्युद्धरति । प्रजा एव तद्यजमानः पोषयति " ( तैब्रा १.६.२ ) इति । तस्य प्रजापतेः शुष्मो बलमाण्डं भूतम् आण्डवत्[13] पिण्डाकारं प्राप्य निर्गतं तत्[14] पिण्डीभूतं व्युदहरद्विभज्योद्धृतवान् । उद्धृत्य च तत्पोषयित्वा प्रजारूपेणोदपादयत्[15] क्षीरपिण्डरूपाया आमिक्षाया आण्डरूपत्वात् तद्व्युद्धरणेन प्रजापतिवद्यजमानः प्रजाः पोषयति पोषितवान् भवति । अनेनार्थवादेनापूर्वार्थत्वात् व्युद्धरेदिति विधिरुन्नेतव्यः ॥ तदीयां देवतां प्रशंसति—" वैश्वदेव्यामिक्षा भवति । वैश्वदेव्यो वै प्रजाः ।

---

४. म४–' शोचतः ' इत्यस्यानन्तरं ' ततः ' । ५. आ.ना.ह्रा–' इमम् ' नास्ति । ६. म४–अध्यैत् एतत्; तं–अध्यारुह्य एतत् । ७. तं.म४–गर्भत्वेन । ८. तं.म४–उपकारकत्वेन एकस्य । ९. आ.ना.ह्रा–' त्रिषु ' नास्ति । १०. इ.उ.तं.म४–प्रजापतिस्वरूपः । ११. तं.म४–तेनाभि° । १२. आ.इ.क.तं.ना.ह्रा–तथा । १३. आ.क.ना.ह्रा–आण्डवत् । १४. आ.क.ना.ह्रा–' तत् ' नास्ति । १५. म४–°णोपपादयत् ।

प्रजा एवास्मै प्रजनयति " ( तैब्रा १·६·२ ) इति । बहुभिर्देवैरग्न्यादिभिरुक्तप्रकारेणोत्पादितत्वात् प्रजानां वैश्वदेवत्वम् ॥ विभज्योद्धृतयोरामिक्षाभागयोर्वाजिनसेचनं विधत्ते—" वाजिनमानयति । प्रजास्वेव प्रजातासु रेतो दधाति " ( तैब्रा १·६·२ ) इति । दध्यानयनेन [16]घनीभूतस्यामिक्षाशब्दवाच्यस्य क्षीरपिण्डस्य प्रजारूपेणाऽऽविर्भावः पूर्वार्थवादे निरूपितः । अतस्तस्मिन् पिण्डे वाजिनाख्येन क्षीरगतनीरेण सेचिते[17] सति प्रजातासु प्रजासु रेतो धारितं भवति ॥ अष्टमयागदेवतां प्रशंसति—" द्यावापृथिव्य एककपालो भवति । प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति " ( तैब्रा १·६·२ ) इति ॥ अत्राऽऽदावुक्तानां पञ्चानां पाठप्राप्तं क्रमं प्रशंसति—" देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । मामग्रे यजत । मया मुखेनासुराञ्जेष्यथेति । मां द्वितीयमिति सोमोऽब्रवीत् । मया राज्ञा जेष्यथेति । मा तृतीयमिति सविता । मया प्रसूता जेष्यथेति । मां चतुर्थीमिति सरस्वती । इन्द्रियं वोऽहं धास्यामीति । मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति । तेऽग्निना मुखेनासुरानजयन् । सोमेन राज्ञा । सवित्रा प्रसूताः । सरस्वतीन्द्रियमदधात् । पूषा प्रतिष्ठाऽऽसीत् । ततो वै देवा व्यजयन्त । यदेतानि हवींषि निरुप्यन्ते विजित्यै " ( तैब्रा १·६·२ ) इति । लोके हि युद्धार्थमुद्यतायां सेनायां केचन शूरा भटा मुखतो [18-]योद्धुं गच्छन्ति[-18] । तेषां युद्धं द्रष्टुं कश्चिद्राजा स्वामित्वेन संनिधत्ते । केचन दण्डहस्ताः पृष्ठतः स्थित्वा योद्धृनपरावृत्तये बलात् प्रेरयन्ति । अन्ये केचन दुन्दुभ्यादिजयघोषेण योद्धृणामुत्साहं जनयन्ति । अपरा कियत्यपि सेना पुरोगताया युध्यन्त्याः सेनायाः पृष्ठतः सहायत्वेनावतिष्ठते । तानेतान् पञ्चविधव्यापारानग्न्यादयः क्रमेण स्वीकृतवन्तः । ततो देवानां जयोऽभूत् । अतोऽत्रापि पञ्चहविषां [19-]निर्वापे जयो[-19] भवति ॥ शाखान्तरगतेन ' उपवपन्ति ' इति वाक्येन वैश्वदेवादिषु चतुर्षु चातुर्मास्यपर्वसु साधारण्येनोत्तरवेद्युपवापः प्राप्तस्तमुपवापं वैश्वदेवपर्वणि प्रतिषेधति—" नोत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । अजाता इव ह्येतर्हि पशवः " ( तैब्रा १·६·२ ) इति । उत्तरवेदिसमीपे तदाभिमुख्येन [20-]यूपेषु पशूनां[-20] बन्धनादुत्तरवेदेः पशुत्वम् । पूर्वोक्तरीत्या वैश्वदेवस्य प्रजापतिसृष्टिसाधनत्वात् स्रष्टव्यासु प्रजास्वन्तर्भूतानां पशूनां वैश्वदेवादूर्ध्वमुत्पत्तिकालो न त्विदानीमतः पशुरूपोत्तरवेदिर्नात्रोपवपनीया ॥ तदेवमनुब्राह्मणगतेन ' वैश्वदेवेन वै प्रजापतिः ' इत्यनुवाकेन वैश्वदेवपर्वगतान्याग्नेयादीन्यष्ट हवींषि प्रशस्तानि ॥

अथानुवाकान्तरेण वैश्वदेवपर्वगतानि विशेषाङ्गानि विधीयन्ते । तत्र चोदकप्राप्तस्य बर्हिषस्त्रैगुण्यं विधत्ते—" त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्बं गर्भो जरायु । तदेव तन्मिथुनम् " ( तैब्रा १·६·३ ) इति । मात्रादित्रयं यदस्ति तदेव पुत्रयुक्तत्वात् तन्मिथुनं सार्थकम् । गर्भस्यान्तर्वेष्टनमुल्बं बहिर्वेष्टनं जरायु । गर्भादित्रयं यदस्ति तदेव [21]सारभूतेन गर्भेणोपेतत्वात् तन्मिथुनं सफलम् । उल्बजराय्वोर्द्वित्वसाम्येन[22] मिथुनत्वम् । बर्हिषस्त्रैगुण्ये सति यथोक्तमिथुनद्वयसाम्यं संपद्यते ॥ विधत्ते—" त्रेधा बर्हिः संनद्धं भवति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति " ( तैब्रा १·६·३ ) इति । प्रकृतौ दर्भमुष्टीनां पृथग्बन्धनं न विहितं सूत्रकारेण—" अदित्यै रास्नाऽसीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्य " ( आपश्रौ १·४·९ ) इति प्रसारिते शुल्बे मुष्टीनां संभरणमात्रस्यैवाभिधानात् । इह तु मुष्टित्रयस्य पृथग्बन्धनं विशेषः ॥ विधत्ते—" एकधा पुनः संनद्धं भवति । एक इव ह्ययं लोकः । अस्मिन्नेव तेन लोके प्रतितिष्ठति "

१६. आ.ना.हा–घनीभूतामिक्षा° । १७. आ.क.हा–सेचने सति । १८–१८. तं.म४–युद्धमिच्छन्ति । १९–१९. म४–निर्वापो जयाय । २०–२०. तं–यूपेषु पशु°; इ.उ.म४–यूपे पशूनाम्; आ.क.ना.हा–पशूनाम् । २१. तं–साधनभूतेन । २२. आ.क.ना.हा–°सामान्येन ।

(तैब्रा १·६·३) इति। पृथग्बद्धानां त्रयाणां मुष्टीनां पुनर्मिलित्वा बन्धनं कार्यम्। चोदकप्राप्तस्य बन्धनस्य त्रेधा बन्धनेम बाधप्राप्तौ प्रतिप्रसवरूपोऽयं विधिः॥ चोदकेन सामान्यतः प्राप्तानां दर्भाणां[23] पुष्पितत्वरूपं विशेषमत्र विधत्ते—"प्रसुवो भवन्ति। प्रथमजामेव पुष्टिमवरुन्धे" (तैब्रा १·६·३) इति। प्रसूनोपेता दर्भाः प्रसुवः॥ विधत्ते—"प्रथमजो वत्सो दक्षिणा समृद्ध्यै" (तैब्रा १·६·३) इति॥ अनूयाजार्थस्य द्रव्यस्य ग्रहणं विधत्ते—"पृषदाज्यं गृह्णाति। पशवो वै पृषदाज्यम्। पशूनेवावरुन्धे" (तैब्रा १·६·३) इति। दधिमिश्रमाज्यं पृषदाज्यम्॥ ग्रहणे संख्यां विधत्ते—"पञ्चगृहीतं भवति पाङ्क्ता हि पशवः" (तैब्रा १·६·३) इति। सपुच्छपादैः पञ्चभिर्युक्तत्वात् पङ्क्तिच्छन्दःसाध्यत्वाद्वा। पशूनां पाङ्क्तत्वम्॥ मिश्रणं प्रशंसति—"बहुरूपं भवति। बहुरूपा हि पशवः समृद्ध्यै" (तैब्रा १·६·३) इति॥ दधिबिन्दूनामाज्यबिन्दूनामनेकरूपत्वाद्बहुरूपत्वम्। गोमहिष्यादिरूपेण पशवो बहुरूपाः॥ हविरासादनादूर्ध्वं सामिधेनीभ्यः पुरा मन्थनं विधत्ते—"अग्निं मन्थन्ति। अग्निमुखा वै प्रजापतिः प्रजा असृजत। यदग्निं मन्थन्ति। अग्निमुखा एव तत्प्रजा यजमानः सृजते" (तैब्रा १·६·३) इति। हविःसादनादूर्ध्वभावित्वमापस्तम्बो दर्शयति—"पञ्च होत्रा यजमानः सर्वाणि हवींष्यासन्नान्यभिमृशति। पशुवन्निर्मन्थ्यः सामिधेन्यश्च" (आपश्रौ ८·२·१२–१३) इति। होतृमन्त्रब्राह्मणे श्रूयते—"तद्भूयोऽतप्यत। तस्मात् तेपानादग्निरजायत" (तैब्रा २·२·९) इति, "स प्रजननादेव प्रजा असृजत" (तैब्रा २·२·९) इति च। तत्राग्नेः प्रथमसृष्टत्वात् प्रजानामग्निमुखत्वम्॥ शाखान्तराभिहितां प्रयाजानूयाजसंख्यां हृदि [24]कृत्वा [25]साङ्गं कर्म[25] प्रशंसति—"नव प्रयाजा इज्यन्ते। नवानूयाजाः। अष्टौ हवींषि। द्वावाघारौ। द्वावाज्यभागौ। त्रिंशत्संपद्यन्ते। त्रिंशदक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे" (तैब्रा १·६·३) इति। दशाक्षरपादैस्त्रिभिर्युक्तस्य विराट्छन्दसस्त्रिंशदक्षरत्वम्॥ "अलंकरणकाल आज्येनैककपालमभिपूरयति" (आपश्रौ ८·२·१०) इत्यापस्तम्बेन यदुक्तं तदिदं द्वेधा [26]प्रशस्य विधत्ते—"यजमानो वा एककपालः। तेज आज्यम्। यदेककपाल आज्यमानयति। यजमानमेव तेजसा समर्धयति। यजमानो वा एककपालः। पशव आज्यम्। यदेककपाल आज्यमानयति। यजमानमेव पशुभिः समर्धयति" (तैब्रा १·६·३) इति॥ विशेषान्तरं विधातुं प्रस्तौति—"यदल्पमानयेत्। अल्पा एनं पशवोऽभुञ्जन्त उपतिष्ठेरन्। यद्बह्वानयेत्। बहव एनं पशवो भुञ्जन्त उपतिष्ठेरन्" (तैब्रा १·६·३) इति। भुञ्जन्तः क्षीरदानादिना पालयन्तः, अभुञ्जन्त इति तद्विपर्ययः। पशूनामल्पत्वमपालयितृत्वं चेत्युभौ दोषौ। बहुत्वं पालयितृत्वं चेत्युभौ गुणौ॥ तत्र गुणसंपादनेन[27] प्रशंसन् विधत्ते—"बह्वानीयाऽऽविःपृष्ठं कुर्यात्। बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते" (तैब्रा १·६·३) इति। बह्वाज्ये पुरोडाशस्य पृष्ठमनिमज्ज्य यथा दृश्यते [28]तथा बह्वाज्यमानयेत्। तथा सत्याज्यस्य बहुत्वात् पशूनामल्पत्वदोषो न भविष्यति। पुरोडाशपृष्ठस्याऽऽविर्भूतत्वादपालयितृत्वमपि न [29]भवति॥ कृत्स्नस्यापि पुरोडाशस्य होमं विधातुं प्रस्तौति—"यजमानो वा एककपालः। यदेककपालस्यावद्येत्। यजमानस्यावद्येत्। उद्वा माद्येद्यजमानः। प्र वा मीयेत" (तैब्रा १·६·३) इति। इतरपुरोडाशेषु भक्षणाद्यर्थमवशेष्य किंचिदेवावदीयते तद्वदत्राप्यवदानेन यजमानस्यावयवश्छिद्येत, अथ वोन्मत्तो भवेत्, यद्वा प्रमीयेत॥ कृत्स्नहोमं विधत्ते—"सकृदेव होतव्यः। सकृदिव हि सुवर्गो लोकः" (तैब्रा १·६·३) इति। सकृदेव कृत्स्न एव। स्वर्गलोकस्य सकृत्त्वम् अखण्डितत्वम्॥ एककपाले पूर्वमानीतस्य बह्वाज्यस्य होमं विधत्ते—"हुत्वाऽभिजुहोति यजमानमेव सुवर्गं

---

२३. इ.उ–'दर्भाणाम्' इत्यस्यानन्तरं 'मुष्टीनाम्'। २४. तं–विधाय। २५–२५. पा–योगकर्म; ह्रा–यागम्। २६. तं–प्रशंसन्; म४–प्रशंसति। २७. तं–गुणद्वयसंपादने; म४–गुणद्वयं वेदनेन। २८. क.तं.ना.म४–'तथा' इत्यस्यानान्तरं 'तावत्' २९. तं.म४–भविष्यति।

लोकं गमयित्वा। तेजसा समर्धयति" (तैब्रा १·६·३) इति। आदौ पुरोडाशं हुत्वा तस्योपर्याज्यं जुहुयादित्यर्थः॥ चोदकप्राप्तेनाऽऽहवनीयहोमेनैककपालं[३०] प्रशंसति—"यजमानो वा एककपालः। सुवर्गो लोक आहवनीयः। यदेककपालमाहवनीये जुहोति। यजमानमेव सुवर्गं लोकं गमयति" (तैब्रा १·६·३) इति॥ कयाचिदुपपत्त्या पुरोडाशस्य चोदकप्राप्तं स्रुचा[३१] होममपोद्य हस्तेन होमः प्रसक्तस्तं वारयितुं स्रुचा होमस्य प्रतिप्रसवं विधत्ते—"यद्धस्तेन जुहुयात्। सुवर्गाल्लोकाद्यजमानमवविध्येत्। स्रुचा जुहोति। सुवर्गस्य लोकस्य समष्ट्यै" (तैब्रा १·६·३) इति। अवविध्येत् प्रच्यावयेत्। पुरोडाशो येन संनिवेशेन पात्रेऽवस्थितस्तेनैव संनिवेशेनाग्नौ तस्य स्थितिः शाखान्तरे विहिता। स्रुचा हूयमानस्त्ववाङ्मुखो वह्नौ पतेदतस्तद्विधिविरोधं परिहर्तुं हस्तेन होतव्यमित्येषा मन्दानामुपपत्तिः॥ हुतस्य पुरोडाशस्य नैश्चल्यं विधातुं प्रस्तौति—"यत्प्राङ् पद्येत। देवलोकमभिजयेत्। यद्दक्षिणा पितृलोकम्। यत्प्रत्यक्। रक्षाꣳसि यज्ञꣳ हन्युः। यदुदङ्। मनुष्यलोकमभिजयेत्" (तैब्रा १·६·३) इति। यद्यपि लोकादिजयो न स्वरूपेण दोषस्तथाप्यधिकफलभावनायां सत्यां तावन्मात्रत्वं दोष एव॥ विधत्ते—"प्रतिष्ठितो होतव्यः। एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनु प्रतितिष्ठतः। द्यावापृथिवी ऋतवः। ऋतून् यज्ञः। यज्ञं यजमानः। यजमानं प्रजाः। तस्मात् प्रतिष्ठितो होतव्यः" (तैब्रा १·६·३) इति। प्रागादिदिक्षु पतनपरिहारेण होमस्थान एव प्रतिष्ठितो निश्चलो यथा भवति तथा होतव्यः। ऋतव इत्यादिष्वनु प्रतितिष्ठन्तीत्यादिकं द्रष्टव्यम्। तस्मादिति पूर्वस्य विधेरुपसंहारः। तदेतदुक्तं कृत्स्नहोमादिकमापस्तम्बेन स्पष्टमुदाहृतम्—"उपांशु प्रचरति। सर्वहुतमपर्यावर्तयन्नृजुं[३२] प्रतिष्ठितं न हस्तेन जुहुयात्" (आपश्रौ ६·२९·१९-३०·१) इति। स्रुचा होमेऽप्यपर्यावृत्तिं संप्रदायविद एवं संपादयन्ति—शिक्ये पुरोडाशमवस्थाप्य वामहस्तेन शिक्याग्रं धृत्वा दक्षिणहस्तेन स्रुचमधस्ताद्धारयित्वा तया स्रुचा होमं कुर्वन् वामहस्तेन शिक्यमीषदुद्धृत्य वह्नौ स्थापयेदिति॥ वैश्वदेव्यामिक्षाया निःसृतं वाजिनशब्दाभिधेयं यन्नीरं तस्य वाजिसंज्ञकान्[३३] अग्निवायुसूर्यान् देवानुद्दिश्य यागं विधत्ते—"वाजिनो यजति। अग्निर्वायुः सूर्यः। ते वै वाजिनः। तानेव तद्यजति। अथो खल्वाहुः। छन्दाꣳसि वै वाजिन इति। तान्येव तद्यजति" (तैब्रा १·६·३) इति॥ तस्य यागस्य कालं विधातुं प्रस्तौति—"ऋक्सामे वा इन्द्रस्य हरी सोमपानौ। तयोः परिधय आधानम्। वाजिनं भागधेयम्। यदप्रहृत्य परिधीञ्जुहुयात्। अन्तराधानाभ्यां घासं प्रयच्छेत्" (तैब्रा १·६·३) इति। हरी अश्वौ तयोर्वशीकरणाय मुखे प्रक्षिप्तो लोहविशेष आधानम्। अन्तर्मुखमध्येऽवस्थितमाधानं ययोस्तावन्तराधानौ। हस्तेन मुखे प्रक्षिप्यमाणः साज्यशर्करमुद्गादिपिण्डो घासस्तृणविशेषो वा। नह्याधानेऽन्तरवस्थिते सति घासो भक्षयितुं शक्यः॥ विधत्ते—"प्रहृत्य परिधीन् जुहोति। निराधानाभ्यामेव घासं प्रयच्छति" (तैब्रा १·६·३) इति। परिधीनामग्नौ प्रहारेणाऽऽधानस्यापनीतत्वाद्घासो भक्षयितुं शक्यते। सोऽयं[३४] काल आपस्तम्बेन स्पष्टीकृतः—"परिधीन् प्रहृत्य सꣳस्रावान्तं कृत्वा वाजिनपात्र[३५] उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन् वाजिनं गृह्णाति। नाभिघारयति" (आपश्रौ ८·३·६-७) इति॥ तत्र पात्रे ग्रहणकाले पात्रस्याभिपूरणेनाधोऽवस्थितस्य बर्हिषो विशेषेण सेचनं विधत्ते—"बर्हिषि विषिञ्चन् वाजिनमानयति। प्रजा वै बर्हिः। रेतो वाजिनम्। प्रजास्वेव रेतो दधाति" (तैब्रा १·६·३) इति॥ सोमवत् परस्परोपहवपूर्वकं[३६] भक्षणमप्राप्तत्वादिह विधत्ते—"समुपहूय भक्षयन्ति। [illegible]ह्वते। अथो आत्मन्नेव रेतो दधते" (तैब्रा १·६·३) इति। वाजिनयागस्य सांनाय्यविकृतित्वेऽपि

३०. क.पा.हा–°र्नायेनैककपालम्। ३१. म ४–स्रुचादेः। ३२. तं–प्रतितिष्ठन्तम्। ३३. आ.क.ना.हा–'अग्निवायुसूर्यान्' नास्ति। ३४. म४–पकारः। ३५. इ.उ.क.ना.पा.हा–वाजिनपात्रम्। ३६. म४–परस्परोपाह्वानपूर्वकम्।

सांनाय्यवदिडाभक्षणं न कर्तव्यं किं तु सोमवद्भक्षयेत्। एतदेव वाजिनभक्षणं सोमपीथः सोमपानं येषामृत्विजां त एतत्सोमपीथाः॥ वाजिनभक्षणे यजमानस्य [37]चरमभक्षणं विधत्ते—"यजमान उत्तमो भक्षयति। पशवो वै वाजिनम्। यजमान एव पशून् प्रतिष्ठापयन्ति" (तैब्रा १·६·३) इति। एतस्मिन् वैश्वदेवकर्मणि मन्त्रे विशेषाभावात् मन्त्रकाण्डे प्रधानविधय एवाऽऽम्नाताः, अतो नास्ति विनियोगसंग्रहः॥

अथ मीमांसा॥ प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"चातुर्मास्याद्यपर्वप्रोक्ताग्नेयाद्यष्टकान्तिमे (के)।
वैश्वदेवेति शब्दोक्तो [38]गुणः संघस्य नाम वा॥
नामत्वे रूपराहित्यादिविधिर्गुणता ततः।
अग्न्यादिभिर्विकल्प्यन्ते विश्वे देवास्तु सप्तसु॥
अनूद्याष्टौ यजेतेति तत्संघे नाम वर्णितम्।
अविधित्वेऽप्यर्थवत् स्यान्नाम प्राक्प्रवणादिषु॥
इज्यन्तेऽत्र यजन्ते वा विश्वे देवा इतीदृशी।
निरुक्तिर्न विकल्पः स्यादुत्पत्त्युत्पन्नशिष्टतः॥" (जैन्या १·४·२७—३०)॥

चातुर्मास्ययागस्य चत्वारि पर्वाणि वैश्वदेवो वरुणप्रघासः साकमेधः शुनासीर्यश्चेति। तेषु प्रथमे पर्वणि अष्टौ यागा विहिताः—"आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम्" (तैसं १·८·२) इति। तेषामष्टानां[39] संनिधाविदमाम्नायते—"वैश्वदेवेन यजेत" (आपश्रौ ८·१·५) इति। तत्राऽऽग्नेयादीन्[40] यजेत, इत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते। यद्यपि वैश्वदेव्यामिक्षायां विश्वे देवाः प्राप्तास्तथाऽप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयन्ते। तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्तर्हि गत्यभावात्तेषु देवता विकल्प्यन्ताम्। नामधेयत्वे तु नाममात्रस्याविधेयत्वाद्द्रव्यदेवतयोरभावेन यागस्यात्र स्वरूपासंभवाच्छ्रूयमाणो विधिरनर्थकः स्यात्। तस्माद्गुणविधिरिति प्राप्ते ब्रूमः—उत्पत्तिवाक्यैर्विहिताग्नेयादीनष्टौ यागान् यजेत इत्यनूद्याष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते। न च विधित्वाभावेऽपि नामोपदेशवैयर्थ्यं "प्राचीनप्रवणे वैश्वदेवेन यजेत" (आपश्रौ ८·१·५) इत्यादिषु वैश्वदेवशब्देनैकेनैवाष्टानां संघस्य व्यवहर्तव्यत्वात्। नामप्रवृत्तिनिमित्तभूता निरुक्तिर्द्विधा[41] आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम्। अथ वा विश्वे देवा अष्टानां कर्तार इति वैश्व-

३७. म४—चरमभावित्वम्। ३८. तं—गणः। ३९. तं.म४—अष्टानां यागानाम्। ४०. म४—आग्नेयादीन् यागान्। ४१. इ.क.उ.पा.हा—°क्तिविशेषा; म४—°क्तिर्द्विविधा।

देवत्वम् । तथा च ब्राह्मणम्—" यद्विश्वे देवाः समयजन्त । तद्वैश्वदेवस्य वैश्वदेवत्वम् " ( तैब्रा १·४·१० ) इति । देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते । [४२-]अग्न्यादय उत्पत्तिशिष्टत्वात्[४३] प्रबला [४४-]विश्वे देवा [४५]अनुत्पन्नशिष्टत्वाद्दुर्बलाः[-४४] । तस्माद्वैश्वदेवशब्दः कर्मनामधेयम्[-४२] ॥

अत्रैव गुरुमतमाह—

" गुणनामत्वसंदेहादप्रमा चोदनेति चेत् ।
नोक्तन्यायेन संवस्य नामधेयत्वनिर्णयात् ॥ " ( जैन्या १·४·३१ ) ॥

स्पष्टोऽर्थः ॥

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति ।
गुणो देवाननूद्योक्तः समुच्चयविकल्पतः ॥
आमिक्षोत्पत्तिशिष्टत्वात् प्रबला तत्र वाजिनम् ।
गुणोऽप्रविश्य कर्मान्यत् कल्पयेद्वाजिदेवकम् ॥ " ( जैन्या २·२·२४-२५ ) ॥

" तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् " ( द्र. जैसू–शाभा ४·१·२२ ) इति श्रूयते । घनीभूतः पयःपिण्ड[४६] आमिक्षा [४७-]तज्जलं वाजिनम्[-४७] । तत्राऽऽमिक्षाद्रव्यभाजो ये[४८] विश्वे देवा उक्ताः [४९]ते वाजिभ्य इत्यनेनानूद्यन्ते । वाजोऽन्नमामिक्षारूपमेषामस्तीति तन्निष्पत्तेः ।ताननूद्य वाजिनद्रव्यरूपो गुणो विधीयते । तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चीयतां विकल्प्यतां वेति प्राप्ते ब्रूमः—उत्पत्तिशिष्टेनाऽऽमि[illegible]रुद्धे वैश्वदेवयागे वाजिनद्रव्यस्य [५०-]उत्पन्नशिष्टस्य प्रवेशाभावात्[-५०] वाजिनशब्दो वाजिशब्दार्थस्य देवतान्तरतामापादयति । ततो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात् कर्मान्तरम् ॥

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" आमिक्षा वाजिनं [५१]च स्याद्दध्यानीतेः प्रयोजकम्[५२] ।
उताऽऽमिक्षैव सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः ॥
आमिक्षा पय एवात्र तच्छब्दान् मन्त्रतो रसात् ।
प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनम् ॥ " ( जैन्या ४·१·१८–१९ ) ॥

इदमाम्नायते—" तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् " ( द्र. जैसू–शाभा ४·१·२२ ) इति । [५३]तप्तपयसि दधिप्रक्षेपादामिक्षाद्रव्यं यथा निष्पद्यते तथा वाजिनद्रव्यमपीति

---

४२–४२. क.पा.ह्रा–' अग्न्यादय....कर्मनामधेयम् ' नास्ति । ४३. तं–उत्पत्तिविशिष्टत्वात् । ४४–४४. म४–' विश्वे....दुर्बलाः ' नास्ति । ४५. तं–उत्पन्ना अविधि' । ४६. (जैमिनीयन्यायमालापाठमनुसृत्य स्वीकृतः पाठः); आ.इ.उ.क.तं.ना.पा.म.४.ह्रा–पिण्डः । ४७–४७. आ.क.ना.ह्रा–वाजिनं जलम् । ४८. आ.क.ना.ह्रा–यागे । ४९. आ.क.ना.ह्रा–ते च । ५०–५०. आ.पा–उत्पत्तिशिष्टताया अवकाशाभावात्; उ–उत्पत्तिशिष्टस्य अवकाशाभावात्; क.ना.ह्रा.उत्पन्नशिष्टतया अवकाशाभावात् । ५१. तं.म४–वा । ५२. आ.ना.ह्रा–प्रयोजिका । ५३. आ.क.ना.म४.ह्रा–तप्त पयसि ।

दध्यानयनस्य जनकत्वसामर्थ्यमुभयद्रव्यविषयं तुल्यमेव । तस्मादुभयमपि प्रयोजकमिति प्राप्ते ब्रूमः— न द्रव्यान्तरमामिक्षा, किं तु पय एवेति तच्छब्दादिभिरवगम्यते । यस्मिन् पयसि दधिप्रक्षेपः साऽऽमिक्षेति तच्छब्देन पयः परामृश्यते । आमिक्षायागे पुरोनुवाक्यायामप्येवमाम्नातम्—"जुषन्तां युज्यं पयः" ( ऋसं ६.५२.१०, तैसं २.४.१४ ) इति । पयोरसश्च मधुर आमिक्षायामनुवर्तते, न तु वाजिने । ततः प्राधान्येन पयसो [54]घनीभावं कर्तुं[54] दध्यानीतमित्यामिक्षैव प्रयोजिका । अनुनिष्पाद्येव वाजिनं न तु प्रयोजकम् ॥

अष्टमाध्यायस्य द्वितीयपादे चिन्तितम्--

"सुरावाजिनयोः सोमस्येष्टेर्वा सोमशब्दतः ।
आद्यो मैवं हविःसाम्यात् सोमशब्दः प्रशस्तये ॥" ( जैन्या ८.२.१ ) ॥

सौत्रामण्यां सुराग्रहाः श्रुताः--"सुराग्रहान् गृह्णाति" ( आपश्रौ १९.७.२ ) इत्यादिना । चातुर्मास्येषु वाजिनयागः श्रुतः–'वाजिभ्यो वाजिनम्' इति । तत्रोभयत्र सोमस्य [55]विध्यन्तः कार्यः[55] । कुतः ? "सोमो वै वाजिनं सुरा सोमः" ( द्र. जैसू-शाभा ८.२.१ ) इति वाजिने सुरायां च सोमशब्दप्रयोगात् । सोमशब्दश्चाग्निहोत्रशब्दवद्धर्मानतिदिशतीति चेत् । मैवम् । ऐष्टिकहविःसाम्यात् । ओषधिविकृतं[56] सुरा, सांनाय्यविकृतं वाजिनम् । तस्मादैष्टिको विध्यन्तः । सोमशब्दस्त्वर्थवादगतत्वान्नाग्निहोत्रादिनामवदतिदेशकः । यदि वाजिनस्य प्रतिपत्तिकर्मत्वान्नास्ति धर्मापेक्षा तर्ह्येतस्मिन्नंशे कृत्वाचिन्ताऽस्तु ॥

तत्रैवान्यच्चिन्तितम्—

"द्वयोर्दध्नोऽथ पयस आमिक्षायां द्विजत्वतः ।
द्वयोर्दध्नो घनत्वेन प्राधान्यात् पयसो भवेत् ॥" ( जैन्या ८.२.४ ) ॥

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" ( द्र. जैसू-शाभा ४.१.२२ ) इति [57]श्रुतायामामिक्षायां[57] सांनाय्यगतयोः[58] दधिपयसोः [59]धर्मः कार्यः[59], आमिक्षाया उभयजन्यत्वादित्येकः पक्षः । घनत्वस्याऽऽधिक्याद्दधिधर्मा इति द्वितीयः पक्षः । पयस्यामिक्षामुत्पादयितुं सहकारित्वेन दध्यानीयते । ततः पयस एव मुख्यकारणत्वात्तद्धर्म एव न्याय्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

५४-५४. इ.उ.तं४–घनीभावावस्थां जनयितुम् । ५५-५५. तं–विध्यन्तरं कार्यम् । ५६. तं.म४–°विकृता । ५७-५७. आ.क.ना.हा–श्रुताया आमिक्षायाः । ५८. आ.क.ना.हा–°य्ययागीययोः । ५९-५९. आ.क.ना.हा–धर्माः कार्याः; तं–धर्मः, कुतः ।

ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालं

ऐन्द्राग्नमित्यैन्द्र–अग्नम् । एकादशकपालमित्येकादश–कपालम् । मारुतीम् । आमिक्षाम् । वारुणीम् । आमिक्षाम् । कायम् । एककपालमित्येक–कपालम् ।

अथ वरुणप्रघासहवींषि विदधाति—‘ ऐन्द्राग्नम् ’ इत्यादि ॥ एतानि चत्वारि हवींषि पञ्चसंचरातिरिक्तानि । “ एतद्ब्राह्मणान्येव पञ्च हवींषि । अथैष ऐन्द्राग्नो भवति ” ( तैब्रा १.६.४ ) इत्यादि ब्राह्मणम् । तेन संचरैः सह नव भवन्ति । को देवता अस्य [V]कायम् । “ कस्येत् ” ( पा ४.२.२५ ) इतीत्त्वम् । कः प्रजापतिः ॥

द्वितीये वैश्वदेवाख्यं प्रथमं पर्वोक्तं, तृतीये वरुणप्रघासाख्यं द्वितीयं पर्वोच्यते ॥

ऐन्द्राग्नमिति ॥ तत्र विशेषहवींषि चत्वारि विधत्ते—‘ ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालम् ’ इति । निर्वपतीति पूर्वानुवाकादनुवर्तते ॥ तानेतान् वरुणप्रघासान् विधातुं प्रस्तौति—“ प्रजापतिः सविता भूत्वा प्रजा असृजत । ता एनमत्यमन्यन्त । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत् । ताः प्रजा वरुणगृहीताः । प्रजापतिं पुनरुपाधावन् नाथमिच्छमानाः । स एतान् प्रजापतिर्वरुणप्रघासानपश्यत् । तान्निरवपत् । तैर्वै स प्रजा वरुणपाशादमुञ्चत् ” ( तैब्रा १.६.४ ) इति । सविता भूत्वोत्पादको भूत्वा । अत्यमन्यन्तावज्ञां कृतवत्यः । वरुणो भूत्वा [1-]अपक्रमणान्निवारको भूत्वा[-1] वरुणेन वरुणपाशरूपेण जलोदररोगेण । नाथं स्वामिनं रोगशान्तिप्रदम्[2] । वरुणप्रघासानेतन्नामकान् यागविशेषान् ॥ इदानीं विधत्ते—“ यद्वरुणप्रघासा निरुप्यन्ते । प्रजानामवरुणग्राहाय ” ( तैब्रा १.६.४ ) इति । अस्य पर्वणः कालमापस्तम्बो दर्शयति—“ ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासैर्यजेत ” ( आपश्रौ ८.५.१ ) इति । उदवसाय पूर्वदेशान्निर्गत्य ॥ अस्मिन् वरुणप्रघासपर्वणि द्वितीयां वेदिं विधातुं प्रस्तौति—“ तासां दक्षिणो बाहुर्न्यक्न आसीत् । सव्यः प्रसृतः । स एतां द्वितीयां दक्षिणतो वेदिमुदहन् । ततो वै स प्रजानां दक्षिणं बाहुं प्रासारयत् ” ( तैब्रा १.६.४ ) इति । तासां प्रजानां न्यक्नः शीतवातरोगेण[3] नितरां संकुचितः, वेदिमुदहन् वेदेरुद्धननं कृतवान् ॥ विधत्ते—“ यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति । प्रजानामेव तद्यजमानो दक्षिणं बाहुं प्रसारयति । तस्माच्चातुर्मास्ययाज्यमुष्मिँल्लोक उभयाबाहुः । यज्ञाभिजितꣳ ह्यस्य ” ( तैब्रा १.६.४ ) इति । दक्षिणतश्चोदकप्राप्तया वेदेर्दक्षिणभागे यस्माच्चातुर्मास्येषु वेदिद्वयमस्ति तस्मात्तद्याजी स्वर्गे बाहुद्वयोपेतो भवति । यद्यपि सर्वेषां बाहुद्वयमस्ति तथाऽप्येक एव बाहुस्तेषां सामर्थ्योपेतः । अत एवाऽऽम्नातम्—“ तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः ” ( तैसं १.७.६ ) इति । अस्य तु[4] बाहुद्वयमपि सामर्थ्यातिशयोपेतमिति विशेषः । तदेतदस्य यज्ञाभिजितमनेन यज्ञेन संपादितम् ॥ उभयोर्वेद्योर्मध्ये त्रयोदशाङ्गुलिपरिमितं व्यवधानं विधत्ते—“ पृथमात्राद्वेदी असंभिन्ने भवतः । तस्मात् पृथमात्रं व्यꣳसौ ” ( तैब्रा १.६.४ ) इति । यस्माद्वेद्योरुक्तं व्यवधानं तस्माल्लोकेऽपि वामदक्षिणावंसौ पृथमात्रौ । यद्वा—पृथमात्रं त्रयोदशाङ्गुल-

१–१. आ.क.ना.हा–‘ अपक...भूत्वा ’ नास्ति । २. आ.क.ना.हा–रोगशान्तये । ३. म४—वातरोगेण । ४. आ.क.ना.हा–‘ तु ’ नास्ति ।

परिमाणं यथा भवति तथा विभक्तौ दृश्येते ॥ विधत्ते—" उत्तरस्यां वेद्यामुत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः। पशूनेवावरुन्द्धे। अथो यज्ञपरुषोऽनन्तरित्यै " ( तैब्रा १·६·४ )। यज्ञपरुषो यज्ञावयवस्यानन्तरित्या अन्तरायाभावार्थम् । उत्तरवेदेरभावे तद्रूपो यज्ञावयवोऽन्तरितः स्यात् ॥ वैश्वदेवपर्वण्युक्तानाम् ' आग्नेयमष्टाकपालम् ' इत्यादीनां पञ्चहविषां ब्राह्मणमनुब्राह्मणं चात्राप्यतिदिशति— " एतद्ब्राह्मणान्येव पञ्च हवींषि " ( तैब्रा १·६·४ ) इति । आग्नेयादीनां पञ्चानां विधायकं पूर्वस्मिन् पर्वणि यद्ब्राह्मणमेतदेवास्मिन् पर्वणि ब्राह्मणं विधायकं येषां पञ्चानां तानि एतद्ब्राह्मणानि । अत्रापि तथैवाऽऽदौ पञ्च हवींष्यनुतिष्ठेदित्यर्थः ॥ मुख्यब्राह्मणे प्रथमं[5] विहितस्यैन्द्राग्नस्यातिदिष्टपञ्चहविरानन्तर्यं विधत्ते—" अथैष ऐन्द्राग्नो भवति " ( तैब्रा १·६·४ ) इति ॥ तस्मिन् यागे श्रुतौ देवौ प्रशंसति—" प्राणापानौ वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । प्राणापानावेवावरुन्द्धे । ओजो बलं वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ओजो बलमेवावरुन्द्धे " ( तैब्रा १·६·४ ) इति । ओजो मानस उत्साहो बलं शारीरमिति विशेषः ॥ मुख्यब्राह्मणविहितमामिक्षायागमनूद्य तद्देवताकावेव[6] [7]-मेषीमेषौ यवमयौ-[7] विधत्ते— " मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी च मेषश्च भवतः । मिथुना एव प्रजा वरुणपाशान्मुञ्चति " ( तैब्रा १·६·४ ) इति । मारुत्यामिक्षा भवति मेषी च, वारुण्यामिक्षा भवति मेषश्चेति तत्तत्साहित्याभिधानार्थौ चकारौ । स्त्रीपुरुषरूपयोर्मेषीमेषयोरनुष्ठानेन मिथुनात्मिकाः प्रजा रोगान्मुक्ता भवन्ति ॥ मेषीमेषयोर्गुणविशेषं विधत्ते—" लोमशौ भवतो मेध्यत्वाय " ( तैब्रा १·६·४ ) इति । एतच्च सूत्रकारेण स्पष्टीकृतम्—" ऊर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः " ( आपश्रौ ८·६·११ ) इति । तयोर्मेषीमेषयोः पुरतः शमीपर्णस्थापनं विधत्ते—" शमीपर्णान्युपवपति । घासमेवाऽऽभ्यामपि यच्छति " ( तैब्रा १·६·४ ) इति । घासमपीत्यन्वयः ॥ शमीपर्णानां शताधिकसंख्यां [8]-विधातुं प्रस्तौति-[8]—" प्रजापतिमन्नाद्यं नोपानमत् । स एतेन शतेध्मेन हविषाऽन्नाद्यमवारुन्द्ध । यत्परःशतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै " ( तैब्रा १·६·४ ) इति । अत्तुं योग्यं शाल्यादिजन्यं यदन्नं तत्प्रजापतिर्न प्राप्नोत् । स च प्रजापतिरेतेन शमीवृक्षजन्येन शतसंख्यायुक्तेन काष्ठसमूहेन दीपितेऽग्नौ हुतेन हविषा तदन्नाद्यं संपादितवान् । अतः परःशतानि शताधिकसंख्याकानि[9] पर्णान्युपवपेत् ॥ तत्र करीरोद्वापं[10] विधातुं प्रस्तौति— " सौम्यानि वै करीराणि । सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति " ( तैब्रा १·६·४ ) इति । करीरनामकान्यङ्कुराणि सोमवल्लीसदृशत्वात् सौम्यानि । आहुतिरपि सोमसंबन्धिनी वृष्टिहेतुः ॥ विधत्ते- " यत्करीराणि भवन्ति । सौम्ययैवाऽऽहुत्या दिवो वृष्टिमवरुन्द्धे " ( तैब्रा १·६·४ ) इति । करीरशब्देन [11]खर्जूरीफलान्युच्यन्त इति केचित् । तानि शमीपर्णवद्भक्ष्यत्वोपचारेण तयोः पुरत उपवपेत् । तथा च सूत्रकारः—" अथाऽऽभ्यां शमीपर्णकरीराण्युपवपति परःशतानि परःसहस्राणि च " ( आपश्रौ ८·६·१३ ) इति ॥ नवमं यागं प्रशंसति—" काय एककपालो भवति । प्रजानां कन्त्वाय " ( तैब्रा १·६·४ ) इति । सुखित्वायेत्यर्थः । कायः प्रजापतिदेवताकः ॥ दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि विधत्ते—

---

५-५. आ.क.तं.ना.पा.हा-' प्रथमं ' नास्ति । ६. म४-तद्देवताख्यौ; तं·तद्देवताकौ धर्मौ । ७-७. म४-यवमयमेषीमेषौ ।. ८-८. तं. म४-विधत्ते । ९. आ.क.ना.हा-संख्यानि । १०. तं-अङ्कुरोद्वापम्; म४-अङ्कुरोत्पादनम् । ११. तं.म.४-खर्जूरफला° ।

" प्रतिपूरुषं करम्भपात्राणि भवन्ति । जाता एव प्रजा वरुणपाशान्मुञ्चति । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति " (तैब्रा १·६·४) इति । दधिसिक्ता यवसक्तवः करम्भः । यजमानस्य गृहे यावन्तः पुरुषा मनुष्यास्तत्संख्यया पात्राणि विधायैकं पात्रमधिकं कुर्यात् । अत एव सूत्रकार आह— ".आमपेषाणां पत्नी करम्भपात्राणि करोति । यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि " (आपश्रौ ८·५·४०-४१) इति ॥

तदेवमनुब्राह्मणगतेनानुवाकेन वरुणप्रघासादिविषयो देवताप्रशंसाश्चोक्ताः । अथानुवाकान्तरेण [12]-हविरासादनादिप्रयोगा उच्यन्ते-[12] । तत्र वेदिद्वये हविःसादनव्यवस्थां[13] विधत्ते— " उत्तरस्यां वेद्यामन्यानि हवीꣳषि सादयति । दक्षिणायां मारुतीम् । अपधुरमेवैनां युनक्ति । अथो ओज एवाऽऽसामवहरति । तस्माद्ब्राह्मणश्च क्षत्राच्च विशोऽन्यतोऽपक्रमिणीः " (तैब्रा १·६·५) इति । मारुत्या आमिक्षाया अन्यान्याग्नेयादीन्यष्टौ हवींषि । मरुतो देवानां मध्ये विशः । अतो मारुत्याः पृथग्वेदिसादनादेना विशोऽपधुरमेव युनक्ति अपक्रमणमेव प्रापयति । धुरो गमनमपधुरम्, धूःशब्देन बहुविधहविर्वहनयोग्या भूमिरुच्यते । सा चोत्तरगता वेदिस्तस्या अपगमनं यथा भवति तथा मरुद्रूपा एना विशो वेद्यन्तरे योजितवान् भवति । किं चाऽऽसां विशामोजो बलमवहरत्येव न्यक्करोत्येव । यस्माद्विशां न्यक्कारस्तस्मात् [14]-ब्राह्मणात् क्षत्रियात्-[14] चेमा विशोऽन्यतो ग्रामान्तरे [15]वाटिकान्तरे वाऽपक्रामन्ति ॥ प्रचारपौर्वापर्यं पाठेनैव प्राप्तं प्रशंसति—" मारुत्या पूर्वया प्रचरति । अनृतमेवावयजते । वारुण्योत्तरया । अन्तत एव वरुणमवयजते " (तैब्रा १·६·५) इति । मारुत्या आमिक्षायाः प्रथमप्रचारेणानृतमयथाशास्त्रार्थानुष्ठानेन दोषमवयजते विनाशयति । वारुण्या आमिक्षाया उत्तरकालीनप्रचारेण वरुणं वरुणपाशरूपं जलोदररोगमन्तत एवावयजते सर्वथैव विनाशयति ॥ प्रचारात् प्राचीनेष्वङ्गेषु पूर्वोक्तपौर्वापर्यवैपरीत्यं विधत्ते—" यदेवाध्वर्युः करोति । तत्प्रतिप्रस्थाता करोति । तस्माच्छ्रेयान् करोति । तत्पापीयान् करोति " (तैब्रा १·६·५) इति । अध्वर्युरुत्तरवेद्यवस्थिताया वारुण्या आमिक्षाया अनुष्ठाता, प्रतिप्रस्थाता तु दक्षिणवेद्यां मारुतीमनुतिष्ठति । तत्र यद्यदन्वाधानादिकमेकैकमङ्गमध्वर्युरनुतिष्ठति तत्तदङ्गं प्रतिप्रस्थाता तदनन्तरमेवाऽनुतिष्ठेत् । अत एव च लोकेऽपि संदिग्धेषु लौकिकवैदिकव्यवहारेषु श्रेयान् प्रामाणिकत्वेन संप्रतिपन्नः पुरुषो यदेव करोति तदेव पापीयान् मूढोऽपि करोति ॥ अत्र बौधायनेन यदिदमुक्तं—" अथ प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि कस्ते जार इति । असाविति तं वरुणो गृह्णातु " (बौश्रौ ५·७) इति, तदिदं विधत्ते—" पत्नीं वाचयति । मेध्यामेवैनां करोति । अथो तप एवैनामुपनयति " (तैब्रा १·६·५) इति । 'पापं प्रख्यापयेत् पापी' इति स्मृतिकारैरुक्तत्वात् विद्यमानं जारमुद्दिश्य पत्नीं वाचयेत् । तेन च प्रख्यापनेन पत्नीं यागयोग्यां करोति । किं च सभामध्ये मानहानिसहिष्णुत्वरूपं यत् तपः तदप्येनां पत्नीं प्रतिप्रस्थाता प्रापयति ॥ तस्याश्च पत्न्याः लज्जां मुक्त्वा जारनिर्देशं विधत्ते—" यज्जारꣳ सन्तं न प्रब्रूयात् । प्रियं ज्ञातिꣳ रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयति " (तैब्रा १·६·५) इति ॥

१२–१२. तं.म४–हविःसादनादि प्रयोग उच्यते । १३. तं–°सादनावस्थां । १४–१४. म४–ब्रह्मणः क्षत्रात् । १५. इ.उ–वापिकान्तरे; क.ना.पा.ह्रा–वा पीठिकान्तरे ।

**प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः ॥**

प्रघास्यानिति प्र-घास्यान्। हवामहे। मरुतः। यज्ञवाहस इति यज्ञ-वाहसः। करम्भेण। सजोषस इति स-जोषसः॥

गृहीतकरम्भपात्रां पत्नीमुदानयित्वा वाचयति प्रतिप्रस्थाता—‘प्रघास्यान्’ इति। इयं गायत्री॥ पूर्वपदलोपोऽत्र द्रष्टव्यः। यथा—देवदत्तो दत्तः, सत्यभामा भामेत्येवं वरुणप्रघासाः प्रघासाः; तत्र भवास्तेषां संबन्धिनो मरुतः प्रघास्याः। “भवे छन्दसि” (पा ४·४·११०) इति यः। मरुद्विशेषा वा प्रघास्यास्तान् vहवामहे आह्वयामः यजामहे वा। “बहुलं छन्दसि” (पा ६·१·३४) इति संप्रसारणम्। [यज्ञं वहन्ति इति यज्ञवाहसः]। “वहिहाधाञ्भ्यश्छन्दसि” (उ ६७०) इति विधीयमानोऽसुन् “गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च” (उ ६७६) इति कारकपूर्वादपि भवति। णिदिति तत्रानुवृत्तेर्वृद्धिः। दधिसर्पिर्मिश्राः सक्तवः करम्भाः। जातावेकवचनम्। तद्योगात्ताच्छब्द्यम्। करम्भपात्रैर्हेतुभिः vसजोषसः समानप्रीतीन्, परस्परम् अस्माभिर्वा सप्रीतीन्। “परादिश्छन्दसि” (पा ६·२·१९९) इत्युत्तरपदाद्युदात्तत्वम्॥

यजमानः पुरोनुवाक्यामन्वाह—‘मो षू णः’ इति॥ पङ्क्तिप्रकारोऽयम्। पादादित्वादस्त्विति न निहन्यते। मो इति प्रतिषेधे निपातसमुदायो वा। सामर्थ्याल्लभ्या क्रिया; तस्या एव निषेधसंभवात्, अस्त्विति वक्ष्यमाणत्वाच्च। हे vइन्द्र, देवनादिगुणक अस्माकं vपृत्सु संग्रामेषु प्रवृत्तिः vमो मा भूदिति। vसु सुष्ठु समीचीनमेव, सुष्ठु मा भूदिति वा। अस्मान् पृत्सु मा कार्षीः शोभनमेतदिति। “सुञः” (पा ८·३·१०७) इति सोः षत्वम्।

**प्रघास्यानिति**॥ मन्त्रकाण्डे प्रधानयागविधिभ्य ऊर्ध्वं ‘प्रघास्यान्’ ‘मो षू णः’ ‘यद्ग्रामे’ ‘अक्रन् कर्म’ (तैसं १·८·३) इत्येते चत्वारो मन्त्रा आम्नाताः। तत्र प्रथममन्त्रस्य विनियोगमापस्तम्ब आह—“प्रघास्यान् हवामहे’ इति प्रतिप्रस्थाता पत्नीमुदानयति” (आपश्रौ ८·६·१९) इति। पाठस्तु—‘प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः’ इति॥ वरुणपाशरूपं[१६] कर्म घ्नन्तीति वरुणप्रघासाः, तानर्हन्तीति वरुणप्रघास्याः। यज्ञं वहन्तीति vयज्ञवाहसः। दधिसर्पिर्मिश्रैः सक्तुभिर्निष्पादितं पात्रजातं करम्भशब्देनोच्यते। तेन vकरम्भेण दक्षिणवेदिस्थितेऽग्नौ दंपतिभ्यां हूयमानेन परस्परं समानप्रीतयः vसजोषसः। तथाविधान् vमरुतः vहवामहे आह्वयामः॥ विधत्ते—“प्रघास्यान् हवामह इति पत्नीमुदानयति। अह्वतैवैनाम्” (तैब्रा १·६·५) इति। एनां पत्नीमनेन मन्त्रपाठेनाह्वतैवाऽऽहूतवानेव भवति॥

अवशिष्टस्य मन्त्रत्रयस्य विनियोगमाहाऽऽपस्तम्बः—“अथान्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेणोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात् प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः। मो षू ण इन्द्र इति यजमानः पुरोनुवाक्यामन्वाह यद्ग्राम इत्युभौ याज्याम्। अक्रन् कर्म कर्मकृत इति विपर्यन्तौ जपतः” (आपश्रौ ८·६·२३–२५) इति॥

१६. म४—वरुणप्रघासरूपम्।

मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया ।
मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः ॥
यद्ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये एनश्चकृमा वयम् ।

मो इति । स्विति । नः । इन्द्र । पृत्स्विति पृत्-सु । देव । अस्तु । स्म । ते । शुष्मिन् । अवया । मही । हि । अस्य । मीढुषः । यव्या । हविष्मतः । मरुतः । वन्दते । गीः ॥
यत् । ग्रामे । यत् । अरण्ये । यत् । सभायाम् । यत् । इन्द्रिये ।
यत् । शूद्रे । यत् । अर्ये । एनः । चकृम । वयम् ।

"अन्येषामपि दृश्यते" ( पा ६·३·१३७ ) इति दीर्घत्वम् । "नश्च धातुस्थोरुषुभ्यः" ( पा ८·४·२७ ) इति नसो णत्वम् । किं च—हे शुष्मिन्, बलवन् ते तव प्रसादात् अवया करम्भपात्रयागोऽस्तु, अवयजनमवया । "अवे यजः" ( पा ३·२·७२ ) इति ण्विः । छान्दसोऽन्त्यविकारः । सोर्वा डादेशः । वरुणपाशानामवयजनं विनाशहेतुरस्त्विति यावत् । कः पुनरस्य विशेष इति चेद् ब्रूमः—हे इन्द्र, अस्य तव मीढुषः सेक्तुः संबन्धिनी इयमिष्टिः मही पृथ्वी यस्माद् यव्या यवमात्रसदृशी अतिस्वल्पेति यावत् । शाखादित्वादिवार्थे यः ( पा ५·३·१०३ ) । यद्वा—इयमेवेष्टिः तव प्रसादात् महती यव्या यवयित्री वरुणपाशानां पृथक्करणसमर्थेति यावत् । छान्दसो यः । अन्वादेशत्वादस्येति निहन्यते । दाश्वानादौ "मीढ्वान्" ( पा ६·१·१२ ) इति निपातितः । किं च—हविष्मतः चरुमतः मम गीः वन्दते स्तौति ॥

दम्पती याज्यां ब्रूतः—'यद्ग्रामे' इति । षट्पदा जगती इयम् ॥ ग्रामे जनपदे ( अरण्ये ) गूढे प्रदेशे सभायां गृहे इन्द्रिये चक्षुरादिके वागादिके च, शूद्रे चतुर्थे । निकृष्टोपलक्षणम् ।

**मो ष्विति** ॥ तत्र प्रथममन्त्रपाठस्तु—'मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया । मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः' इति ॥ हे इन्द्र देव, नः अस्मान् पृत्सु संग्रामेषु मो मैव प्रवर्तयेति शेषः । तदेतदप्रवर्तनं सु समीचीनं वैरिणामेवासंभवात् । हे शुष्मिन् बलवन्, ते तव प्रसादात् अवया अवयजनमनिष्टनाशनम् अस्तु स्म सर्वदा भवतु । यस्मात् कारणात् मीढुषो वृष्टिसेचनसमर्थस्य तव प्रसादादस्माकं मही भूमिः यव्या यवादिकृत्स्नधान्ययोग्या तस्मादनिष्टनाशनमित्यन्वयः[१७] । गीः अस्मदीया स्तुतिरूपा वाक् हविष्मतः करम्भपात्ररूपहविर्युक्तान् मरुतः वन्दते नमस्करोति स्तौतीत्यर्थः ॥

**यदिति** ॥ द्वितीयमन्त्रपाठस्तु—'यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये एनश्चकृमा वयम् । यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा' इति ॥ अत्र सप्त यच्छब्दा सप्तधा वाक्यभेदार्थाः । स चाऽऽदरार्थः । अर्ये स्वामिनि वैश्ये वा । एकस्य दंपत्योर्मध्ये कस्यचित् धर्मणि

१७. म४-ष्टनिवारकमित्यन्वयः ।

यदे(१)कस्याधि धर्मणि तस्यावयजनमसि स्वाहा ।

यत् ( १ ) । एकस्य । अधीति । धर्मणि। तस्य । अवयजनमित्यव—यजनम् । असि । स्वाहा ॥

~~~~~~~~~~~~~~~~~~~~

" अर्यः स्वामिवैश्ययोः " ( पा ३·१·१०३ ) इति निपात्यते । निपातनसामर्थ्यादेवाभिमतस्य सिद्धिः। एषु ग्रामादिष्वाधारेषु एतेषु वा निमित्तेषु [v]वयं [v]यत् [v]एनः पापं [v]चकृम बुद्धिपूर्वमबुद्धिपूर्वं वा सह कृतवन्तः । सांहितिकं दीर्घत्वम् । " अस्मदो द्वयोश्च " ( पा १·२·५९ ) इति द्वयोर्बहुवचनं वयमिति । यच्च आवयोः [v]एकस्य अन्यतरस्य एनः पृथगेवानया मया वा कृतम् [v]अधि [v]धर्मणि स्थानासनादिके क्रियमाणे तन्निमित्तं वा कृतं [v]तस्य सर्वस्य [v]अवयजनं नाशनम् [v]असि, हे करम्भपात्राणि । सामान्यविवक्षायामेकवचनं, करम्भेण चेति [1]प्रक्रान्तत्वात् । स्वाहाकरोमि त्वामिति । " यजमानदेवत्यो वा आहवनीयः " ( तैब्रा १·६·५ ) इत्यादि ब्राह्मणम् ॥

पृथग्गच्छन्तावनुमन्त्रयेते पत्नीयजमानौ— 'अक्रन्' इति । अनुष्टुबेषा । [v]अक्रन् कृतवन्तः । बहुवचनेन द्वावुच्येते । [v]कर्म करम्भपात्रहोमलक्षणं कृतवन्तः । " मन्त्रे घस° " ( पा २·४·८० ) इति च्लेर्लुक्। पुरुषव्यत्ययः । अकार्ष्मेति मध्यम( उत्तम ? )तया विपरिणतिः ।

~~~~~~~~~~~~~~~~~~~~

शास्त्रीये धर्मे [v]वयं यजमानो दारा दासाश्च ग्रामादिविषये[18] यत्पापमधिकं [v]चकृम [v]तस्य सर्वस्य [v]अवयजनं विनाशकं हे करम्भपात्रजात, त्वम् [v]असि, अतः [v]स्वाहा त्वां ददामीत्यर्थः ॥ एतयोरुभयोर्याज्यापुरोनुवाक्ययोर्हौत्रत्वमपवदितुं विधत्ते–" यत्पत्नी पुरोनुवाक्यामनुब्रूयात् । निर्वीर्यो यजमानः स्यात् । यजमानोऽन्वाह । आत्मन्नेव वीर्यं धत्ते । उभौ याज्यां सवीर्यत्वाय " ( तैब्रा १·६·५ ) इति । याज्यादृष्टान्तेन पुरोनुवाक्यायामपि प्रसक्तां[19] पत्नीमर्थवादेन वारयति ॥ पापरूपेण प्रविश्य [20]वरुणो यज्ञघाती इति वरुणो[20] याज्यायामेनःशब्देन विवक्षित इति दर्शयति—" यद्ग्रामे यदरण्य इत्याह । यथोदितमेव वरुणमवयजते " ( तैब्रा १·६·५ ) इति ॥ दक्षिणवेदिगतेऽग्नौ होमं विधातुं प्रस्तौति—" यजमानदेवत्यो वा आहवनीयः । भ्रातृव्यदेवत्यो दक्षिणः । यदाहवनीये जुहुयात् । यजमानं वरुणपाशेन ग्राहयेत् " ( तैब्रा १·६·५ ) इति । उत्तरदिक्स्थायां[21] वेद्यामुत्तरवेद्युपवापेन[22] निष्पन्न आहवनीयः । इतरवेदिगतोऽग्निर्दक्षिणः ॥ विधत्ते – " दक्षिणेऽग्नौ जुहोति । भ्रातृव्यमेव वरुणपाशेन ग्राहयति " ( तैब्रा १·६·५ ) इति ॥ जुहूमपवदितुं विधत्ते—" शूर्पेण जुहोति । अन्यमेव वरुणमवयजते " ( तैब्रा १·६·५ ) इति । अन्नसाधने शूर्पे भवमन्न्यं [23]भोज्यद्रव्यविनाशिनमित्यर्थः ॥ होमे गुणद्वयं क्रमेण विधत्ते—" शीर्षन्नधिनिधाय जुहोति । शीर्षत एव वरुणमवयजते। प्रत्यङ्तिष्ठञ्जुहोति। प्रत्यङ्ङेव वरुणपाशान्निर्मुच्यते " ( तैब्रा १·६·५ ) इति । करम्भपात्रपूर्णं शूर्पं शिरसि सकृन्निधाय पश्चाज्जुहुयात्, तेन शिरोरोगादिकं शाम्यति । पश्चिमाभिमुखेन होमेन प्रत्यङ्ङेव वरुणस्य प्रतिकूलत्वेन प्रबल एव सन् वरुणपाशान्निष्कृष्टो मुच्यते ॥

~~~~~~~~~~~~~~~~~~~~

१. त्रि–प्रकृतत्वात् ।

~~~~~~~~~~~~~~~~~~~~

१८. आ.क.ना.पा–ग्रामविषये; 'हा–ग्रामादिविषये' नास्ति । १९. आ.क.ना.पा–प्राप्ताम् । २०–२०. तं.म४–यज्ञविघातिवरुणो । २१. तं.म४–°दिग्गतायाम् । २२. तं–°वेद्यावापेन । २३. इ.उ.ना–भोक्तव्यद्रव्यानिष्टं ( ? ) विनाशयतीत्यर्थः; पा–भोक्तव्यं द्रव्यातिष्ठ( ? ) विनाशनमित्यर्थः ।

अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा ।
देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः ॥ ३ ॥

[ वयं यद्विंशतिश्च ]

अक्रन् । कर्म । कर्मकृत इति कर्म-कृतः । सह । वाचा । मयोभुवेति मयः-भुवा ।
देवेभ्यः । कर्म । कृत्वा । अस्तम् । प्रेति । इत । सुदानव इति सु-दानवः ॥ ३ ॥

[ मैसं १·१०·२; कासं ९·४; कपिसं ८·७; वासं ३·४४-४७ ]

---

'अस्तं प्रेत' इत्येकवाक्यत्वात् । ᵛकर्मकृतः एतस्य कर्मणः कर्तारः एतदेवाक्रन् । "सुकर्मपाप°" (पा ३·२·८९) इति क्विप् । ᵛसह ᵛवाचा मन्त्रात्मिकया ᵛमयोभुवा मयसः सुखस्य भावयित्र्या मन्त्रवदेव कर्म कृतवन्तः । भवतेर्ण्यन्तात् क्विप् । "बहुलमन्यत्रापि°" (उ १९०) इति णिलुक् । उपपदसमासः । "अन्तोदात्तादुत्तरपदात्°" (पा ६·१·१६९) इति तृतीयाया उदात्तत्वं व्यत्ययेन नित्यसमासेऽपि । यद्वा— मयसां भूर्मयोभूरिति षष्ठीसमासः । "सावेकाचः°" (पा ६·१·१६८) इति वाचः तृतीयाया उदात्तत्वम् । ᵛदेवेभ्यः देवार्थं देवर्णनिरवदानार्थम् । ते यूयं संप्रति ᵛकर्म यथोक्तं ᵛकृत्वा ᵛअस्तं ᵛप्रेत स्वं स्वं स्थानं वियुक्ता गच्छत हे ᵛसुदानवः कल्याणदानाः । कर्मसमाप्तिं वा अस्तमयत देवाः । "देवानृणं निरवदाय" (तैब्रा १·६·५) इत्यादि ब्राह्मणम् ॥

इत्यष्टमे तृतीयोऽनुवाकः ॥

---

**अक्रन्निति** ॥ तृतीयमन्त्रपाठस्तु—'अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः' इति ॥ ᵛकर्मकृतः अध्वर्युप्रमुखा यजमानपत्न्यन्ताः सर्वे, ᵛमयोभुवा मयः शिवं सुखम् । "यद्वै शिवम् । तन्मयः" (तैब्रा २·२·५) इति श्रुतेः । तत्सुखं भावयित्र्या मन्त्रोच्चारणरूपया ᵛवाचा ᵛसह [24]करम्भपात्रहोमान्तं ᵛकर्म ᵛअक्रन् कृतवन्तः । हे ᵛसुदानवः सुष्ठु हविषः प्रदातारोऽध्वर्युप्रभृतयः, देवार्थमिदं ᵛकर्म ᵛकृत्वा ᵛअस्तं ᵛप्रेत स्वगृहं[25] गच्छत ॥ अस्मिन्मन्त्र उत्तरार्धतात्पर्यं दर्शयति—"अक्रन् कर्म कर्मकृत इत्याह । देवानृणं निरवदाय । अनृणा गृहानुपप्रेतेति वावैतदाह" (तैब्रा १·६·५) इति । देवान् प्रति प्रत्यर्पणीयं यदृणं तन्निरवदाय निःशेषेण प्रत्यर्प्य ॥ अथावभृथद्रव्यं विधातुं प्रस्तौति—"वरुणगृहीतं वा एतद्यज्ञस्य । यद्यजुषा गृहीतस्यातिरिच्यते । तुषाश्च निष्कासश्च" (तैब्रा १·६·५) इति । वारुणयागे मेषार्थेषु यवेषु ये तुषा यश्च निष्कासः पात्रलग्न आमिक्षांशलेपस्तदुभयं पूर्वमन्त्रेण गृहीतस्य द्रव्यस्यातिरिक्तोंऽशः । अतो यज्ञसंबद्धमेतद्वरुणगृहीतमेव ॥ विधत्ते—"तुषैश्च निष्कासेन चावभृथमवैति । वरुणगृहीतेनैव वरुणमवजयते" (तैब्रा १·६·५) इति । अत्रावभृथशब्देन सौमिकावभृथधर्मोपेतं कर्मोच्यते ॥ तदेतत् प्रत्यभिज्ञापयितुं तत्रत्यविधीन् सार्थवादाननुवदति—"अपोऽवभृथमवैति । अप्सु वै वरुणः । साक्षादेव वरुणमवजयते । प्रतियुतो वरुणस्य पाश इत्याह । वरुणपाशादेव

---

२४. म४-°पात्ररूप° । २५. तं-स्वस्वगृहम् ।

निर्मुच्यते। अप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । एधोऽस्येधिषीमहीत्याह । समिधैवाग्निं नमस्यन्त उपायन्ति। तेजोऽसि तेजो मयि धेहीत्याह। तेज एवाऽऽत्मन् धत्ते " ( तैब्रा १·६·५ ) इति। अपः प्रत्यवभृथमनुतिष्ठेदप्सु कुर्यादित्यर्थः। अपामधिपतिरवादप्सु वरुणस्तिष्ठति । अतोऽत्र होमेन वरुणं साक्षादेव व्यवधानमन्तरेणैव विनाशयति । कर्मानुष्ठानादूर्ध्वमुदकसमीपं 'प्रतियुतः' (तैसं १·४·४५) इत्यनेन मन्त्रेण परित्यजेत्। उदकेषु स्थितो यो वरुणस्य पाशः स एषः प्रतियुतः परित्यक्तः। परित्यज्य पृष्ठदेशमपश्यन्त एव प्रत्यागच्छेयुः। आगत्य 'एधोऽसि' 'तेजोऽसि' (तैसं १·४·४५) इति द्वाभ्यामाहवनीये समिधावादध्यात्। हेऽग्ने, एधोऽसि अनया समिधाऽभिवृद्धोऽसि। अतस्त्वत्प्रसादाद्वयमप्येधिषीमहि समृद्धा भवेम। समिज्जन्यज्वालया तेजोऽसि अतो मयि तेजः स्थापय ॥

अत्र विनियोगसंग्रहः—

" पत्न्याह्वानं प्रघास्येति प्रतिप्रस्थातृकर्म तत् ।
स्वामी मो ष्वित्यनुब्रूयाद्यद्ग्राम इति दंपती ॥
अक्रन्नित्यपि तावेव मन्त्राश्चत्वार ईरिताः " ॥ १ ॥ इति ॥

अथ मीमांसा ॥ सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—

" वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रगः ।
स वादाङ्गविधिस्थो वा हविर्विध्यन्वयाद्भवेत् ॥
अर्थवादैकनिष्ठोऽसौ मैवमङ्गविधेरपि ।
समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यताम् ॥ " (जैन्या ७·१·७–८) ॥

चातुर्मास्येषु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामकानि चत्वारि पर्वाणि । तत्र वैश्वदेवेऽष्टौ हवींषि विहितानि । "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम्" (तैसं १·८·२) इति। तेषां हविषां ब्राह्मणेऽर्थवाद आम्नातः— "वार्त्रघ्नानि वा एतानि हवीꣳषि" (मैसं १·१०·५) इति। अङ्गविधयोऽपि तत्राऽऽम्नाताः—" त्रेधा संनद्धं बर्हिर्भवति त्रेधा संनद्ध इध्मः" (मैसं १·१०·७), "नव प्रयाजा इज्यन्ते। नवानूयाजाः" (तैब्रा १·६·३) इति। एवं स्थिते वरुणप्रघासेषु[२६] पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि विधाय तदीयं पूर्वोदाहृतं ब्राह्मणमेतेषु पञ्चस्वतिदिशति—" एतद्ब्राह्मणान्येव पञ्च हवीꣳषि, यद्ब्राह्मणानीतराणि" (द्र. तैब्रा १·६·४) इति। तत्रार्थवादमात्रस्यातिदेशो न्याय्यः। तस्य हविर्विधिभिः सह स्तुत्यस्तावकरूपेणान्वयसंभवादङ्गविधिना च तदसंभवादिति चेत्। मैवम्। उपकार्योपकारकभावेन हविषामङ्गानां चान्वयात्। तस्मादर्थवादसहितानामङ्गविधीनामतिदेशः ॥

तत्रैवान्यच्चिन्तितम्—

" श्रुतमेककपालस्य ब्राह्मणस्यातिदेशनम् ।
तत्पूर्ववत्तथैन्द्राग्न एतद्ब्राह्मण इत्यपि ॥ " (जैन्या ७·१·९) ॥

एककपालब्राह्मणं वैश्वदेववरुणप्रघासेषु पठितम्। ऐन्द्राग्नब्राह्मणं वरुणप्रघासेष्वाम्नातम्। एवं स्थिते साकमेधेषु विहितयोरेककपालैन्द्राग्नयोर्ब्राह्मणातिदेश आम्नायते—" एतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण

२६. तं–°प्रघासे ।

एककपालो यद्ब्राह्मण इतरश्चेतरश्च " ( द्र. तैब्रा १·६·७ ) इति । तत्रोभयत्र पूर्वन्यायेनार्थवादविधिसहिताङ्गकाण्डस्य सर्वस्यातिदेशः[27] । पूर्वन्यायस्य विषयप्राप्तये वक्ष्यमाणोदाहरणस्मारणाय वाक्यकथनम्[28] ॥

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" मारुत्याः सार्धमष्टाभिरङ्गैस्तन्त्रं भिदाऽथ वा ।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः ॥ " ( जैन्या ११·२·११ ) ॥

वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि । तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारेऽनुतिष्ठति । इतराणि तु अष्टावध्वर्युरुत्तरे विहारेऽनुतिष्ठति । तेषामष्टानां प्रयोगैक्यात् तन्त्रेणाङ्गान्युभयवादिसंमतानि । तथा तान्येव मारुत्या अपीत्यत्रापि तन्त्रं प्राप्तम् । कुतः ? वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात् । नन्वत्र विहारभेद आम्नातः— " पृथगग्नी[29] प्रणयतः, पृथग्वेदी कुरुतः " इति, सोऽयं पृथगनुष्ठानाभावे व्यर्थः स्यात् । मैवम् । हविरासादनमात्रे तद्भेदोपयोगात् । " अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति । मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् " (द्र. आपश्रौ ८·६·१४,१५) इति तद्विधानात् । तस्मात्तन्त्रमिति प्राप्ते ब्रूमः—देशभेदात् प्रयोगभेदे सत्यङ्गानुष्ठानमपि भिद्यते न च तस्य हविरासादनमात्रार्थता युक्ता । तदासादनस्य [30]दृष्टहोमार्थत्वे सति त्यागेन[30] अदृष्टार्थत्वकल्पनाप्रसङ्गात् न च प्रयोगभेदेनैवाऽऽसादनभेदस्यापि सिद्धौ वचनमनर्थकं स्यादिति वाच्यम् । अव्यवस्थानात् प्रतिप्रयोगप्राप्तौ तद्व्यवस्थार्थत्वात् । तस्माद्भेदेनाङ्गानुष्ठानम् ॥

तत्रैवान्यच्चिन्तितम्—

" कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदवत् ।
पञ्चर्त्विग्वचनान्मैवं द्वयोरुक्त्या व्यवस्थितिः ॥ " ( जैन्या ११·२·१२ ) ॥

तत्र पूर्वोक्तविषये प्रयोगभेदादाघाराद्यङ्गभेद इव होतृब्रह्मादीनां कर्तृणामपि भेद इति चेत् । मैवम् । वाचनिकपञ्चसंख्याविरोधात् । अध्वर्युप्रतिप्रस्थातृहोतृब्रह्माग्नीध्राः पञ्चर्त्विजश्चातुर्मास्येषु विहिताः " चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः " ( द्र. आपश्रौ ८·५·१५ ) इति । यद्याग्नेयाद्यष्टके मारुत्यां च होत्रादिभेदः स्यात्तदा पञ्चसंख्या बाध्येत । ननु पञ्चसंख्यासिद्ध्यर्थमाग्नेयाद्यष्टके प्रतिप्रस्थाता प्राप्नुयात् । मारुत्यां चाध्वर्युः प्राप्त इति चेत् । सत्यम् । प्राप्तावेव तावुभावुभयत्र । व्यवस्था तु वचनाद्भविष्यति । तत्तु[31] वचनं पूर्वत्रोदाहृतम् । तस्मान्नास्ति कर्तृभेदः ॥

तत्रैवान्यच्चिन्तितम्—

" तत्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथ वा ।
तन्त्रमग्न्यैक्यतो मैवं कर्तृभेदानिवारणात् ॥ " ( जैन्या ११·२·१३ ) ॥

तत्रैवाऽऽग्नेयाद्यष्टके मारुत्यां च गार्हपत्ये होतव्येषु पत्नीसंयाजादिषु तन्त्रं युक्तम् । कुतः ? गार्हपत्यैकत्वात् । न हि आहवनीयवत् दक्षिणे विहारे गार्हपत्यः पृथगस्ति । तस्मात्तन्त्रमिति प्राप्ते ब्रूमः— न तावत् पूर्वोक्तः कर्तृभेदो निवारयितुं शक्यते । तथा सत्यध्वर्युणा हुताः पत्नीसंयाजाः प्रतिप्रस्थातृकर्तृकायां मारुत्यां कथमुपकुर्युः ? तस्मादध्वर्युः प्रतिप्रस्थाता च गार्हपत्ये पृथक्पत्नीसंयाजाञ्जुहुयाताम् ।

---

२७. आ.क.तं.ना.पा.हा–सर्वत्रातिदेश. । २८. इ.क.तं.ना.म४.हा–वा कथनं; आ–वा ( बीज ) कथनम् । २९. क.ना.पा.हा–पृथगग्नीन् । ३०–३०. आ–दृष्टहोमार्थत्वे सति तत्परित्यागेन; तं.म४–दृष्टहोमार्थपरित्यागेन; हा–दृष्टहोमार्थ ( ? ) सति त्यागेन । ३१. आ.क.ना.हा–तत्र ।

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

" विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा ।
तन्त्रं द्वयोः स्मृतेः सिद्धेरुत्तमोक्त्या पृथग्भवेत् ॥ " ( जैन्या १२·१·१३ ) ॥

वरुणप्रघासेष्वध्वर्युप्रतिप्रस्थात्रोर्विहारभेदेऽपि मन्त्रेष्वेकेनैव पठ्यमानेषु तयोरर्थस्मृतिसिद्धौ तन्त्रमिति इति चेत् । न । 'निर्वपामि' इत्युत्तमपुरुषार्थस्य पाठमन्तरेण स्मृत्यभावात् । तस्मादुभयोः पृथक् पाठः ॥

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

" निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते ।
नीरोत्सेकः कर्मणो वा विधिः सौमिककर्मणः[32] ॥
यो दर्शपूर्णमासाभ्यां वारुण्यां चोदनोद्गतः[33] ।
व्युत्सेकोऽनूद्यतामेष मैवं कर्मणि सौमिके ॥
मुख्योऽवभृथशब्दोऽतस्तत्सादृश्यविवक्षया ।
धर्माननतिदिशन् कर्म विधत्ते धर्मसंयुतम् ॥ " ( जैन्या ७·३·९–११ ) ॥

वरुणप्रघासेषु श्रूयते—" वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति " ( आपश्रौ ८·७१४ ) इति । निष्कास आमिक्षाया लेपः । " प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् " ( तैसं १·६·५) इत्यादिभिर्मन्त्रैः दर्शपूर्णमासयोर्दिक्षु सर्वास्वापो विविधमुत्सिच्यन्ते । सोऽयं व्युत्सेको [34]वारुण्यामिक्षायामेव चोदकप्राप्तः[34] अनूद्यते । अस्ति हि व्युत्सेकस्याऽप्यवभृथत्वम् । " एष वै दर्शपूर्णमासयोरवभृथः " ( तैसं १·७·५ ) इति श्रुतत्वादिति प्राप्ते ब्रूमः—सौमिके कर्मण्यवभृथशब्दो मुख्यः । तस्य शब्दस्योद्भिदादिवद्विधेयक्रियासामानाधिकरण्येन नामधेयत्वात् तत्रैव वैदिकप्रयोगबाहुल्याच्च । [35]व्युत्सेके त्वप्संबन्धात्[35] उपचर्यते । न हि सौमिककर्मणीवापां व्युत्सेकेऽवभृथभावनामंशत्रयवर्तीं पश्यामः, येन तत्र मुख्यत्वमाशङ्क्येत । तस्मात् [36]सौमिककर्मवाचिनमवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायो मासाग्निहोत्रन्यायेन सौमिकधर्माननतिदिशन् कर्मान्तरं तद्धर्मसंयुक्तं विधत्ते । न च विपर्ययेणात्रैव मुख्योऽवभृथोऽस्त्विति शङ्कनीयम् । अपेक्षितस्य कर्मकलापस्यात्राभावात् । तस्मात् सौमिकधर्मोपेतकर्मान्तरविधिः ॥

तत्रैवान्यच्चिन्तितम्—

" तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकावुत ।
प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः ॥

---

३२. तं. म४–°क कर्मिणः; क.ना.पा.हा–°धार्मणः । ३३. तं.म४–चोदकाग्रतः । ३४–३४. तं· म४–°मिक्षायागे चोदप्राप्ते । ३५–३५ तं– व्युत्सेकेन त्वप्°; ' म४–व्युत्सेकत्वसंबन्धा;° ' ना.हा–व्युत्सेकेन अप्संबन्धा° । ३६. तं.म४–सौमिके कर्म° ।

तुषनिष्कासयोरत्र साक्षात् क्लृप्तोपदेशतः[37]।

अतिदेशप्रापितस्य पुरोडाशस्य बाधनम्[38] ॥ ” ( जैन्या ७·३·१२–१३ ) ॥

तत्र पूर्वोक्ते कर्मान्तरे धर्मातिदेशकेनावभृथशब्देन पुरोडाशोऽतिदिश्यते । अतिदेशश्चोपदेशात् दुर्बलः । तस्मात्तुषनिष्कासाभ्यां पुरोडाशो बाध्यते ॥

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

“ निष्कासावभृथे विप्रकर्षोऽथ प्रतिपादनम् ।

उतार्थकर्म पशुवदाद्योऽवभृथशब्दतः ॥

कर्मान्तरं तदाऽपि स्यात् प्रतिपत्तिः प्रयाजवत् ।

प्राधान्यायार्थकर्म स्यात्तच्चावभृथधर्मकम् ॥ ” ( जैन्या ११·२·१९-२० ) ॥

चातुर्मास्यगतेषु [ वरुणप्रघासेषु ] वारुणीमामिक्षां प्रकृत्येदमाम्नायते—“ वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति ” ( आपश्रौ ८·७·१४ ) इति । अत्रायं प्रयोगप्रकारः— वरुणप्रघासेषु नव हवींषि । तेष्वष्टमं हविर्वारुण्यामिक्षा । नवमं हविः काय एककपालः । वारुण्यामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति[39] । तत आमिक्षासंयुक्तं मेषं[40] सर्वमवदाय हुत्वा तत एककपालेन प्रचर्य भाण्डलिप्तेन[41] वारुण्यामिक्षाया निष्कासेन [42]यवतुषैश्चावभृथमनुतिष्ठन्तीति । तत्र संशयः । किं वारुण्यामिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपालप्रचारादूर्ध्वं निष्कासरूपेणांशान्तरेण तुषैश्च प्रचरितव्यमित्येवं प्रचारस्य विप्रकर्षः, उत कर्मान्तरम् । तत्रापि किं प्रतिपत्तिकर्म, आहोस्वित् अर्थकर्म इति । तत्र विप्रकर्ष इति तावत् प्राप्तम् । कुतः ? पशौ तथा दृष्टत्वात् । प्रातःसवने वपया प्रचर्य तृतीयसवने हृदयाद्यङ्गैः प्रचार इति सवनीयपशौ यथा प्रचारविप्रकर्षस्तद्वदत्रापीत्याद्यः पक्षः । तथा सत्यवभृथशब्दवैयर्थ्यप्रसङ्गात् कर्मान्तरमिति पक्षान्तरम् । तदाऽप्यामिक्षाहविःशेषस्य निष्कासस्यान्यस्मिन् कर्मणि हविष्ट्वायोगात् प्रयाजशेषन्यायेनेदं[43] प्रतिपत्तिः स्यात् । यथा ‘ प्रयाजशेषेण हवींष्यभिघारयति ’ ( द्र. तैसं २·६·१ ) इत्यत्र तच्छेषं संस्कर्तुमभिघारणमेवमत्रापि निष्कासः संस्क्रियत इति प्राप्ते ब्रूमः— तस्मिन् पक्षे निष्कासस्यैव संस्कार्यद्रव्यत्वेन [44]प्राधान्यान्निष्कासमिति विभक्तिव्यत्ययः स्यात् । अतोऽवभृथस्य प्राधान्यात् अर्थकर्मत्वमेव द्रष्टव्यम् । यदि चातुर्मास्येषु [45]नाऽवभृथस्तदा तद्धर्मातिदेशाय तन्नामनिर्देशोऽस्तु । [46]तस्य तदीयद्रव्यशेषस्यापि[46] कर्मान्तरे विनियोगो वाचनिकः । तस्मादर्थकर्म ॥

**इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥**

---

३७. तं–कल्पोप° । ३८. क–बाधना; तं–बाधने; हा–बाधनाम् । ३९. इ.उ.क.पा.हा–°दध्यात् । ४०. आ.क.ना.हा–‘ मेषम् ’ नास्ति । ४१. म४–अतिरिक्तेन ४२. आ.क–तुषैश्चा° । ४३. तं.म४–न्यायेनेयं । ४४. तं.म४–प्राधान्याय । ४५ तं.म४–नास्त्यवभृथः । ४६–४६. तं.म४–अन्यदीयद्रव्य° ।

**अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुं**

अग्नये । अनीकवत इत्यनीक–वते । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपति । साकम् । सूर्येण । उद्यतेत्युत्–यता । मरुद्भ्य इति मरुत्–भ्यः । सांतपनेभ्य इति साम्–तपनेभ्यः । मध्यंदिने । चरुम् । मरुद्भ्य इति मरुत्–भ्यः । गृहमेधिभ्य इति गृहमेधि–भ्यः । सर्वासाम् । दुग्धे । सायम् । चरुम् ।

अथ साकमेधहर्वींषि विधीयन्ते । तत्र प्रथमेऽहनि यानि भवन्ति तानि विदधाति— 'अग्नयेऽनीकवते' इति ॥ "देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । ममेयमनीकवती तनूः" (तैब्रा १.६.६) इत्यादि ब्राह्मणम् । "असौ वा आदित्योऽग्निरनीकवान् । तस्य रश्मयोऽनीकानि" (तैब्रा १.६.६) यदा सूर्यश्चोदयं करोति, अध्वर्युश्च पुरोडाशं निर्वपति; तदानीं सूर्येण उद्यता साकं निर्वपति तदा सूर्योदयकाले निर्वपतीत्यर्थः । "राजसूय°" (पा ३.१.११४) इत्यादौ सूर्यशब्दो निपातितः । "शतुरनुमः°" (पा ६.१.१७३) इत्युद्यच्छब्दात् तृतीयाया उदात्तत्वम् । अथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यः चरुं निर्वपति । अह्नो मध्यं मध्यंदिनम् । "मध्य मध्यं दिनण्[1] चास्मात्" (पा ४.३.६० वा ३) इति दिनण्प्रत्ययः[2] । सम्यक् समन्ताच्च शोषणं संतपनं, तत्संबन्धिनः सांतपनाः सांतपनसमर्थाः शत्रूणाम् । "तेऽसुराः पराजिता यन्तः" (तैब्रा १.६.६) इत्यादि ब्राह्मणम् । अथ सायम् अस्तकाले मरुद्भ्यः गृहमेधिभ्यः गृहमेधवद्भ्यः सर्वासां गवां यजमानसंबन्धिनीनां दुग्धे चरुं निर्वपति । "ते देवाः श्वोविजयिनः" (तैब्रा १.६.६) इत्यादि ब्राह्मणम् ॥

तृतीये वरुणप्रघासाख्यं द्वितीयं चातुर्मास्यपर्वोक्तम् । चतुर्थपञ्चमषष्ठेषु साकमेधाख्यं तृतीयं पर्वोच्यते । तच्च पर्व दिनद्वयेऽनुष्ठेयम् । तदाहाऽऽपस्तम्बः—"ततश्चतुर्षु मासेषु पूर्वस्मिन् [1]पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजते" (आपश्रौ ८.९.१) इति ॥

**अग्नय इति** ॥ तत्र प्रथमदिने कर्तव्यानि त्रीणि हवींषि विधत्ते—'अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्' इति ॥ अनीकवते सैन्यवते । उद्यता सूर्येण साकम् इत्युदयकालविधिः । सम्यक् तपनं संतपनं तत्संबन्धिनः सांतपना अनिष्टविनाशिन इत्यर्थः । मेधो यज्ञः । गृहं च मेधश्च तदुभयवन्तो गृहमेधिन उभयपालका इत्यर्थः । सर्वासां यजमानस्य यावत्यो गावः सन्ति तावतीनाम् । विहितास्विष्टिषु प्रथमेष्टिदेवतागुणं[2] प्रशंसति—"देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । ममेयमनीकवती तनूः । तां प्रीणीत । अथासुरानभिभविष्यथेति । ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन् । सोऽग्नि-

१. मै–दिनञ् । २. मै–दिनञ्प्रत्ययः; त्रि–नप्रत्ययः ।

१. तं–कर्मण्यु° । २. तं–प्रथमेष्टेर्देवताया गुणं; म४–प्रथमेष्टेर्देवतागुणम् ।

रनीकवान्त्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकान्यजनयत । ततो देवा अभवन् । पराऽसुराः । यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति । अग्निमेवानीकवन्तꣳ स्वेन भागधेयेन प्रीणाति । सोऽग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकानि जनयते '' ( तैब्रा १·६·६ ) इति । चतसृष्वपि दिक्ष्वसुरानवरोद्धुं चतुर्विधानि सैन्यानि ॥ सूर्योदयकालं प्रशंसति—'' असौ वा आदित्योऽग्निरनीकवान् । तस्य रश्मयोऽनीकानि । साकꣳ सूर्येणोद्यता निर्वपति । साक्षादेवास्मा अनीकानि जनयति '' ( तैब्रा १·६·६ ) इति । उष्णत्वादादित्यस्याग्नित्वः । उत्साहोपेतयोद्ध्रवत् सर्वतस्त्वरया प्रसराद्रश्मीनामनीकत्वम् ॥ द्वितीयाया इष्टेर्देवताया गुणं प्रशंसति—'' तेऽसुराः पराजिता यन्तः । द्यावापृथिवी उपाश्रयन् । ते देवा मरुद्भ्यः सांतपनेभ्यश्चरुं निरवपन् । तान् द्यावापृथिवीभ्यामेवोभयतः समतपन् । यन्मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति । द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यान्त्संतपति '' ( तैब्रा १·६·६ ) इति । तानसुरान् द्यावापृथिवीभ्यामेव कृत्स्नयोरपि द्यावापृथिव्योरुभयतोऽसुराणामधस्तादुपरिष्टाच्च समतपन् प्रहाराद्युपद्रवेण संतापितवन्तः ॥ कालं प्रशंसति—'' मध्यंदिने निर्वपति । तर्हि हि तेक्ष्णिष्ठं तपति '' ( तैब्रा १·६·६ ) इति । तर्हि मध्याह्नकाले तेक्ष्णिष्ठमतिशयेन तीक्ष्णं यथा भवति तथा सूर्यस्तपति, हि प्रसिद्धमेतत् ॥ चरुं प्रशंसति—'' चरुर्भवति । सर्वत एवैनान्त्संतपति '' ( तैब्रा १·६·६ ) इति । चरुपाकभाण्डस्य[3] सर्वतस्तप्यमानत्वाच्छत्रूणामपि सर्वतः संतापः ॥ तृतीयेष्टेर्देवताविशेषणं प्रशंसति—'' ते देवाः श्वोविजयिनः सन्तः । सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन् । आशिता एवाद्योपवसाम । कस्य वा हेदम् । कस्य वा श्वो भवितेति । स शृतोऽभवत् । तस्याहुतस्य नाऽऽश्नन् । न हि देवा अहुतस्याश्नन्ति । तेऽब्रुवन् । कस्मा इमꣳ होष्याम इति । मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन् । तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः । ततो देवा अभवन् । पराऽसुराः । यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति '' ( तैब्रा १·६·६ ) इति । ते देवा अस्मिन् दिने प्रथमेष्ट्या सैन्यानि संपाद्य द्वितीयेष्ट्या विरोधिनोऽसुरान् सर्वतः संतप्य पुनः परेद्युरपि जेष्याम इत्यभिप्रेत्य गृहमेधीयं निरुप्येत्थं विचारितवन्तः । इदं हविरद्य कस्य वा भवति कस्य वा श्वो भविष्यतीति न ज्ञायते । तस्माद्वयं सह भुक्तवन्त एवाग्निसमीपे वसामेति । एतावति विचारकाले स चरुः पक्वोऽभूत् । तदानीं देवा अहुतत्वात् तं चरुं नैवाशितवन्तः । यस्माद्देवाः क्वाप्यहुतं नाश्नन्ति तस्मायुक्तमेवैतत् । ततस्ते देवाः परस्परं विचारितवन्तः । किमिति ? कस्मै देवायेमं चरुं होष्यामि इति । ततो निश्चित्य गृहमेधिभ्यो हुत्वा विजयं प्राप्ता असुराश्च पराभूताः ॥ अस्मिन् कर्मणि ' आज्यभागौ यजति ' इत्यादिना कानिचिदङ्गानि विधास्यन्ते । तत्र यावदुक्ताङ्गोपेतमपूर्वमिदं कर्म न तु दर्शपूर्णमासविकृतिरिति जैमिनिर्विचारितवान् ततोऽर्थप्राप्तः सामिधेन्याद्यभावः । तमिमं विस्पष्टयितुमनुवदति—'' यद्वै यज्ञस्य पाकत्रा क्रियते । पशव्यं तत् । पाकत्रा वा एतत् क्रियते । यन्नेध्माबर्हिर्भवति । न सामिधेनीरन्वाह । न प्रयाजा इज्यन्ते । नानूयाजाः । य एवं वेद । पशुमान् भवति '' ( तैब्रा १·६·६ ) इति । यज्ञस्य संबन्धि यदनुष्ठानं पाकत्रा पाकेषु पाकयज्ञवदित्यर्थः । तस्य पशव्यत्वं युक्तम् । '' पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्ते '' ( तैसं १·७·१ ) इति श्रुतत्वात् । यस्मादत्रेध्माबर्हिरादयो न सन्ति तस्मादेतत्कर्म पाकयज्ञवदेव क्रियते ॥ प्राच्यमङ्गं विधत्ते— '' आज्यभागौ यजति । यज्ञस्यैव चक्षुषी नान्तरेति '' ( तैब्रा १·६·६ ) इति ॥ यागवेलायामुद्देश्यां देवतां प्रशंसति—'' मरुतो गृहमेधिनो यजति । भागधेयेनैवैनान्त्समर्धयति '' ( तैब्रा १·६·६ ) इति । उदीच्यमङ्गं विधत्ते—'' अग्निꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै '' ( तैब्रा १·६·६ ) इति ॥ अङ्गान्तरं विधत्ते—'' इडान्तो भवति । पशवो वा इडा । पशुष्वेवोपरिष्टात् प्रतितिष्ठति '' ( तैब्रा १·६·६ ) इति । अर्थसिद्धं चतुर्धाकरणाद्युदीच्याङ्गान्तराभावं

३. तं.म४—चरुपाकाय भाण्डस्य ।

पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत ।
वस्नेव वि क्रीणावहा इषमूर्जं᳚ शतक्रतो ॥

पूर्णा । दर्वि । परेति । पत । सुपूर्णेति सु–पूर्णा । पुनः । एति । पत ।
वस्ना । इव । वीति । क्रीणावहै । इषम् । ऊर्जम् । शतक्रतो इति शत–क्रतो ॥

---

अभ्युष्टायां रजन्यां पूर्णदर्व्येण चरन्ति शरनिष्कासस्य दर्वीं पूरयित्वा गार्हपत्ये जुहोति । तत्र पुरोनुवाक्या—‘ पूर्णा ’ इत्यनुष्टुप् ॥ हे $^v$दर्वि, $^v$पूर्णा शरनिष्कासस्य पूरिता । “ वा दान्तशान्त° ” ( पा ७·२·२७ ) इति ण्यन्तस्य निपात्यते । ईदृशी $^v$परा $^v$पत इन्द्रं प्रति गच्छ ।

---

द्योतयितुमन्तशब्दः ॥ तदेवमनुब्राह्मणगतेनैकेनानुवाकेन पूर्वदिनेऽनुष्ठेया मुख्यब्राह्मणविहितास्तिस्र इष्टयो व्याख्याताः ।

अनुवाकान्तरेण द्वितीयदिने कर्तव्यत्वेन विहिता इष्टयो व्याख्यातव्याः । तत्राऽऽदौ तावत् गृहमेधीयशेषभूतं किंचिदङ्गं विधातुं प्रस्तौति—“ यत्पत्नी गृहमेधीयस्याश्नीयात् । गृहमेध्येव स्यात् । वि त्वस्य यज्ञ ऋध्येत । यन्नाश्नीयात् । अगृहमेधी स्यात् । नास्य यज्ञो व्यृध्येत ” ( तैब्रा १·६·७ ) इति । यदि पत्नी गृहमेधीयस्य चरोर्भागं भुञ्जीत तदा यजमानो गृहेण यज्ञेन चोपेतो भवति । किं त्वस्मिन् पक्षे यजमानस्य यज्ञो व्यृद्धो भवेत् । अभोजनपक्षे तु व्यृद्धत्वदोषो न भवति । किं तु गृहमेधित्वाभावः ॥ विधत्ते—“ प्रतिवेशं पचेयुः । तस्याश्नीयात् । गृहमेध्येव भवति । नास्य यज्ञो व्यृध्यते ” ( तैब्रा १·६·७ ) इति । प्रातिस्विकत्वेन पत्नीं विशतीति प्रतिवेशः पत्न्यर्थ ओदनस्तं दक्षिणाग्नौ पक्तारः पचेयुः । तथा चाऽऽपस्तम्बः—“ दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति ” ( आपश्रौ ८·१०·१० ) इति । पत्नी तमोदनमश्नीयात्, ततो नोक्तदोषद्वयम् । अभोजनाभावाद्गृहमेधीयभोजनाभावाच्च ॥ भोजनादीन् विधातुं प्रस्तौति – “ ते देवा गृहमेधीयेनेष्ट्वा । आशिता अभवन् । आञ्जताभ्यञ्जत । अनुवत्सानवासयन् । तेभ्योऽसुराः क्षुधं प्राहिण्वन् । सा देवेषु लोकमवित्त्वा । असुरान् पुनरगच्छत् ” ( तैब्रा १·६·७ ) इति । आशिता भुक्तवन्तः । आञ्जत नेत्रयोरञ्जनं प्रक्षिप्तवन्तः । अभ्यञ्जताभ्यङ्गं कृतवन्तः । धेनूरनु वत्सानवासयन् स्तनपानार्थमवासृजन् । तदानीमसुरा देवानां समीपे क्षुधं प्रेरितवन्तः । सा च क्षुध् तेषु तृप्तेषु देवेषु स्थानमलब्ध्वा पुनरप्यसुरानेव प्राप्नोत् ॥ विधत्ते “ गृहमेधीयेनेष्ट्वा । आशिता भवन्ति । आञ्जतेऽभ्यञ्जते । अनु वत्सान् वासयन्ति । भ्रातृव्यायैव तद्यजमानः क्षुधं प्रहिणोति ” ( तैब्रा १·६·७ ) इति ॥ तदेतदभिप्रेत्य पूर्वमाशिता एवाद्योपवसामेत्यादिर्देवविचार उदाहृतः[४] । अत्र गृहमेधीयसंनिधौ द्वौ मन्त्रावाम्नातौ । तयोर्विनियोगमापस्तम्ब आह—“ शरनिष्कासस्य दर्वीं पूरयित्वा वृषभमाहूय तस्य रवते पूर्णा दर्वि परा पतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयात् । यद्वृषभो न रुयाद्ब्रह्मा ब्रूयाज्जुहुधीति ” ( आपश्रौ ८·११·१९–२० ) इति । पच्यमाने चरौ क्षीरमण्डवद्घनीभूतो योंऽश उपरि तिष्ठति सोऽयं शरनिष्कासः । तस्य रवते वृषभस्य शब्दे निष्पन्ने सति ॥

पूर्णेति ॥ प्रथममन्त्रपाठस्तु—‘ पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत । वस्नेव वि क्रीणावहा इषमूर्जं᳚ शतक्रतो ’ इति । हे $^v$दर्वि, त्वं शरनिष्कासेन $^v$पूर्णा सती $^v$परा $^v$पत इन्द्रं प्रति गच्छ । त्वत्प्रसादाद्धनेन तज्जन्यबलेन $^v$सुपूर्णा सती $^v$पुनः अस्मान् प्रत्यागच्छ । हे शतक्रतो, आवां $^v$वस्ना इव $^v$वि

---

४. आ.क.ना.पा.ह्रा–उपाहृतः; म४–पुरा कृतः ।

देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारमिन्नि मे हरा निहारं (१) नि हरामि ते ॥

देहि । मे । ददामि । ते । नीति । मे । धेहि । नीति । ते । दधे ॥
निहारमिति नि—हारम् । इत् । नीति । मे । हर । निहारमिति नि—हारम् (१) । नीति । हरामि । ते ॥

ततः सुपूर्णा सुष्ठु धनस्य पूर्णा पुनः अस्मान् प्रति आ पत आगच्छ । एवं वस्ना इव वस्नेन मूल्येनेव । "सुपां सुलुक्°" ( पा ७·१·३९ ) इत्याकारः । क्रीणावहै इन्द्रश्चाहं च परस्परतः वणिग्वत् विनिमयं करवावहै । किं विक्रीणावहा इत्युच्यते—इषम् ऊर्जम् अन्नं रसादिकं धनादिकं च; अतोऽत्रावयोस्त्वं गतागतकारिणी साधनभावमाचरेति । तदेवाह—हे शतक्रतो, बहुविधकर्मकरणकुशले गतागतसमर्थे ॥

अथ याज्या—'देहि' इत्यनुष्टुप् ॥ देहि मे मह्यम् अभिमतं धनम्, अहमपि ते तुभ्यं ददामि । नि धेहि स्थापय मे मदर्थम्, अहमपि ते त्वदर्थं नि दधे स्थापयामि । तथा निहारम् इत् निहारमेव निर्हृत्य निर्हृत्यैव मे मम नि हर, अहमपि ते निहारं निर्हृत्य निर्हृत्य निहरामि । नियमेन नितरां निर्हृत्य वा समुदायादुद्धरणं निहरणम् । "आभीक्ष्ण्ये णमुल्°" ( पा ३·४·२२ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । लित्स्वरः ( पा ६·१·१९३ ) । एवमुपकारप्रत्युपकारितया आवयोर्वृत्तिरस्त्विति लोकवृत्तान्तनिदर्शनम् ॥

**क्रीणावहै । यथा लोके कश्चित् स्वकीयं धनं दत्त्वा तण्डुलादिकं क्रीणाति तद्वदहमिन्द्राय तुभ्यं शरनिष्कासं दत्त्वा त्वत्तः इषम् ऊर्जं च क्रीणामि । तदिदमुच्यते—वस्नेव वसुनेव धनेनेव विक्रीणावहै इति ॥**

**देहीति ॥ द्वितीयमन्त्रपाठस्तु—'देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारमिन्नि मे हरा निहारं नि हरामि ते' इति ॥ हे इन्द्र, मे यदपेक्षितं तत त्वं देहि । तव यदपेक्षितं तदहं ददामि । दत्त्वा च त्वं मम समीपे नि धेहि अवस्थापय । "तव समीपेऽहमवस्थापयामि" । तदुभयं सकृदेव न भवति किं तु निहारम् इत् पुनःपुनर्निर्हृत्यैव समानीयैव मे समीपे नि हर नितरां स्थापय । अहमपि पुनः पुनर्निर्हृत्य ते समीपे स्थापयामि ॥ यथोक्तं निष्कासहोमं प्रस्तौति—"ते देवा गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं न्यदधुः । अस्मानेव श्व इन्द्रो निहितभाग उपावर्तितेति । तानिन्द्रो निहितभाग उपावर्तत" ( तैब्रा १·६·७ ) इति । उपावर्तिता समीपमागमिष्यति । उपावर्तत 'समीपमागच्छत् ॥ विधत्ते—"गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं निदध्यात् । इन्द्र एवैनं निहितभाग उपावर्तते" ( तैब्रा १·६·७ ) इति । होमाय प्राप्तमाहवनीयं वारयितुं विधत्ते—"गार्हपत्ये जुहोति । भागधेयेनैवैनꣳ समर्धयति" ( तैब्रा १·६·७ ) इति । यागकाले ध्वनिं कर्तुमृषभस्याऽऽह्वानं विधत्ते—"ऋषभमाह्वयति । वषट्कार एवास्य सः । अथो इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते" ( तैब्रा १·६·७ ) इति ॥**

५-५. म४—अहमपि तव समीपे निदधे स्थापयामि । ६. इ.उ.ना.पा.हा—'समीपम्' नास्ति ।

**मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यताऽऽग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालम् ॥ ४ ॥**

[ हरा निहारं त्रिꣳशच्च ]

मरुद्भ्य इति मरुत्—भ्यः। क्रीडिभ्य इति क्रीडि—भ्यः। पुरोडाशम्। सप्तकपालमिति सप्त—कपालम्। निरिति। वपति। साकम्। सूर्येण। उद्यतेत्युत्—यता। आग्नेयम्। अष्टाकपालमित्यष्टा—कपालम्। निरिति। वपति। सौम्यम्। चरुम्। सावित्रम्। द्वादशकपालमिति द्वादश—कपालम्। सारस्वतम्। चरुम्। पौष्णम्। चरुम्। ऐन्द्राग्नमित्यैन्द्र—अग्नम्। एकादशकपालमित्येकादश—कपालम्। ऐन्द्रम्। चरुम्। वैश्वकर्मणमिति वैश्व—कर्मणम्। एककपालमित्येक—कपालम् ॥ ४ ॥

**[ मैसं १·१०·१-२; कासं ९·५; कपिसं ८·८; वासं ३·४९-५० ]**

अथ द्वितीयेऽह्नि ^v^साकं ^v^सूर्येण ^v^उद्यता ^v^मरुद्भ्यः ^v^क्रीडिभ्यः ^v^पुरोडाशं ^v^सप्तकपालं ^v^निर्वपति ॥ क्रीडन्तीति क्रीडिनः। [३]ग्रह्यादित्वाण्णिनिः (पा ३·१·१३४)। "त एनमत्यक्रीडन्। तत् क्रीडिनां क्रीडित्वम्" (तैब्रा १·६·७) इति ब्राह्मणम् ॥

अथ महाहविःसंबन्धीन्यष्टौ हवींषि विदधाति—'आग्नेयमष्टाकपालम्' इत्यादि ॥ तत्र पौष्णान्तानि पञ्च संचराणि प्रागेवाम्नातान्यपि पुनः पठित्वा दर्शयति। ऐन्द्राग्नमपि वरुणप्रघासेषु षष्ठतयाऽऽम्नातमेव पुनः पठति। ब्राह्मणं च भवति "एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। एतद्ब्राह्मण ऐन्द्राग्नः" (तैब्रा १·६·७) इति। "अथैष ऐन्द्रश्चरुर्भवति" (तैब्रा १·६·७)। ऐन्द्रस्यापूर्वं विधानम्। "उद्धारं वा एतम्" (तैब्रा १·६·७) इत्यादि ब्राह्मणम्। वैश्वकर्मणस्यैककपालस्य चापूर्वं विधानम् ॥

इत्यष्टमे चतुर्थोऽनुवाकः ॥

**मरुद्भ्य इति ॥** द्वितीयदिनेऽनुष्ठेयानि नव हवींषि विधत्ते—"मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साꣳ सूर्येणोद्यताऽऽग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालम्" इति ॥ आद्यस्य हविष उत्तरहविरष्टकस्य च कालभेदात् प्रयोगभेदो द्रष्टव्यः। क्रीडैषामस्तीति क्रीडिनस्तदेतत् क्रीडित्वं विशेषणम् ॥ तस्य हविषः पाठप्राप्तं प्राथम्यं प्रशंसति—"इन्द्रो वृत्रꣳ हत्वा। परां परावतमगच्छत्। अपाराधमिति मन्यमानः। सोऽब्रवीत्। क इदं वेदिष्यतीति। तेऽब्रुवन् मरुतो वरं वृणामहै। अथ वयं वेदाम। अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता इति। त एनमध्यक्रीडन्। तत्क्रीडिनां क्रीडित्वम्। यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हविर्निरुप्यते विजित्यै" (तैब्रा १·६·७) इति। परां परावतम्

३. तं.ति.त्रि-ग्रहादित्वात्।

अत्यन्तदूरम् । अपाराधं द्रोहमकार्षम् । भीत्या पलायमानः स इन्द्रो मरुतां समीपे किंचिदब्रवीत्–वृत्रो मृतो न वेतीदं समीपे गत्वा को वेदिष्यतीति । ते च मरुतो वरे दत्ते वेदिष्याम इत्यब्रुवन् । इतरेभ्योऽग्न्यादिभ्यः प्रथमो निर्वापो वरः । ततस्ते मरुत एवं भूमौ पतितं वृत्रमधिरुह्य बहुविधेन नृत्येनाक्रीडन् । क्रीडित्वा च मृतोऽयमिति ज्ञातवन्तः । तस्मादेतेषां क्रीडित्वं विशेषणं संपन्नम् ।। निर्वापकालं प्रशंसति– “ साकꣳ सूर्येणोद्यता निर्वपति । एतस्मिन् वै लोक इन्द्रो वृत्रमहन्त्समृद्ध्यै ” ( तैब्रा १.६.७ ) इति । एतस्मिन्नेव लोके सूर्योदयेनावलोक्यमानभूप्रदेशे[7] ।। वैश्वदेवपर्वण्युक्तमाग्नेयादिपञ्चकप्रशंसकं वरुणप्रघासपर्वण्युक्तमैन्द्राग्नप्रशंसकं च ब्राह्मणमत्रातिदिशति– “एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । एतद्ब्राह्मण ऐन्द्राग्नः ” ( तैब्रा १.६.७ ) इति ।। चरोरैन्द्रत्वं प्रशंसति–“अथैष ऐन्द्रश्चरुर्भवति । उद्धारं वा एतमिन्द्र उदहरत । वृत्रꣳ हत्वा । अन्यासु देवतास्वधि । यदेष ऐन्द्रश्चरुर्भवति । उद्धारमेव तं यजमान उद्धरते । अन्यासु प्रजास्वधि ” ( तैब्रा १.६.७ ) इति । अन्यास्वग्न्यादिदेवतास्वधिकोऽयमित्येतमुद्धारमुत्कर्षाभिमानमुदहरतोत्पादितवान् ॥ विश्वकर्मरूपामन्त्यहविषो देवतां प्रशंसति—“ वैश्वकर्मण एककपालो भवति । विश्वान्येव तेन कर्माणि यजमानोऽवरुन्द्धे ” ( तैब्रा १.६.७ ) इति ॥

अत्र विनियोगसंग्रहः—

“ पूर्णेत्यनूच्य देहीति याज्यामध्वर्युरीरयेत् ” ।। १ ॥ ( इति ) ।

अथ मीमांसा ॥ पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

“ साकमेधेष्टयस्तिस्रो द्व्यहे स्युः सद्य एव वा ।
प्रातरादेर्द्वयोरह्नोः सत्त्वात् प्रकृतिवद्द्व्यहे ।।
साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः ।
श्रौतं सद्यस्त्वमन्यत्तु चोदकात्तेन दुर्बलम् ॥ ” ( जैन्या ५.१.२२-२३ ) ॥

चातुर्मास्येषु साकमेधनामके तृतीये पर्वणि श्रूयते—“ अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् ” ( तैसं १.८.४ ) इति । ता एतास्तिस्र इष्टयो द्व्यहकालीनाः, यथा प्रकृतौ पर्वण्यन्वाधानादिकं प्रतिपदीष्टिरिति द्व्यहकालीनत्वं तद्वत् । ननु प्रातर्मध्यंदिनसायंशब्दैरेकस्मिन्नेवाह्नि त्रयः कालाः तिसृणामिष्टीनां विहिताः । तन्न । द्वयोरप्यह्नोः [8]प्रातरादिकालसद्भावात् । पूर्वेद्युः[8] प्रातरादिकालेषु स्वकीयेषु तासामुपक्रमः । परेद्युः प्रातरादिषु ताः समापनीयाः । ततो द्व्यहकालीनतेति प्राप्ते ब्रूमः—तत्राऽग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपतीति साङ्गं प्रधानं प्रातःकालीनतया विधीयते । प्रातःशब्दश्च स्वत एकमेव प्रातःकालमभिधाय पर्यवस्यति । प्रातरग्निहोत्रमित्यादौ तद्दर्शनात् । तस्मात् साङ्गस्य प्रधानस्यैकस्मिन्नेव प्रातःकाले विधानात् सद्यस्कालीनत्वं श्रौतं; चोदकेन [9]तु अन्वाधानाद्यङ्गं पूर्वेद्युः प्रातः, प्रधानं परेद्युः[9] प्रातः कल्प्यते । उपदेशश्चोदकाद्बलीयान् । तस्मादेकाहकालीना इष्टयः[10] ।

सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—

“ किं वैश्वदेविकादेककपालादतिदेशनम् ।
साकमेधेषु वरुणप्रघासस्थादुताग्रिमः ॥
प्रकृतावर्थबाहुल्यादन्तिमः संनिधानतः ।
ऐन्द्राग्नसाहचर्याच्च सार्थत्वमधिकत्वतः ॥ ” ( जैन्या ७.१.१०--११ ) ॥

वैश्वदेवे द्यावापृथिव्य एककपालो वरुणप्रघासेषु काय एककपालस्तयोः पृथग्ब्राह्मणमाम्नातम् । साकमेधेषु वैश्वकर्मण एककपालस्तस्मिन् वैश्वदेविकैककपालब्राह्मणमतिदेष्टव्यम् । कुतः ? प्रकृतित्वेन तस्मि-

७. इ.उ.पा–‘मानप्रदेशे; म४–मान एव भूप्रदेशे । ८-८. हा–‘प्रातरादि...पूर्वेद्युः’ नास्ति । ९-९. आ.ना.हा–त्वन्वाधानाद्यङ्गं पूर्वेद्युः; तं-तु आधानाद्यङ्गं पूर्वेद्युःप्रातः प्रधानं परेद्युः । १०. आ.क–इष्टयो द्रष्टव्याः ।

ऽपदिश्यमानधर्मबाहुल्यात् । वारुणप्रघासिकस्य तद्विकृतित्वादल्पा एव धर्मविशेषा उपदिष्टाः शमीमय्यो हिरण्यमय्यो वा स्रुचो भवन्तीत्यादयः[११] । तत्र बह्वनुग्रहो न्याय्य इति प्राप्ते ब्रूमः—वारुणप्रघासिकब्राह्मणस्य प्रत्यासन्नत्वात्तस्यैवातिदेशो युक्तः । ऐन्द्राग्नब्राह्मणं तत्रत्यमेवातिदिश्यते । वैश्वदेवे तदभावात् । तत्साहचर्यादिदमपि तत्रत्यमेव । ननु प्रकृतिभूतात् वैश्वदेविकैककपालाद्वारुणप्रघासिकवत् साकमेधीयेऽपि चोदकेन धर्मातिदेशसिद्धौ ब्राह्मणातिदेशकं वाक्यमिदं व्यर्थम् इति चेत् । न । हिरण्मयत्वाद्यधिकधर्मातिदेशायापेक्षितत्वात् । तस्माद्वारुणप्रघासिकैककपालब्राह्मणस्यैवातिदेशः[१२] ॥

दशमाध्यायस्य सप्तमपादे चिन्तितम्—

" गृहमेधीयके त्वाज्यभागावित्यनुवादगीः ।
स चोदकविधिर्वाऽर्थवादो वाऽधिककर्म वा ॥
परिसंख्योत संकोच्यश्चोदकोऽन्यत्र [१३]-वाऽत्र वा-[१३] ।
अपूर्वं गृहमेधीयं [१४]-स्याद्वाऽतो लुप्तचोदकम्-[१४] ॥
अनुवादः पुनः श्रुत्या द्वितीयः सार्थतावशात् ।
निर्वापवच्चोदकस्य लिङ्गत्वेन सहायता ॥
चोदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनम् ।
विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः ॥
प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येतरस्य हि ।
दोषत्रयाच्चोदकस्य संकोचोऽङ्गान्तरेष्वतः ॥
व्यापारैक्याच्चोदकस्य स्वार्थे संहरणं भवेत् ।
वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते ॥
आज्यभागेति नाम्नोपकारक्लृप्तिस्मृतेरिदम् ।
नामत्वादि समं तस्माल्लुप्यते तेन चोदकः ॥" ( जैन्या १०·७·११–१७ ) ॥

" मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनः[१५] " (द्र. तैसं १·८·४; मैसं १·१०१) इति विहिते गृहमेधीये श्रूयते—" आज्यभागौ यजति " ( तैब्रा १·६·६, मैसं १·१०·१५ ) इति । अष्टधाऽत्र[१६] संशयः—चोदकप्राप्तयोराज्यभागयोरिह पुनःश्रवणादनुवादोऽयमित्याद्यः पक्षः । तथा सति वैयर्थ्यप्रसङ्गात् सार्थकत्वाय चोदकैतद्वाक्ययोर्मिलितयोरत्राऽऽज्यभागविधायकत्वमभ्युपेतव्यम् । ओषधिद्रव्यनिर्वापादयो यथा प्रकृतिगताः सन्तो[१७] विकृतावपि [१८]श्रूयमाणाश्चोदकस्य लिङ्गं तथाऽऽज्यभागावपि लिङ्गत्वेन सहायभूतौ । ततो मिलितयोर्विधायकत्वमिति द्वितीयः पक्षः । गृहमेधीयविधिवाक्ये [१९]श्रुतस्यौदनस्यैवौषधिद्रव्यतया लिङ्गत्वसिद्धेर्नास्ति लिङ्गान्तरापेक्षा । तस्मात् प्रकृताविष्टौ श्रुतस्याऽऽज्यभागकर्मण इह पुनःश्रवणमर्थवादत्वेन तत्प्रशंसार्थमिति तृतीयः पक्षः । भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगादर्थवादत्वमयुक्तम् । ततश्चोदकप्राप्तादाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमङ्गान्तरमिह विधीयत इति चतुर्थः पक्षः । ऐष्टिकयोराज्यभागयोरिह प्रत्यभिज्ञानान्नाङ्गान्तरत्वं युक्तम् । तस्मादाज्यभागव्यतिरिक्तस्य प्रयाजाद्यङ्गस्य परिसंख्यानार्थमिदमाज्यभागश्रवणमिति[२०] पञ्चमः पक्षः । आज्यभागवाक्येन तद्विधिरूपः स्वार्थस्त्यज्येत प्रयाजादिनिषेध-

११. तं–°न्तीत्येवमादयः । १२. म–°स्यैवात्रातिदेशः । १३–१३ तं–वा न वा । १४–१४. क. ना.हा–स्याद्वातो श्रुतचोदकम्; तं–स्याद्वादो व्याप्तचोदकम् ; म४–स्याद्वादो लुप्तचोदकम् । १५. म४–साय-मोदनं निर्वपति; आ.तं.म४–सायमोदनम् । १६. म४–तत्र अष्टधा । १७. म४–सन्तीति । १८. म४–श्रूयमाणत्वाच्चो° । १९. पा.हा–शस्यौदन°; तं–श्रुतस्य ओषधि° । २०. तं. म४–श्रवणं वाक्यम् इति ।

रूपोऽन्योऽर्थः परिगृह्येत चोदकप्राप्तं च प्रयाजाद्यनुष्ठानं बाध्येतेति दोषत्रयप्रसङ्गान्न परिसंख्या युक्ता। तेन[21] प्रत्यक्षविधिरूपादस्मादाज्यभागवाक्यादानुमानिकचोदकवाक्यमाज्यभागव्यतिरिक्तप्रयाजाद्यङ्गेषु संकोचनीयमिति षष्ठः पक्षः। यदि चोदकस्य प्रत्यङ्गं पृथग्व्यापाराः स्युस्तदा प्रयाजाद्यङ्गगोचरैर्व्यापारैस्तेषामतिदेशः सिध्यति। आज्यभागगोचरस्यानेन प्रत्यक्षविधिना बाधितत्वान्न चोदकेनाऽऽज्यभागातिदेश इत्येवं संकोचो वर्णयितुं शक्यते। इह तु शब्दबुद्धिकर्मणां विरम्य [22]-व्यापाराभाव इति न्यायेन-[22] एक एव चोदकस्य व्यापारः। तथा सति युगपदतिदेशोऽनतिदेशश्चेति विरुद्धधर्मत्वं प्रसज्येत। तस्मात् प्रयाजाद्यङ्गेषु संकोचो न युक्तः। तेन चोदकोऽत्राऽऽज्यभागकर्मणि संकोचनीयः। न चोक्तदोषापत्तिः। [23]अस्य संकोचस्योपसंहाररूपत्वात्। आज्यभागयोरेव शक्तस्य चोदकस्य त्वज्ञातशक्तिज्ञापनमुपसंहारः। तथा सत्याज्यभागातिदेशव्यापृतस्य चोदकस्य को नामातिदेशतन्निवृत्तिरूपविरुद्धधर्मप्रसङ्गः। तत्राऽऽज्यभागकर्मणि चोदकावस्थापनमिति सप्तमः पक्षः। 'पुरोडाशं चतुर्धा करोति आग्नेयं चतुर्धा करोति' ( द्र. आपश्रौ ३·३·२ ) इत्यनयोरुभयोरपि प्रत्यक्षवचनत्वेन [24]सरूपत्वादस्तु तत्रोपसंहारः। इह तु प्रत्यक्षपरोक्षयोर्वचनचोदकयोर्विरूपत्वान्नासौ युक्तः। किं तु प्रत्यक्षवचनेनैवाऽऽज्यभागविधिसिद्धेश्चोदककल्पना [25]-निरर्थिका। तस्मात्-[25] उपसंहारो न युक्तः। तस्मादपूर्वो गृहमेधीयो न चोदकेनान्याङ्गानि गृह्णाति। इतिकर्तव्यताकाङ्क्षा तु प्रत्यक्षवचनेनैव पूर्यते। एवं सत्युक्तदोषाभावादयमष्टमः पक्षोऽभ्युपगन्तव्यः। ननु सांग्रहण्यामिष्टौ प्रत्यक्षवचनविहितैरामनहोमैः सह [26]चोदकातिदिष्टानामनूयाजानां समुच्चयोऽङ्गीकृतस्तद्वदत्राऽपि विधीयमानयोराज्यभागयोश्चोदकप्राप्तैः प्रयाजाद्यङ्गैः सर्वैः सह समुच्चयोऽस्तु। न। वैषम्यात्। प्रकृतावाज्यभागयोस्तूपकारः क्लृप्तः। सोऽत्र नामसाम्येन स्मर्यते। तस्मात् क्लृप्तोपकाराभ्यां विधीयमानाभ्यामाज्यभागाभ्यां निराकाङ्क्षो गृहमेधीयः। आमनहोमास्तु न क्लृप्तोपकारा इति तैः [27]-सांग्रहण्या अङ्गाकाङ्क्षा-[27] न पूर्यते। तत्र क्लृप्तोपकारैरनूयाजाद्यङ्गैः चोदकेन सहातिदिष्टैः पूर्यते। ततो विधिवैयर्थ्यपरिहारायाऽऽमनहोमेषूपकारे क्लृप्ते सति [28]तस्मिन् प्रवर्तमानः प्रयोगवचनः समुच्चित्याऽनुष्ठापयति। [29]ततो वैषम्यात् क्लृप्तोपकाराज्यभागविधायकेनानेन प्रत्यक्षवचनेन गृहमेधीयचोदको लुप्यते[30]। तस्मादविकृतिरूपं साङ्गमपूर्वं कर्मात्र विधीयत इति सिद्धान्तः॥

तत्रैवान्यच्चिन्तितम्--

" तत्रान्यदङ्गं[31] नो कार्यं कार्यं वाऽन्यानपेक्षणात्।
न कार्यं विहितत्वेन कार्यं स्विष्टकृदादिकम्॥ " ( जैन्या १०·७·१८ ) ॥

तत्र गृहमेधीय आज्यभागाभ्यामेव निराकाङ्क्षत्वादन्यत् स्विष्टकृदादिकं न कार्यमिति चेत्। मैवम्। आज्यभागवद्विहितत्वात्। " यदग्नये स्विष्टकृते समवद्यति " ( द्र. मैसं १·१०·१५ ), " इडामुपह्वयते(न्ते) " ( मैसं १·१०·१५ ) इति विहितम्। तस्माद्यावदुक्तं कर्तव्यम्॥

तत्रैवान्यच्चिन्तितम्—

" तत्रैव परिसंख्यात्वे प्राशित्राद्यस्ति वा न वा[32]।
अस्तीडादर्शनान्मैवं तदुक्त्याऽस्त्वत्र नेतरत्॥ " ( जैन्या १०·७·१९ ) ॥

गृहमेधीये स्विष्टकृति[33] आज्यभागवदष्टधा संशयं हृदि निधाय परिसंख्यार्थं पञ्चमं पक्षमभ्युपेत्येयं कृत्वाचिन्ताऽवतारिता। तत्र प्राशित्रादिभक्षणं न परिसंख्यातं किं तु तदस्ति। कुतः? भक्षणाद्यर्थस्येडो-

२१. तं-तस्मात्। २२-२२. आ.क.ना.हा-व्यापाराभावेन। २३. म-४ तस्य। २४. इ.उ.तं-स्वरूपत्वा°। २५-२५. आ.क-निरर्थिका, ततस्तयोः। २६. म४-चोदकनिर्दिष्टानाम्। २७-२७. इ.उ.तं.म४-सांग्रहण्याद्यङ्गाकाङ्क्षा। २८. तं.ना.म४-पश्चात्। २९. म४-अतो। ३०. तं-अनूद्यते। ३१. म४-तच्चान्यद°। ३२. आ.क.ना.हा-तत्। ३३. म४-स्विष्टकृतीडाद्ये।

चातुर्मास्येषु साकमेधपर्व ]

पाह्वानस्य तत्र दर्शनादिति प्राप्ते ब्रूमः—अत्र गृहमेधीये तदिडाभक्षणं वचनबलेनास्तु । स्विष्टकृद्वाक्यप्रापितस्य[34] परिसंख्यातस्य[35] वचनेन निवारितत्वात् । इतरत्प्राशित्रादिभक्षणं परिसंख्यातत्वान्नास्ति ।

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

"सौमिकं प्राकृतं वा स्याद्द्वयोः[36] प्रणयनं श्रुतम् ।
आद्योऽप्राप्तत्वतो मैवमनामत्वेन वाऽग्रिमः ॥" ( जैन्या ७·३·१७ ) ॥

चातुर्मास्येषु श्रूयते—"द्वयोः प्रणयति[37], तस्माद्द्वाभ्यां यन्ति[38]" इति । अत्र [39]सौमिकधर्मकमग्निप्रणयनं यत्तदेव ग्रहीतव्यम् । कुतः ? सोमस्य चातुर्मास्यप्रकृतित्वाभावेन तदीयप्रणयनस्यात्र चोदकादप्राप्तस्य[40] विध्यर्हत्वात् । दर्शपूर्णमासगतं त्वग्निप्रणयनं चोदकप्रापितत्वादविधेयम् । तस्मात् सौमिकस्य धर्मा अत्र प्रणयनशब्देनातिदिश्यन्त इति प्राप्ते ब्रूमः—नाऽयं प्रणयनशब्दः सौमिकस्य प्रणयनकर्मणो नामधेयं, किं तु निर्मन्थ्यबर्हिरादिशब्दवल्लौकिक एव । ततो न धर्मातिदेशः । यदि प्राकृतप्रणयनस्य प्राप्तत्वाद्विधिवैयर्थ्यं तर्ह्यर्थवादसंबन्धाय तद्वाक्यमस्तु ॥

तत्रैवान्यच्चिन्तितम्—

"[41]आद्यन्तयोर्मध्ययोर्वा पर्वणोस्तत्प्रसञ्जकात् ।
आद्यन्तयोरूरुगत्या मध्ययोः पर्वणोर्भवेत् ॥" ( जैन्या ७·३·१८ ) ॥

"तस्माद्द्वाभ्यां यन्ति" इत्यर्थवादेन संबन्धाय पुनर्विधिना यत्प्रकृतमग्निप्रणयनं चोदकप्राप्तमपि श्रूयत इत्युक्तं तद्वैश्वदेवशुनासीर्ययोः[42] पर्वणोर्भवितुमर्हति । कुतः ? प्रसञ्जकात् । तथा हि—"न वैश्वदेव उत्तरवेदिमुपवपति न शुनासीर्ये" ( द्र मैसं १·१०·१३ ) इत्युत्तरवेदिप्रतिषेधस्तयोः पर्वणोरुत्तरवेदिं[43] प्रसञ्जयति । अप्रसक्तप्रतिषेधायोगात् । उत्तरवेदिश्चाग्निप्रणयनार्था । तस्मादुत्तरवेदिप्रसक्तिद्वारेणाऽऽद्यन्तयोरिदमग्निप्रणयनम् इति प्राप्ते ब्रूमः—"ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाः साकमेधश्च" ( द्र. शब्रा ११·५·२·३,५ ) इति गमनसाधनत्वमूरुत्वं मध्यमयोः पर्वणोरुपन्यस्तम् । तत्संनिधौ द्वयोः प्रणयन्तीति चोदकप्राप्तमग्निप्रणयनमर्थवादार्थं पुनर्विधाय 'द्वाभ्यां यन्ति' इत्यर्थवादेनोरुत्वकल्पना युक्ता । [44]द्वाभ्यां पर्वभ्यां गमनमुपन्यस्यते । तस्मात् मध्यमयोस्तत् प्रणयनम् । न चात्रोत्तरवेदेरभावात् प्रणयनाभाव इति शङ्कनीयम् । उपवपतीत्यनारभ्यश्रुतेन वाक्येनोत्तरवेद्युपवापस्य विहितत्वात् । सा चोत्तरवेदिराद्यन्तयोः पर्वणोर्निषेधात् मध्यमयोरवतिष्ठते । तस्माच्चोत्तरवेद्यां प्रणीतोऽग्निर्विधीयते । एतदर्थमेव हि सार्थवादं पुनर्विधानम् ॥

उक्तमधिकरणद्वयमेकीकृत्य वार्तिककारेण यो निर्णयोऽभिहितस्तं दर्शयति—

"अनामत्वाच्च वैयर्थ्यात् सौमिकं प्राकृतं च न ।
अपूर्वं तत्प्रणयनं शाखान्तरसमोक्तितः[45] ॥" ( जैन्या ७·३·१९ )

'आहवनीयादग्निं प्रणयतः' इति शाखान्तरे मध्यमयोर्नूतनं प्रणयनं विहितम् । तेन समानवचनत्वादत्राप्यपूर्वं प्रणयनं[46] विधीयते[47] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

३४. म४–°कृदोक्तप्रापितः°; इ.उ.पा.हा–°वाक्यप्रापिता । ३५. तं.म–४परिसंख्यानस्य । ३६. आ.क.ना.हा–स्यात्तयोः । ३७. म४–प्रणयन्ति । ३८. इ.उ–प्रणयति । ३९. उ.पा.म४.हा–सौमिकधर्ममग्नि° । ४०. आ. म४–चोदकाप्राप्तस्य; तं चोदकाप्राप्त° । ४१. तं–आवृत्तयोर्मध्यमो वा । ४२. तं.म४–°सीरीययोः आद्यन्तयोः । ४३. आ.क.ना.हा–पर्वणोर्वेदिम् । ४४. तं–ताभ्याम् । ४५. आ.क.ना.हा–समोक्तिकम् । ४६. म४–प्रणयकान्तरम् । ४७. आ.क.ना.हा–विधत्ते ।

सोमा॑य पि॒तृम॑ते पु॒रो॒डाश॒ꣳ॒ षट्क॑पालं॒ निर्व॑पति पि॒तृभ्यो॑ बर्हि॒षद्भ्यो॑ धा॒नाः पि॒तृभ्यो॑ऽग्निष्वा॒त्तेभ्यो॑ऽभिवा॒न्या॑यै दु॒ग्धे म॒न्थ-

सोमा॑य । पि॒तृम॑त॒ इति॑ पि॒तृ—म॑ते । पु॒रो॒डाश॑म् । षट्क॑पालमिति॒ षट्—क॒पा॒लम् । निरिति॑ । व॒प॒ति॒ । पि॒तृभ्य॒ इति॑ पि॒तृ—भ्यः॑ । ब॒र्हि॒षद्भ्य॒ इति॑ ब॒र्हि॒षत्—भ्यः॑ । धा॒नाः । पि॒तृभ्य॒ इति॑ पि॒तृ—भ्यः॒ । अ॒ग्नि॒ष्वा॒त्तेभ्य॒ इत्य॑ग्नि—स्वा॒त्तेभ्यः॑ । अ॒भि॒वा॒न्या॑या इत्य॑भि—वा॒न्या॑यै । दु॒ग्धे । म॒न्थम् ।

अथ पितृयज्ञहवींषि विदधाति—‘ सोमाय पितृमते पुरोडाशम् ’ इत्यादि ॥ “ संवत्सरो वै सोमः पितृमान् ” ( तैब्रा १.६.८ ) इत्यादि ब्राह्मणम् । “ ह्रस्वनुड्भ्यां मतुप् ” ( पा ६.१.१७६ ) इति मतुप उदात्तत्वम् । बर्हिषि सीदन्तीति बर्हिषदः मासाः । अन्त्यलोपश्छान्दसः । तण्डुलप्रभवा लाजा धानाः । अर्धमासाः पितरोऽग्निष्वात्ताः । “ आदितश्च ” ( पा ७.२.१६ ) इति चकारादिडभावः । तृतीयासमासे “ संज्ञायामनाचितादीनाम् ” ( पा ६.२.१४६ ) इत्युत्तरपदान्तोदात्तत्वम् । अभिवान्या अन्यवत्सदोह्या, तस्या Vदुग्धे सक्तूनोप्य मन्थति स मन्थः । द्रवयुक्ताः सक्तवो मन्थाः । “ अर्ध उपमन्थति ” ( तैब्रा १.६ ८ ) इत्यादि ब्राह्मणम् ॥

चतुर्थे साकमेधाख्ये तृतीये पर्वणि प्रधानहवींष्युक्तानि । पञ्चमे तदीयशेषो महापितृयज्ञ उच्यते ।

**सोमायेति** ॥ आदौ तावत्त्रीणि हवींषि विधत्ते—‘ सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् ’ इति । पितरोऽस्य सन्तीति पितृमान् पितृस्वामीत्यर्थः । बर्हिषि यज्ञे सीदन्तीति बर्हिषदः । Vधानाः भृष्टयवाः । Vअग्निष्वात्ताः अयज्ञनिष्ठाः । Vअभिवान्या मृतवत्सा धेनुः । क्षीरे यवपिष्टं प्रक्षिप्य मिश्रीकृतं द्रव्यं मन्थः ॥ तदिदं हविस्त्रयं पितृयज्ञः । तस्य च पितृयज्ञस्य विधिमर्थवादेनोन्नयति—“ वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ता वरुणप्रघासैर्वरुणपाशादमुञ्चत् । साकमेधैः प्रत्यस्थापयत् । त्र्यम्बकै रुद्रं निरवादयत । पितृयज्ञेन सुवर्गं लोकमगमयत् । यद्वैश्वदेवेन यजते । प्रजा एव तद्यजमानः सृजते । ता वरुणप्रघासैर्वरुणपाशान् मुञ्चति । साकमेधैः प्रतिष्ठापयति । त्र्यम्बकै रुद्रं निरवदयते । पितृयज्ञेन सुवर्गं लोकं गमयति ” ( तैब्रा १.६.८ ) इति । “ प्रतिपूरुषमेककपालान् निर्वपति ” ( तैसं १.८.६, तैब्रा १.६.१० ) इति विधास्यमाना यागाः त्र्यम्बकाः[1] तैः क्रूरं रुद्रं परितोष्य निःसारितवान् । तत्र[2] स्वर्गलोकहेतुत्वेनात्यन्तप्रशस्तत्वात् पितृयज्ञः कर्तव्यः इत्यभिप्रायः ॥ अत्र हेयं पक्षं पूर्वपक्षतया विधत्ते—“ दक्षिणतः प्राचीनावीती निर्वपति । दक्षिणावृद्धि पितृणाम् ” ( तैब्रा १.६.८ ) इति । गार्हपत्यस्य दक्षिणदेशे स्थित्वा प्राचीनावीती सन्नुक्तानां हविषां निर्वापं कुर्यात् । यस्मात् पितृणां संबन्धि कर्म दक्षिणावृत् प्रायेण दक्षिणस्यां दिशि वर्तते ॥ तं पक्षं दूषयित्वा सिद्धान्तं विधत्ते— “ अनादृत्य तत् । उत्तरत एवोपवीय निर्वपेत् । उभये हि देवाश्च पितरश्चेज्यन्ते ” ( तैब्रा १.६.८ ) इति । यत्रैकोद्दिष्टश्राद्धादौ पितर एव पूज्यन्ते तत्र पूर्वोक्तं[3] दक्षिणावृत्त्वमस्तु । इह त्वाज्यभागादिदेवा अग्निष्वात्तादिपित श्चेज्यन्ते । अतो देवानां प्रियायो-

१. क.तं.ना—त्रैयम्बकाः । २. आ.क.ना.हा—स्वर्गादि' । ३. आ.क.ना.हा—‘ पूर्वोक्तं ’ नास्ति ।

त्तरतोऽवस्थापनमुपवीतं च ॥ तर्हि पितॄणां प्रीतिर्न स्यादित्याशङ्क्य विध्यन्तरेण दक्षिणावृत्त्वं संपादयति—"अथो यदेव दक्षिणार्धेऽधिश्रयति । तेन दक्षिणावृत्" (तैब्रा १·६·८) इति । हविः पाकाय गार्हपत्यस्य दक्षिणभागेऽधिश्रयेत् । तेनैतत् कर्म पितृप्रीत्यै दक्षिणावृदपि भविष्यति ॥ एतदेव कालरूपेण प्रशंसति—"सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति । संवत्सरो वै सोमः पितृमान् । संवत्सरमेव प्रीणाति । पितृभ्यो बर्हिषद्भ्यो धानाः । मासा वै पितरो बर्हिषदः । मासानेव प्रीणाति । यस्मिन् वा ऋतौ पुरुषः प्रमीयते । सोऽस्यामुष्मिँल्लोके भवति" (तैब्रा १·६·८) इति । '[4]-वसन्ते वसन्ते-[4] ज्योतिषा यजेत' इति विधानात् सोमस्य संवत्सरत्वम् । स एव पितॄणामपि[5] पतिरिति तस्य[6] पितृमत्त्वं, 'मासि पितृभ्यः क्रियते' इति अमावास्याश्राद्धाभिधानात् पितॄणां मासत्वं चोपचर्यते[7] । "यदि वसन्ता प्रमीयते । वसन्तो भवति । यदि ग्रीष्मे ग्रीष्मः" (तैब्रा १·४·१०) इत्यभिधानात्, तत्तदृतुदेवताप्राप्तिः[8] एवास्यामुष्मिन् ऋतुसंबन्धः ॥ भर्जनेन क्वचिदीषत्कृष्णत्वं क्वचित् कृष्णत्वं क्वचिदकृष्णत्वमित्येवंविधं त्रैविध्यं[9] विधत्ते—"बहुरूपा धाना भवन्ति । अहोरात्राणामभिजित्यै" (तैब्रा १·६·८) इति । अहान्यकृष्णानि अमावास्यारात्रिः अतिकृष्णा,[10] अन्यास्तु रात्रय ईषत्कृष्णाः ॥ तृतीययागदेवतां प्रशंसति—"पितृभ्योऽग्निष्वात्तेभ्यो मन्थम् । अर्धमासा वै पितरोऽग्निष्वात्ताः । अर्धमासानेव प्रीणाति" (तैब्रा १·६·८) इति । बर्हिषदामनुष्ठितयागत्वात् मासत्वम् । अग्निष्वात्तानां यागाभावादर्धमासत्वम् । एतच्च "ये वै यज्वानः । ते पितरो बर्हिषदः" (तैब्रा १·६·९) इत्यादिना वक्ष्यते ॥ मृतवत्सां प्रशंसति—"अभिवान्यायै दुग्धे भवति । सा हि पितृदेवत्यं दुहे" (तैब्रा १·६·८) इति । पितृदेवत्यं पितृदेवताभ्यो हितम् । मृताः पुरुषाः पितरो भवन्ति । अभिवान्या च मृतवत्सेति सजातीयत्वात् तत्र तेषां प्रीतिः ॥ यदुक्तमापस्तम्बेन—"उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति । अर्धाः पिष्टानामावृता सक्तून् कृत्वाऽभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकयेक्षुशलाकयेक्षुकाण्डेन वा दक्षिणामुखस्तिष्ठः प्रसव्यमनारभ्योपमन्थति" (आपश्रौ ८·१४·१३-१४) इति । तत्रार्धशरावे मन्थनं विधत्ते—"यत्पूर्णम् । तन्मनुष्याणाम् । उपर्यर्धो देवानाम् । अर्धः पितॄणाम् । अर्ध उपमन्थति । अर्धो हि पितॄणाम्" (तैब्रा १·६·८) इति । भुञ्जाना मनुष्याः पात्रपूर्णमेव घृतमिच्छन्ति । प्रयाजदेवता जुहूगतेनोपरितनाज्यभागेन तुष्यन्ति[11] । अधोभागेन हविरभिघारणात् । अग्निहोत्रे चोपरिभागं देवेभ्यो हुत्वा अधोभागं[12] 'स्वधा पितृभ्यः पितॄञ्जिन्वेति भूमौ निमृजन्ति' (द्र. आपश्रौ ६·११·५) इति[13] तद्विधानात् । तदेतत्सर्वमभिप्रेत्य 'यत्पूर्णम्' (तैब्रा १·६·८) इत्याद्युक्तम् ॥ इक्षुशलाकां विधत्ते—"एकयोपमन्थति । एका हि पितॄणाम्" (तैब्रा १·६·८) इति । "यदेकमेकꣳ संभरेत् पितृदेवत्यानि स्युः" (तैसं १·६·८) इत्यादौ पितॄणामेकत्वसंख्याप्रीतिः प्रसिद्धा ॥ दक्षिणामुखत्वं विधत्ते—"दक्षिणोपमन्थति । दक्षिणावृद्धि पितॄणाम्" (तैब्रा १·६·८) इति ॥ 'प्राचीं देवा दक्षिणा पितरः' इत्यादौ दक्षिणदिक्प्रीतिः प्रसिद्धा ॥ हस्ताभ्यां मन्थनं विधत्ते—"अनारभ्योपमन्थति । तद्धि पितॄन् गच्छति" (तैब्रा १·६·८) इति । तृतीयसवनगताशिरादौ मन्थानं [14]-स्तम्भे निबध्य मन्थति-[14], तत्तु देवानां प्रियम् । अत्र त्वनारभ्य [15]बन्धनमकृत्वा हस्ताभ्यामेवोपमन्थति । तच्च देववैलक्षण्यात् पितॄणां प्रियम् ॥ यदुक्तमापस्तम्बेन—"न

४-४. आ.क.ना.हा–वसन्ते । ५. आ.क.ना.हा–'अपि' नास्ति । ६. आ.क.ना.हा–अस्य । ७. म४–चोपपद्यते । ८. आ.क.ना.हा–°ताप्रीतिः । ९. तं.म४–वैचित्र्यं; ना.हा–त्रिविधं पैत्र्यम् । १०. आ.क.तं.ना.हा–कृष्णा । ११. आ.क.ना.पा.हा–तृप्यन्ति । १२. आ.क.ना.पा.हा–अर्धभागम् । १३. तं.म४–निमृजन्ति यद्धुत्वा निर्माष्टीति । १४-१४. ना.म४–स्तम्भे निबध्य मथ्नन्ति; उ–समबध्य प्रमथ्नन्ति । १५. म४–मन्थनम° ।

प्राचीं वेदिमुद्धन्ति। पितृयज्ञो हि। न दक्षिणा। देवयज्ञो ह्युभे दिशावन्तरोद्धत्या " ( आपश्रौ ८·१३·५ ) इति, तामाग्नेयीं दिशमङ्गुल्या निर्दिशन् विधत्ते—" इमां दिशं वेदिमुद्धन्ति। उभये हि देवाश्च पितरश्चेज्यन्ते " ( तैब्रा १·६·८ ) इति। तस्या वेदेश्चतुर्विधं दैविकवैलक्षण्यं क्रमेण विधत्ते—" चतुःस्रक्तिर्भवति। सर्वा ह्यनु दिशः पितरः। अखाता भवति। खाता हि देवानाम्। मध्यतोऽग्निराधीयते। अन्ततो हि देवानामाधीयते। वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै " ( तैब्रा १·६·८ ) इति। दैविकी वेदिर्दीर्घा न तु समचतुरस्रा। इयं तु समचतुरस्रेति व्यावृत्तिः। अग्निपु प्रकारविशेषं सूत्रकारो दर्शयति—" प्रतिदिशं स्रक्तयोऽवान्तरदेशान् प्रति मध्यानि " ( आपश्रौ ८·१३·३ ) इति। परितः कटादिभिराच्छादनं विधत्ते—" परिश्रयति। अन्तर्हितो हि पितृलोको मनुष्यलोकात् " ( तैब्रा १·६·८ ) इति॥ उन्मूलनं विधत्ते—" यत्परुषि दिनम्। तद्देवानाम्। यदन्तरा। तन्मनुष्याणाम्। यत्समूलम्। तत्पितृणाम्। समूलं बर्हिर्भवति व्यावृत्त्यै " ( तैब्रा १·६·८ ) इति। परुषि पर्वसंधौ दिनं छिन्नं तादृशं बर्हिरहिंसितत्वात् देवानां प्रियम्। अत एव बर्हिर्लवनब्राह्मणे श्रूयते—" प्रजापतिर्वा ओषधीः पर्वशो वेद। स एना न हिनस्ति " ( तैब्रा ३·२·२ ) इति, " ओषधीनामहिंसायै " ( तैब्रा ३·२·२ ) इति च। यदन्तरा पर्वमध्ये छिन्नं तन्मनुष्याणां प्रियं संधिविशेषस्य तैरज्ञातत्वात्। परिशेषेण समूलत्वं पितॄणां प्रियम्॥ बर्हिषां दक्षिणाग्रत्वं[१६] विधत्ते—" दक्षिणा स्तृणाति। दक्षिणावृद्धि पितृणाम् " ( तैब्रा १·६·८ ) इति॥ यदुक्तमापस्तम्बेन—" आस्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन् पर्येति। औद्धवान् धारयमाणस्त्रिरस्तृणन् प्रतिपर्येति। औद्धवः प्रस्तरः " ( आपश्रौ ८·१४·४-६ ) इति। प्रसव्यमप्रदक्षिणत्वं यथा भवति तथा तदिदमप्रदक्षिणत्वप्रदक्षिणत्वाभ्यां षट्कृत्व आवर्तनं विधत्ते—" त्रिः पर्येति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। त्रिः पुनः पर्येति। षट् संपद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति " ( तैब्रा १·६·८ ) इति। इतो भूलोकादारभ्य तृतीयः पितृलोको भोगभूमेः स्वर्गस्यान्तरिक्षादूर्ध्वभावित्वात्॥ प्रस्तरस्यामन्त्रकमासादनं विधत्ते—" यत्प्रस्तरं यजुषा गृह्णीयात्। प्रमायुको यजमानः स्यात्। यन्न गृह्णीयात्। अनायतनः स्यात्। तूष्णीमेव न्यस्येत्। न प्रमायुको भवति। नानायतनः " ( तैब्रा १·६·८ ) इति। गृह्णीयात् सादयेदिति[१७]॥ दक्षिणपरिधिवर्जनममिप्रेत्य विधत्ते—" यत्त्रीन् परिधीन् परिदध्यात्। मृत्युना यजमानं परिगृह्णीयात्। यन्न परिदध्यात् रक्षांसि यज्ञं हन्युः। द्वौ परिधी परिदधाति। रक्षसामपहत्यै। अथो मृत्योरेव यजमानमुत्सृजति " ( तैब्रा १·६·८ ) इति। " मध्यमोत्तरौ " ( आपश्रौ ८·१४·१० ) इति हि[१८] सूत्रेऽभिहितम्॥ हविषाम् अनुक्रमेण सादनं विधत्ते— " यत् त्रीणि त्रीणि हवींष्युदाहरेयुः। त्रयस्त्रय एषां साकं प्रमीयेरन्। एकैकमनूचीनान्युदाहरन्ति। एकैक एवैषामन्वञ्चः प्रमीयते " ( तैब्रा १·६·८ ) इति। उदाहरेयुरासादयेयुः एषां यजमानबन्धूनां मध्ये। अन्वञ्चो वृद्धबालानुक्रमगताः। "एतेषां मध्य एकैक एव"[१९] प्रमीयते न तु युगपत्॥ " दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्य[२०] " ( आपश्रौ ८·१४·१६ ) इति सूत्रे यदुक्तं तद्विधत्ते—" कशिपु कशिपव्याय। उपबर्हणमुपबर्हण्याय। आञ्जनमाञ्जन्याय। अभ्यञ्जनमभ्यञ्जन्याय। यथाभागमेवैनान् प्रीणाति " ( तैब्रा १·६·८ ) इति। कशिपु तूलपूरितशय्यादि। उपबर्हणं शिरस आधारः। कशिपुप्रभृतीन्युदाहरन्तीत्यनुवर्तते। कशिपुप्रियः कशिपव्यः पिता, तत्परितोषार्थं कशिपु सादयेत्। एवमन्यत्[२१]। तथा सति एनान् पितॄन् स्वस्वभागमनतिक्रम्य तोषयति॥ तदेवमनुब्राह्मणगतेनानुवाकेन पितृयज्ञे हविरासादनपर्यन्तः पूर्वप्रयोगोऽभिहितः। अनुवाकान्तरेण सामिधेन्यादिक उत्तरप्रयोगोऽभिधीयते। तत्राध्वर्योः प्रैषमन्त्रमुत्पाद्य मन्त्रं व्याचष्टे—" अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्याह। उभये हि देवाश्च पितरश्चेज्यन्ते " ( तैब्रा १·६·९ ) इति। देवानां पितॄणां चोपकारी योऽग्नि

१६. म४–दक्षिणास्तृतत्वम्। १७. म४–प्रसादयेत्। १८. आ.क.ना.म४°–हि ' नास्ति।
१९–१९. म४–एषां मध्ये एकैकमेव। २०. म४–आसादयतीति। २१. तं–एवमन्यत्र।

तस्मै ॥ " उशन्तस्त्वा " ( तैसं २·६·१२ ) इत्येतामृचं सामिधेनीत्वेन विधत्ते—" एकामन्वाह । एका हि पितृणाम् " ( तैब्रा १·६·९ ) इति ॥ तस्यामावृत्तिं विधत्ते— " त्रिरन्वाह । त्रिर्हि देवानाम् " ( तैब्रा १·६·९ ) इति ॥ चोदकप्राप्तावाघारौ प्रशंसति—" आघारावाघारयति । यज्ञपरुषोरनन्तरित्यै " ( तैब्रा १·६·९ ) इति । यज्ञपरुषोर्यज्ञांशयोरलोपाय ॥ वरणं पर्युदस्यति—" नाऽऽर्षेयं वृणीते । न होतारम् । यदार्षेयं वृणीते । यद्धोतारम् । प्रमायुको यजमानः स्यात् । प्रमायुको होता । तस्मान्न वृणीते । यजमानस्य होतुर्गोपीथाय " ( तैब्रा १·६·९ ) इति । " अग्निर्देवो होता देवान् यक्षत् " ( आपश्रौ २·१६·५ ) इत्यादि-निगदपाठ आर्षेयवरणम् । निगदावसाने 'विष्णुशर्मा मानुषः' इत्यादिनामोच्चारणं होतृवरणम् ॥ बर्हिर्नामकं चतुर्थं प्रयाजं निषेधति— " अपबर्हिषः प्रयाजान् यजति । प्रजा वै बर्हिः । प्रजा एव मृत्योरुत्सृजति " ( तैब्रा १·६·९ ) इति ॥ चोदकप्राप्तावाज्यभागौ प्रशंसति—" आज्यभागौ यजति । यज्ञस्यैव चक्षुषी नान्तरेति " (तैब्रा १·६·९) इति ॥ हविष्प्रचारकाले प्राचीनावीतं विधत्ते—" प्राचीनावीती सोमं यजति । पितृदेवत्या हि । एषाऽऽहुतिः " (तैब्रा १·६·९) इति ॥ चतुरवदानमपवदितुं विधत्ते—" पञ्चकृत्वोऽवद्यति । पञ्च ह्येता देवताः । द्वे पुरोनुवाक्ये । याज्या देवता वषट्कारः । ता एव प्रीणाति " ( तैब्रा १·६·९ ) इति ॥ " त्वꣳ सोम प्र चिकितः " ( ऋसं १·९१·१, तैसं २·६·१२ ), " त्वया हि नः पितरः " ( ऋसं ९·९६·११, तैसं २·६·१२ ) इत्युभे पुरोनुवाक्ये । " त्वꣳ सोम पितृभिः संविदानः " ( ऋसं ८·४८·१३, तैसं २·६·१२ ) इत्येका याज्या । पितृमान् सोमो देवता वषट्कारः । ता एताः पञ्च देवता उच्यन्ते ॥ एकैक-देवतार्थं त्रिषु हविःष्वविच्छिन्नावदानं विधत्ते— " संततमवद्यति । ऋतूनाꣳ संतत्यै " ( तैब्रा १·६·९ ) इति । तदाहाऽऽपस्तम्बः—" जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति संप्रेष्यति । सकृत् पुरोडाशस्या-वद्यति सकृद्धानानां सकृन्मन्थस्य " ( आपश्रौ ८·१५·८-९ ) इति ॥ द्वयोः पुरोनुवाक्ययोरेकस्या याज्यायाश्च विधिं मनसि निधाय प्रशंसति—" प्रैवैभ्यः पूर्वया पुरोनुवाक्ययाऽऽह । प्रणयति द्वितीयया । गमयति याज्यया । तृतीये वा इतो लोके पितरः । अह्न एवैनां पूर्वया पुरोनुवाक्ययाऽत्यानयति । रात्रियै द्वितीयया । ऐवैनान् याज्यया गमयति " ( तैब्रा १·६·९ ) इति । " त्वꣳ सोम प्र चिकितः " इत्यनया पूर्वया पितृभ्यो हविः प्रकर्षेण कथितवान् भवति । " त्वया हि नः पितरः " इत्यनया द्वितीयया पितॄन् प्रति हविर्नयति । " त्वꣳ सोम पितृभिः " इत्यनया याज्यया[22] तद्धविः पितॄन् गमयति[23] । पितॄणां तृतीयलोकवर्तित्वादत्र मन्त्रत्रित्वं युक्तम् । किं च त्रिभिर्मन्त्रैः क्रमेणाह्नो राज्याश्च पितॄनानीय हविः प्रति तानागमयत्येव ॥ [24]दैवेषु हविःषु वेदेरुत्तरतः[24] उपविश्यावदाय दक्षिणामुखो वेदिमतिक्रम्योदङ्मुखस्तिष्ठञ्जुहोति । अत्र तु तद्वैपरीत्यं सूत्रकार आह—" दक्षिणतोऽवदायाभिघार्यो-दङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन् " ( आपश्रौ ८·१५·१० ) इति ॥ तदेतद्विधत्ते—" दक्षिणतोऽवदाय । उदङ्ङतिक्रामति व्यावृत्त्यै " ( तैब्रा १·६९ ) इति ॥ 'आ श्रावयास्तु श्रौषड्वौषट्' इति मन्त्रत्रयमपवदितुं क्रमेण विधत्ते— " आ स्वधेत्याश्रावयति । अस्तु स्वधेति प्रत्याश्रावयति । स्वधा नम इति वषट्-करोति । स्वधाकारो हि पितृणाम् " ( तैब्रा १·६·९ ) इति । पितॄन् प्रति यद्वक्तव्यं तस्य सर्वस्य स्वधा-कारो वाचकः । अत आश्रावयेत्यादिशब्दान्[25] ब्रूते । तस्मात्[26] स्वधाकारः पितॄणां प्रियः ॥ विधिवाक्ये पाठादेव प्राप्तं प्रचारक्रमं[27] प्रशंसति—" सोममग्रे यजति । सोमप्रयाजा हि पितरः । सोमं पितृमन्तं यजति । संवत्सरो वै सोमः पितृमान् । संवत्सरमेव तद्यजति । पितॄन् बर्हिषदो यजति । ये वै यज्वानः । ते पितरो बर्हिषदः । तानेव तद्यजति । पितॄनग्निष्वात्तान् यजति । ये वा अयज्वानो गृहमेधिनः ।

२२. आ.क.ना.हा–'याज्यया'। नास्ति । २३. आ.क.ना.हा–गमयति याज्यया '। २४–२४. आ.क.ना.हा–'दैवेषु हविःषु ' नास्ति; तं.म४. म५–दैवेषु हविःषु उत्तरवेदेरुत्तरतः । २५. इ.उ.तं.म४–°शब्दा-र्थान् । २६. आ.क.ना.हा–यस्मात् । २७. म४–प्रचारविप्रकर्षकमम् ।

-मेतत् ते तत ये च त्वामन्वेतत् ते पितामह* *प्रपितामह ये च
त्वामन्वत्र पितरो यथाभागं मन्दध्वम्॥

एतत् । ते । तत । ये । च । त्वाम् । अन्विति । एतत् । ते । पितामह । प्रपितामहेति प्र—पितामह । ये । च । त्वाम् । अन्विति । अत्र । पितरः । यथाभागमिति यथा—भागम् । मन्दध्वम् ॥

हविःशेषान् संप्लोम्नाय पिण्डान् कृत्वा वेद्यास्तिसृषु स्रक्तिषु निदधाति पूर्वस्यां दक्षिणस्यां अपरस्यामिति—'एतत्ते तत' इत्यादि ॥ [1][v]एतत् अन्नं [v]ते तव भवतु हे [v]तत तात । [v]ये [v]च [v]त्वाम् [v]अनु गता आश्रिताः अन्ये, तेषां चैतदन्नं भवतु । [v]एतत् [v]ते अन्नं हे [v]पितामह, ये च त्वामनुगताः तेषां च । पितुः पिता पितामहः । एवमेतत्ते अन्नं हे [v]प्रपितामह, [v]ये [v]च अन्ये [v]त्वाम् [v]अनु गताः, तेषां च । पितामहस्य पिता प्रपितामहः । अधुना सर्वेऽपि सामान्येनोच्यन्ते । [v]अत्र अस्मिन् कर्मणि हे [v]पितरः पातारः पितृप्रभृतयो वा पितृपितामहप्रपितामहाः, [v]यथाभागं

ते पितरोऽग्निष्वात्ताः । तानेव तद्यजति " (तैब्रा १.६.९) इति । सोमः प्रथमं यष्टव्यो येषां पितॄणां ते सोमप्रयाजाः । पितृस्वामित्वेन तस्य प्राथम्यं युक्तम् । संवत्सरत्वं तु सोमस्य पूर्वमेवोक्तम् । इह लोके यज्ञं कृत्वा पितृलोकं प्राप्ता बर्हिषदः । इह यज्ञरहिता गृहमेधिनो ये गृहस्थास्ते पितृलोकं प्राप्याग्निष्वात्ता [28]इत्युच्यन्ते ॥ स्विष्टकृत्संज्ञकां देवतामपवदितुं विधत्ते—" अग्निं कव्यवाहनं यजति । य एव पितृणामग्निः । तमेव तद्यजति । अथो यथाऽग्निं स्विष्टकृतं यजति । तादृगेव तत् " (तैब्रा १.६.९) इति । पित्र्यं हविः कव्यं तद्वहतीति कव्यवाहनः । अत एवाऽन्यत्र श्रूयते—" त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम् " (तैसं २.५.८) इति ॥

एतदिति ॥ मुख्यब्राह्मणे पैतृकाणि त्रीणि हवींषि विधाय 'एतत्ते तत' इत्याद्येकादश मन्त्रा आम्नाताः । तत्र विनियोगमाहाऽऽपस्तम्बः— " हविःशेषान् संप्लोम्नाय पिण्डान् कृत्वा तिसृषु स्रक्तिषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामिति । एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् " (आपश्रौ ८.१६.६) इति । संप्लोम्नाय सम्यङ्मर्दनेनैकीकृत्य । पाठस्तु—' एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामनु ' इति ॥ [v]तत हे पितः, [v]ते तुभ्यम् [v]एतत् पिण्डीकृतमन्नं दत्तं, [v]ये [v]च अन्ये [v]त्वाम् [v]अनु वर्तन्ते तेभ्योऽप्येतद्दत्तम् । मध्यममन्त्रे 'ये च त्वामनु' इत्यनुषङ्गः । प्रपितामहमन्त्रे 'एतत्ते' इत्यनुषङ्गः ॥ विधत्ते—" एतत्ते तत ये च त्वामनु इति तिसृषु स्रक्तीषु निदधाति । तस्मादातृतीयात् पुरुषान्नाम निगृह्णन्ति । एतावन्तो हीज्यन्ते " (तैब्रा १.६.९) इति । यस्मात् मन्त्रेषु 'तत, पितामह, प्रपितामह' इत्येवं साधारणशब्दनिर्देशः कृतस्तस्माल्लोकेऽपि आ तृतीयात् पुरुषात् प्रपितामहपर्यन्तं संबन्धविशेषेणैव व्यवहरन्ति न तु तदीयं देवदत्तविष्णुशर्मादिनामोच्चारयन्ति । [29]यस्मात् पार्वणश्राद्धेषु पित्रादयस्त्रय एव पूज्यन्ते न तूपरितनास्तस्मादत्रापि त्रयाणां निर्देशो युक्तः ॥

अत्रेति ॥ कल्पः—" अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य सुसंदृशं त्वा वयमित्यैन्द्र्यर्चाऽऽहवनीयमुपतिष्ठन्ते " (आपश्रौ ८.१६.८) इति । हे पितरः, अत्र स्रक्तिगतपिण्डेषु

१. मै-एनत् ।

२८. आ.क.ना. हा-'इति' नास्ति । २९. म५-तस्मात् ।

सुसंदृशं त्वा वयं मघवन् मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु । योजा न्विन्द्र ते हरी (१) ॥

सुसंदृशमिति सु-संदृशम् । त्वा । वयम् । मघवन्निति मघ-वन् । मन्दिषीमहि ॥
प्रेति । नूनम् । पूर्णवन्धुर इति पूर्ण-वन्धुरः । स्तुतः । यासि । वशान् । अनु ॥
योजा । नु । इन्द्र । ते । हरी इति (१) ॥

---

यो यो यस्य भागस्तेन तेन । "यथाऽसादृश्ये" (पा २·१·७) इत्यव्ययीभावः । यूयं मन्दध्वं मोदध्वम् । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु[2] ॥

आहवनीयमुपतिष्ठते—'सुसंदृशम्' इति पञ्चपदया ऐन्द्र्या पङ्क्त्या ॥ इन्द्रात्मना स्तूयते । हे मघवन् इन्द्र, सुसंदृशं सुष्ठ्वनुग्रहदृष्ट्या सर्वस्य द्रष्टारम् । यद्वा—शोभना संदृष्टिर्यस्य द्रष्टॄणां तादृशं त्वां वयं मन्दिषीमहि तर्पयामः । आमन्त्रितस्याविद्यमानवत्त्वात् (पा ८·१·७२) निघाताभावः (द्र. पा ८·१·१८,२८) । "लिङाशिषि" (पा ३·४·११६) इत्यार्धधातुकत्वाल्लसार्वधातुकानुदात्तत्वाभावः । त्वं च संतृप्तः पूर्णवन्धुरः अस्माभिर्दत्तैः हविर्भिः पूरितरथपृष्ठः स्तुतः च अस्माभिरार्त्मीयैर्वा बन्दिभिः नूनं प्र यासि, इत्थं कृतकृत्यो यातुमारभसे इति तर्कयामि । पञ्चमो लकारः । प्रजायाः नूनं कृतकृत्य एव वशान् इष्टान् देशान् अनु लक्षीकृत्य प्रयाहि अनुक्रमेण वा । कथं याहि इत्याह—योजा योजयित्वा । निपातोऽयं योजयित्वेति समानार्थः । [3-]ते हरी तवाश्वौ[-3] । नु इति क्षिप्रनाम पुराणवचनो वा । पुरातनी या तव पुराणप्रक्रियेति द्योत्यते । यद्वा—योजा योजनी योगकरी [यौजनीयौ गत्वरौ] क्षिप्रं वाहनार्थं रथे । ण्यन्तात् कर्मणि घञ् । "सुपां सुलुक्°" (पा ७·१·३९) इत्याकारः । लोटि वा विकरणव्यत्ययेन शप् । वर्णव्यत्ययेन तस्याकारः । क्षिप्रं हरी यानार्थं योजयेत्यर्थः ॥

---

स्वस्वभागमनतिक्रम्य हृष्टा भवत ॥ मन्दध्वमिति पदस्याभिप्रायं व्याचष्टे—"अत्र पितरो यथाभागं मन्दध्वमित्याह । ह्रीका हि पितरः" (तैब्रा १·६·९) इति । यस्मात् पितरो लज्जाशीलास्तस्मात् स्वस्वभागादूर्ध्वं लज्जां वारयितुं विस्रम्भेण मन्दध्वमित्युच्यते ॥ विधत्ते—"उदञ्चो निष्क्रामन्ति । एषा वै मनुष्याणां दिक् । स्वामेव तद्दिशमनु निष्क्रामन्ति" (तैब्रा १·६·९) इति । पितृत्वदशायां दक्षिणा दिक् प्राप्ता । ततः पूर्वं मनुष्यदशायामुत्तरा दिगेव परिशिष्यते ॥

**सुसंदृशमिति** ॥ आहवनीयोपस्थानमन्त्रपाठस्तु—'सुसंदृशं त्वा वयं मघवन् मन्दिषीमहि । प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु । योजा न्विन्द्र ते हरी' इति ॥ हे मघवन्, सुसंदृशं सुष्ठु कटाक्षवीक्षणेनास्मान् पश्यन्तं त्वां मन्दिषीमहि वयं तर्पयामः । त्वमप्यस्मद्दत्तैर्हविर्भिः पूर्णवन्धुरः परिपूरितरथपृष्ठोऽस्माभिः स्तुतः सन् वशान् अभीष्टान् देशाननुलक्ष्य नूनं प्र यासि प्रायेणाऽऽगमिष्यसि । हे इन्द्र, ते हरी तवाश्वौ योजा नु रथे नियुक्तौ हि ॥ विधत्ते—"आहवनीयमुपतिष्ठन्ते । न्येवास्मै

---

२. मै-°स्वप्नगतिषु । ३-३. त्रि.मै.-ते हरितावश्वौ ।

अक्षन्नमीमदन्त ह्यवं प्रिया अंधूषत ।
अस्तोंषत स्वभानवो विप्रा नविंष्ठया मती । योजा न्विन्द्र ते हरीं ॥

अक्षन् । अमीमदन्त । हि । अवेति । प्रियाः । अधूषत ॥
अस्तोंषत । स्वभानव इति स्व—भानवः । विप्राः । नविष्ठया । मती ॥
योजा । नु । इन्द्र । ते । हरी इति ॥

गार्हपत्यमुपतिष्ठते—‘ अक्षन्नमीमदन्त ’ इति पञ्चपदया पङ्क्त्या । ह्यन्तः प्रथमः पादः ॥ अक्षन् भुक्तवन्तः । अदेर्लुङि “ लुङ्सनोर्घस्लृ ” ( पा २·४·३७ ) इति घस्लादेशः । “ मन्त्रे घस° ” ( पा २·४·८० ) इत्यादिना च्लेर्लुक् । “ घसिभसोर्हलि च ” ( पा ६·४·१०० ) इत्युपधालोपः । “ शासिवसिघसीनां च ’ ( पा ८·३·६० ) इति षत्वम् । अमीमदन्त अतृप्यन् । मद तृप्तियोगे चौरादिकः । तिङः परत्वान्न निहन्यते, हियोगाद्वा ( पा ८·१·५६ )। किं च— प्रियाः तनूः अव अधूषत अकम्पयन् भोजनस्य सादृगुण्यमनुस्मृत्येव । धूञ् कम्पने सिचि

तद्धुनुवते । यत्सत्याहवनीये । अथान्यत्र चरन्ति ” ( तैब्रा १·६·९ ) इति । आहवनीये पुरोऽवस्थिते सति तमुपेक्ष्याथ तदाऽन्यत्र पैतृकवेदिमध्यस्थेऽग्नौ चरन्तीति यत्तेनास्मै निह्नुवत एनमाहवनीयमपलपन्त्येव [३०]तत्क्षमापणायोपस्थानमित्यर्थः ॥ उपस्थानस्यावधिं विधत्ते—“ आ तमितोरुपतिष्ठन्ते । अग्निमेवोपद्रष्टारं कृत्वा । पितॄन्निरवदयन्ते ” ( तैब्रा १·६·९ ) इति । आ तमितोरा ग्लानेरनुच्छ्वासेन मन्त्रमुच्चारयता यावता कालेन निरोधरूपा ग्लानिर्भवति तावदुपस्थातव्यम् । तेनोपस्थानेनाग्निमेव साक्षिणं कृत्वा पितॄन् स्वभागप्रदानेन विसृष्टवन्तो भवन्ति ॥ मन्त्रगतस्य सुसंदृशमित्येतस्याभिप्रायं व्याचष्टे—“ अन्तं वा एते प्राणानां गच्छन्ति । य आ तमितोरुपतिष्ठन्ते । सुसंदृशं त्वा वयमित्याह । प्राणो वै सुसंदृक् । प्राणमेवाऽऽत्मन् दधते ” ( तैब्रा १·६·९ ) इति । श्वासनिरोधेन ग्लानिं प्राप्तेषु कटाक्षनिरीक्षणं नाम प्राणनिरोधपरिहार तदेतदभिप्रेत्य ‘ प्राणो वै सुसंदृक् ’ इत्युच्यते । योऽयं परिहृतनिरोधः प्राणः, स एवैन्द्रस्य कटाक्षः ‘ तं कुर्वन्तं त्वाम् ’ इति मन्त्रे योजनीयम् ॥ योजेति पदस्याभिप्रायमाह— “ योजा न्विन्द्र ते हरी इत्याह । प्राणमेव पुनरयुङ्क्त ” ( तैब्रा १·६·९ ) इति । यथा त्वदीयावश्वौ रथे युक्तावेवं प्राणमस्मासु योजयेत्यभिप्रायः ॥

अक्षन्निति ॥ कल्पः—“ अथ गार्हपत्यमुपतिष्ठन्ते । अक्षन्नमीमदन्त ह्यव प्रिया अधूषत अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी इति ” ( बौश्रौ ५·१५ ) इति ॥ अक्षन् पितरो हविरशितवन्तः । अमीमदन्त भृशं हृष्टाः हि यतः प्रियाः तनूः अव अधूषत हविर्भोजन सौकर्येण शिरःप्रभृत्यङ्गान्यकम्पयन्त । स्वभानवः [३१]वपुषि जनितेन[३१] स्वकीयेन तेजसा भासमानाः विप्राः भोजनतृप्त्या ब्राह्मणसदृशाः सन्तः नविष्ठया मती अतिशयेन नूतनया बुद्ध्या अस्तोषत भृशमिष्टमेतदित्यादिवचनैः स्तुतिं कृतवन्तः । योजा इत्यादि व्याख्यातम् ॥ विधत्ते—“ अक्षन्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते ” ( तैब्रा १·६·९ ) इति ॥ ननु ‘ अक्षन् ’ इत्यादिमन्त्रः पितृप्रतिपादक

३०. तं.म५-ततः क्षमा° । ३१-३१. तं.म५-पुष्टिजनितेन; म४-वृष्टिजनितेन । ३२. इ.उ.पा मिष्टमेत°; तं. म४.म५-मृष्टमे° ।

**अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः ।**
**परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः ।**

अक्षन् । पितरः । अमीमदन्त । पितरः । अतीतृपन्त । पितरः । अमीमृजन्त । पितरः ॥
परेति । इत । पितरः । सोम्याः । गम्भीरैः । पथिभिरिति पथि—भिः । पूर्व्यैः ॥

व्यत्ययेन गुणाभावः। "छन्दस्युभयथा" (पा ३·४·११७) इति सार्वधातुकत्वेन, सिचोऽङित्वाद्वा । अपि च—विप्राः मेधाविनः विशेषज्ञाः स्वभानवः [4]स्वायत्तदीप्तयः अस्तोषत स्तुवन्ति, भोजनम् अहो दत्तं [5]स्वादु मुहुः श्रद्धया चेति। नविष्ठया नप्तृ(?)तमया। णु स्तवने। तृजन्तात् "तुश्छन्दसि" (पा ५·३·५९) इतीष्ठन्प्रत्ययः। "तुरिष्ठेमेयःसु" (पा ६·४·१५४) इति तृलोपः। मती मत्या। "सुपां सुलुक्" (पा ७·१·३९) इति [6]पूर्वसवर्णदीर्घः। "मन्त्रे वृष°" (पा ३·३·९६) इति क्तिन उदात्तत्वम्। 'योजा नु' इत्यादि गतम् ॥

अन्वाहार्यपचनमुपतिष्ठते—'अक्षन् पितरः' इति ॥ अक्षन् भुक्तवन्तः पितरः पित्रादयः अमीमदन्त तृप्ताश्चाभूवन्। अतीतृपन्त अस्मांश्चातर्पयन्। ण्यन्ताल्लुङि च्लेश्चङि "उरत्" (पा ७·४·६६) इत्यत्वम्। अमीमृजन्त शोधितवन्तः अस्मान् ॥

पितॄन् प्रवाहयति—'परेत' इति पञ्चपदा बृहती ॥ हे पितरः, ते यूयं परेत संप्रति गृहान् प्रति गच्छत। सोम्याः सोमार्हाः। "सोममर्हति" (पा ४·४·१३७) इति यः।

उपस्थेयस्तु गार्हपत्य इति वैयधिकरण्यमाशङ्क्य मन्त्रस्यापेक्षितशेषपूरणेन वैयधिकरण्यपरिहारं श्रुतिरेव दर्शयति— "अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वावैतदाह" (तैब्रा १·६·९) इति। पितरो भुक्तवन्तो हृष्टाश्च, अथ तदा साक्षिणं त्वामुपतिष्ठामह इत्येवं मन्त्रवाक्यमाह। मन्त्रस्थौ मघवन्निन्द्रेत्येतावपि शब्दावग्निपरत्वेन व्याख्येयौ। धनवान् परमैश्वर्ययुक्त इति तयोरर्थः ॥

**अक्षन्निति** ॥ [33]कल्पः—"अथ[33] प्राचीनावीतं कृत्वाऽन्वाहार्यपचनमभिप्रपद्यन्तेऽक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितर इति" (बौश्रौ ५·१५) इति ॥ अतीतृपन्त अस्मांश्च तर्पयन्तः। अमीमृजन्त अस्माञ्छोधितवन्तः ॥ अत्र सूत्रकारः शाखान्तरमन्त्रमपि विनियुङ्क्ते— "अमीमदन्त पितरः सोम्या इत्या तमितोरुपतिष्ठन्ते" (द्र. आपश्रौ १·९·५) इति ॥ तदेतदुपस्थानं विदधानः पूर्ववद्वैयधिकरण्यं परिहरति—"अमीमदन्त पितरः सोम्या इत्यभिप्रपद्यन्ते। अमीमदन्त पितरोऽथ त्वाऽभिप्रपद्यामह इति वावैतदाह" (तैब्रा १·६·९) इति ॥

**परेतेति** ॥ कल्पः—"परेत पितरः सोम्या इति प्रवाहण्या पितॄन् प्रवाहयति" (आपश्रौ १·१०·५) इति। पाठस्तु—'परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितॄन्त्सुविदत्राꣳ अपीत

४. त्रि–सुदीप्तयः। ५. मै–'स्वादु' नास्ति। ६. ति.त्रि.मै—पूर्वसवर्णः।

३३. पा–'कल्पः अथ' नास्ति; ना.द्वा–'अथ' नास्ति; म४–'कल्पः' नास्ति।

अथा॑ पि॒तॄन्त्सु॑वि॒दत्रा॒ꣳ अपी॑त य॒मेन॒ ये स॑ध॒मादं॒ मद॑न्ति ॥

मनो॒ न्वा हु॑वामहे नाराश॒ꣳसेन॒ स्तोमे॑न पि॒तॄणां॒ च॒ मन्म॑भिः ॥

अथ॑ । पि॒तॄन् । सु॒वि॒दत्रा॒निति॑ सु–वि॒दत्रा॑न् । अपी॑ति । इ॒त ।

य॒मेन॑ । ये । स॒ध॒मा॒दमिति॑ सध–माद॑म् । मद॑न्ति ॥

मनः॑ । नु । एति॑ । हु॒वा॒म॒हे॒ । ना॒रा॒श॒ꣳसेन॑ । स्तोमे॑न । पि॒तॄणाम् । च॒ । मन्म॑भि॒रिति॒ मन्म॑–भिः॒ ॥

गम्भीरैः सुलभान्ततोयैः पथिभिः मार्गैः पूर्व्यैः पूर्वकृतैः प्रहतैः इत्यर्थः । "पूर्वैः कृतमिनयौ च" ( पा ४·४·१३३ ) इति यः । अथ तथा गत्वा ते यूयं पितॄन् अस्मत्पूर्वपुरुषान् सुविदत्रान् शोभनज्ञानान् कल्याणमतीनिति यावत् । सुष्ठु विन्दन्तीति सुविदत्राः । 'सुञि विदेः कत्रन्' ( द्र. उ ३९५ ) इति कत्रन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ )। "दीर्घादटि समानपादे" ( पा ८·३·९ ) इति संहितायां रुत्वम् । "निपातस्य च" ( पा ६·३·१३६ ) इत्यथेत्यस्य दीर्घत्वम् । तान् अपि इत अनुप्राप्नुत एकीभवत । पुनश्च ते विशेष्यन्ते—यमेन ये सधमादं सहस्थानस्थं मदं यथा तथा मदन्ति माद्यन्ति तेन सह मोदन्ते, तानपीतेति । "सध मादस्थयोः" ( पा ६·३·९६ ) इति सधादेशः । चौरादिकान्मदेर्ण्यन्तात्क्विप् । क्रियाविशेषणत्वेऽपि व्यत्ययेन नपुंसकत्वाभावः । णमुलन्तो वा यमेन सहाभीक्ष्णं मदन्तीति माद्यतेः व्यत्ययेन शप् । मादयतेर्वा व्यत्ययेन परस्मैपदम् । "छन्दस्युभयथा" ( पा ३·४·११७ ) इति आर्धधातुकत्वाण्णिलोपः ॥

अथ तैः सह तं देशं गतमिव कृत्वा मन आह्वयति—'मनः' इति तिसृभिर्गायत्रीभिः ॥ मनः आ हुवामहे आह्वयामः । पूर्ववत् संप्रसारणम् । नु क्षिप्रं पूर्ववदिति वा । नाराशंसेन नराणां सर्वेषामपि शंसनीयेन मनोहरेण स्तोमेन मानसेन पितॄणां च मन्मभिः मननीयैरिष्टतमैः स्वधादिभिः पदैर्युक्तेन स्तोमेनाह्वयामहे ॥

**यमेन ये सधमादं मदन्ति' इति ॥ हे सोम्याः पितरः, पथिभिः परेत परावृत्य गृहान् गच्छतेति । कीदृशैः पथिभिः ? गम्भीरैः सुलभान्ततोयैः पूर्व्यैः पूर्वं कृतैः प्रहतैः । अथ तदा गृहान् गत्वा तस्मिन् पितृलोके यमेन साकं ये पितरः सधमादं सहस्थानस्थमादं यथा भवति तथा मदन्ति हृष्यन्ति तान् सुविदत्रान् सुष्ठु वेदितॄंश्चिरवासेन तत्रत्यवृत्तान्तज्ञान् पितॄन् अपि यूयम् इत प्राप्नुत ॥**

**मन इति ॥ कल्पः—"मनो न्वा हुवामह इति मनस्वतीभिरुपतिष्ठते" (आपश्रौ १·१०·४) इति । तिसृषु ऋक्षु प्रथमायाः पाठस्तु—'मनो न्वा हुवामहे नाराशꣳसेन स्तोमेन पितॄणां च मन्मभिः' इति ॥ नाराशंसेन मनुष्यप्रशंसायोग्येन स्तोमेन वाक्यसमूहेन पितॄणाम् अपि मन्मभिः मननीयैः वाक्यैः मनः पितृयज्ञानुष्ठानपरं चित्तं नु क्षिप्रम् आ हुवामहे आह्वयामः ॥**

७. ति–विदन्ति; मै–विन्दति । ८. मै–सार्वधातु° ।

आ (२) न॑ एतु मनः पुनः क्रत्वे दक्षा॑य जीवसे॑। ज्योक् च सूर्यं॑ दृशे ॥
पुन॑र्नः पितरो मनो॑ ददा॑तु दैव्यो॒ जनः। जीवं व्रातँ॑ सचेमहि ।

एति॑ (२) । नः । एतु । मनः । पुनः । क्रत्वे॑ । दक्षा॑य । जीवसे॑ ॥ ज्योक् । च । सूर्य॑म् । दृशे ॥ पुनः । नः । पितरः । मनः । ददा॑तु । दैव्यः । जनः ॥ जीवम् । व्रातम् । सचेमहि ॥

अथ द्वितीया ॥ तस्मात् नः अस्मान् पुनः आ एतु । किं प्रयोजनम् ? क्रत्वे कर्मणे कर्मानुष्ठानार्थम् । "जसादिषु वावचनं प्राङ्णौ चङ्युपधायाः" ( पा ७·३·१०९ वा १ ) इति गुणाभावः । दक्षाय क्रियानुष्ठानसामर्थ्याय । तदपि किमर्थमित्याह— जीवसे जीवितुं दीर्घमायुर्यथा स्यात् । "तुमर्थे सेसेन्" ( पा ३·४·९ ) इति असेन्प्रत्ययः । किमेतावदेव प्रयोजनम् ? ज्योक् चिरं सूर्यं दृशे द्रष्टुं मोक्षार्थं चेत्यर्थः । स ह्यात्मेत्युक्तम् ( द्र. ऋसं १·११५·१ ), आत्मदर्शनाच्च मोक्ष इति, यथा— "आत्मा वा अरे द्रष्टव्यः" ( बृउ २·४·५ ) इति । "दृशे विख्ये च" ( पा ३·४·११ ) इति केप्रत्ययान्तो निपात्यते ॥

अथ तृतीया ॥ पुनः नः अस्माकं मनः हे पितरः सर्वेषां पातारः । व्यत्ययेन निघाताभावः । युष्मत्प्रसादेन दैव्यः दिवि भवः जनः ददातु । "देवाद्यञञौ" ( पा ४·१·८५ वा ३ ) इति यञ् । वचनव्यत्ययो वा । पितरो ददातु । [9]ततश्च वयं त्वत्प्रसादेन [10]एव जीवं जीवितं व्रातं संघातात्मानं वर्षशतप्रमाणं सचेमहि सेवेमहि, [11]तादृशं जीवितं लभेमहीति ॥

एति ॥ अथ द्वितीयामाह[34]—'आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे' इति ॥ क्रत्वे कर्मानुष्ठानाय दक्षाय [35]तत्तत्सामर्थ्याय जीवसे जीवितुं ज्योक् चिरं सूर्यं दृशे द्रष्टुं च योग्यं मनः आगत्य नः अस्मान् पुनः एतु असकृत् प्राप्नोतु ॥

पुनरिति ॥ अथ तृतीयामाह[36]—'पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातँ सचेमहि' इति ॥ हे पितरः, दैव्यः जनः देवसंबन्धिपुरुषसमूहः नः अस्माकं मनः कर्मानुष्ठानपरं चित्तं [37]पुनः ददातु असकृत् प्रयच्छतु । वयमपि व्रातं संवत्सरसंघातरूपं जीवं जीवनं सचेमहि सेवेमहि ॥

यदिति ॥ कल्पः—"यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते" ( आपश्रौ १·१०·६ ) इति ॥ पाठस्तु—'यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिँसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः

९. तं.ति–पुनश्च । १०. मै–'एव' नास्ति । ११. मै–तादृश° ।

३४. आ.क.ना.हा–द्वितीया । ३५. तं.म४.म५–तत्सामर्थ्याय । ३६. आ.क.ना.हा–तृतीया । ३७. आ.क.ना.हा–'पुनः' नास्ति ।

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम ।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु
दुरिता यानि चकृम करोतु मामनेनसम् ॥

[ हरी मन्मभिरा चतुश्चत्वारिꣳशच्च ]

यत् । अन्तरिक्षम् । पृथिवीम् । उत । द्याम् । यत् । मातरम् । पितरम् । वा । जिहिꣳसिम । अग्निः । मा । तस्मात् । एनसः । गार्हपत्य इति गार्ह—पत्यः । प्रेति । मुञ्चतु । दुरितेति दुः—इता । यानि । चकृम । करोतु । माम् । अनेनसम् ॥ ५ ॥

[ मैसं १·१०·१,३; कासं ९·६ ; कपिसं ८·९ ; वासं ३·५१–५५ ]

गार्हपत्यसमीपं गच्छन् जपति—'यदन्तरिक्षम्' इति षट्पदा शक्करी । केचित् पङ्क्तिमाहुः ॥ vयत् यस्मिन् कर्मणि येन प्रतिषिद्धकरणेन कर्मलोपेन वा vयत् vअन्तरिक्षम् vपृथिवीम् अपि च vद्यां द्युलोकं च vजिहिंसिम, येन वा vमातरं vपितरं वा जिहिंसिम हिंसितवन्तः हिंसितारस्तेषां संभवेम । छान्दसो लिट् । अयम् vअग्निः vगार्हपत्यः vतस्मात् तन्निमित्तात् vएनसः पापात् vप्र vमुञ्चतु । आत्माधीनत्वात् सर्वासामात्मन्येकवचनम् । vयानि चान्यानि अज्ञातस्वरूपाणि दुश्चरितानि दुःखादिसाधनानि पापानि वयं vचकृम यैर्वयं सर्वस्य लोकस्य हिंसितारः संभवाम; तस्माच्चैनसो मामग्निः प्र मुञ्चत्वेव । "शेश्छन्दसि बहुलम्" ( पा ६·१·७० ) इति शेर्लोपः । एवं सर्वप्रकाराणां मया मदीयैश्च कृतानां पापानां विमोचनेन vमाम् vअनेनसं vकरोतु अयमग्निरिति ॥

इत्यष्टमे पञ्चमोऽनुवाकः ॥

प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम्' इति ॥ पृथिव्यादींल्लोकान्मनसा vजिहिंसिम हिंसितुमिच्छेम vयत् vमातरं vपितरं vवा हिंसितुमिच्छेमेति यत् vतस्मात् सर्वस्मात् vएनसः गार्हपत्यो मां vप्र vमुञ्चतु । [38]अन्यान्यपि दुरितानि vयानि vचकृम तेभ्योऽपि मुञ्चतु । vमाम् vअनेनसं सर्वपापरहितं vकरोतु ॥ यदुक्तमापस्तम्बेन— "उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन् पर्येति" (आपश्रौ ८·१६·४) इति, तदेतद्विधत्ते—"अपः परिषिञ्चति । मार्जयत्येवैनान् । अथो तर्पयत्येव" (तैब्रा १·६·९) इति । एनान् पितॄन् ॥ तद्वेदनं[39] प्रशंसति—"तृप्यति प्रजया पशुभिः । य एवं वेद" (तैब्रा १·६·९) इति ॥ चतुर्थप्रयाजवद्बर्हिर्नामकं प्रथमानूयाजं निषेधति—

३८. इ.उ.-अस्यान्यान्यपि । ३९. तं-तद्वद्वेनम् ।

" अपबर्हिषावनूयाजौ यजति । प्रजा वै बर्हिः । प्रजा एव मृत्योरुत्सृजति " ( तैब्रा १.६.९ ) इति । बर्हिर्यागवर्जनात् ॥ प्रयाजानूयाजान् प्रशंसति--" चतुरः प्रयाजान् यजति । द्वावनूयाजौ । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति " ( तैब्रा १.६.९ ) इति । सूत्रकारो--" युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति " ( आपश्रौ २.५.१० ) इति प्रैषानुसारेण गार्हपत्यसमीप उपविष्टायाः पत्न्याः पूर्णपात्रानयनपर्यन्तं यदन्वासनमवोचत् तच्च पत्नीसंयाजांश्च चोदकप्राप्तान् प्रतिषेधति--" न पत्न्यन्वास्ते । न संयाजयन्ति । यत्पत्न्यन्वासीत । यत्संयाजयेयुः । प्रमायुका स्यात् । तस्मान्नान्वास्ते । न संयाजयन्ति । पत्नियै गोपीथाय " ( तैब्रा १.६.९ ) इति ॥

अत्र विनियोगसंग्रहः—

" एतत्त इति दत्ते त्रीन् वेद्याः कोणेषु पिण्डकान् ।
ब्रूयुरत्रेत्युपस्थानं पूर्वस्याग्नेः सुसंदृशम् ॥ १ ॥
अक्षन्निति प्रतीचोऽग्नेस्तथाऽक्षन् दक्षिणानलम् ।
परेतेति प्रवाह्याथ मनआद्यैरुपस्थितिः ॥
यत्पश्चिमाग्न्युपस्थानं मन्त्रा द्वादश वर्णिताः " ॥ २ ॥ इति ।

अथ मीमांसा ॥ दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

" नावघातोऽवघातो वा धानानां नाविनष्टये ।
न नाशः क्रमबाधेऽतो नावघातोऽत्र बाध्यते ॥ " ( जैन्या १०.२.४२ ) ॥

महापितृयज्ञे हविः किंचिच्छ्रूयते—" पितृभ्यो बर्हिषद्भ्यो धानाः " ( तैसं १.८.५ ) इति । धानाशब्देन भृष्टं धान्यमभिधीयते । तासां धानानामवघाते सति सक्तुभावापत्तेर्धानात्वमेव विनश्येत् । अतस्तासामविनाशाय नास्त्यवघात इति पूर्वः पक्षः । ' धाना अवहन्तव्याः ' इति ह्यत्र चोदकवाक्यम्, तस्मिंश्च वाक्ये भर्जनसंपादितं धानात्वं पूर्वभावि, पश्चाद्भावी त्ववघात इति क्रमः प्रतीयते । तं क्रमं[४०] बाधित्वा प्रथमतोऽवघाते सति नास्ति धानात्वनाशः । अवघातस्य पदार्थस्य बाधात् वरं तद्धर्मस्य क्रममात्रस्य बाधनम् । तस्मादवहन्तव्याः ॥

[४१]एतदेवाधिकरणं वार्तिककारमतेनाऽऽरचयति--

" पेषणं नूतनं मन्थे प्राकृतं वा क्रमान्तरात् ।
नूतनं प्राकृतं धर्ममात्रबाधस्य[४२] लाघवात् ॥ " ( जैन्या १०.२.४३ ) ॥

महापितृयज्ञ एवं श्रूयते--" पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् " ( तैसं १.८.५ ) इति । मृतवत्सा धेनुरभिवान्या । द्रवद्रव्ये[४३] प्रक्षिप्य प्रथिताः सक्तवो मन्थः । तत्र यत्पेषणं तन्न प्राकृतम् । कुतः ? क्रमव्यत्यासात् । प्रकृतौ हि प्रथमतः पेषणं पश्चात् पुरोडाशश्रपणम् । अत्र तु प्रथमतः श्रपणेन धानाः संपाद्य पश्चात् सक्तुभावाय पेषणम् । तस्मान्नूतनमिति प्राप्ते ब्रूमः--चोदकप्राप्तप्राकृतपेषणतत्क्रमयोरुभयोर्बाधे गौरवात् क्रममात्रं बाध्यम् । पेषणपदार्थस्तु स एवेति तद्धर्मा दृषन्मन्त्रा इत्यादयोऽत्र कर्तव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

४०. आ.क.ना.हा–' क्रमम् ' नास्ति । ४१. आ.क.ना.हा–तदेवा° । ४२. तं–'बाध्यस्य । ४३.आ.क.ना.हा–दुग्धे द्रव्ये ।

**प्रतिपूरुषमेकंकपालान्निर्वपत्येकमतिरिक्तं यावन्तो गृह्याः स्मस्तेभ्यः कमंकरं पशूना॰
शर्मासि शर्म यजमानस्य शर्म मे यच्छैकः**

प्रतिपूरुषमिति प्रति-पूरुषम् । एकंकपालानित्येकं-कपालान् । निरिति । वपति । एकम् । अतिरिक्तमित्यति-रिक्तम् । यावन्तः । गृह्याः । स्मः । तेभ्यः । कम् । अकरम् । पशूनाम् । शर्म । असि । शर्म । यजमानस्य । शर्म । मे । यच्छ । एकः ।

---

अथ त्र्यम्बकान् विदधाति—'प्रतिपूरुषमेककपालान्निर्वपति' इति ॥ "अथौषधय इमं देवं त्र्यम्बकैरयजन्त" ( तैब्रा १·४·१० ) इत्यादि ब्राह्मणम् । पूरुषं पूरुषं [v]प्रतिपूरुषं, पुरुषशब्दपर्यायः पूरुषशब्दः । उपलक्षणत्वात् स्त्रियोऽपि गृह्यन्ते । यजमानस्य यावन्तोऽमात्याः सस्त्रीकाः तावतः [v]एककपालान् [v]निर्वपति; [v]एकम् [v]अतिरिक्तं संख्यया निर्वपेत् । "गतिरनन्तरः" ( पा ६·२·४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । "जाता एव प्रजा रुद्रान्निरवदयते" ( तैब्रा १·६·१० ) इत्यादि ब्राह्मणम् ॥

त्र्यम्बकानादाय गार्हपत्यमुपतिष्ठते—'यावन्तः' इति ॥ गृहे भवा गृह्याः । व्यत्ययेनाद्युदात्तत्वाभावः । [v]यावन्तः यत्परिमाणा वयं [v]गृह्याः पुमांसः स्त्रियश्च [v]स्मः भवामः; [v]तेभ्यः सर्वेभ्योऽस्मभ्यं [v]कं सुखमेभिस्त्र्यम्बकैः [v]अकरं करोमि । यद्वा—सर्वेभ्यः सुखकरं त्रैयम्बक-

---

पञ्चमे पितृयज्ञोऽभिहितः । षष्ठे त्र्यम्बकपुरोडाशाः साकमेधशेषा उच्यन्ते ॥

**प्रतिपूरुषमिति** ॥ तान् विधत्ते—'प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्तम्' इति ॥ तद्विधिं प्रशंसति—"प्रतिपूरुषमेककपालान्निर्वपति । जाता एव प्रजा रुद्रान्निरवदयते । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते" ( तैब्रा १·६·१० ) इति । करम्भवाक्यवत् [1]नैर्ऋतवाक्यवच्च व्याख्येयम् ॥

**यावन्त इति** ॥ मुख्यविधिसंनिधौ 'यावन्तः' इत्यादय एकादश मन्त्राः आम्नाताः ॥ कल्पः—"यावन्तो गृह्याः स्मस्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति" ( आपश्रौ ८·१७·२ ) इति ॥ गृहे भवा मनुष्याः [v]गृह्याः, ते वयं [v]यावन्तः [2]इह स्थिताः [v]तेभ्यः सर्वेभ्यः [v]कं सुखम् [v]अकरम् अकार्षम् ॥ अर्पितेषु पुरोडाशेषु चोदकप्राप्तमभिघारणं निषेधति—"नाभिघारयति । यदभिघारयेत् । अन्तरवचारिण॰ रुद्रं कुर्यात्" ( तैब्रा १·६·१० ) इति । रुद्रमनिष्टकारिणं क्रूरदेवम् । अन्तरवचारिणं गृहस्यान्तःप्रविश्यास्मानवरोद्धुं चरन्तम् ॥

**पशूनामिति** ॥ कल्पः—"तानभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यामासाद्य पशूना॰ शर्मासीति मूते समावपति" ( आपश्रौ ८·१७·५ ) इति ॥ कर्षकैर्व्रीह्यादिबीजानि संग्रहीतुं तृणकटादिना पुटबन्धनं क्रियते तदिदं मूतशब्देनोच्यते ॥ पाठस्तु—'पशूना॰ शर्मासि शर्म यजमानस्य शर्म मे यच्छ' इति ॥ हे मूत, भक्ष्यैस्तृणादिभिर्बीजैश्चोपेतत्वात् [v]पशूनां [v]शर्म [v]असि [3]सुखप्रदमसि[3] । अतो [v]यजमानस्य [v]मे अध्वर्योश्च सुखं [v]यच्छ ॥

---

१. इ.उ.म५.–नैर्ऋत्य॰ । २. इ.उ.म४.म५.–'इह' नास्ति । ३–३. आ.क–'सुखप्रदमसि' नास्ति ।

एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष

एव । रुद्रः । न । द्वितीयाय । तस्थे । आखुः । ते । रुद्र । पशुः । तम् । जुषस्व ।

यागारम्भमेतत् कर्म करोमीति । छान्दसो लुङ् । "मन्त्रे घस°" ( पा २·४·८० ) इति च्लेर्लुक् । पुरुषव्यत्ययो वा, कं कुर्वीतेति । कस्मादेवमुच्यसे ? इति चेत्—[v]पशूनां सर्वेषां [v]शर्म सुखं शरणं वा त्वमसि । "नामन्यतरस्याम्" ( पा ६·१·१७७ ) इति नाम उदात्तत्वम् । किं च [v]यजमानस्य च [v]शर्म असि स त्वं मम च [v]शर्म [v]यच्छ देहि ॥

त्र्यम्बकात् सकृत् सकृदवदाय जुहोति—'एक एव' इति ॥ असहायः [v]एव ऐश्वर्येण [v]रुद्रः तुल्योत्कृष्टरहितः; परस्मिन् पदे स्थितत्वात् । तदेव स्पष्टयति—[v]न [v]द्वितीयाय स्वव्यतिरिक्ताय कस्मैचिदपि [v]तस्थे तिष्ठते आत्मानं प्रकाशयति । यथा द्वितीयेन स्वप्रभावो न परिच्छिद्यते तथैव सर्वदा भवति । तस्मात् सर्वदोत्कृष्टरहितत्वादेक एवेति । "श्लाघह्नुङ्स्थाशपाम्°" ( पा १·४·३४ ) इति संप्रदानत्वम् । "प्रकाशनस्थेयाख्ययोश्च" ( पा १·३·२३ ) इत्यात्मनेपदम् । यद्वा—एक एव रुद्र इति निःसामान्यमैश्वर्यं प्रतिपादयति । यस्मादेवं तस्मादेष देवः कदाचिदपि द्वितीयाय सहायाय न तस्थे सहायार्थं न तिष्ठतीति सहायापेक्षी न क्वचिदपि कार्येषु भवति इति । हे [v]रुद्र, [v]आखुः मूषकः [v]पशुः भागभूतः । श्रुतिप्रामाण्यादवगम्यते । यद्वा—आखुः उत्करस्थः पुरोडाशः तव पशुः पशुवत् प्रीतिहेतुः । यथोक्तम्—"आखूत्कर एकं पुरोडाशमुपवपति[*]" इति । यद्वा—आखुस्थानीयस्तव पशुः द्विपाच्चतुष्पाच्च सर्वः; तस्मात् [v]तम् आखूत्करस्थं पुरोडाशं [v]जुषस्व । अपि च—हे रुद्र, स एवाखूत्करस्थस्तव भागः

**एक इति** ॥ कल्पः—"एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरेकोल्मुकं [4]धूपायद्धरति । उत्तरपूर्वमवान्तरदेशं गत्वा" ( आपश्रौ ८·१७·८–९ ) इति ॥ [v]रुद्रः जगति [v]एकः [v]एव अस्ति । [v]द्वितीयाय [v]न [v]तस्थे । द्वितीयो रुद्रो न कोऽप्यवस्थितः ॥ विधत्ते—"एकोल्मुकेन यन्ति । तद्धि रुद्रस्य भागधेयम् । इमां दिशं यन्ति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते" ( तैब्रा १·६·१० ) इति ॥

**आखुरिति** ॥ कल्पः—"आखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपत्यसौ [5]ते पशुरिति वा द्वेष्यं मनसा ध्यायन् यदि न द्विष्यात् आखुस्ते पशुरिति ब्रूयात्" ( आपश्रौ ८·१७·९–११ ) इति । आखूत्करो [6]मूषकैर्बिलादुद्धृतः पांसुराशिः । पाठस्तु—'आखुस्ते रुद्र पशुस्तं जुषस्व' इति ॥ हे [v]रुद्र, मूषकस्ते प्रियः [v]पशुः अतः [v]तं सेवस्व ॥ विधत्ते—"रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत । असौ ते पशुरिति निर्दिशेद्यं द्विष्यात् । यमेव द्वेष्टि । तमस्मै पशुं निर्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् । न ग्राम्यान् पशून् हिनस्ति । नाऽऽरण्यान्" ( तैब्रा १·६·१० ) इति । ( अपशुकायै ) आहुत्यै नातिष्ठत पशुरहितामाहुतिं नाङ्गीकरोतीत्यर्थः । यं द्विष्यात् तम् 'असौ' इति नामग्रहणेन निर्दिशेत् । तथा सति द्वेष्यमस्मै समर्पयत्येव ॥

[*]( आपश्रौ ८·१७·९ ) ४. । उ–धूमाय°; म४–धूपायो° ।　५. इ.उ.पा.म५.–'ते' नास्ति ।
६. इ.उ.म४–मूषक° ।

तें रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजं सुभेषजं (१) यथाऽसति । सुगं मेषाय मेष्यै

एषः । ते । रुद्र । भागः । सह । स्वस्रा । अम्बिकया । तम् । जुषस्व । भेषजम् । गवे । अश्वाय । पुरुषाय । भेषजम् । अथो इति । अस्मभ्यमित्यस्म–भ्यम् । भेषजम् । सुभेषजमिति सु–भेषजम् (१) । यथा । असति । सुगमिति सु–गम् । मेषाय । मेष्यै ।

सर्वत्रैयम्बकादानात्मकः; तस्मात्तमपि भगवत्या अम्बिकया देव्या [v]सह [v]जुषस्व । लक्षितलक्षणया स्वस्रा भगिनी लक्ष्यते । भगिन्या भगवत्या । यद्वा—स्वसृत्वेन सहजत्वं लक्ष्यते तेन चाविनाभावः । यद्वा—स्वात्मानं सरति भजत इति स्वसा देहार्धभूता । पृषोदरादिः (पा ६·३·१०९)। सुष्ठु वाऽऽत्मना अस्यते प्राप्यते इति स्वसा । अस गत्यादिषु । तस्मात् "सुञ्यसेर्ऋन्" (उ २६१) इति ऋन्प्रत्ययः । व्युत्पत्त्यनवधारणान्नावगृह्यते ॥

ततश्च त्वत्प्रसादादस्माकमित्थमस्त्वित्याशास्ते—'भेषजं गवे' इति पङ्क्त्या पञ्चपदया ॥ 'भेषजं गवेऽश्वाय' इति प्रथमः पादः । सर्वत्र जातावेकवचनम् । गोभ्योऽश्वेभ्यः पुरुषेभ्यश्च

एष इति ॥ कल्पः—"चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात् सकृत् सकृदवदायावदाय मध्यमेनान्तिमेन वा पलाशपर्णेन जुहोत्येष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहेति" (आपश्रौ ८·१७·१२–८·१८·१) इति । अत्र स्वाहाकारोऽध्याहृतः । हे [v]रुद्र, [v]एषः अवत्तः पुरोडाशानामंशस्तवावदीयमानः [v]भागः [v]तं भागं, [v]स्वस्रा भगिनीवद्धितकारिण्याऽम्बिकया पार्वत्या सह[7] [v]जुषस्व सेवस्व ॥ विधत्ते—"चतुष्पथे जुहोति । एष वा अग्नीनां पड्वीशो नाम । अग्निवत्येव जुहोति । मध्यमेन पर्णेन जुहोति । स्रुग्घ्येषा । अथो खलु । अन्तमेनैव होतव्यम् । अन्तत एव रुद्रं निरवदयते" (तैब्रा १·६·१०) इति । अग्नीनां पड्वीशः [8]पादवेप्रशस्थानम् । [9]यत्राग्नयः पुनः पुनः संचारेण प्रविशन्ति तादृश एवैष चतुष्पथः । अतस्तत्र होमेनाग्निवत्येव देशे हुतं[10] भवति । पलाशशाखायां,यानि त्रीणि पर्णानि तत्र मध्यमं पर्णं प्रशस्ततया स्रुग्रूपम् । वामदक्षिणपार्श्वस्थयोरन्यतरेण[11] होमेन रुद्रो यागभूमेः [12]अन्तान्निष्कासितो भवति ॥ 'सह स्वस्राम्बिकया' इत्यस्य मन्त्रभागस्य तात्पर्यं व्याचष्टे—"एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह । शरद्वा अस्याम्बिका स्वसा । तया वा एष हिनस्ति । यं हिनस्ति । तयैवैनं सह शमयति" (तैब्रा १·६·१०) इति । शरत्कालो हि पीनसज्वराद्युत्पादनेन हिंसकस्तद्वदियम् अम्बिकापि[13] हिंसिका । ततः शरदित्युच्यते । एष रुद्रस्तयैव सहायभूतया प्राणिनं हिनस्ति । [14]अतस्तया सह पुरोडाशभागसेवया तुष्टया तयैव [15]सहैवैनं [16]–रुद्रं शमयति–[16] । हिंसारहितं करोति ॥

भेषजमिति ॥ कल्पः—"भेषजं गवे सुभेषजमित्येताभ्यां चतुष्पथमग्निं परि षिञ्चति" (आपश्रौ ८·१८·२) इति । पाठस्तु—'भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजं सुभेषजं

७. आ.क.म५–सहांशम् । ८. आ.क.म५–पादप्रदेश° । ९. इ.उ–अत्राग्नयः । १०. इ.उ.म४.म५–हुतवान् । ११. म४–अन्यतरदन्तमं तेन;म ५–अन्यतरदन्तिमेन । १२. म४–अंते नि°; म५–अन्ततः । १३. आ.क–'अपि' नास्ति । १४. म४-ततः । १५. म.म५-सहैनम् । १६–१६. म४–यजमानं प्राणिनं शमयति ।

**अवा॑म्ब रु॒द्रम॑दिम॒ह्यव॑ दे॒वं त्र्य॑म्बकम् । यथा॑ नः॒ श्रेय॑सः॒ कर॒द्यथा॑ नो॒ वस्य॑सः॒ कर॒द्यथा॑ नः पशु॒मतः॒ कर॒द्यथा॑ नो व्यवसा॒यया॑त् ॥**

अवेति॑ । अ॒म्ब॒ । रु॒द्रम् । अ॒दि॒म॒हि॒ । अवेति॑ । दे॒वम् । त्र्य॑म्बक॒मिति॒ त्रि—अ॒म्ब॒क॒म् । यथा॑ । न॒: । श्रेय॑सः । कर॑त् । यथा॑ । न॒: । वस्य॑सः । कर॑त् । यथा॑ । न॒: । प॒शु॒मत॒ इति॑ पशु—मत॑: । कर॑त् । यथा॑ । न॒: । व्य॒व॒सा॒य॒या॒दिति॑ वि—अ॒व॒सा॒यया॑त् ॥

[V]भेषजम् औषधं [V]यथा [V]असति भवेत्; तथा जुषस्व । [V]अथो अपि च [V]अस्मभ्यं यथा [V]भेषजं रोगशमनं च भवेत्, [V]सुभेषजं शरीरसि(शु?)द्धयादिकारणं यथा भवेत्, [V]सुगं सुष्ठु गम्यं सेव्यं यथा भवेत् । सुष्ठु वा गम्यतेऽनेन सर्वमभिमतं यथा तथा तं जुषस्व । किं च मेषेभ्यो मेषीभ्यश्च भेषजं यथा स्यात् तथा जुषस्व । अस्तेर्लेटि शपो लुकि "लेटोऽडाटौ" ( पा ३·४·९४ ) इत्यडागमः । गोशब्दात् "सावेकाचः" ( पा ६·१·१६८ ) इति प्राप्तं विभक्त्युदात्तत्वं "न गोश्वन्°" ( पा ६·१·१८२ ) इति प्रतिषिध्यते ॥

इदानीमारोग्यानन्तरं धनसमृद्धयादिकमाशास्ते 'अवाम्ब' इति । षट्पदा जगती इयम् ॥ अत्र देवीं प्रत्याशास्ते । हे [V]अम्ब जगतां मातः, [V]देवं वयम् [V]अव [V]अदिमहि अवदानैस्तोषयामः । अवदानसाध्या देवतातृप्तिरवदानेन लक्ष्यते । छान्दसो लुङ् । व्यत्ययेनात्मनेपदम् । "स्थाघ्वोरिच्च" ( पा १·२·१७ ) इतीत्त्वकित्त्वे, "ह्रस्वादङ्गात्" ( पा ८·२·२७ ) इति सिचो लुक् । [V]त्र्यम्बकं च देवमवादिमहीत्येव । आदरार्थं द्वितीयं ब्रवीति गुणान्तरख्यापनार्थं वा । त्र्यम्बकमिति त्रीणि अम्बकानि लोचनानि यस्य । यद्वा—अबि शब्दे । अम्बका वेदाः, त्र्यम्बकः वेदत्रयीप्रतिपाद्यः । अथवा—अम गत्यादिषु ।

**यथाऽसति । सुगं मेषाय मेष्यै ' इति ॥ 'भेषजम्' 'सुभेषजम्' इत्येतौ मन्त्रयोरादी । हे रुद्र, [V]गवे अस्मदीयायै गोजात्यै [V]भेषजम् आरोग्यं कुरु । एवमन्यत्र । तात्कालिकं रोगोपशमनमात्यन्तिकं [१७]वा [V]सुभेषजं तत् [V]यथा [V]असति यथा भवति तथा कुरु । मेषो वाहकः । मेषी दोग्ध्री । तयोः [V]सुगं सुष्ठु गमनं रोगराहित्येन संचरणं यथा भवति तथा कुरु ॥ गवाश्वादिशब्दैः पश्वादयः सर्वेऽप्युपलक्ष्यन्त इत्याह— "भेषजं गव इत्याह । यावन्त एव ग्राम्याः पशवः । तेभ्यो भेषजं करोति" ( तैब्रा १·६·१० ) इति ॥**

**अवेति ॥ कल्पः—"अवाम्ब रुद्रमदिमहीति यजमानो जपति" ( आपश्रौ ८·१८·१ ) इति ॥ पाठस्तु—'अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् । यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्' इति । हे [V]अम्ब पार्वति, [V]रुद्रम् उद्दिश्य [V]अव [V]अदिमहि पुरोडाशावदानमकार्ष्म । त्रीण्यम्बकानि नेत्राणि यस्यासौ त्र्यम्बकस्तमुद्दिश्य [V]अव अदिमहि । आदरार्थं पुनर्वचनम् । किमर्थमवदानं [१८]कृतमित्युच्यते । असौ [V]रुद्रः [V][१९]यथा [V]नः अस्मान् [V]श्रेयसः अध्ययनादिभिः श्रेष्ठान्[२०] [V]करत् करोति, [V]वस्यसः वसुमत्तमान् [V]यथा करोति, [V]पशुमतः गवाश्वादियुक्तान् [V]यथा करोति,**

१७. म.४म५-तु । १८. म५-तदुच्यते । १९. आ-'यथा' नास्ति । २०. आ.क-'श्रेष्ठान्' इत्यस्यानन्तरं 'यथा' ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥
त्र्यम्बकमिति त्रि–अम्बकम् । यजामहे । सुगन्धिमिति सु–गन्धिम् । पुष्टिवर्धनमिति पुष्टि–वर्धनम् ।
उर्वारुकम् । इव । बन्धनात् । मृत्योः । मुक्षीय । मा । अमृतात् ॥

---

अमनहेतवोऽम्बाः द्यौरापः पृथिवी चेति, तदाराधनीयत्वात् । त्रयो वा अग्नयः तिस्रो वा गतयः त्रीणि वा ज्योतींषि । छान्दस इयङादेशः । तस्मादेवं महानुभावं देवं त्र्यम्बकमवादिमहि । किमर्थम् ? [V]यथा [V]नः अस्मान् [V]श्रेयसः विद्याधनपुत्रादिभिः प्रशस्यतरान् [V]करत् कुर्यात् तदर्थमित्यर्थः । पूर्ववल्लेटि शपो लुक् । [V]यथा [V]नः अस्मान् [V]वस्यसः वसीयसः वसुमत्तरान् कुर्यात् । वसुमच्छब्दादीयसुनि "विन्मतोर्लुक्" (पा ५·३·६५) । टिलोपः । छान्दस इकारलोपः । वस्तृशब्दाद्वा "तुश्छन्दसि" (पा ५·३·५९) इतीयसुन् । अतिशयेन वस्तॄन्, यथा चास्मान् पशुमतः बहुपशुकान् कुर्यात् । "ह्रस्वनुड्भ्यां मतुप्" (पा ६·१·१७६) इति मतुप उदात्तत्वम् । [V]यथा च [V]नः अस्मान् [V]व्यवसाययात् व्यवसितकर्मणः कुर्यात् अविघ्नेनेदं कर्म समापयेत् । व्यवपूर्वात् स्यतेर्णिचि "शाछासाह्वा°" (पा ७·३·३७) इति युगागमः । लेट्याडागमः ॥

त्रिः प्रदक्षिणं परियन्ति—'त्र्यम्बकम्' इति । अनुष्टुबेषा ॥ इदानीं मृत्युंजयमाशास्ते । [V]त्र्यम्बकं व्याख्यातम् । [V]सुगन्धिं नित्यशोभनं यशोगन्धिं, सर्वसुकृतमयत्वात् । "गन्धस्येत्त्वे तदेकान्तग्रहणम्" (पा ५·४·१३५ वा १) इतीत्त्वम् । [V]पुष्टिवर्धनं गोभूमिवित्तविद्यादिपुष्टिहेतुम् ईदृशं देवं [V]यजामहे । किमर्थम् ? यथा [V]उर्वारुकं फलं [V]बन्धनात् प्रसवबन्धनात् पक्वं स्वयं मुच्यते, एवमहमपि [V]मृत्योः अनेन [V]मुक्षीय मुक्तो भूयासं, [V]मा [V]अमृतात्

---

व्यवसाययाद्व्यवसाययति शास्त्रार्थनिश्चययुक्तान् यथा करोति तदर्थमवदानं कृतम् । 'यथा नः श्रेयसः' इत्याद्यभिधानात् मन्त्रस्याऽऽशीःपरत्वं दर्शयति—"अवाम्ब रुद्रमदिमहीत्याह । आशिषमेवैतामाशास्ते" (तैब्रा १·६·१०) इति ॥

**त्र्यम्बकमिति** ॥ कल्पः—"त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं पर्येति" (आपश्रौ ८·१८·२) इति । पाठस्तु—'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्' इति ॥ शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः । "यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" (तैआ १०·९) इति श्रुतेः । पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनस्तादृशं [V]त्र्यम्बकं [V]यजामहे पूजयामः । लोके यथोर्वारुकफलानि [21]पक्वानि [V]बन्धनात् वृन्तात् स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन [V]मृत्योः [V]मुक्षीय [22]मुक्तो भूयासम् [V]अमृतात् [23]चिरजीवनात् [24]स्वर्गाद्वेवा [V]मा मुक्षीय ॥ [25]चतुर्थपादार्थे मन्त्रस्य [26]तात्पर्यातिशयं दर्शयति—

---

२१. आ.क–'पक्वानि' नास्ति । २२. आ–मोचनयुक्तः । २३. आ.क.पा–चिरजीवितात् २४. म५–स्वर्गात् । २५. आ.क.पा–चतुर्थपादार्थं । २६. म४–तात्पर्यम् ।

एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥ ६ ॥

[ सुभेषजमिहि त्रीणि च ]

एषः । ते । रुद्र । भागः । तम् । जुषस्व । तेन । अवसेन । परः । मूजवत इति मूज–वतः । अतीति । इहि । अवततधन्वेत्यवतत–धन्वा । पिनाकहस्त इति पिनाक–हस्तः । कृत्तिवासा इति कृत्ति–वासाः ॥ ६ ॥

[ मैसं १·१०·४ ; कासं ९·७ ; कपिसं ८·१० ; वासं ३·५७–६१ ]

[v]मुक्षीय अमरणो भूयासम् । मुचेराशिषि लिङि सीयुटि " लिङ्सिचावात्मनेपदेषु " ( पा १·२·११ ) इति कित्त्वम् । बहुव्रीहौ " नञो जरमर° " ( पा ६·२·११६ ) इत्युत्तरपदाद्युदात्तत्वम् । भावप्रधानो द्रष्टव्यः । त्रपुसमुर्वारुकमिति केचित् । हिममित्यन्ये[1] । अन्ये आहुः—पुरुषेण[2] वाह्यात् काष्ठादिभारात् यद्भारातिरिक्तं तदुर्वारुकमिति, तद्यथा बन्धनव्यवसायात् मुच्यते न वाहकवशं भवति एवमहं मृत्योर्मुक्षीय मृत्युवशं मा गां मां मृत्युर्मा गात् इति । उरोर्भाराद्वारणीयमुर्वारुकमिति ॥

शुष्के स्थाणौ तान् बध्नाति—' एष ते ' इति ॥ हे भगवन् रुद्र, [v]एषः तव [v]भागः, [v]तं [v]जुषस्व गृहाण ! [v]तेन अनेन [v]अवसेन [3]पथामवनेन पथः येन अवते[4] । गत्यर्थादौणादिकोऽसच्प्रत्ययः[5] ( उ ४०४ ) । [v]परः परस्तात् , मूजवान्नाम पर्वतः उच्छ्रिततया प्रसिद्धः , तस्यापि

" त्र्यम्बकं यजामह इत्याह । मृत्योर्मुक्षीय माऽमृतादिति वावैतदाह " ( तैब्रा १.६.१० ) इति । यजमानः ' यजामहे ' इति यदाह, एतद्वचनं मृत्योर्मुक्षीय इत्येवाऽऽह, मोचन एव तात्पर्यं तच्छेषत्वेन [27]अन्यदित्यर्थः ॥ यदुक्तमापस्तम्बेन—" ऊर्ध्वान् पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इति यजमानस्याञ्जलौ समोप्य भगः स्थ [28]भगस्य वो लिप्सीयेत्यपादायैतेनैव[28] कल्पेन त्रिः [29]समावपेयुः " ( आपश्रौ ८·१८·४ ) इति । तदेतत्सर्वमभिप्रेत्य सर्वेषां पुरुषाणां [30]हस्ते स्थितस्य पुरोडाशस्योत्क्षेपणं विधत्ते—" उत्किरन्ति । भगस्य लीप्सन्ते " ( तैब्रा १·६·१० ) इति । यदेतत् पिण्डानामुपरि क्षेपणं तेन सौभाग्याभिमानिनो भगनामकस्य देवस्य सकाशादेतान् पुरोडाशाँल्लब्धुमिच्छन्ति । अत एवोत्क्षिप्तः[31] पुनरञ्जलौ पतति[32] ॥

एष इति ॥ कल्पः—" तान् मूते समावपन्ति मूतयोर्मूतेषु वैष ते रुद्र भाग इति वृक्ष [33]आसजति वृक्षयोर्वृक्षेषु वा । अपि वा मूतयोः [34]समोप्य विवर्धं[34] कृत्वा शुष्के स्थाणौ वल्मीकवपायां वाऽवधाय " ( आपश्रौ ८·१८·७–९ ) इति । पाठस्तु— ' एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो

१. त्रि–भिटमित्यन्ये(?) । २. तं.ति–पुरुष' । ३ त्रि–पथो गमनेन । ४. तं.त्रि–अवतेः । ५. तं.ति.त्रि–°सप्रत्ययः ।

२७. क–यजनमित्यर्थः; म४.म५–यजमानमित्यर्थः । २८–२८. इ.उ.पा–भगो वो लप्सीय । २९. आ–समावर्तयेयुः; म४.म५–समापयेयुः । ३०. म४.म५–हस्तेषु । ३१. म४.म५–उत्क्षिप्ताः । ३२. म४.म५–पतन्ति । ३३. आ.क–आसजन्ति; उ–आसृजति । ३४–३४. आ.क.म४–समोप्याविवधम् ;

परस्तात् अतीहि अतिक्रम्य गच्छ। यद्वा —मूङ् बन्धने। बन्धजः संसारो मूजः तद्वतः प्रपञ्चाद्-तीहि। परशब्दाच्छान्दसोऽसिच्प्रत्ययः। अवततधन्वा अवतारितज्याकरवत् तादृशं धनुर्यस्य[६] इति बहुव्रीहौ "धनुषश्च" (पा ५.४.१३२) इत्यानङ्। "गतिरनन्तरः" (पा ६.२.४९) इति गतेः प्रकृतिस्वरत्वम्। पिनाकहस्तः पिनाकाख्यं धनुर्दण्डं[७] हस्ते अलंकारार्थं वहन्, न हि ते निरायुधस्यापि चोरादिभयमस्ति। कृत्तिवासाः वैयाघ्रनागचर्ममात्रं वसानः, कवचादि नेति भावः। ईदृशो दूरतरः गन्तुमर्हति। देव, वयं न बिभीमः, प्रसादादृते कस्त्वां पश्यन्न बिभेतीति। साकमेधाः समाप्ताः ॥

इत्यष्टमे षष्ठोऽनुवाकः ॥

मूजवतोऽतीहि' इति। हे रुद्र, एषः वृक्षादौ सज्यमानः पुरोडाशसंघस्तव भागः तं सेवस्व। अवसेन पाथेयरूपतया तव [३५]रक्षकेणानेन भागेन युक्तः मूजवतः एतन्नामकत्वेन प्रसिद्धात् पर्वतात् परः परभागे वर्तमानः अतीहि अतिक्रम्य गच्छ॥ विधत्ते—"मूते कृत्वा सजन्ति। यथा जनं यतेऽवसं करोति। तादृगेव तत्" (तैब्रा १.६.१०) इति। यथा लोके दूरदेशवर्तिनं बन्धुजनं प्रति गच्छते पुरुषायावसं रक्षकं पाथेयं करोति [३६]तद्वत् वृक्षाग्रे [३७]पुरोडाशसञ्जनं तादृगेव भवति॥ मन्त्रे भागनिर्देशो रुद्रस्य [३८]निःशेषेण विसर्जनार्थं इति दर्शयति—"एष ते रुद्र भाग इत्याह निरवत्त्यै" (तैब्रा १.६.१०) इति॥

**अवततधन्वेति**॥ कल्पः—"अवततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति" (आपश्रौ ८.१८.९) इति। प्राणायामत्रयं कुर्वन्तीत्यर्थः। ओमित्यनेन वाक्यशेषः पूरितः। अस्मात् विरोधिनं पाप्मानं हन्तुमयं रुद्रः पिनाकनामकं धनुः [३९]हस्तेन [४०]धृत्वा अवततधन्वा ज्याकर्षणेन विस्तारितधनुष्कः कृत्तिवासाः चर्मवसनः ॐ भवतु। अथवाऽस्मद्विषयेऽवततधन्वा [४१]आरोपितमौर्वीकधनुर्युक्तो भवतु॥ चतुष्पथप्रत्यागमनादीन् क्रमेण विधत्ते—"अप्रतीक्षमायन्ति। अपः परिषिञ्चति। रुद्रस्यान्तर्हित्यै। प्र वा एतेऽस्माल्लोकाच्च्यवन्ते। ये त्र्यम्बकैश्चरन्ति। आदित्यं चरुं पुनरेत्य निर्वपति। इयं वा अदितिः। अस्यामेव प्रतितिष्ठन्ति" (तैब्रा १.६.१०) इति॥

[४२]-अत्र विनियोगसंग्रहः—

"स्वामी यावन्त इत्याह पशू मूते समावपेत्।
एक इत्युल्मुकं नीत्वाऽऽखुस्त आखूत्करे हविः॥ १॥
क्षिपेदेषोऽर्धहोमः स्याद्वे सुभे परिषिञ्चति।
अवाम्बेति जपेत् स्वामी त्र्यम्बकं परियन्ति ते॥ २॥
एषोऽवस्थाप्य तच्छेषान्मूते बध्नाति शाखिनि।
अवत श्वासनियमो मन्त्रा एकादश स्मृताः॥ ३॥"-[४२] इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

६. तं.ति.त्रि–अस्येति। ७. तं.ति.त्रि–दण्डमात्रम्।

३५. म४.म५–रक्षकेण तेन। ३६. आ–तद्°। ३७. म५–पुरोडाशावसञ्जनम्। ३८. म५–विशेषेण। ३९. आ.क–हस्ते। ४०. आ.क–गृहीत्वा। ४१. म४.म५–°अवरोपित°। ४२–४२. म५–'अत्र विनियोगसंग्रहः... एकादशस्मृताः' इति नास्ति।

**ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं द्वादशगवꣳ सीरं दक्षिणा-**

ऐन्द्राग्नमित्यैन्द्र–अग्नम् । द्वादशकपालमिति द्वादश–कपालम् । वैश्वदेवमिति वैश्व–देवम् । चरुम् । इन्द्राय । शुनासीराय । पुरोडाशम् । द्वादशकपालमिति द्वादश–कपालम् । वायव्यम् । पयः । सौर्यम् । एककपालमित्येक–कपालम् । द्वादशगवमिति द्वादश–गवम् । सीरम् । दक्षिणा ।

---

अथ शुनासीरीयं हविर्विदधाति—‘ ऐन्द्राग्नं द्वादशकपालम् ’ इति ॥ तानि पञ्च हवींषि पञ्चसंचरव्यतिरिक्तानि, तेन दश हवींषीति केचित् । अन्ये तु “ एतद्ब्राह्मणान्येव पञ्च हवीꣳषि ” ( तैब्रा १·७·१ ) इत्युक्त्वा “ अथेन्द्राय शुनासीराय ” ( तैब्रा १·७·१ ) इति त्रयाणामनुब्राह्मणे विधानादष्टाविल्याहुः । तदानीमैन्द्राग्नवैश्वदेवयोर्विकल्पार्थमाम्नानम् । शुनो वायुः, सीर आदित्यः, तद्वान् इन्द्र इहोच्यते, अभेदात्मत्वात् । मत्वर्थीयो वा लुप्यते । “ देवताद्वन्द्वे च ” ( पा ६·२·१४१ ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । वायव्यम् । “ वाय्वृतुपित्रुषसो यत् ” ( पा ४·२·३१ ) इति यत् । एवं सर्वे एककपालानां यागाः । द्वादशगवं, द्वादश गावः समाहृताः, तद्युक्तं सीरं लाङ्गलं च दक्षिणा । “ गोरतद्धितलुकि ” ( पा ५·४·९२ ) इति अच् । राजसूयान्तर्भाविताश्चातुर्मास्ययागाः समाप्ताः ॥

---

षष्ठे साकमेधाः समापिताः । सप्तमे शुनासीर्यमिन्द्रतुरीयं[1] चेति कर्मद्वयं पञ्चेध्मीयमन्त्रा अपामार्गहोममन्त्राश्चोच्यन्ते ।

**ऐन्द्राग्नमिति** ॥ तत्र शुनासीर्यहवींषि विधत्ते—“ ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं द्वादशगवꣳ सीरं दक्षिणा ” इति ॥ शुनासीराय, शुनो वायुः सीर आदित्यस्ताभ्यां युक्तः शुनासीरः । [2]द्वादशगवं द्वादशभिर्बलीवर्दैरुह्यमानं सीरं लाङ्गलम् ॥ अत्र वैश्वदेवगतानामाग्नेयादीनां पञ्चानां हविषां ब्राह्मणमनुब्राह्मणं चातिदिशति—“ एतद्ब्राह्मणान्येव पञ्च हवीꣳषि ” ( तैब्रा १·७·१ ) इति । अथोपदिश्यमानेषु पञ्चस्वैन्द्राग्नवैश्वदेवयोः पूर्वमेव प्रशस्तत्वादवशिष्टानि त्रीणि [3]हवींषि प्रशंसति । [4]अथ वा[4] तयोर्विकल्पमभिप्रेत्य तदभावपक्षानुसारेण तावुपेक्ष्यावशिष्टान्येव प्रशंसति—“ अथेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति । संवत्सरो वा इन्द्राशुनासीरः । संवत्सरेणैवास्मा अन्नमवरुन्द्धे । वायव्यं पयो भवति । वायुर्वै वृष्टयै प्रदापयिता । स एवास्मै वृष्टिं प्रदापयति । सौर्य एककपालो भवति । सूर्येण वा अमुष्मिँल्लोके वृष्टिर्धृता । स एवास्मै वृष्टिं नियच्छति । द्वादशगवꣳ सीरं दक्षिणा समृद्ध्यै ” ( तैब्रा १·७·१ ) इति । अस्य च शुनासीर्यस्य कालं बौधायन आह—“ अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो भवति ” ( बौश्रौ ५·१८ )

---

१. आ.क–इन्द्रतूर्यम् । २. आ–‘ द्वादशगवम् ’ नास्ति । ३. आ.क–‘ हवींषि ’ नास्ति । ४–४. म४–अधुना ।

ऽऽग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । रौद्रम् । गावीधुकम् । चरुम् । ऐन्द्रम् । दधि । वारुणम् । यवमयमिति यव-मयम् । चरुम् । वहिनी । धेनुः । दक्षिणा ।

एवं संवत्सरमिष्ट्वा तदन्ते आगामिन्यां पौर्णमास्यामिन्द्रतुरीयेण चतुर्हविषा यजेत, तं विदधाति—' आग्नेयमष्टाकपालं निर्वपति ' इत्यादि ॥ गावीधुको रौद्रश्चरुर्द्वितीयः । गावीधुकाः तृणतण्डुलाः । ऐन्द्रं दधि तृतीयम् । वारुणो यवमयश्चरुश्चतुर्थः । " द्व्यचश्छन्दसि " ( पा ४·३·१५० ) इति मयट् । तत्र वहिनी धेनुः दक्षिणा । गतम् । " देवासुराः संयत्ता आसन् । ते देवा अग्निमब्रुवन् । त्वया वीरेणासुरानभिभवामेति । सोऽब्रवीत् । त्रेधाऽहमात्मानम् " ( तैब्रा १·७·१ ) इत्यादि ब्राह्मणम् ॥

इति । तत्र पूर्वेभ्यस्त्रिभ्यः पर्वभ्य ऊर्ध्वं प्रत्येकं मासचतुष्टयमतिवाह्य क्रियमाणमिदं संवत्सरादूर्ध्वं प्रवर्तते । तदेतदभिप्रेत्य 'संवत्सरो वा इन्द्राशुनासीरः' इत्युक्तम् । वायुसूर्याभ्यां युक्त इन्द्रः संवत्सरे समाप्ते प्राप्तत्वात् संवत्सर इत्युच्यते । वायोः पुरोवातरूपेण वृष्टिप्रदापयितृत्वम् " अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः " ( मनुस्मृति ३·७६ ) इति स्मरणात् सूर्यस्य स्वर्गे वृष्टिधारकत्वम् ॥

**आग्नेयमिति** ॥ अथेन्द्रतुरीयस्य हवींषि विधत्ते—" आग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा " इति ॥ गावीधुकमरण्यधान्यविशेषनिष्पन्नम् । पृष्ठे भारं वहतीति वहिनी । इन्द्रतुरीयं[5] विधातुं प्रस्तौति—" देवासुराः संयत्ता आसन् । ते देवा अग्निमब्रुवन् । त्वया वीरेणासुरानभिभवामेति । सोऽब्रवीत् । त्रेधाऽहमात्मानं विकरिष्य इति । स त्रेधाऽऽत्मानं व्यकुरुत । अग्निं तृतीयम् । रुद्रं तृतीयम् । वरुणं तृतीयम् । सोऽब्रवीत् । क इदं तुरीयमिति । अहमितीन्द्रोऽब्रवीत् । सं तु सृजावहा इति । तौ समसृजेताम् । स इन्द्रस्तुरीयमभवत् । यदिन्द्रस्तुरीयमभवत् । तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम् । ततो वै देवा व्यजयन्त " ( तैब्रा १·७·१ ) इति । वीरत्वसिद्ध्ये शरीरत्रयरूपेण[6] विकारः । स त्रेधा विकृतोऽग्निरिन्द्रं प्रति पप्रच्छ । मयेदं रूपत्रयं युद्धसमर्थं संपादितम् । अथ कोऽन्य इदं चतुर्थं रूपं विजयसमर्थं करिष्यतीति । अहमेव करिष्यामीतीन्द्रोऽब्रवीत् । [7]अथाऽग्निरब्रवीत्[7] त्वया तथा क्रियतां किं त्वावां युद्धविजयक्षमौ संसृष्टौ भवावेति । इन्द्र एव [8]तुरीयरूपो यस्मिन् कर्मणि तत् कर्मैन्द्रतुरीयम् । अत्रान्यदीयरूपत्रयापेक्षया[9] तुरीयत्वम्, अनुष्ठाने तु [10]पाठक्रमापेक्षया वरुणस्तुरीयः ॥ विधत्ते—" यदिन्द्रतुरीयं निरुप्यते विजित्यै " ( तैब्रा १·७·१ ) इति ॥ चतुर्देवप्रियांशसंपादनेन दक्षिणां प्रशंसति—" वहिनी धेनुर्दक्षिणा । यद्वहिनी । तेनाऽऽग्नेयी । यद्गौः । तेन रौद्री । यद्धेनुः । तेनैन्द्री । यत्स्त्री सती दान्ता ।

५. आ.क–इन्द्रतूर्यम् । ६. म५–शरीरत्रयेण । ७–७. आ.पा–' अथाग्निरब्रवीत् ' इति नास्ति । ८. आ.क–तुरीयः । ९. आ.म४–रूपापेक्षया । १०. आ.म४–पाठक्रमेण ।

**ये देवाः पुरःसदोऽग्निनेत्रा *दक्षिणसदो यमनेत्राः *पश्चात्सदः सवितृनेत्रा *उत्तरसदो वरुणनेत्रा *उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो (१) नमस्तेभ्यः स्वाहा**

ये । देवाः । पुरःसद इति पुरः–सदः । अग्निनेत्रा इत्यग्नि–नेत्राः । दक्षिणसद इति दक्षिण–सदः । यमनेत्रा इति यम–नेत्राः । पश्चात्सद इति पश्चात्–सदः । सवितृनेत्रा इति सवितृ–नेत्राः । उत्तरसद इत्युत्तर–सदः । वरुणनेत्रा इति वरुण–नेत्राः । उपरिषद इत्युपरि–सदः । बृहस्पतिनेत्रा इति बृहस्पति–नेत्राः । रक्षोहण इति रक्षः–हनः । ते । नः । पान्तु । ते । नः । अवन्तु । तेभ्यः (१) । नमः । तेभ्यः । स्वाहा ।

यस्मिन्नहनीन्द्रतुरीयं कर्म क्रियते तस्यां रात्र्यां पञ्चेध्मीयेन यजेत. आहवनीयधिष्ण्य एव चतुर्धाऽऽहवनीयं प्रतिदिशं व्युद्धृत्य मध्ये पञ्चमं कृत्वा पञ्चगृहीतेनाज्येन यथालिङ्गं जुहोति। आज्येनैतान् व्याचारयतीति केचित्—'ये देवाः पुरःसदः' इत्यादिभिः ॥ तत्र 'ये देवाः' इत्येतत्[१] पदद्वयं 'रक्षोहणः' इत्यादि च पूर्वत्र परत्र च पञ्चस्वप्यनुषज्यते। ये देवाः पुरःसदः पूर्वस्यां दिशि सीदन्ति इति। "पूर्वाधरावराणाम्[२]" (पा ५·३·३९) इत्यसिप्रत्ययः। अग्निनेत्राः अग्निप्रधानाः। "छन्दसि नेतुरुपसंख्यानम्" (पा ५·४·११६ वा २–३) इत्यप्प्रत्ययः। "ऋतश्छन्दसि" (पा ५·४·१५८) इति कबभावः। रक्षोहणः रक्षसां हन्तारः, ते नः अस्मान् पान्तु, ते नः अस्मान् अवन्तु प्रीणयन्तु, तेभ्यः नमः नमस्कुर्मः, तेभ्यः स्वाहा स्वाहुतमस्तु। एवम् ये देवाः दक्षिणसदः यमनेत्राः रक्षोहणः ते नः पान्तु ते नोऽवन्त्विति। तथा ये देवाः पश्चात्सदः सवितृनेत्राः रक्षोहण इत्यादि। ये देवाः उत्तरसदः वरुणनेत्राः रक्षोहण इत्यादि। ये देवाः उपरिषदः बृहस्पतिनेत्राः रक्षोहण इत्यादि। वनस्पत्यादित्वात् बृहस्पतिशब्दे पूर्वोत्तरयोः[३] पदयोर्युगपत् प्रकृतिस्वरत्वम् (पा ६·२·१४०) ॥

तेन वारुणी समृद्धयै" (तैब्रा १·७·१) इति। गोत्वं जातिः। धेनुत्वं नवप्रसवत्वम्। अस्य चेन्द्रतुरीयस्य[११] कर्मणः शुनासीर्यदिन एवानुष्ठानमापस्तम्बो दर्शयति—"ततश्चतुर्हविषेन्द्रतुरीयेण यजते" (आपश्रौ १८·९·६) इति ॥

य इति ॥ इन्द्रतुरीयविधानादूर्ध्वं 'ये देवाः पुरःसदः' इत्यादयो मन्त्रा आम्नातास्तेषां विनियोगमापस्तम्बो दर्शयति—"एतस्या एव रात्रेर्निशायां पञ्चेध्मीयेन यजते। चतुर्धाऽऽहवनीयं प्रतिदिशं व्युद्धृत्य मध्ये पञ्चमं कृत्वा पृथगिध्मानुपसमाधाय जुह्वां पञ्चगृहीतं गृहीत्वा ये देवाः पुरःसद इत्येतैर्यथालिङ्गं जुहोति। मध्ये पञ्चमेन। समूढं रक्ष इति मध्य [१२]इध्मानुपसमुह्यैकधोपसमाधायापरं पञ्चगृहीतं

१. मै–इति। २. मै–पूर्वापराधराणाम्। ३. मै–पूर्वोत्तरयोः।

११. म५–°तुरीय°। १२. आ.म४–इध्मानुपसमूह्यैक°।

**समूढꣳ रक्षः संदग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहाम्यग्नये रक्षोघ्ने स्वाहा**

समूढमिति सम्—ऊढम् । रक्षः । संदग्धमिति सम्—दग्धम् । रक्षः । इदम् । अहम् । रक्षः । अभि । समिति । दहामि । अग्नये । रक्षोघ्न इति रक्षः—घ्ने । स्वाहा ।

---

उपवेषेण[४] सर्वानाहवनीयाङ्गारान् मध्ये एकयोपसमूहति—'समूढम्' इति ॥ ˅समूढम् एकीकृत्य नाशितमस्तु ˅रक्षः अनेनाङ्गारसमूहेन, तथा ˅संदग्धम् एकीकृत्य दग्धमस्तु । उभयत्रापि पूर्वपदप्रकृतिस्वरत्वं "गतिरनन्तरः" (पा ६·२·४९) इति । तस्मात् अहं ˅रक्षः ˅इदम् ˅अहम् ˅अभि ˅सं ˅दहामि आभिमुख्येन चैकीकृत्य चानेन दहामि । इदमिति क्रियाविशेषणम् ॥

अपरं पञ्चगृहीतं गृहीत्वा पञ्च स्रुवाहुतीरभिजुहोति —'अग्नये रक्षोघ्ने स्वाहा' इति ॥ यमादिष्वपि चतुर्ष्वनुषज्यते । 'दुवस्वते' इति विकल्पार्थ इति केचित् । बृहस्पतिविशेषणमित्यन्ये । ˅दुवस्वते परिचर्यावते ˅बृहस्पतये इति । सर्वे निगदसिद्धाः । ˅रक्षोघ्ने रक्षसां हन्त्रे । उदात्त-

---

गृहीत्वाऽग्नये रक्षोघ्ने स्वाहेत्युत्तराः [१३]पञ्चाहुतीर्जुहोति । प्रष्टिवाही रथो दक्षिणा" ( आपश्रौ १८·९·१०–१३ ) इति । 'ये देवाः' इत्यादिमन्त्रपाठस्तु—'ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा' इति ॥ ˅पुरःसदः पूर्वदिग्वर्तिनः ˅अग्निनेत्राः अग्निप्रमुखाः ˅ये ˅देवाः ˅रक्षोहणः राक्षसघ्नाः सन्ति ˅ते देवाः ˅नः अस्मान् रक्षोनिवारणेन[१४] ˅पान्तु । पुनरपि ते देवाः ˅नः अस्मान् कर्मानुष्ठानेन ˅अवन्तु । तेभ्यो देवेभ्यो नमस्कारोऽस्तु । तेभ्य इदं [१५]हव्यं [१६]स्वाहुतमस्तु । 'दक्षिणसदः यमनेत्राः' इत्यस्य मन्त्रस्याऽऽदौ 'ये देवाः' इत्यनुषज्यते । अन्ते च 'रक्षोहणः' इत्यादिकमनुषज्यते । एवं तृतीयचतुर्थयोर्द्रष्टव्यम् । पञ्चमे तु 'ये देवाः' इत्येतावदेवानुषज्यते । प्रथमे तु 'रक्षोहणः' इत्यादिकमनुषज्यते ॥ तदेतत् पञ्चेध्मीयं विधातुं प्रस्तौति—"प्रजापतिर्यज्ञमसृजत । तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन् । स एताः प्रजापतिरात्मनो देवता निरमिमीत । ताभिर्वै स दिग्भ्यो रक्षाꣳसि प्राणुदत" (तैब्रा १·७·१) इति ॥ विधत्ते—"यत्पञ्चावत्तीयं जुहोति । दिग्भ्य एव तद्यजमानो रक्षाꣳसि प्रणुदते" (तैब्रा १·७·१) इति । पञ्चकृत्वोऽवदाय संपादितमाज्यं पञ्चावत्तीयम् ॥

**समूढमिति** ॥ समूढमित्यादिमन्त्रपाठस्तु—'समूढꣳ रक्षः संदग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहामि' इति ॥ [१७]रक्षोऽस्मत्प्रतिकूलं राक्षसजातं समूढं नाशयितुं सम्यगेकीकृतं संदग्धं च । पुनरपीदमिदानीमहं रक्षोऽभि दग्धस्य रक्षसोऽभितः सर्वतोऽवस्थितांस्तत्तदनुचरान् सम्यक् दहामि ॥ एतन्मन्त्रपाठेन तस्य सिद्धिं दर्शयति—"समूढꣳ रक्षः संदग्धꣳ रक्ष इत्याह । रक्षाꣳस्येव संदहति[१७]" (तैब्रा १·७·१) इति ॥

---

४. मै–उदवेषेण (?) ।

---

१३. म८–चतुराऽऽहुती° । १४. म४–°विदारणेन । १५. उ.म४.म५–द्रव्यम् । १६. म५–स्वाहा हुतमस्तु । १७–१७. म५–" रक्षोऽस्मत्......संदहति " इति नास्ति ।

यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा प्रष्टिवाही रथो दक्षिणा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ

यमाय । सवित्रे । वरुणाय । बृहस्पतये । दुवस्वते । रक्षोघ्न इति रक्षः—घ्ने । स्वाहा । प्रष्टिवाहीति प्रष्टि—वाही । रथः । दक्षिणा । देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । पूष्णः । हस्ताभ्याम् ।

निवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । सवित्रे इति “ उदात्तयणः° ” ( पा ६·१·१७४ ) इति विभक्त्युदात्तत्वम् । बृहस्पतिरुक्तस्वरः ॥

अत्र प्रष्टिवाही रथः दक्षिणा । प्रष्टिः त्रिपादाधारविशेषः । यो रथस्त्रिभिरश्वैर्युक्तः प्रष्टिवद्वहति स प्रष्टिवाही । “ उपमानं शब्दार्थप्रकृतावेव ” ( पा ६·२·८० ) इति नियमात् पूर्वपदाद्युदात्तत्वाभावे कृदुत्तरपदप्रकृतिस्वरत्वम् एव प्रवर्तते । “ प्रजापतिरग्निमसृजत । तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन् । स एताः प्रजापतिरात्मनो देवता निरमिमीत ” ( तैब्रा १·७·१ ) इत्यादि ब्राह्मणम् ॥ यो रक्षोभ्यो बिभीयात् पिशाचेभ्यो वा सोऽनेन यजेतेत्ययज्ञसंयुक्तं केचिदाहुः ( द्र. आपश्रौ १८·९·१४ ) ॥

अथ व्युष्टायां पुराऽग्निहोत्रात् अपामार्गसक्तून् जुहोति—‘ देवस्य ’ इति ॥

व्याख्यातम् ( तैसं १·१·४ ) । रक्षसः[5] वधं वधहेतूनिमान् जुहोमि इति ॥

**अग्नय इति** ॥ ‘ अग्नये रक्षोघ्ने ’ इति । मन्त्रपाठस्तु—‘ अग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा ’ इति ॥ यमायेत्यादिषु[18] रक्षोघ्ने स्वाहेत्यनुषज्यते । बृहस्पतेः दुवस्वत इति विशेषणं, [19]परिचर्यावत इत्यर्थः[19] ॥ [20]अग्नियमादयो जितवन्त इति युक्तस्तद्धोम इति दर्शयति—“ अग्नये रक्षोघ्ने स्वाहेत्याह । देवताभ्य एव विजिग्यानाभ्यो भागधेयं करोति ” ( तैब्रा १·७·१ ) इति । विजिग्यानाभ्यो विशेषेण जितवतीभ्यः ॥

**प्रष्टिवाहीति** ॥ देयं रथं विधत्ते—‘ प्रष्टिवाही रथो दक्षिणा ’ इति ॥ [21]त्रिपदाधारवदश्वत्रयेणोह्यमानः प्रष्टिवाही ॥ समृद्धिहेतुत्वेन तं प्रशंसति— “ प्रष्टिवाही रथो दक्षिणा समृद्ध्यै ” ( तैब्रा १·७·१ ) इति ॥

**देवस्येति** ॥ अपामार्गहोममन्त्राणां विनियोगमापस्तम्ब आह—“ व्युष्टायां पुराऽग्निहोत्रादपामार्गहोमेन चरन्ति । अपां न्ययनादपामार्गानाहृत्य तान् सक्तून् कृत्वा दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति ।

५ तं त्रि-रक्षो° ।

१८. म४–‘ यमायेत्यादिषु ’ इत्यस्यानन्तरं ‘ त्रिषु ’ । १९–१९. आ.पा–परिचर्यावदित्यर्थः । २०. म४.म५–अग्न्यादयः । २१. आ.म४–त्रिपादाधार° ।

रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षो यद्वस्ते तद्दक्षिणा ॥ ७ ॥

[ तेभ्यः पञ्चचत्वारिꣳशच्च ]

रक्षसः । वधम् । जुहोमि । हतम् । रक्षः । अवधिष्म । रक्षः । यत् । वस्ते । तत् । दक्षिणा ॥७॥

[ मसं २·६;३; कासं १५·२; वासं ९·३५–३८ ]

स्रुवं प्रहरति—' हतं रक्षः ' इति ॥

उत्तिष्ठति—' अवधिष्म रक्षः ' इति ॥ हतवन्तो वयं ᵛरक्षः तत् किमिदानीमास्म इत्युत्तिष्ठति ॥

अत्र राजा ᵛयत् ᵛवस्ते परिधत्ते ᵛतत् दक्षिणा अध्वर्यवे वस्त्रं देयम् ॥

इत्यष्टमे सप्तमोऽनुवाकः ॥

उत्तरपूर्वमवान्तरदेशं गत्वा स्वकृत इरिणे प्रदरे वोपसमाधाय " देवस्य त्वा ' इत्यनुद्रुत्य रक्षसो वधं जुहोमीति पर्णमयेन स्रुवेण जुहोति । हतꣳ रक्ष इति स्रुवमनुप्रहृत्यावधिष्म रक्ष इत्युपतिष्ठते " ( आपश्रौ १८·९·१५–१८ ) इति । मन्त्रपाठस्तु—' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षः ' इति ॥ एते त्रयो मन्त्राः स्पष्टार्थाः । तत्र रक्षसो वधम् , उद्दिश्येति [22]शेषः ॥

यदिति ॥ होमकाले यद् वस्त्रमाच्छादयति तस्य दानं विधत्ते—' यद् वस्ते तद्दक्षिणा ' इति ॥ अपामार्गहोमं विधातुं प्रस्तौति—" इन्द्रो वृत्रꣳ हत्वा । असुरान् पराभाव्य । नमुचिमासुरं नालभत । तꣳ शच्याऽगृह्णात् । तौ समलभेताम् । सोऽस्मादभिशुनतरोऽभवत् । सोऽब्रवीत् । संधाꣳ संदधावहै । अथ त्वाऽवस्रक्ष्यामि । न मा शुष्केण नाऽऽर्द्रेण हनः । न दिवा न नक्तमिति । स एतमपां फेनमसिञ्चत् । न वा एष शुष्को नाऽऽर्द्रो व्युष्टाऽऽसीत् । अनुदितः सूर्यः । न वा एतद्दिवा न नक्तम् । तस्यैतस्मिँल्लोके । अपां फेनेन शिर उदवर्तयत् । तदेनमन्ववर्तत । मित्रध्रुगिति । स एतानपामार्गानजनयत् । तानजुहोत् । तैर्वै स रक्षाꣳस्यपाहत " ( तैब्रा १·७·१ ) इति । इन्द्रो वृत्रवधादूर्ध्वमन्यानसुरान् [23]पराभूतान् कृत्वा नमुचिनामानमसुरं नालभत न [24]पराभावितवान् । अपराभूतं तं नमुचिं [25]शच्या स्वशक्त्याऽगृह्णात् , यथा युद्धयत्नेको मल्लः सकृदशक्तोऽपि धैर्येण शक्तिमापाद्य हस्ताभ्यां प्रतिमल्लमालिङ्ग्य गृह्णाति तद्वत् । ततस्ताविन्द्रनमुची समलभेतां परस्परमर्दनपरौ संरब्धौ हस्ताभ्यां पादाभ्यां च[26] अन्योन्यं दृढमवष्टभ्य मल्लद्वयवद्भूमौ पतितौ । तदानीं स नमुचिरस्मादिन्द्रादभिशुनतरोऽभितो हस्तयोः पादयोश्च बलवत्तरोऽभूत् । ततो मुमूर्षुमिन्द्रमवलोक्य कृपालुरिदमब्रवीत् । भो इन्द्र, विगृह्यमाणराजद्वय-

२२. आ.इ.उ.पा–विशेषः । २३. आ.क.म४–परिभूतान् । २४. इ.उ.म४.म५–पराभावितवान् । २५. म५–शक्त्या । २६. म४.म५–' च ' नास्ति ।

शुनासीर्यम् , इन्द्रतुरीयादि ]

वद् आवां परस्पराङ्गीकारेण संधिं करवाव । अथ [27]त्वां मुमूर्षुमवस्रक्ष्यामि मोक्षयिष्यामीति । ततः प्रहारसाधने काले च समयमेवं कृतवान् । भो इन्द्र, शुष्केणाऽऽर्द्रेण वा [28]काष्ठादिसाधनेन मां न हनो मां मा वधीर्दिवा रात्रौ च मा वधीरिति । इन्द्रश्च तं समयमङ्गीकृत्य तेन मोचितो धैर्येण स्वस्थो भूत्वा समयानुसारेण तं नमुचिं हन्तुमपां [29-]फेनमायुधं भावयित्वा[-29] तस्मिन्नमुचावसिञ्चत् । न चैवं सति समयलोपः शङ्कनीयः । यत एष फेनो नैव शुष्कः, स्पर्शे सति काठिन्याप्रतीतेः । नाप्यार्द्रस्तेन वस्त्रादेरक्लेदनात् । [30-]कालं च[-30] समयानुसारेण[31] संपादयामास । यदा रात्रिर्व्युष्टा प्रभाताऽऽसीत् सूर्यश्चानुदितस्तदानीमन्धकाराभावान्न रात्रिर्त्वं सूर्योदयाभावाच्च नैतदहः । एतस्मिँल्लोके रात्रेरहश्च संधिकाले तस्य नमुचेः शिरोऽपां फेनेनोदवर्तयदुदच्छिनत् । [32]तच्चोच्छिन्नं शिरः, हे[33] मित्रद्रोहिन्निन्द्र इत्युच्चारयदेनमिन्द्रमन्ववर्तत, सर्वदाऽनुगतमभूत् , ततस्तच्छिरो वारयितुं स इन्द्र एताँल्लोकप्रसिद्धानपामार्गानजनयत् । तानुत्पन्नानजुहोत् । तैरेव हुतैः स इन्द्रो नमुचेः शिरःसहितानि सर्वाण्यवशिष्टानि रक्षांसि हतवान् ॥ विधत्ते—"यदपामार्गहोमो भवति । रक्षसामपहत्यै" (तैब्रा १·७·१) इति ॥ अङ्गविधीन् मन्त्रव्याख्यानं च क्रमेण दर्शयति—"एकोल्मुकेन यन्ति । तद्धि रक्षसां भागधेयम् । इमां दिशं यन्ति । एषा वै रक्षसां दिक् । स्वायामेव दिशि रक्षाꣳसि हन्ति । स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै रक्षसामायतनम् । स्व एवाऽऽयतने रक्षाꣳसि हन्ति । पर्णमयेन स्रुवेण जुहोति । ब्रह्म वै पर्णः । ब्रह्मणैव रक्षाꣳसि हन्ति । देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत एव रक्षाꣳसि हन्ति । हतꣳ रक्षोऽवधिष्म रक्ष इत्याह । रक्षसाꣳ स्तृत्यै । यद्वस्ते तद्दक्षिणा निरवत्त्यै । अप्रतीक्षमायन्ति । रक्षसामन्तर्हित्यै" (तैब्रा १·७·१) इति । इमां दिशं वायवीम् । स्तृत्यै हननाय । निरवत्त्यै भागप्रदानेन निःसारणाय । स्पष्टमन्यत् । अत्र शुनासीर्येन्द्रतुरीयपञ्चेध्मीयापामार्गहोमानां चतुर्णां कर्मभेदेऽप्येकस्मिन्नेव दिने कर्तव्यत्वादेकेनानुवाकेनोपसंग्रहः ॥

[34-]अत्र विनियोगसंग्रहः—

"पञ्चेध्मवह्नौ जुहुयाद्ये देवा इति पञ्चभिः ।
समूहन्नीध्मान् समिति पञ्चहोमस्तथाऽग्नये ॥ १ ॥
निशि हुत्वा सक्तुहोमः प्रातर्देवेति मन्त्रतः ।
[35]हतं स्रुवप्रहरणमवधिष्मेति चोत्थितिः ॥
अनुवाके सप्तमेऽस्मिन्नुक्ता मन्त्राश्चतुर्दश[-34]" ॥ २ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

२७. आ–त्वा । २८. आ.क.पा–काष्ठादिना । २९–२९. इ.उ.पा–फेनेनायुधं भावयित्वा; म५–फेनेनमा(?)दायायुधं भावयित्वा । ३०–३०. म४–तत्कालोचित° । ३१. म५–समयानुसारिणम् । ३२. म५–तस्योच्छिन्नम् । ३३. म४.म५–भो । ३४–३४. म५–'अत्र विनियोगसंग्रह...मन्त्राश्चतुर्दश' इति नास्ति । ३५. म४–हुतम् ।

धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणाऽऽग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणा-

धात्रे । पुरोडाशम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपति । अनुमत्या इत्यनु-मत्यै । चरुम् । राकायै । चरुम् । सिनीवाल्यै । चरुम् । कुह्वै । चरुम् । मिथुनौ । गावौ । दक्षिणा । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपति । ऐन्द्रावैष्णवमित्यैन्द्रा-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । वैष्णवम् । त्रिकपालमिति त्रि-कपालम् । वामनः । वही । दक्षिणा ।

अथाग्निहोत्रं हुत्वा देविकाहवींषि निर्वपति । तानि विदधाति—' धात्रे ' इत्यादि ॥ पञ्चेमानि हवींषि । " संवत्सरो वै धाता " ( तैब्रा १·७·२ ) इत्यादि ब्राह्मणम् । अनुमत्यादीनि नामानि । अनुमतिरूनचन्द्रा पञ्चदशी, पूर्णचन्द्रा राकेति, किंचिद्दृष्टचन्द्रा पञ्चदशी सिनीवाली, नष्टचन्द्रा कुहूः । ᵛधात्रे । " उदात्तयणः° " ( पा ६·१·१७४ ) इति विभक्त्युदात्तत्वम् । ᵛअनुमत्यै । " तादौ च निति° " ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरत्वम् । ᵛसिनीवाल्यै । पूर्ववद्विभक्त्युदात्तत्वम् । जुहोतेर्ह्वयतेर्वाऽपि कुहूः । " नोङ्धात्वोः " ( पा ६·१·१७५ ) इति विभक्तेरुदात्तत्वे प्रतिषिद्धे " उदात्तस्वरितयोर्यणः° " ( पा ८·२·४ ) इति विभक्तिः स्वर्यते । ᵛमिथुनौ स्त्रीपुंसौ ᵛगावौ ᵛदक्षिणा ॥

अथ [1]त्रिहविष्काणि त्रीणि कर्माणि[1] भवन्ति, तानि विदधाति—' आग्नावैष्णवमेकादशकपालं निर्वपति ' इत्यादि ॥ ᵛआग्नावैष्णवम् ᵛऐन्द्रावैष्णवम् इति । " देवताद्वन्द्वे च "

सप्तमेऽनुवाके शुनासीर्यादिकर्मचतुष्टयमेकदिनकर्तव्यमुक्तम् । अष्टमे देविकादिकर्मषट्कमेकदिनकर्तव्यमुच्यते ।

**धात्र इति** ॥ तत्रादौ देविकानामकानि पञ्च हवींषि विधत्ते—' धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणा ' इति ॥ **अत्र धात्रादीन्** पञ्च देवान् दक्षिणां च प्रजोत्पत्त्युपयोगेन प्रशंसति—" धात्रे पुरोडाशं द्वादशकपालं निर्वपति । **संवत्सरो** वै धाता । **संवत्सरेणैवास्मै** प्रजाः प्रजनयति । अन्वेवास्मा अनुमतिर्मन्यते । राते राका । प्र **सिनीवाली** जनयति । प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति । मिथुनौ गावौ दक्षिणा समृद्ध्यै " ( तैब्रा १·७·२ ) इति । **संवत्सरकालस्वामी** धाता गर्भधारणमारभ्य संवत्सरादर्वागेव प्रजोत्पत्तिं कारयति । **अनुमतिदेवता** यजमानार्थं प्रजोत्पत्तिमङ्गीकरोति । राका तु पुत्रपुष्ट्यादिरूपं राते ददाति । सिनीवाली **तद्रूपं गर्भं** निःसारयति । कुहूदेवतयाऽध्वर्युः प्रजासु वाचमुच्चारयितुं सामर्थ्यं [1]च [2]दधाति ॥

**आग्नावैष्णवमिति** ॥ अथ त्रिहविष्काणि त्रीणि कर्माण्येकैकहविष्के द्वे कर्मणी च क्रमेण विधत्ते—' आग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणाऽग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं

१—१. तं.ति.त्रि–त्रीणि हवींषि कर्माणि ।

१. मे३–' च ' नास्ति । २. म४.म५–ददाति ।

ऽग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं निर्वपति हिरण्यं दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणा ॥ ८ ॥

[ वैश्वानरं द्वादशकपालं निरष्टौ च ]

अग्नीषोमीयमित्यग्नी–सोमीयम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपति । इन्द्रासोमीयमितीन्द्रा–सोमीयम् । एकादशकपालमित्येकादश–कपालम् । सौम्यम् । चरुम् । बभ्रुः । दक्षिणा । सोमापौष्णमिति सोमा–पौष्णम् । चरुम् । निरिति । वपति । ऐन्द्रापौष्णमित्यैन्द्रा–पौष्णम् । चरुम् । पौष्णम् । चरुम् । श्यामः । दक्षिणा । वैश्वानरम् । द्वादशकपालमिति द्वादश–कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । वारुणम् । यवमयमिति यव–मयम् । चरुम् । अश्वः । दक्षिणा ॥ ८ ॥

[ मैसं २.६.४; कासं १५.३; शब्रा ५.२.५.१–१० ]

( पा ६.३.२६ ) इत्यानङ्, उभयपदवृद्धिश्च । वैष्णवस्त्रिकपालस्तृतीयः । " वीर्यं वा अग्निः " ( तैब्रा १.७.२ ) इत्यादि ब्राह्मणम् । अत्र ${}^{v}$वामनः ${}^{v}$वही ${}^{v}$दक्षिणा, अनुब्राह्मणवशात् ऋषभ इति गम्यते ॥

अथ द्वितीयम्—' अग्नीषोमीयम् ' इत्यादि ॥ " ईदग्नेः सोमवरुणयोः " ( पा ६.३.२७ ) इतीकारः । " अग्नेः स्तुत्स्तोमसोमाः " ( पा ८.३.८२ ) इति षत्वम् । " द्यावापृथिवीशुनासीर° " ( पा ४.२.३२ ) इति छः । ${}^{v}$इन्द्रासोमीयम् । छान्दसश्छः । पूर्ववदानङ् । सौम्यश्चरुस्तृतीयः । " सोमाट्ट्यण् " ( पा ४.२.३० ) । " अग्निः प्रजानां प्रजनयिता " ( तैब्रा १.७.२ ) इत्यादि ब्राह्मणम् । ${}^{v}$बभ्रुः श्यामकपिलः गौः ${}^{v}$दक्षिणा ॥

अथ तृतीयम्—' सोमापौष्णम् ' इत्यादि ॥ पूर्ववदानङ्, उभयपदवृद्धिश्च । पौष्णश्चरुस्तृतीयः । अत्र ${}^{v}$श्यामः गौः ${}^{v}$दक्षिणा ॥ अथ तदानीमेव कर्तव्यं यागं विदधाति—' वैश्वानरं द्वादशकपालम् ' इति ॥ तत्र ${}^{v}$हिरण्यं ${}^{v}$दक्षिणा ॥ अथ तदानीमेव ${}^{v}$वारुणं ${}^{v}$यवमयं ${}^{v}$चरुं निर्वपति । अत्र ${}^{v}$अश्वः ${}^{v}$दक्षिणा[2] ॥

इत्यष्टमे अष्टमोऽनुवाकः ॥

चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं निर्वपति हिरण्यं दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणा ' इति ॥ बभ्रुः कपिलः ॥ प्रथमस्य त्रिहविष्कस्य देवता [3]दक्षिणां च[3] प्रशंसति— " [4]आग्नावैष्णवमेकादशकपालं निर्वपति । ऐन्द्रावैष्णवमेकादशकपालम् । वैष्णवं त्रिकपालम् । वीर्यं वा अग्निः । वीर्यमिन्द्रः । वीर्यं विष्णुः । प्रजा एव प्रजाता वीर्ये प्रतिष्ठापयति । तस्मात् प्रजा वीर्यावतीः । वामन ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः । यद्वामनः । तेन वैष्णवः समृद्ध्यै " ( तैब्रा १.७.२ ) इति । [5]अग्न्यादीनां वीर्यप्रदत्वात् तद्रूपत्वम् । प्रजानां स्वस्वव्यापारसामर्थ्यं वीर्यम् । वहीत्यादीनामग्न्यादिप्रियत्वादाग्नेयादित्वम् ॥ मध्यमस्य

२. तं ति त्रि–' दक्षिणा ' इत्यस्यानन्तरं, ' व्युप्तः इति विशीर्णगव इत्यर्थः '।

३–३. मै३.म४.म५–' दक्षिणां च ' नास्ति । ४–४. म५–' आग्नावैष्णवमेकादशकपालं.... प्रशंसति ' नास्ति । ५. आ.क–आग्नेयादीनाम् ।

त्रिहविष्कस्य [6]देवता दक्षिणां च[6] प्रशंसति—" अग्नीषोमीयमेकादशकपालं निर्वपति। इन्द्रासोमीयमेकादशकपालम्। सौम्यं चरुम्। सोमो वै रेतोधाः। अग्निः प्रजानां प्रजनयिता। वृद्धानामिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति। अग्निः प्रजां प्रजनयति। वृद्धानिन्द्रः प्रयच्छति। बभ्रुर्दक्षिणा समृद्ध्यै" (तैब्रा १·७·२) इति। गर्भाशये निषिक्तं रेतो यथा बहिर्न निःसरति, यथा च न पूयति, तथा सोमो धारणसामर्थ्यं प्रयच्छति। धृतस्य च गर्भस्य पतनादिविघ्नं परिहृत्याग्निः प्रजा उत्पादयति इन्द्रस्तूत्पन्ना[7]ताः प्रजाः यथा[7] स्वस्वोचितगुणैरभिवृद्धा यथा[8] भवन्ति तथा सामर्थ्यं प्रयच्छति॥ अन्त्यस्य त्रिहविष्कस्य देवता [9]दक्षिणां च प्रशंसति—" सोमापौष्णं चरुं निर्वपति। ऐन्द्रापौष्णं चरुम्। सोमो वै रेतोधाः। पूषा पशूनां प्रजनयिता। वृद्धानामिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति। पूषा पशून् प्रजनयति। वृद्धानिन्द्रः प्रयच्छति। पौष्णश्चरुर्भवति। इयं वै पूषा। अस्यामेव प्रतितिष्ठति। श्यामो दक्षिणा समृद्ध्यै" (तैब्रा १·७·२) इति। आद्ये त्रिहविष्के व्यासक्तदेवतान्तःपाती यो विष्णुः स एवैकाकी 'वैष्णवं त्रिकपालम्' इत्यत्रोच्यते, न त्वन्यः कश्चित्। अतः सहैव व्याख्यानं कृतम्। इह तु व्यासक्तदेवतान्तःपाती पूषा कश्चित् पोषकः पुरुषविशेषः। पौष्णचरौ तु भूमिः पूषा। अतो [10]देवताभेदात् पृथग्व्याख्यानम्[11]॥ एकहविष्के [12]पञ्चमे कर्मणि[12] देवतां दक्षिणां च प्रशंसति—" बहु वै पुरुषोऽमेध्यमुपगच्छति। वैश्वानरं द्वादशकपालं निर्वपति। संवत्सरो वा अग्निर्वैश्वानरः। संवत्सरेणैवैनं स्वदयति। हिरण्यं दक्षिणा। पवित्रं वै हिरण्यम्। पुनात्येवैनम्" (तैब्रा १·७·२) इति। अमेध्यत्वमशुचित्वं, तच्च बहुविधं भोजनादिकालेषु पुनः पुनः प्रवृत्तत्वात्। तत्र संवत्सरस्वामी वैश्वानरोऽग्निः संवत्सरकालेनैनं यजमानं स्वदयति मेध्यं करोति। तच्चात्रेष्टिमात्रेण लभ्यते। हिरण्यस्योच्छिष्टादिसंस्पर्शेऽपि[13] मृद्भाण्डवत्[14] परित्यागाभावात् पवित्रत्वम्॥ एकहविष्के षष्ठे कर्मणि देवतां [ दक्षिणां च ] प्रशंसति—" बहु वै राजन्योऽनृतं करोति। उप जाम्यै हरते। जिनाति ब्राह्मणम्। वदत्यनृतम्। अनृते खलु वै क्रियमाणे वरुणो गृह्णाति। वारुणं यवमयं चरुं निर्वपति। वरुणपाशादेवैनं मुञ्चति। अश्वो दक्षिणा। वारुणो हि देवतयाऽश्वः समृद्ध्यै" (तैब्रा १·७·२) इति। राजन्यः क्षत्रियो बहुविधमनृतमशास्त्रीयं करोति। [15]तद्यथा—जाम्यै जायायै जायात्वं संपादयितुमुपहरते यस्य कस्यचिद्गृहमुपेत्य स्त्रियं हरति। ब्राह्मणं विद्याप्रसङ्गादिना जिनाति जयति न्यक्करोति। स्पष्टमन्यत्। प्रतिग्रहमन्त्रे 'वरुणायाश्वम्' इत्याम्नातत्वादश्वस्य वारुणत्वम्॥

अथ मीमांसा॥ एकादशाध्यायस्य [16]चतुर्थपादे चिन्तितम्—

" सोमापौष्णादिकं तन्त्रमङ्गानामुत भिन्नता।
तन्त्रं फलैक्यतो मैवं दक्षिणाकर्तृभेदतः॥" (जैन्या ११·४·१)॥

राजसूये श्रूयते—" सौमापौष्ण एकादशकपाल ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः श्यामो दक्षिणा" (मैसं २·६·४) इति। " आग्नावैष्णव एकादशकपाल *ऐन्द्रावैष्णवश्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षिणा" (मैसं २.६·४) इति। तत्र द्वयोस्त्रिकयोस्तन्त्रेणानुष्ठानम्[17]। कुतः? कृत्स्नस्य राजसूयस्य फलैकत्वेनैतदेकदेशयोरनयोरपि फलैक्यात्। न च दर्शपूर्णमासयोरिवात्र कालभेदोऽस्ति, येनात्रापि तथा शङ्क्येतेति प्राप्ते ब्रूमः—श्यामवामनयोर्दक्षिणयोर्भेदेन ताभ्यामाननानां कर्तृणां भेदादङ्गानि भिद्यन्ते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके अष्टमोऽनुवाकः॥ ८॥

६-६. इ.उ.मै३-देवताम्; म४-देवताः। ७-७. आ.क.म४-प्रजाः। ८. म४.म५.मै३-' यथा' नास्ति। ९. इ.उ-' दक्षिणां च' नास्ति। १०. उ.पा.म५-देवभेदात्। ११. म४-°व्याख्यातम्। १२-१२. इ.उ.मै३-पञ्चमकर्मणि। १३. इ.उ.म५.मै३-°दिस्पर्शेऽपि। १४. म४-भाण्डादिवत्। १५. म४.म५-तथा। १६. आ.मै३-तृतीयपादे। *[ शुद्धीकृतः पाठः। ]। १७. आ-तन्त्रेणानु°।

बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणाऽऽदित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा-

बार्हस्पत्यम् । चरुम् । निरिति । वपति । ब्रह्मणः । गृहे । शितिपृष्ठ इति शिति—पृष्ठः । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । राजन्यस्य । गृहे । ऋषभः । दक्षिणा । आदित्यम् । चरुम् । महिष्यै । गृहे । धेनुः । दक्षिणा । नैर्ऋतमिति नैः—ऋतम् । चरुम् । परिवृक्त्या इति परि—वृक्त्यै । गृहे । कृष्णानाम् । व्रीहीणाम् । नखनिर्भिन्नमिति नख—निर्भिन्नम् । कृष्णा । कूटा । दक्षिणा ।

अथ रत्निनां हवींषि द्वादश भवन्ति अन्वहं कर्तव्यानि, तानि विदधाति "रत्निनामेतानि हवीꣳषि भवन्ति" ( तैब्रा १·७·३ ) इत्यादि ब्राह्मणम् । अग्नीन् समारोप्य ब्रह्मणः महर्त्विजो गृहं गत्वा बार्हस्पत्यं चरुं निर्वपति । पत्युत्तरपदलक्षणो ण्यः ( पा ४·१·८५) । तत्र शिति-पृष्ठः श्वेतपृष्ठो गौः दक्षिणा ॥

श्वोभूते राजन्यस्य गृहं गत्वा तत्र ऐन्द्रम् एकादशकपालं निर्वपति । तत्र ऋषभः दक्षिणा ॥

श्वोभूते महिष्याः प्रथमाया राज्ञः पत्न्या गृहं गत्वा तत्र आदित्यं चरुं निर्वपति । अङ्गुष्ठमात्रः पुरोडाश इत्येके ॥

श्वोभूते परिवृक्त्या राज्ञो मध्यमपत्न्याः । परिपूर्वात् वृणक्तेः "क्तिच् क्तौ च संज्ञायाम्" ( पा ३·३·१७४ ) इति क्तिच् । "उदात्तयणः°" ( पा ६·१·१७४ ) इति विभक्तेः उदात्तत्वं बाधित्वा "उदात्तस्वरितयोर्यणः°" ( पा ८·२·४ ) इति व्यत्ययेन स्वरितत्वम् । कृष्णानां व्रीहीणां पत्न्या नखैर्निर्भिन्नं नखनिर्भिन्नं तण्डुलैश्चरुं कुर्यात् । "तृतीया कर्मणि" ( पा ६·२·४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । नखेषूलूखलधर्मान् मुसलधर्मांश्च करोति । तत्र कृष्णा कूटा भग्नशृङ्गा गौः दक्षिणा ॥

अष्टमे देविकादिकं कर्मषट्कमेकदिनकर्तव्यमुक्तम् । नवमे रत्निनां हवींष्यनुदिनं क्रमेण कर्तव्यान्युच्यन्ते ।

**बार्हस्पत्यमिति** ॥ तत्रैकादश हवींषि विधत्ते—'बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शिति-पृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणाऽऽदित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणाऽऽग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशकपालं क्षत्तुर्गृह उपध्वस्तो दक्षिणाऽऽश्विनं द्विकपालꣳ संग्रहीतुर्गृहे

ऽऽग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशकपालं ( १ ) क्षत्तुर्गृह उपध्वस्तो दक्षिणा-

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । सेनान्य इति सेना—न्यः । गृहे । हिरण्यम् । दक्षिणा । वारुणम् । दशकपालमिति दश—कपालम् । सूतस्य । गृहे । महानिरष्ट इति महा—निरष्टः । दक्षिणा । मारुतम् । सप्तकपालमिति सप्त—कपालम् । ग्रामण्य इति ग्राम—न्यः । गृहे । पृश्निः । दक्षिणा । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् (१)। क्षत्तुः । गृहे । उपध्वस्त इत्युप—ध्वस्तः । दक्षिणा ।

श्वोभूते सेनान्यः सेनापतेः गृहं गत्वा तत्र आग्नेयम् अष्टाकपालम् निर्वपति । " नोङ्धात्वोः " ( पा ६·१·१७५ ) इति विभक्तेरुदात्तत्वे प्रतिषिद्धे पूर्ववत् स्वरितत्वम् । तत्र हिरण्यं दक्षिणा ॥

श्वोभूते सूतस्य सारथेः । ब्राह्मण्यां क्षत्रियेण जातस्येत्येके । तस्य गृहं गत्वा वारुणं दशकपालं निर्वपति । महानिरष्टः पीडितवृषणः गौः दक्षिणा देया । अश्नोतेर्निष्ठायां " यस्य विभाषा " ( पा ७·२·१५ ) इतीट्प्रतिषेधः, महांश्चासौ निरष्टश्च । वृषणपीडनेन महान्-भूत् । दासीभारादिर्द्रष्टव्यः ( पा ६·२·४२ ), बहुव्रीहिर्वा ॥

श्वोभूते ग्रामण्यः ग्रामस्य यो नेता तस्य गृहे मारुतं सप्तकपालं निर्वपति । तत्र पृश्निः शुक्लो गौः दक्षिणा । कुरटाख्यो गोविशेष इत्यन्ये ॥

श्वोभूते क्षत्तुः मन्त्रिणः । अन्तःपुराध्यक्षस्येत्येके । तस्य गृहं गत्वा तत्र सावित्रं द्वादशकपालं निर्वपति । तत्र उपध्वस्तः अन्येन वर्णेन परिभूतनिजवर्णो गौः दक्षिणा । " संज्ञायामनाचितादीनाम् " ( पा ६·२·१४६ ) इत्युत्तरपदाद्युदात्तत्वम् ॥

सवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणा ' इति ॥ ऋत्विग्विशेषो ब्रह्मा, तस्य गृहे राजा गत्वैतामिष्टिं कुर्यात् । एवं सर्वत्र । शितिपृष्ठः श्वेतपृष्ठः । कृताभिषेका राज्ञः स्त्री महिषी । परिवृक्तिः प्रीतिरहिता राज्ञः स्त्री । तद्गृहे गत्वा कृष्णानां व्रीहीणां कृष्णान् व्रीहीन्नखैर्निर्भिद्यावघातमन्तरेणैव तण्डुलान्निष्पाद्य चरुः कर्तव्यः । कूटा भग्नशृङ्गा गौः । सूतः सारथिः । महानिरष्टः पीडितवृषणः । पृश्निः शुक्लः, कर्तव्यः । अल्पतनुरित्यन्ये । क्षत्ता यष्टिहस्तोऽन्तःपुराध्यक्षः । संकीर्णवर्णः उपध्वस्तः । संग्रहीता धनसंग्रहकर्ता कोशाध्यक्षः । सवात्यौ समानमातरौ वत्सावेकोदरावित्यर्थः । यो राज्ञः प्राप्तं षष्ठं भागं प्रजाभ्यो गृह्णाति स भागदुघः । गावीधुकोऽरण्यगोधूमनिष्पन्नः । अक्षावापो द्यूतकारः । शबलः चित्रवर्णः । उद्वारः दीर्घपुच्छः ॥ यथोक्तानि सर्वाणि हवींषि समस्य प्रशंसति—" रत्निनामेतानि हवीꣳषि भवन्ति । एते वै राष्ट्रस्य प्रदातारः ।

ऽऽश्विनं द्विकपालꣳ संग्रहीतुर्गृहे सवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणे-

आश्विनम् । द्विकपालमिति द्वि–कपालम् । संग्रहीतुरिति सम्–ग्रहीतुः । गृहे । सवात्याविति स–वात्यौ । दक्षिणा । पौष्णम् । चरुम् । भागदुघस्येति भाग–दुघस्य । गृहे । श्यामः । दक्षिणा । रौद्रम् । गावीधुकम् । चरुम् । अक्षावापस्येत्यक्ष–आवापस्य । गृहे । शबलः । उद्वार इत्युत्–वारः । दक्षिणा ।

श्वोभूते संग्रहीतुः सारथेः रश्मिग्राहिणो गृहं गत्वा आश्विनं द्विकपालं निर्वपति । रज्जुभिर्नियन्ता कुमाराध्यक्ष इत्यन्ये । सवात्यौ समानमातृकवत्सौ समाने वाते भवौ सवात्यौ सोदर्यौ । " भवे छन्दसि " ( पा ४·४·११० ) इति यः । वत्सान्तरेण दोह्या मृतवत्सा च तदीया च मातेत्यन्ये ॥

श्वोभूते भागदुघस्य यो राज्ञः षड्भागं गृह्णाति तस्य गृहं गत्वा पौष्णं चरुं निर्वपति । " दुहः कब्घश्च " ( पा ३·२·७० ) इति कप् । छान्दसमन्तोदात्तत्वम् । तत्र श्यामः गौः दक्षिणा ॥

श्वोभूते अक्षावापस्य, यः सहायो द्यूतकर्मणि अक्षावापनस्य कर्ता, तस्य गृहं गत्वा रौद्रं गावीधुकं चरु निर्वपति । तत्र शबलः उद्वारः उद्गतवालो गौः दक्षिणा । केचित् पौष्णरौद्रयोर्मध्ये तक्षरथकारयोर्गृहे वैष्णवं त्रिकपालं सर्वायसदक्षिणमाहुः ॥

---

एतेऽपादातारः । य एव राष्ट्रस्य प्रदातारः । येऽपादातारः । त एवास्मै राष्ट्रं प्रयच्छन्ति । राष्ट्रमेव भवति " ( तैब्रा १·७·३ ) इति ॥ रत्नान्येषां सन्तीति रत्निनः । [1]ब्रह्मराजन्यमहिष्यादयो रत्निनः । तदभिमानिदेवानां प्रियाण्येतानि हवींषि । अतस्तद्गृहेष्वेव गत्वा [2]-निर्वपेत् । एते-[2] रत्निनामभिमानिनो देवा एव राष्ट्रं प्रदातुमपादातुं च समर्थाः । अतः स्वकीयब्रह्मादिगृहेषु निर्वापेण तुष्टा अस्मै राष्ट्रं प्रयच्छन्ति ॥ रत्नीत्येकनाम्ना प्रसक्तं प्रयोगैक्यमपोद्य देशभेदप्राप्तं प्रयोगभेदं प्रशंसति—" यत् समाहृत्य निर्वपेत् । अरत्निनः स्युः । यथायथं निर्वपति रत्नित्वाय " ( तैब्रा १·७·३ ) इति । अरत्निनो रत्नरहिता दरिद्राः ॥ पूर्वोक्तदेविकादिवदेकानुवाकविहितत्वेन प्रसक्तं दिनैक्यमपवदितुं दिनभेदं विधत्ते—" यत्सद्यो निर्वपेत् । यावतीमेकेन हविषाऽऽशिषमवरुन्द्धे । तावतीमवरुन्धीत । अन्वहं निर्वपति । भूयसीमेवाऽऽशिषमवरुन्द्धे । भूयसो यज्ञक्रतूनुपैति " ( तैब्रा १·७·३) इति । आशिषं फलम् । बहुदिनानुष्ठाने क्रतुबाहुल्यं जनानां प्रतीयते ॥ गृहस्वामिनं ब्रह्माभिमानिनं बृहस्पतिं प्रशंसति—" बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । मुखत

---

१. आ.क.पा–ब्राह्मणराजन्य° । २–२. म४–इष्टीः कुर्यादेतेन । ३. म४–प्रयुक्तम् ; मै३–प्रशस्तम् ।

एवास्मै ब्रह्म सꣳश्यति । अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति । शितिपृष्ठो दक्षिणा समृद्ध्यै " (तैब्रा १·७·३ ) इति । मुखत एव कर्मोपक्रम एव यजमानार्थं ब्राह्मणजातिं संश्यति सम्यक् तीक्ष्णीकरोति उत्कृष्टं करोतीत्यर्थः । किं च प्रथमतो ब्रह्मगृहं पश्चात् राजन्यगृहमित्येवं ब्राह्मणजातिमनु [४]क्षत्रियजात्या यज्ञारम्भः[४] कारितो भवति ॥ इन्द्रं प्रशंसति—" ऐन्द्रमेकादशकपालꣳ राजन्यस्य गृहे । इन्द्रियमेवावरुन्द्धे । ऋषभो दक्षिणा समृद्ध्यै " (तैब्रा १·७·३) इति । अदितिं प्रशंसति—" आदित्यं चरुं महिष्यै गृहे । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । धेनुर्दक्षिणा समृद्ध्यै " (तैब्रा १·७·३ ) इति ॥ अत्र मुख्यब्राह्मण उपेक्षितं हविर्विशेषं विधत्ते—" भगाय चरुं वावातायै गृहे । भगमेवास्मिन् दधाति । विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै " (तैब्रा १·७·३ ) इति । वावाता महिष्या अभिषिक्तताया अर्वाचीना परिवृक्त्याः प्रीतिरहिताया उत्तमत्वेन स्वयं मध्यमा राज्ञः स्त्री । अत एवाश्वमेधप्रकरणेऽश्वमलंकुर्वत्यो राजस्त्रिय उत्तममध्यमाधमाद्यनुक्रमेणैतैरेव नामभिर्निर्दिष्टाः— " भूरिति महिषी । भुव इति वावाता । सुवरिति परिवृक्ती " (तैब्रा ३·९·४ ) इति । भगमेव सौभाग्यमेव । विचित्तगर्भा विशेषेण चित्तो ज्ञातोऽभिव्यक्तो गर्भो यस्या इति विग्रहः । पष्ठौही बालगर्भिणी ॥ निर्ऋतिं प्रशंसति —" नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम् । पाप्मानमेव निर्ऋतिं निरवदयते । कृष्णा कूटा दक्षिणा समृद्ध्यै " ( तैब्रा १·७·३ ) इति । पाप्मनो निर्ऋतिशरीरत्वात्तां प्रति प्रशंसैवेषा ॥ अग्निं गृहस्वामिनं च प्रशंसति—" आग्नेयमष्टाकपालꣳ सेनान्यो गृहे । सेनामेवास्य सꣳश्यति । हिरण्यं दक्षिणा समृद्ध्यै " ( तैब्रा १·७·३ ) इति ॥ वरुणं प्रशंसति—" वारुणं दशकपालꣳ सूतस्य गृहे । वरुणसवमेवावरुन्द्धे । महानिरष्टो दक्षिणा समृद्ध्यै " (तैब्रा १·७·३ ) इति । वरुणसवो वरुणानुज्ञा ॥ मरुतः प्रशंसति—" मारुतꣳ सप्तकपालं ग्रामण्यो गृहे । अन्नं वै मरुतः । अन्नमेवावरुन्द्धे । पृश्निर्दक्षिणा समृद्ध्यै " (तैब्रा १·७·३ ) इति । मरुतां वैश्यत्वेनान्नसंपादकत्वादन्नत्वम् ॥ सवितारं प्रशंसति—" सावित्रं द्वादशकपालं क्षत्तुर्गृहे प्रसूत्यै । उपध्वस्तो दक्षिणा समृद्ध्यै " (तैब्रा १·७·३ ) इति ॥ अश्विनौ प्रशंसति—" आश्विनं द्विकपालꣳ संग्रहीतुर्गृहे । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सवात्यौ दक्षिणा समृद्ध्यै " ( तैब्रा १·७·३ ) इति ॥ पूषणं प्रशंसति—" पौष्णं चरुं भागदुघस्य गृहे । अन्नं वै पूषा । अन्नमेवावरुन्द्धे । श्यामो दक्षिणा समृद्ध्यै " ( तैब्रा १·७·३ ) इति । यथा मरुतां वैश्यत्वेनान्नसंपादकत्वादन्नत्वं तथा पूष्णोऽन्नपोषकत्वादन्नत्वम् ॥ रुद्रं प्रशंसति—" रौद्रं गावीधुकं चरुमक्षावापस्य गृहे । अन्तत एव रुद्रं निरवदयते । शबल उद्वारो दक्षिणा समृद्ध्यै " ( तैब्रा १·७·३ ) इति । भागप्रदानपूर्वकत्वेन रुद्रस्य पुरतो निःसारणमपि प्रशंसैव ॥ पाठेनावगतां हविःसंख्यां प्रशंसति—" द्वादशैतानि हवीꣳषि भवन्ति । द्वादशमासाः संवत्सरः । संवत्सरेणैवास्मै राष्ट्रमवरुन्द्धे । राष्ट्रमेव भवति " ( तैब्रा १·७·३ ) इति ॥

४–४. आ.म.४–क्षत्रियजात्यारम्भः ।

**न्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचेऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यान्मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य**

इन्द्राय । सुत्राम्ण इति सु-त्राम्णे । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । प्रति । निरिति । वपति । इन्द्राय । अꣳहोमुच इत्यꣳहः-मुचे । अयम् । नः । राजा । वृत्रहेति वृत्र-हा । राजा । भूत्वा । वृत्रम् । वध्यात् । मैत्राबार्हस्पत्यमिति मैत्रा-बार्हस्पत्यम् । भवति । श्वेतायै । श्वेतवत्साया इति श्वेत-वत्सायै । दुग्धे । स्वयंमूर्त इति स्वयम्-मूर्ते । स्वयंमथित इति स्वयम्-मथिते । आज्ये ।

---

अथ रत्निनां हविःषु संस्थितेषु अग्नीन् परिसमारोप्य यजमानस्य गृह गत्वा ऐन्द्रं कर्म द्विहविष्कं करोति, तद्विदधाति—'इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं प्रति निर्वपति'। प्रतिनिर्वाप्ये एते। केचिदृषभ दक्षिणामाहुः॥

पुरस्तात् स्विष्टकृतोऽध्वर्युर्जपति—'अयं नः' इति ॥ रत्निनां गृहेभ्यः प्रव्रजतोऽनुमन्त्रणमनेनेति केचिदाहुः । अयं नः अस्माकं राजा वृत्रहा शत्रुहा भूत्वा राजा दीप्यमानश्च भूत्वा वृत्र शत्रून् वध्यात् नाशयेदित्याशास्महे । जातावेकवचनम् । यद्वा—वृत्रहा राजा इन्द्रः यो वृत्र हत्वा अधिकार्थे राजा स एव भूत्वा वृत्रं वध्यादिति ॥

[1]-अथैन्द्रे कर्मणि-[1] समाप्ते श्वोभूते [2]-अभिषेचनीये उक्थ्ये-[2] प्रक्रान्ते द्विहविष्कां दीक्षणीयामिष्टिं विदधाति—'मैत्राबार्हस्पत्यं भवति' इति। मैत्रश्च बार्हस्पत्यश्च मैत्राबार्हस्पत्यं, समाहारद्वन्द्वः । मैत्रश्च बार्हस्पत्यश्च द्वौ चरू कर्तव्यौ भवत इत्यर्थः । समासान्तोदात्तत्वम् । छान्दस आनङ् । तत्र बार्हस्पत्यस्य प्राथम्येऽपि *अल्पाच्तरत्वान्मैत्रशब्दस्य पूर्वनिपातः । अधुना

---

**इन्द्रायेति** ॥ विहितेभ्यो द्वादशहविर्भ्य ऊर्ध्वं स्वगृहे हविर्द्वयं विधत्ते—'इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचे' इति । प्रति प्रातिस्विके गृहे । सुत्राम्णे सुष्ठु पालयित्रे, अꣳहोमुचे पापात् मोचकाय । 'पुरोडाशमेकादशकपालम्' इत्यनुवर्तते ॥ तमिमं प्रतिनिर्वापं प्रशंसति— "यन्न प्रतिनिर्वपेत् । रत्निन आशिषोऽवरुन्धीरन् । प्रतिनिर्वपति । इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालम् । इन्द्रायाꣳहोमुचे । आशिष एवावरुन्द्धे" (तैब्रा १·७·३) इति ॥ रत्निनो ब्रह्मराजन्यादय[5] आशिषस्तद्विहितफलान्यवरुन्धीरन् गृह्णीयुः ॥

**अयमिति** ॥ एतेषां हविषां समीप एको मन्त्र आम्नातस्तस्य विनियोगमापस्तम्ब आह— "अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादिति पुरस्तात् स्विष्टकृतोऽध्वर्युर्जपति" (आपश्रौ १८·११·१)

---

१-१. मे-अथैन्द्र° । २-२. मै-अभिषेचनीयोक्थे । *(पा २·२·३४) ।

---

५. आ.क-ब्राह्मणरा° ।

**आश्वत्थे (२) पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाँश्चाकर्णाँश्च तण्डुलान् वि चिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्रः**

आश्वत्थे (२) । पात्रे । चतुःस्रक्ताविति चतुः—स्रक्तौ । स्वयमवपन्नाया इति स्वयम्—अवपन्नायै । शाखायै । कर्णान् । च । अकर्णान् । च । तण्डुलान् । वीति । चिनुयात् । ये । कर्णाः । सः । पयसि । बार्हस्पत्यः । ये । अकर्णाः । सः । आज्ये । मैत्रः ।

तयोर्बार्हस्पत्यस्य लक्षणमाह—— श्वेतायै इति षष्ठ्यर्थे चतुर्थी ( पा २.३.६२वा१ )। श्वेतायाः श्वेतवत्सायाः गोः दुग्धे बार्हस्पत्यः कर्तव्यः । मैत्रस्याह——' स्वयंमूर्ते ' इत्यादि । तामेव श्वेतवत्सां गाम् आमस्त्ये[3] दृतौ दुहन्ति दोग्धि, तत् स्वयमेवानातक्तमेव मूर्तं कठिनं भवति । " स्वयं क्तेन " ( पा २.१.२५ ) इति समासः । तदेव मूर्तं बदरादिसंयोगेन परिबद्धं दृतिस्थमेव स्वयंमथितं भवति । तन्नवनीतं दृतेरुद्धृत्य आतपे स्थापितं तत् स्वयंविलीनम् आज्यं भवति । ' आज्ये ' इत्यत्रापि ' स्वयम् ' इत्यपेक्ष्यते । ईदृशे आज्ये मैत्रः कर्तव्य इत्यर्थः । अधुना मैत्रपात्रस्य लक्षणमाह—— ' आश्वत्थे ' इत्यादि । स्वयमवपन्नायाः स्वयमेव भग्नायाः अश्वत्थशाखाया एकदेशेन क्लृप्ते आश्वत्थे अश्वत्थविकारे पात्रे चतुःस्रक्तौ चतुरस्रे मैत्रश्चरुः कर्तव्यः । अश्वत्थशब्दात् " अनुदात्तादेरञ् " ( पा ४.२.४४ ) इत्यञ्प्रत्ययः ॥

अधुना तयोर्विधानानन्तरं विदधाति——' कर्णांश्च ' इति ॥ कर्णाश्छिद्राश्छिन्नाः अकर्णाः निष्फलीकृताः तण्डुलाः । कर्णान् च अकर्णान् च वि चिनुयात्, ' यथाभागं व्यावर्तेथाम् ' ( द्र. आपश्रौ १.२४.५ ) इति मन्त्रेण पृथक् कुर्यात् । ततः किम् इत्याह——' ये ' इत्यादि । तत्र ये कर्णाः छिन्नाः सः पयसि पूर्वोक्ते बार्हस्पत्यः चरुः कार्यः । ये तु अकर्णाः सः आज्ये पूर्वोक्ते मैत्रः चरुः कार्यः ॥

इति । अयं राजा राजसूयस्य कर्ताऽस्माकं राजा योऽस्ति असौ शत्रुवधक्षमः राजा भूत्वा शत्रुं वध्यात् ॥ वध्यादित्येतस्य[6] पदस्याऽऽशीरर्थत्वं द्योतयति——" अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्याह । आशिषमेवैतामाशास्ते " ( तैब्रा १.७.३ ) इति ॥

मैत्रेति ॥ यदुक्तमापस्तम्बेन——" श्वोभूतेऽभिषेचनीयस्योक्थ्यस्य दीक्षां प्रक्रमयति । मैत्राबार्हस्पत्या दीक्षणीया" ( आपश्रौ १८.११.७-८ ) इति । तामिमामभिषेचनीयनामकस्य सोमयागस्याङ्गभूतां दीक्षणीयां चोदकप्राप्तेष्टिबाधनाय विधत्ते——" मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाँश्चाकर्णाँश्च तण्डुलान् वि चिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्रः स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः

३. ( द्र. आपश्रौ १८.११.३; तदनुसारं स्वीकृतोऽत्र पाठः; द्र. The Ancient Indian Royal Consecration p. 58, Heesterman ); ति–अनस्ये; त्रि–आस्ये; मै–आस्त्ये; (' आम्रस्य ' इति–मै–संभावितः पाठः ) ।

६. इ.उ–°दित्यस्य ।

**स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा ॥९॥**

[ सावित्रं द्वादशकपालमाश्वत्थे त्र्यंस्त्रिंशच्च ]

स्वयंकृतेति स्वयम्–कृता । वेदिः । भवति । स्वयंदिनमिति स्वयम्–दिनम् । बर्हिः । स्वयंकृत इति स्वयम्–कृतः । इध्मः । सा । एव । श्वेता । श्वेतवत्सेति श्वेत–वत्सा । दक्षिणा ॥९॥

[ मैसं २·६·५,६ कासं १५·४,५; वासं ३·१·१–२,८ ]

अत्र ^V^स्वयंकृता ^V^वेदिः ^V^भवति । ' देवस्य त्वा ' ( तैसं २·६·४ ) इति स्फ्यादानादि ' धा असि ' ( तैसं २·६·४ ) इत्यन्तं न क्रियते । तथा स्वयंदिनं स्वयमेव छूनं ^V^बर्हिः भवति असिदादिना न छिनत्ति, स्वयंभग्नान् दर्भानाहरति । दा प्लवने । इत्वनत्वे छान्दसे । तथा ^V^स्वयंकृतः ^V^इध्मः न वृश्चति । उभयत्र संनहनादि कर्म क्रियते । अत्र यस्या दुग्धे आज्ये चरुः क्लृप्तः ^V^सा ^V^एव ^V^श्वेता ^V^श्वेतवत्सा ^V^दक्षिणा देया । अथ शितिपृष्ठो गौर्बार्हस्पत्यस्य दक्षिणा, मैत्रस्याश्व इत्यन्ये अनुब्राह्मणदर्शनादिच्छन्ति पूर्वोक्तं च ॥

इत्यष्टमे नवमोऽनुवाकः ॥

स्वयंकृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा " इति ॥ ^V^मैत्राबार्हस्पत्यं हविरिति शेषः । तत्र ^V^दुग्धे बार्हस्पत्यश्चरुः । ^V^आज्ये मैत्रश्चरुः । कीदृश आज्ये ? स्वयंमूर्ते स्वयंमथिते । तदिदमापस्तम्बेन स्पष्टीकृतम्––" श्वेतां श्वेतवत्सां गामाम्रस्य[7] दृतौ दुहन्ति । तत् स्वयंसृतं संयोगेन परिवहति[8] । तत् स्वयंमथितमातपे विषजन्ति । तत् स्वयंविलीनमाज्यं भवति " ( आपश्रौ १८·११·३-६ ) इति । आम्रेण फलपुष्परसेन लेपितायां दृतौ यत्पय[9] आतञ्चनमन्तरेणैवामूर्तं दधि भवति तच्च बदरादिफलसंयोगेन परिवहति तक्रवत् परितः क्षरति । तदिदं स्वयंमथितम् । नात्र मृद्भाण्डे पाकः किंतु ^V^आश्वत्थे ^V^पात्रे ^V^चतुःस्रक्तौ न तु वर्तुले । तच्च पात्रं यया कयाचिच्छिन्नशाखया न कर्तव्यं किं तु वाय्वाद्यभिघातेन स्वयमेव पतितया[10] निष्पादनीयम् । कर्णाः खण्डिततण्डुलाः । ^V^अकर्णाः अखण्डिताः । तत्र खण्डितैः पयसि बृहस्पतेश्चरुर्निष्पादनीयः । अखण्डितैस्तु मित्रस्याऽऽज्ये चरुः[11] । ^V^स्वयंकृता शास्त्रीयोद्धननादिरहिता । ^V^स्वयंदिनं समन्त्रकशास्त्रीयच्छेदनमन्तरेणैव खण्डितम् । ^V^स्वयंकृतः ^V^इध्मः, अत्रापि शास्त्रीयसंपादनमन्तरेणैव निष्पन्नः ॥ तमिमं विधिमनूद्य द्वयोर्हविष्पात्रयोः संसर्गं विधत्ते––" मैत्राबार्हस्पत्यं भवति । श्वेतायै श्वेतवत्सायै दुग्धे । बार्हस्पत्ये मैत्रमपि दधाति । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति " ( तैब्रा १·७·३ ) इति । बार्हस्पत्ये चरुपात्रेऽग्नावधिश्रिते तस्योपरि मैत्रं चरुपात्रमपिदध्यात् । तथा सति बृहस्पतिरूपा ब्राह्मणजातिर्मित्ररूपा क्षत्रियजातिश्चेत्युभयमस्मै[12] सम्यक् संपादितं भवति । किं

७. म४–आमस्त्येन; [ आपश्रौसूत्रे 'आमरत्ये' इति पाठः, । तथापि सायणाचार्याणाम् 'आम्रस्य' इत्येव पाठः भाष्येऽपि अभिप्रेतः । तस्मात् यथास्थित एव पाठोऽत्र निर्दिष्ट इत्यवधेयम् । ] ८. आ. क–परिवहति । ९. इ.उ.म४–दुग्धं पयः । १०. म४–पतितायां शाखायाम् । ११. म४–चरुः कार्यः । १२. म४–अस्मै यजमानाय ।

चाऽऽधारभूते ब्राह्मण एव क्षत्रियजातिमाधेयत्वेन प्रतिष्ठापितवान् भवति ॥ पाठक्रमेण पश्चात् प्राप्तं बार्हस्पत्यप्रचारमपवदितुं विधत्ते—" बार्हस्पत्येन पूर्वेण प्रचरति । मुखत एवास्मै ब्रह्म सꣳशयति । अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति " (तैब्रा १·७·३ ) इति ॥ स्वयंशब्दानामभिप्रायमाह[13]—" स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयंकृत इध्मः । अनभिजितस्याभिजित्यै । तस्माद्राज्ञामरण्यमभिजितम् " (तैब्रा १·७·३ ) इति । यद्देशजातं युद्धप्रयासेन पूर्वमनभिजितं तस्याप्यभिजयः स्वयंकृतादिना भवति । यस्मादेवं तस्माल्लोकेऽपि राज्ञामरण्यं युद्धप्रयासमन्तरेणैवाभिजितं दृश्यते ॥ दक्षिणां प्रशंसति—" सैव श्वेता श्वेतवत्सा दक्षिणा समृद्ध्यै " ( तैब्रा १·७·३ ) इति ॥

अत्र विनियोगसंग्रहः—

" पुरा स्विष्टकृतोऽध्वर्युरयं न इति संजपेत् " ॥ १ ॥ इति ॥

अथ मीमांसा ॥ दशमाध्यायस्य प्रथमपादे चिन्तितम्—

" वेदिः स्वयंकृतेत्यादौ प्राकृतं सर्वमाचरेत् ।
लुप्तार्थं बाध्यतां वाऽऽद्यश्चोदकप्रापितत्वतः ॥
अपेक्षासत्तियोग्यत्वहानेरुद्धननादिकम् ।
बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यते " ॥ ( जैन्या १०·१·२–३ ) ॥

" रत्निनामेतानि हवीꣳषि " ( तैब्रा १·७·३ ) इति वाक्येन राजसूये रत्निनामकानां देवानां संबन्धीनि कानिचिद्धवींषि दर्शपूर्णमासेष्टिविकृतिरूपाणि विहितानि । ऊर्ध्वं मैत्राबार्हस्पत्ये हविषि श्रूयते— " स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयंकृत इध्मः " ( तैब्रा १·७·३ ) इति । इष्टावुद्धननखनन-परिलेखनादिभिः क्रियाविशेषैर्वेदिर्निष्पाद्यते । ' स्फ्येनोत्तमां त्वचमुद्धन्ति देवस्य सवितुः सव इति खनति स्फ्येन वेदिं परिगृह्णाति ' ( द्र. आपश्रौ २·२·३–७ ) इति तद्विधानात् । ' यज्ञस्य घोषदसि ' ( तैसं १·१·२ ) इत्यस्मिन्ननुवाके प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं बर्हिः संपाद्यते । ' त्रीन् परिधीन् ' ( तैब्रा ३·७·४ ) इत्यादिमन्त्रोपेताभिः क्रियाभिरिध्मः सिध्यति । विकृतिरूपे तु हविष्युद्धननाद्यपेक्षां वारयितुं स्वयमित्युक्तम् । यथास्थित एव तु प्रदेशो वेदित्वेन स्वीकर्तव्यः । इध्माबर्हिषी अपि स्वत एव छिन्ने शास्त्रीय-च्छेदननिरपेक्षे ग्रहीतव्ये इत्यर्थः । [14]"तत्र प्रकृतौ सप्रयोजनानामुद्धननादीनां विकृतौ प्रयोजनं तु लुप्यते । उद्धननादिकृतस्य वेद्युपकारस्य स्वयंशब्देन निवारितत्वात् बर्हिरास्तरणादिहविरासादनादयो वेदिधर्मा विकृतावलुप्तार्थाः"[14] । तत्र संशयः—लुप्तार्थमलुप्तार्थं च सर्वमङ्गजातं विकृतावनुष्ठेयमुत लुप्तार्थं वर्जनीयमिति । चोदकस्य साधारणत्वात् सर्वमनुष्ठेयमित्याद्ये पक्षे प्राप्ते सिद्धान्तं ब्रूमः[15]—अङ्गी हि अङ्गैरुप-कृतः फलं साधयति । तथा सत्यङ्गिनोऽङ्गकृत उपकारे साक्षादपेक्षा, उपकारद्वारा त्वङ्गेषु । प्रत्यासन्नश्चाङ्गिनं प्रत्यङ्गेभ्य उपकारः । योग्यताऽपि साक्षादपेक्षां पूरयितुमुपकारस्यैवाऽस्ति । न त्वङ्गानाम् । वेदिनिष्पादन-लक्षणदृष्टोपकारयुक्तानि प्रकृतावुद्धननाद्यङ्गानि । विकृतौ तु वेद्याः स्वतःसिद्धत्वेन निष्पादनोपकारो लुप्यते, उपकारद्वारोपकारकाणामाकाङ्क्षासंनिधियोग्यत्वान्युद्धननाद्यङ्गेषु हीयन्ते । तस्मादुद्धननादीनि नानुष्ठेयानि । सोऽयं चोदकप्रापितस्योद्धननाद्यनुष्ठेयत्वप्रत्ययस्य भ्रान्तित्वनिश्चयो बाध उच्यते । चोदकस्य त्वलुप्तोपकारैरुप-कारद्वारेणाऽऽकाङ्क्षासंनिधियोग्यतायुक्तैर्हविरासादनाद्यङ्गैश्चरितार्थता संपद्यते[16] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

१३. म४–दर्शयति । १४–१४. आ.क–' तत्र....लुप्तार्थाः ' नास्ति । १५. म४–ब्रूमः सिद्धान्तस्तु । १६. म४–संपाद्यते ।

**अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां**

अग्नये। गृहपतय इति गृह–पतये। पुरोडाशम्। अष्टाकपालमित्यष्टा–कपालम्। निरिति। वपति। कृष्णानाम्। व्रीहीणाम्। सोमाय। वनस्पतये। श्यामाकम्। चरुम्। सवित्रे। सत्यप्रसवायेति सत्य–प्रसवाय। पुरोडाशम्। द्वादशकपालमिति द्वादश–कपालम्। आशूनाम्।

अथाभिषेचनीये अग्नीषोमीयस्य पशुपुरोडाशस्यानुनिर्वाप्याण्यष्टौ देवसुवां हवींषि सन्ति तानि विदधाति—'अग्नये गृहपतये' इत्यादि ॥ "देवसुवामेतानि हवीꣳषि भवन्ति" ( तैब्रा १·७·४ ) इत्यादि ब्राह्मणम्। देवस्य यजमानस्यानुज्ञातारोऽग्न्यादयो देवसुवः। गृहाणां पतिः स्वामी गृहपतिः। "पत्यावैश्वर्ये" ( पा ६·२·१८ ) इतिपूर्वपदप्रकृतिस्वरत्वम्। कृष्णव्रीह्यादयो वाक्यशेषात् प्रायशः प्रसिद्धाः कृष्णवर्णाः कृष्णाः। व्रीहीणामित्यादौ "नामन्यतरस्याम्" ( पा ६·१·१७७ ) इति नाम उदात्तत्वम्। वनानां पतिः स्वामी वनस्पतिः। पारस्करादित्वात् सुट्। ( पा ६·१·१५७ )। "उभे वनस्पत्यादिषु°" ( पा ६·२·१४० ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्। श्यामाका श्यामाकाख्याः। सवित्रे। "उदात्तयणः°" ( पा ६·१·१७४ ) इति विभक्तिरुदात्ता। ᵛसत्यप्रसवाय अमोघाभ्यनुज्ञाय। आशवः षाष्टिका इत्येके, त्रिपक्षपच्या इत्यन्ये। पशूनां पतिः स्वामी पशुपतिः। "परादिश्छन्दसि°" ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम्।

नवमे रत्निनां हवींष्यभिषेचनीयस्य दीक्षणीया चेत्येतावदुक्तम्। दशमे देवसुवां हवींष्युच्यन्ते। तानि चाभिषेचनीयगतस्याग्नीषोमीयपशुपुरोडाशस्यानुनिर्वाप्याणि। तथा च बौधायनः*—"सह सोमौ क्रीणात्यभिषेचनीयाय दशपेयाय च। सह परिवहति अर्धं राज्ञः पुरोहितस्य गृहे दशपेयार्थं निदधाति। अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति। समानं तु स्विष्टकृदिडम्" ( आपश्रौ १८·१२·२-५ ) इति।

अग्नय इति ॥ तान्येतानि हवींषि विधत्ते—'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाꣳ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय सत्यायाऽऽम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुम्' इति ॥ गृहपत्यादीनि अग्न्यादिदेवताविशेषणानि। ᵛसत्यप्रसवाय अमोघाभ्यनुज्ञानाय। षष्टिभिरेव दिनैः पच्यमाना आशुव्रीहयः। स्थूलबीजा[1] महाव्रीहयः। आम्बा धान्यविशेषाः ॥ तेष्वेतेषु विधिषु श्रूयमाणा देवताः प्रशंसति—"देवसुवामेतानि हवीꣳषि भवन्ति। एतावन्तो वै देवानाꣳ सवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनꣳ सुवन्ते। अग्निरेवैनां गृहपतीनाꣳ सुवते सोमो वनस्पतीनाम्। रुद्रः पशूनाम्। बृहस्पतिर्वाचाम्।

*[ उद्धरणमिदमापस्तम्बसूत्रस्थं न बौधायनसूत्रस्थमित्यवधेयम्। ]। १. आ.क–स्थूलबीजम्।

व्रीहीणाꣳ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय सत्यायाऽऽम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुꣳ

व्रीहीणाम् । रुद्राय । पशुपतय इति पशु-पतये । गावीधुकम् । चरुम् । बृहस्पतये । वाचः । पतये । नैवारम् । चरुम् । इन्द्राय । ज्येष्ठाय । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । महाव्रीहीणामिति महा-व्रीहीणाम् । मित्राय । सत्याय । आम्बानाम् । चरुम् । वरुणाय । धर्मपतय इति धर्म-पतये । यवमयमिति यव-मयम् । चरुम् ।

गावीधुकास्तृणतण्डुलाः । बृहतां पतिः बृहस्पतिः । वनस्पतिवत् सुट्स्वरौ ( पा ६·१·१५७, ६·२·१४० ) । [v]वाचस्पतये । "सावेकाचः" ( पा ६·१·१६८ ) इति षष्ठ्या उदात्तत्वम् । "षष्ठ्याः पतिपुत्र" ( पा ८·३·५३ ) इति संहितायां सत्वम् । "षष्ठीयुक्तश्छन्दसि वा" ( पा १·४·९ ) इति पत्युर्घित्वम् । नीवाराः शुष्कजलाशयोत्थिताः । [v]ज्येष्ठाय प्रशस्यतमाय । महाव्रीहयः शालय इति केचित् । स्वयं विशीर्णव्रीहिभ्यः स्वयमुत्पन्ना व्रीहय इत्यन्ये । . सत्यस्वरूपाय [v]मित्राय । धर्मपतिः धर्मस्य पाता । पूर्ववत् स्वरः । [v]यवमयम् । "द्व्यचश्छन्दसि" ( पा ४·३·१५० ) मयट् ॥

अथ पुरोडाशस्विष्टकृतः पुरस्तात् ब्रह्मा यजमानस्य हस्तं गृह्णाति—'सविता' इत्यादि ॥ अत्र प्रसवस्य प्राधान्यात् तृतीयः सविता प्रथम आसीत् । सर्वत्र तादर्थ्येचतुर्थ्याः षष्ठी

इन्द्रो ज्येष्ठानाम् । मित्रः सत्यानाम् । वरुणो धर्मपतीनाम् । एतदेव सर्वं भवति" ( तैब्रा १·७·४ ) इति ॥ यानि 'अग्नये गृहपतये' [2]इत्याद्युत्पत्तिविधिभिर्विहितान्यष्टौ हवींषि तान्येतानि देवसुवां सबन्धीनि । भाविन्या संज्ञया यजमानो देवस्तं सुवन्तेऽनु जानन्तीत्यग्न्यादयो देवसुवः । यावन्तो विधिवाक्येष्वग्न्यादयः श्रूयन्त एतावन्त एव देवानां मध्ये सवा अभ्यनुज्ञातारः । अतस्त एवाग्न्यादयोऽस्मै यजमानाय सवान् स्वोचितानैश्वर्यविशेषान् प्रयच्छन्ति । तेऽग्न्यादय एनं यजमानं सुवन्त ईश्वरो यथा भवति तथाऽभ्यनुजानन्ति । [3]तत्राग्निरेवैनं यजमानमन्येषां गृहपतीनामीश्वरमनुजानाति । एवमन्यत्रापीश्वरं सुवत इति योज्यम् । 'सोमो वनस्पतीनां रुद्रः पशूनाम्' इत्यनयोर्मध्ये 'सविता सत्यप्रसवानाम्' इत्यध्याहर्तव्यम् । स्वभृत्यान् प्रत्यैश्वर्यार्थममोघा या अभ्यनुज्ञास्तासामीश्वरं करोतीत्यर्थः । गृहपत्यादीन् धर्मपत्यन्तान् प्रति यत् स्वामित्वमेतदेव लोकेऽपेक्षितं सर्वमैश्वर्यम् ॥

२. आ.क.पा-इत्यादिभिरुत्पत्ति°; मै३-इत्यादीन्युत्पत्ति° । ३. म४-तथाग्नि° ।

**सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां (१) बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनां**

सविता । त्वा । प्रसवानामिति प्र-सवानाम् । सुवताम् । अग्निः । गृहपतीनामिति गृह-पतीनाम् । सोमः । वनस्पतीनाम् । रुद्रः । पशूनाम् (१) । बृहस्पतिः । वाचाम् । इन्द्रः । ज्येष्ठानाम् । मित्रः । सत्यानाम् । वरुणः । धर्मपतीनामिति धर्म-पतीनाम् ।

---

( पा २·१·३६, २·३·६२ ) । vप्रसवानां प्रसवार्थं सर्वासु प्रवृत्तिषु अनुज्ञानार्थं vसविता त्वां सुवतां प्रेरयतु । षू प्रेरणे । प्रेरणमनुज्ञैव । [1]सर्वत्रानुज्ञातो भवेत्यर्थः । थाथादिना ( पा ३·२·१४४ ) प्रसवशब्दोऽन्तोदात्तः । 'गृहपतीनाम्' इति । भावप्रधानो निर्देशः । यानि गृहपतित्वानि बहुविधानि तदर्थं सुवताम् । vसोमः त्वाम् वनस्पत्यर्थं सुवताम् । vरुद्रः पशूनां पतिः त्वां पश्वर्थं सुवतां, वागर्थं vबृहस्पतिः सुवतां, vज्येष्ठानां ज्येष्ठत्वाय vइन्द्रः सुवतां, सत्यत्वाय vमित्रः सुवतां, धर्मपतित्वार्थं vवरुणः सुवताम् । हे vदेवाः अग्न्यादयो वरुणान्ताः, vये यूयं vदेवसुवः vस्थ देवस्य दानादिगुणयुक्तस्य यजमानस्य सवितारः प्रेरकाः स्थ vते यूयं यस्मादेवं प्रसवादीनामनुज्ञातारः तस्मात् vइमम् vआमुष्यायणं सिंहवर्मणः पुत्रं नन्दिवर्माणम् vअनमित्राय अनमित्रत्वाय अविद्यमानशत्रुत्वाय vसुवध्वम् । अनुजानीत अशत्रुमेनं कुरुतेत्यर्थः । इममामुष्यायणमिति सर्वनामद्वयं विशेषार्थमुपा-

---

**सवितेति** ॥ उक्तानां हविर्विधीनां संनिधौ 'सविता' इत्यादयो मन्त्रा आम्नाताः । तत्र कल्पः— "पुरस्तात् स्विष्टकृतः सविता त्वा प्रसवानाꣳ सुवतामिति ब्रह्मा यजमानस्य हस्तं गृह्णाति" ( आपश्रौ १८·१२·६ ) इति । पाठस्तु–'सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनां ये देवा देवसुवः स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्याय' इति । सविता हविर्विधौ तृतीयो देवः । सोऽत्र प्राधान्यात् प्रथमं निर्दिश्यते । यजमानस्य स्वभृत्येषु ऐश्वर्यार्थमनुज्ञाः प्रसवाः । हे यजमान, त्वां vसविता तेषां प्रसवानां स्वामित्वेन vसुवताम् अभ्यनुजानातु । एवमुत्तरत्र त्वां सुवताम् इति पदद्वयानुषङ्गेण योजनीयम् । हे vदेवाः अग्न्यादयः, vये यूयं vदेवसुवः यजमानप्रेरकाः vस्थ vते यूयम् vइमं यजमानम् vआमुष्यायणम् अमुष्य देवदत्तस्य पुत्रममुष्य यज्ञदत्तस्य पौत्रं च vअनमित्राय

---

१. त्रि–सर्वत्रैवानु° ।

ये देवा देवसुवः स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा

ये । देवाः । देवसुव इति देव-सुवः । स्थ । ते । इमम् । आमुष्यायणम् । अनमित्राय । सुवध्वम् । महते । क्षत्राय । महते । आधिपत्यायेत्याधि-पत्याय । महते । जानराज्यायेति जान-राज्याय । एषः । वः । भरताः । राजा । सोमः । अस्माकम् । ब्राह्मणानाम् । राजा ।

---

दीयते । अमुष्यशब्दान्नडादित्वात् फक् ( पा ४·१·९९ ) । किं च—Vमहते च Vक्षत्राय बलाय Vमहते च Vआधिपत्याय स्वामित्वाय Vमहते अविच्छिन्नाय च Vजानराज्याय जनानां राजा जनराजः तद्भावाय । उभयत्रापि गुणवचनत्वात् ष्यञ् ( पा ५·१·१२४ )। इममामुष्यायणं सुवध्वमित्येव । "'बृहन्महतोरुपसंख्यानम्' ( पा ६·१·१७३ वा १ ) इति महतो विभक्तेरुदात्तत्वम् ॥

यजमानायतने तिष्ठन् रत्निभ्यो जानपदेभ्योऽध्वर्युरावेदयते—' एष वः ' इति ॥ भरतानां निवासो जनपदो भरताः। " जनपदे लुप् " ( पा ४·२·८१ ) । भरतानां राजानोऽपि भरताः । " 'तस्य राजन्यपत्यवत्' " ( पा ४·१·१६८ वा ३ ) इति " जनपदशब्दात् क्षत्रियादञ् " ( पा ४·१·१६८ ), " यञिञोश्च " ( पा ४·१·१०१ ) इति बहुषु फक् । हे Vभरताः, एषः Vवः युष्माक Vराजा योऽयं राजसूयेन यजते । एवमयं व्याख्यातिगतो भवति, राज्यं चास्मिन् प्रतिहितम् । यद्यसौ भरतानामेव राजा तदानीमेवं, नान्यदा । यथाजनपदमिति केचित् ॥

---

शत्रुराहित्यार्थं Vसुवध्वम् अभ्यनु जानीध्वम् । किं च Vमहते Vक्षत्राय अनुत्तमक्षत्रियकुलाय, Vमहते Vआधिपत्याय अप्रतिहतनियमनसामर्थ्याय, Vमहते Vजानराज्याय जनसंबन्धि यद्राज्यं तच्च सागरपर्यन्तभूमिविषयत्वात् महत् सार्वभौमत्वाय सुवतामित्यर्थः ॥ विधत्ते—" सविता त्वा प्रसवानाꣳ सुवतामिति हस्तं गृह्णाति प्रसूत्यै " ( तैब्रा १·७·४ ) इति ॥ मन्त्रगतयोर्मध्यमोत्तमभागयोः स्पष्टार्थतामाशीःपरतां च दर्शयति । ' ये देवा देवसुवः स्थेत्याह । यथायजुरेवैतत् । महते क्षत्राय महत आधिपत्याय महते जानराज्याये-त्याह । आशिषमेवैतामाशास्ते " ( तैब्रा १·७·४ ) इति ॥

एष इति ॥ कल्पः—" अथैनं रत्निभ्य आवेदयत्येष वो भरता राजेति " ( आपश्रौ १८·१२·७ ) इति । हे Vभरताः राजन्यवैश्यादयो धनिकाः, Vएष यजमानः युष्माकं Vराजा । एनं स्वामिनं यथोचितं सेवध्वमित्यभिप्रायः ॥

प्रति॒ त्यन्नाम॑ रा॒ज्यम॑धायि॒ स्वां त॒नुवं॒ वरु॑णो अशिश्रेत्-

प्रतीति॑ । त्यत् । नाम॑ । रा॒ज्यम् । अ॒धा॒यि॒ । स्वाम् । त॒नुव॑म् । वरु॑णः । अ॒शि॒श्रे॒त् ।

---

ब्रह्मा जपति—'सोमः' इति ॥ अस्माकं ब्राह्मणानां सोमः राजा, अधुना अयं चेति । सर्वदा सराजका एव वयमित्यभिप्रायः ॥

यजमानो मुखं विमृष्टे—'प्रति त्यत्' इति द्वाभ्यां वारुणीभ्यां त्रिष्टुब्भ्याम् ॥ 'महत ऋतस्य नाम' इति प्रथमाया अन्तः । द्वे अप्यनवसाने । त्यत् एतत् राज्यं नाम नमनीयं प्रत्यधायि मयि प्रतिहितं प्रतिष्ठितमभूत् । यद्वा—छान्दसो लुङ् । प्रतिधीयताम् । "राज्यमेवास्मिन् प्रतिदधाति" ( तैब्रा १·७·४ ) इति ब्राह्मणम् । हेतुमाह—स्वाम् आत्मीयां तनुवं शरीरम् अनुज्ञातृस्वभावत्वं यस्मात् वरुणः अशिश्रेत् आश्रितवान् आसीत् मम धर्मपतित्वाभ्यनुज्ञानं कृतवान् । तेन राज्यं प्रत्यधायीति । 'वरुणसवमेवावरुन्द्धे' ( तैब्रा १·७·४ ) इत्यादि ब्राह्मणम् । उदाहरणमात्रं वरुणग्रहणं सवित्रादीनां सर्वेषामपि देवसुवां यथा प्रसूतं राज्यं प्रत्यधायीति वेदितव्यम् । श्रयतेर्लुङि "बहुलं छन्दसि" ( पा २·४·७६ ) इति शपः श्लुः । किं च, शुचेः मित्रस्य व्रत्याः कर्मयोग्याः अभूम । 'तत्र साधुः' ( पा ४·४·९८ ) इति यत् । अत एव महतः ऋतस्य च सत्यस्य यज्ञस्य वा नाम नमनम् अमन्महि ज्ञातवन्तः । मनुतेर्लङि शपो लुक् । यद्वा—न केवलं मित्रस्य व्रत्या अभूम; अपि तु ऋतस्य च नामामन्महीति ॥

---

**सोम इति** ॥ कल्पः—"सोमोऽस्माकं ब्राह्मणानां राजेति ब्रह्मा जपति" ( आपश्रौ १८·१२·८ ) इति ॥ सोमः उत्तमदेवो[4] राजा न त्वधमो यः क्षत्रिय इत्यर्थः ॥ भरतानामिव ब्राह्मणानामप्ययमेव राजेति प्राप्तिं वारयितुं व्याचष्टे—"एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानां राजेत्याह । तस्मात् सोमराजानो ब्राह्मणाः" ( तैब्रा १·७·४ ) इति । यस्मात् मन्त्रेण ब्रह्मा स्वकीयं राजानं विभज्य निर्दिष्टवांस्तस्माल्लोकेऽपि ब्राह्मणाः[5] अग्निष्टोमादियागेषु सोममेव राजशब्दोपहितैः[6] 'सोम राजन्नेहि, अवरोह' इत्यादिभिर्मन्त्रैरुपचरन्ति ॥

**प्रतीति** ॥ कल्पः—'प्रति त्यन्नाम राज्यमधायीति वारुणीभ्यां यजमानो मुखं विमृष्टे" ( आपश्रौ १८·१२·९ ) इति । पाठस्तु—'प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याभूवन् वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्यु त्रितो जरिमाणं न आनट्' इति ॥ 'ऋतस्य नाम' इत्यन्त आद्यो मन्त्रः । 'सर्वे व्राताः' इत्यादिर्द्वितीयः । 'त्यद्राज्यं महते' इत्यादि 'जानराज्याय' इत्यन्तं यत्पूर्वमभिहितं तत्

---

४. आ. उत्तमो देवो । ५. आ.क.'ब्राह्मणाः' नास्ति । ६. मै३-°शब्दोदितैः ।

शुचेर्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम
सर्वे व्राता (२) वरुणस्याभूवन् वि मित्र एवैररातिमतारीद्-
शुचेः । मित्रस्य । व्रत्याः । अभूम । अमन्महि । महतः । ऋतस्य । नाम ।
सर्वे । व्राताः । वरुणस्य । अभूवन् । वीति । मित्रः । एवैः । अरातिम् । अतारीत् ।

---

अथ द्वितीया । किंबहुना vसर्वे ऋत्विजः vवरुणस्य vव्राताः कर्मयोग्याः vअभूवन् । छान्दसोऽङ् । vमित्रः vएवैः आगमनैः अस्माकम् vअरातिम् अदानशीलं शत्रुं vव्यतारीत् वितारयतु दातारं करोतु । छान्दसो लुङ् । यदा विपूर्वस्तरतिः विप्लवे वर्तते, विनाशो विप्लवः, चुरादिः, (तदा) विनाशयत्वित्यर्थः । रातेः क्तिचि रातिः, न रातिः अरातिः । यद्वा—अरातिं शत्रुं विशेषेण तारयतु अतिक्रामयतु । किं च, vयज्ञियाः यज्ञसंपादनार्हाः ऋत्विजः अस्मान् vऋतेन यज्ञेन vअसूषुदन्त सूदयन्तु । षूद क्षरणे । रसास्वादनेन सूदयन्तु । "यज्ञर्त्विग्भ्यां घखञौ" ( पा ५.१.७१ ) । किं च, vउ इति समुच्चये । त्रितोऽग्निः त्रिभ्यो लोकेभ्य उत्पन्नः; त्रिभ्यो वातिवानेभ्यः, त्रिभिर्वा ब्राह्मणादिभिः; लौकिकैर्वा कृतप्राप्तिः । स vत्रितः अस्माकं vजरिमाण स्तोत्रम् । जीर्यतेरौणादिक इमनिच् । जरितृशब्दाद्वा भावे छान्दस इमनिच् । "तुरिष्ठेमेयःसु"

---

vराज्यं vनाम नमनीयं यजमानस्य यथाऽवश्यं भवति तथा vप्रति vअधायि वरुणेन प्रतिष्ठापितम् । [7-]स च[-7] vवरुणः vस्वां vतनुवम् vअशिश्रेत् आश्रितवान् । 'वरुणो धर्मपतीनाम्' इति मन्त्रेऽभिधानात् धर्मपतीन् पुरुषान् प्रति यजमानस्य स्वामित्वमभ्यनुजानती वरुणस्य स्वकीया तनुः । वरुणशब्देनाग्न्यादयोऽप्युपलक्ष्यन्ते । [8-]तेऽप्यनुज्ञाताः[-8] । अत एवाग्न्यादिदेवास्तत्तदनुज्ञात्रीं[9] स्वस्वतनुमाश्रितवन्त इति द्रष्टव्यम् । वयमपि vशुचेः vमित्रस्य अनुज्ञया vव्रत्याः कर्मयोग्याः[*] अभूम । 'मित्रः सत्यानाम्' इति मन्त्रेऽभिहितत्वात् । मित्रशब्देनाग्न्यादयोऽप्युपलक्ष्यन्ते । अत एवाग्न्यादिदेवैरनुज्ञाता वयं vमहते ऋतस्य प्रौढस्य यज्ञस्य vनाम vअमन्महि राजसूयं कर्म कुर्म इति नामधेयं सर्वदा मन्यामहे । किं च ऋत्विजः vसर्वे vवरुणस्य अनुज्ञया vव्राताः कर्मयोग्या अभूवन् । vमित्रः च vएवैः अस्मान् प्रति रक्षकत्वेनाऽऽगमनैः vअरातिं वैरिणं विशेषेण vअतारीत् वयं यथा वैरिणमतिलङ्घयामः तथाऽकरोत । vयज्ञियाः ऋत्विजः vऋतेन यज्ञेन vअसूषुदन्त रक्षितवन्तः । त्रिभिर्ब्राह्मणादिभिः वर्णैर्यागेषु विस्तार्यत इति vत्रितः अग्निः, स च vनः अस्माकं vजरिमाणं जरया शैथिल्यं vवि vउ विशेषेणोद्धृत्य vआनट् आयुष्यं व्यापितवान् भवति दीर्घायुष्यं कृतवानित्यर्थः ॥ तदिदं मन्त्रद्वयं पादशो व्याचष्टे—"प्रति त्यन्नाम

---

७. आ–'स च' नास्ति । ८–८. आ.क–'तेऽप्यनुज्ञाताः' नास्ति । ९. म४–एवाग्न्यादिहेतुकाम् । [*]( द्र. निघण्टु–२.१.७ ) ।

देवसुवां हवींषि ]

सूषुदन्त यज्ञिया ऋतेन व्युं त्रितो जरिमाणं न आनड्-
विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि ॥ १० ॥

[ पशूनां व्राताः पञ्चविंशतिश्च ]

असूषुदन्त । यज्ञियाः । ऋतेन । वीति । उ । त्रितः । जरिमाणम् । नः । आनट् ।
विष्णोः । क्रमः । असि । विष्णोः । क्रान्तम् । असि । विष्णोः ।
विक्रान्तमिति वि-क्रान्तम् । असि ॥ १० ॥

[ मैसं २·६·६,१२ ; कासं १५·५,८ ; शब्रा ५·३·३·३–१२ ]

---

( पा ६·४·१५४ ) इति तृशब्दलोपः । जरिमा स्तोतृत्वं तत् अग्निः व्यानट् व्याप्नोतु अस्माकं स्तुतिं गृहीत्वा स्तोत्रफलं ददात्वित्यर्थः । अश्नोतेर्लिङि व्यत्ययेन परस्मैपदम् । विकरण-व्यत्ययेन श्नम् । नशेर्वा गत्यर्थाल्लुङि "मन्त्रे घस°" ( पा २·४·८० ) इति च्लेर्लुक्, "छन्दस्यपि दृश्यते" ( पा ६·४·७३ ) इत्याडागमः । यद्वा—उक्तम् ऋतेनास्मानसूषुदन्तेति तदिदमस्माकं जरिमाणं जरां दीर्घायुष्ट्वं व्यानट् प्रापयतु । अन्तर्भावितण्यर्थाल्लुङ् । कियच्चिरमित्याह—उ इत्यप्यर्थे । त्रितोऽपि त्रिभ्योऽपि वयोभ्यः पुरस्तात् जरिमाणं नः प्रापयतु सर्वमायुर्जीवयत्वित्यर्थः ॥

त्रीन् विष्णुक्रमान् प्राचः क्रामति—'विष्णोः क्रमोऽसि' इति ॥ व्याख्यातम् ( तैसं १·७·७ ) ॥

इत्यष्टमे दशमोऽनुवाकः ॥

---

राज्यमधायीत्याह । राज्यमेवास्मिन् प्रतिदधाति । स्वां तनुवं वरुणो अशिश्रेदित्याह । वरुणसवमेवाव-रुन्धे । शुचेर्मित्रस्य व्रत्या अभूमेत्याह । शुचिमेवैनं व्रत्यं करोति । अमन्महि महत ऋतस्य नामेत्याह । मनुत एवैनम् । सर्वे व्राता वरुणस्याभूवन्नित्याह । सर्वव्रातमेवैनं करोति । वि मित्र एवैररातिमतारीदित्याह । अरातिमेवैनं तारयति । असूषुदन्त यज्ञिया ऋतेनेत्याह । स्वदयत्येवैनम् । व्यु त्रितो जरि- २
माणं न आनडित्याह । आयुरेवास्मिन् दधाति" ( तैब्रा १·७·४ ) इति । वरुणसवं वरुणस्यानुज्ञाम् । एनं राजसूयं मनुते एव पुनः पुनः कर्तुमिच्छत्येव । सर्वेऽध्वर्युप्रभृतयो व्राता व्रतयोग्या यस्य यजमानस्यासौ सर्वव्रातः । एनं यजमानमरातिं तारयति वैर्यतिक्रमं[10] कारयत्येव । एनं यज्ञं स्वदयत्येव स्वादू-

---

[10]. क–वैर्यतिक्रमक्षमम् ।

करोत्यविघ्नेन पालयतीत्यर्थः । मुखमार्जनं विधत्ते—" द्वाभ्यां विमृष्टे । द्विपाद्यजमानः प्रतिष्ठित्यै " ( तैब्रा १.७.४ ) इति ॥ पुरतो निर्वाप्यस्याऽनुनिर्वाप्यैः सहैव स्विष्टकृदवदानं विधत्ते—" अग्नीषोमीयस्य चैकादशकपालस्य देवसुवां च हविषामग्नये स्विष्टकृते समवद्यति । देवताभिरेवैनमुभयतः परिगृह्णाति " ( तैब्रा १.७.४ ) इति । एकत्राग्नीषोमौ देवता । इतरत्राष्टावग्न्यादिदेवताः । एवमुभयतो देवताभिर्यज्ञस्य परिग्रहः ॥

विष्णोरिति ॥ कल्पः--" विष्णोः क्रमोसीऽति त्रीन् विष्णुक्रमान् प्राचः क्रामति " ( आपश्रौ १८.१२.१० ) इति । पाठस्तु--' विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि ' इति । वाजपेये रथसमीपगमने व्याख्यातम् ( तैसं १.७.१० )। विधत्ते—" विष्णुक्रमान् क्रमते । विष्णुरेव भूत्वेमाँल्लोकानभिजयति " ( तैब्रा १.७.४ ) इति ॥

अत्र विनियोगसंग्रहः—

" सवितेति स्वामिहस्तं ब्रह्मा गृह्णीत एष वः ।
रत्निभ्यः स्वामिनं ब्रूयात् सोमेति ब्रह्मणो जपः ॥ १ ॥
प्रतिद्वाभ्यां मुखं स्वामी मार्ष्टि विष्णोस्त्रिभिः क्रमः ।
दशमे त्वनुवाकेऽस्मिन्नष्टौ मन्त्रा उदीरिताः " ॥ २ ॥ इति ॥

अथ मीमांसा ॥ एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

" नानाबीजेषु यागेषु वाग्विसर्गश्च पूर्ववत् ।
शङ्किते तद्विधौ तस्याविधित्वेन तदुत्तरम् " ॥ ( जैन्या ११.३.८ ) ॥

राजसूये नानाविधबीजयुक्ता यागाः श्रुताः—" अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुम् " ( तैसं १.८.१० ) इत्यादिना । प्रकृतौ प्रणीताप्रणयनकाले नियमिताया वाचो हविष्कृत आह्वानकाले विसर्गः श्रुतः । स चात्र चोदकप्राप्तः । तत्र प्रथमे चरमे वा हविष्कृदाह्वानकाले वाग्विसर्गो विकल्पित इति प्राप्ते पूर्वपक्षे चरम एवेति राद्धान्तः । अत्रेयं पूर्वपक्षिणोऽधिका शङ्का, न हस्तेन कण्डूयनं विहितं वाग्विसर्गस्तु विहित इति । तत्रेदमुत्तरम्—विहितस्य वाङ्नियमनस्यावधित्वेनायं हविष्कृदाह्वानकालीनो वाग्विसर्गोऽनूद्यते । रागप्राप्तत्वान्नासौ विधीयत इति । तस्मात् प्रासनवद्विसर्गोऽपि चरम एव काले नियम्यते ॥

तत्रैव चतुर्थपादे चिन्तितम्—

" नानाबीजेषु तन्मात्रः सकृद्भूयोऽपि वा सकृत् ।
चिकीर्ष्यैक्यात् प्रयोगाणां भिन्नत्वाच्च सकृद्भवेत् " ॥ ( जैन्या ११.४.२० ) ॥

राजसूये नानाबीजयागेषु सोऽवघातमन्त्रः सकृदेव प्रयोक्तव्यः । कुतः ? सर्वावघातविषयाया-मेकस्यां चिकीर्षायां प्रकृतत्वादिति प्राप्ते ब्रूमः—समन्त्रोऽवघातश्चोदकातिदेशेन प्राप्तो बीजेषु प्रयुज्यते । तण्डुलनिष्पत्तौ स कृतार्थः संपन्नः । पुनर्बीजान्तरे तण्डुलनिष्पत्तये समग्रस्यावघातस्य प्रयोक्तव्यत्वा-दसकृन्मन्त्रपाठः । अवघातप्रसङ्गात् प्रथमे प्रपाठक उदाहृतोऽप्यत्र मन्त्रविषयलाभादनुस्मारितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

*अर्थेतः स्थापां पतिरसि

अर्थेत इत्यर्थ–इतः । स्थ । अपाम् । पतिः । असि ।

अथ[1] अभिषेकार्थं षोडश सप्तदश वा वायव्यैर्गृह्णाति—'अर्थेतः स्थ' इत्येतैर्मन्त्रैः ॥ एतास्वप्सु प्रथमाज्येन हुत्वा ग्रहान् गृह्णाति । यस्मिन्नेव जुहोति, तस्मिन्नेव जले तेनैव मन्त्रेण ग्रहं गृह्णाति । तत्र 'आपो देवीः' इत्यादिका त्रिष्टुप् सर्वत्रानुषज्यते । 'राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा' इत्यन्तेन होमः, 'राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त' इत्यन्तेन ग्रहणम् । अमुष्मा इत्यत्र चतुर्थ्यन्तं विशेषवाचिपदमुपादीयते, यथा राजसिंहवर्मणे दत्तेति । "अपां ग्रहान् गृह्णात्येतद्वाव राजसूयम्" (तैसं ५.६.२) इत्यग्निकाण्डे ब्राह्मणं भवति । तत्रायं प्रयोगक्रमः—'अर्थेतः स्थापो देवीर्मधुमतीरगृह्णन्' इत्यारभ्य 'राष्ट्रं दत्त स्वाहा' इति सारस्वतीष्वप्सु प्रागेवानीतासु वहन्तीनां वा जले आज्येन जुहोति, पुनश्च 'अर्थेतः स्थाऽऽपो देवीः' इत्यारभ्य 'राष्ट्रं राजेन्द्रवर्मणे दत्त' इति तस्मिन्नेव जले वायव्यैः पर्णमयेन गृह्णाति । पर्णमयेन स्रुवेणेति केचित् । एवमुत्तरत्रापि होमग्रहणे सर्वत्र समानमन्त्रे कर्तव्ये । मन्त्रार्थस्तु—[v]अर्थेतः [v]स्थ । हे आपः अर्थमरणीयं

दशमे देवसुवां हवींष्युक्तानि । एकादशेऽभिषेकार्थजलविषया मन्त्रा उच्यन्ते—

**अर्थेत इति** ॥ कल्पः—"अपां ग्रहान् गृह्णाति । आग्नीध्रे वायव्यैर्गृह्यन्ते । षोडश सप्तदश वा ग्रहा[1] गृह्यन्ते । तावन्त एव ग्रहा[2] गृह्यन्ते । अर्थेतः स्थेति सारस्वतीष्वप्सु हुत्वैतेनैव मन्त्रेण गृह्णाति । एवमुत्तरैः । येन जुहोति तेन गृह्णाति । अपां पतिरिति समुद्रियाः सैन्धवीर्वाऽऽपो वाऽन्यः पुंनदः स्यात् । पुरुषे पशौ वाऽभ्यवेते प्रतीपमन्य ऊर्मिर्युध्यति । अन्वीपमन्यः । वृषाऽसीति यः प्रतीपम् । वृषसेनोऽसीति योऽन्वीपम् । व्रजक्षित इति कूप्यानाम् । मरुतामोज इति याः प्रतीपं गच्छन्ति । ह्लादुनीनां वा । प्रहावरीः[3] स्थेति या उत्स्यन्दित्वा[4] तत्रैव प्रत्यवस्रियन्ते । परिवाहिणीः स्थेति परिनदीनाम् । सूर्यवर्चस इत्यातपति वर्ष्याणाम् । सूर्यत्वचस इति यासु रूपाणि परिदृश्यन्ते । मान्दा इति स्थावराणाम् । वाशा इति [5]प्रुष्वाणाम् । शक्करीः स्थेति गोरुल्ब्यानाम् । विश्वभृत इति पयसः । जनभृत इति दध्नः । अग्नेस्तेजस्या इति घृतस्य । अपामोषधीनां रस इति मधुनः । आपो देवीर्मधुमतीरगृह्णन्निति सर्वत्र होमे ग्रहणे चानुषजति । राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहेति होमसंयुक्ते राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्तेति ग्रहणसंयुक्ते" (आपश्रौ १८.१२.१३–१८, १३.२०) इति । अत्र[6] सूत्रार्थो मन्त्रव्याख्यान[7] एव स्पष्टीभविष्यति । 'प्रहावरीः[8] स्थ, परिवाहिणीः स्थ' इति मन्त्रद्वयं शाखान्तरगतम्[M] । अत्र मन्त्रपाठस्तु—'अर्थेतः स्थापां पतिरसि वृषाऽस्यूर्मिर्वृषसेनोऽसि व्रजक्षितः स्थ मरुतामोजः स्थ

*[ अनुवाकेऽस्मिन् 'अर्थेतः स्थ' इत्यादिषु पञ्चदशसु मन्त्रेषु 'अपो देवीः' इत्यनुषज्यते । सर्वेषु मन्त्रेष्वनुवाकेऽस्मिन्ननुषङ्गस्य * एतादृशं चिह्नं न पृथङ्मुद्रापितमित्यवधेयम् । ] । १. मै–'अथ' नास्ति ।

१. क.पा.म.६.हा–ग्रहाः नास्ति । २. उ.क.हा–'ग्रहाः' नास्ति । ३. आ.इ.उ.पा.म६–प्रभावरीः । ४. इ.उ.पा–यावदुत्स्यन्दित्वा । ५. [ शुद्धीकृतः पाठः ], मुद्रितपुस्तकयोः लिखितपुस्तकेषु 'पुष्पाणाम्' । ६. आ–'अत्र' नास्ति । ७. मै३–मन्त्रार्थ ज्ञानेन; म४.म.६–व्याख्यानेन । ८. आ.इ.उ.पा.म६–प्रभावरीः । [M]( मैत्रायणीसंहिता २.६.७ ) ।

वृषाऽस्यूर्मिर्वृषसेनोऽसि व्रजक्षितः स्थ मरुतामोजः स्थ सूर्यवर्चसः स्थ सूर्यत्वचसः स्थ मान्दाः स्थ वाशाः स्थ शक्करीः स्थ विश्वभृतः स्थ जनभृतः स्थाग्नेस्तेजस्याः स्थापामोषधीनाꣳ रसः स्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः ।

वृषा । असि । ऊर्मिः । वृषसेन इति वृष—सेनः । असि । व्रजक्षित इति व्रज—क्षितः । स्थ । मरुताम् । ओजः । स्थ । सूर्यवर्चस इति सूर्य—वर्चसः । स्थ । सूर्यत्वचस इति सूर्य—त्वचसः । स्थ । मान्दाः । स्थ । वाशाः । स्थ । शक्करीः । स्थ । विश्वभृत इति विश्व—भृतः । स्थ । जनभृत इति जन—भृतः । स्थ । अग्नेः । तेजस्याः । स्थ । अपाम् । ओषधीनाम् । रसः । स्थ । अपः । देवीः । मधुमतीरिति मधु—मतीः । अगृह्णन् । ऊर्जस्वतीः । राजसूयायेति राज—सूयाय । चितानाः ॥

स्थानान्तरं यन्ति गच्छन्तीति अर्थेतः । एतेः क्विप् (पा ३·२·७६)। तादृशीर्वः vआपः व्यापनस्वभावाः vदेवीः दीप्तिमतीः vमधुमतीः मधुरसवतीः vअगृह्णन् देवाः ऋत्विजो वा । vऊर्जस्वतीः बलवतीः vराजसूयाय राजसूयार्थं राजसूये अभिषेकार्थमगृह्णन् vचितानाः चिन्तयन्तीः राजसूयाभिनिष्पत्त्युपायचिन्ताव्यापृताः । यद्वा—राजसूयाय चितानाः देवा अगृह्णन् । राजेह सूयते,

सूर्यवर्चसः स्थ सूर्यत्वचसः स्थ मान्दाः स्थ वाशाः स्थ शक्करीः स्थ विश्वभृतः स्थ जनभृतः स्थाग्नेस्तेजस्याः स्थापामोषधीनाꣳ रसः स्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः । राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त ' इति ॥ हे सारस्वत्य आपः, यूयम् vअर्थेतः vस्थ, अर्थं प्रयोजनमुद्दिश्य सरस्वत्या नद्याः सकाशात् यज्ञदेशं यन्ति गच्छन्तीत्यर्थेतः, यूयं तथाविधाः स्थ । समुद्रं कांचिन्नदीं पुंनदं वा संबोध्य vअपां vपतिः vअसि इत्युच्यते त्वदीयं जलं गृह्णामीत्यभिप्रायः । हे प्रतीपं युध्यन्नूर्मे, त्वं vवृषा vअसि सेचकोऽसि । हे अन्वीपं युध्यन्नूर्मे त्वं vवृषसेनः vअसि सेचनक्षमा सेना जलराशिरूपा यस्यासौ वृषसेनः । पुरुषे पशौ वा नदीमुत्तरीतुं प्रविष्टे सत्युपरिभागस्थ ऊर्मिः प्रवाहस्योर्म्यन्तरेण युध्यति, अधोभागस्थः प्रवाहानुकूलः सहसा गच्छन्नूर्म्यन्तरेण युध्यति, तदुभयमत्रोक्तम् । हे कूप्या आपः, यूयं vव्रजक्षितः vस्थ, व्रजे गोष्ठवद् बह्वीनां निवासयोग्ये कूपस्थाने[१] क्षियन्ति निवसन्तीति व्रजक्षितः । हे प्रतीपगामिन्य आपः, यूयं vमरुताम् vओजः vस्थ वायूनां बलरूपा भवत । आवर्तादिषु वायुना प्रतिहताः सत्यः प्रतीपं गच्छन्ति । हे आतपयुक्तवृष्टिसंबन्धिन्य आपः, यूयं vसूर्यवर्चसः vस्थ, सूर्यवद्वर्चस्तेजो यासां ताः सूर्यवर्चसः । हे सूर्यादिप्रतिबिम्बग्राहिण्य आपः, यूयं vसूर्यत्वचसः vस्थ, सूर्यस्य त्वक् शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः सूर्यत्वचसः । हे स्थावरा आपः, यूयं vमान्दाः vस्थ गत्यभावात् मन्दरूपाः स्थ । हे नीहारगता आपः, यूयं vवाशाः vस्थ वश्या भवत । नीहारो हि नदीप्रवाहवत् मनुष्यगतिं न प्रतिबध्नाति ततो वश्यत्वम् । गोर्गर्भवेष्टन उल्बे स्थिता हे आपः, यूयं vशक्करीः vस्थ गर्भरक्षणे शक्ता भवत । हे क्षीरगता आपः, यूयं vविश्वभृतः vस्थ, विश्वं बिभ्रतीति विश्वभृतः । क्षीरेण हि प्राणिजातं

१ म४.म६.मै३—कूलस्थाने ।

याभिर्मित्रावरुणावभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः ।
राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त ॥ ११ ॥

[ अत्येकादश च ]

याभिः । मित्रावरुणाविति मित्रा—वरुणौ । अभ्यषिञ्चन्नित्यभि—असिञ्चन् ।
याभिः । इन्द्रम् । अनयन् । अतीति । अरातीः ॥
राष्ट्रदा इति राष्ट्र—दाः । स्थ । राष्ट्रम् । दत्त । स्वाहा ।
राष्ट्रदा इति राष्ट्र—दाः । स्थ । राष्ट्रम् । अमुष्मै । दत्त ॥ ११ ॥

[ मैसं २·६·७; कासं १५·६; वासं ९·१–४; ]

राजा वाऽनेन सूयते इति राजसूयः क्रतुः । "राजसूयसूर्य°" ( पा ३·१·११४ ) इति क्यपि निपात्यते । चिती संचेतने, चुरादिरनुदात्तेत् । "बहुलमन्यत्रापि°" ( उ १९० ) इति णिलुक् । "बहुलं छन्दसि" ( पा २·४·७३ ) इति शपो लुक् । लसार्वधातुकानुदात्तत्वे (पा ६·१·१८६ ) धातुस्वरः । याभिः युष्माभिः[2] मित्रावरुणौ कर्मसु अभि असिञ्चन् देवाः, याभिः च युष्माभिः इन्द्रम् अभ्यषिञ्चन् देवाः, अरातीन् च अति अनयन् इन्द्रं सर्वान् शत्रूनतीत्योपरीन्द्रं स्थापितवन्तः; ता यूयं राष्ट्रदाः स्थ राष्ट्रस्य दात्र्यः स्थ, अद्भिर्हि राष्ट्रं भवति । ता यूयमस्मै राष्ट्रं दत्त, स्वाहा स्वाहुतमिदमाज्यमस्तु इति होमे । ग्रहणे तु यस्मात् राष्ट्रदाः स्थ तस्मात् अमुष्मै राजेन्द्रवर्मणे राष्ट्रं दत्त; ता वो गृह्णामीति ॥

पुनरस्य शोणादेर्वा जलम्—'अपां पतिरसि' इति ॥ अपां पतिः समुद्रः तदीया आप उच्यन्ते; विकारे प्रकृतिशब्दात् । समुदायशब्दादेकवचनम् । शोणादीनां पुंस्त्वेन अपां पतित्वम् । "ऊडिदम्°" ( पा ६·१·१७१ ) इति षष्ठ्या उदात्तत्वम् ॥

पुष्यते । हे दधिगता आपः, यूयं जनभृतः स्थ । पूर्ववत् व्याख्येयम् । हे घृतद्रवरूपा आपः; यूयम् अग्नेः तेजस्याः स्थ, ज्वालारूपत्वात् घृतमग्नेस्तेजस्तेन भवास्तेजस्याः । हे मधुद्रवरूपा आपः, यूयम् अपाम् ओषधीनां रसः स्थ । पुष्परसजन्यत्वादुभयसारत्वं प्रसिद्धम् । राजसूयार्थं चिताना: चिन्तयन्त ऋत्विजः अपः अगृह्णन् । कीदृशीः ? देवीः दीप्यमानाः मधुमतीः मधुराः ऊर्जस्वतीः बलप्रदाः । ता एव पुनर्विशेष्यन्ते—याभिः अग्निर्देवताः[10] पूर्वं मित्रावरुणौ अभ्यषिञ्चन् पुनरपि याभिः अद्भिः अरातीः शत्रूनतिक्रम्य इन्द्रम् अनयन् तादृशीरपोऽगृह्णन् इत्यन्वयः । हे आपः, यूयं राष्ट्रप्रदत्वाद्यजमानाय राष्ट्रं दत्त स्वाहा तुभ्यमिदं स्वाहुतम् । हे आपः, राष्ट्रप्रदत्वात् अमुष्मै रामयुधिष्ठिरादिवर्मणे राष्ट्रं दत्त । अत्र 'अर्थे°' इत्यादिषु पञ्चदशसु मन्त्रेषु 'अपो देवीः' इत्यृगियं शेषत्वेनानुषज्यते ।

२. तं.त्रि–मन्त्रिताभिः ।

१०. म४.म६–मै३–देवाः ।

अथ नद्यां पुरुषे पशौ वा तिष्ठति प्रतीपमन्य ऊर्मिर्युध्यति, अन्वीपमन्यः; तयोः प्रतिस्रोता य उर्मिर्भवति, तज्जलं गृह्णाति—'वृषास्यूर्मिः' इति ॥ [v]वृषा वर्षिता वृष्टिहेतुत्वात् । प्रधाने [ धानं ] वा; संघातरूपत्वात् । [v]ऊर्मिः संघातार्थः अरणशीलः वा ॥

अथानुस्रोता य ऊर्मिस्तज्जलं गृह्णाति—'वृषसेनोऽसि' इति ॥ सेक्त्री सेना यस्य संघातत्वेन महत्त्वात् सेकसामर्थ्याच्च । छान्दसमन्तोदात्तत्वम् । केचित्तु—'वृषाऽस्यूर्मिः' इत्येतावता ऊर्मिजलं गृह्णाति, 'वृषसेनोऽसि' इति पल्वल्यमिति ॥

अथ कूप्या गृह्णाति—'व्रजक्षितः स्थ' इति ॥ व्रजे वेष्टितेऽवकाशे क्षियन्ति निवसन्ति इति [v]व्रजक्षितः । क्षि निवासगत्योः ॥

प्रतीपोदकमावर्तजलं गृह्णाति—'मरुतामोजः स्थ' इति ॥ [v]मरुतां वायूनाम् [v]ओजः बलं [v]स्थ; तेन निर्वृत्तत्वात् ॥

आदित्ये दृश्यमाने यदा वर्षति तज्जलं गृह्णाति—'सूर्यवर्चसः स्थ' इति ॥ सूर्यं वर्चयन्ति भृशं दीपयन्ति । "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च" ( उ ६७६ ) इत्यसुन् । सातपे हि वर्षे भृशमादित्यो दीप्यते । बहुव्रीहिर्वा, सूर्यस्येव वर्चो येषामिति । सूर्यरश्मिसंयोगेन वर्चस्वित्वात् ॥

यत्र कुत्रचित् प्रसन्नं जलं गृह्णाति—'सूर्यत्वचसः स्थ' इति ॥ त्वच संवरणे । सूर्यं त्वचन्ति संवृण्वन्ति । पूर्ववदसुन् । यासु खलु निर्मलास्वप्सु रूपाणि परिदृश्यन्ते ताः खलु सर्वरूपप्रकाशनं सूर्यमपि स्वमहिम्ना संवृण्वन्ति ॥

स्थावराणां गृह्णाति, ह्रादीर्वा—'मान्दाः स्थ' इति ॥ मन्दस्वभावाः³ । मां दत्त देवेभ्य इति ह्रादं कुर्वाणाः, अशोष्याः इत्यन्ये ॥

अवश्यायोदकं गृह्णाति—✻-[ वाशाः स्थेति ॥ [v]वाशाः, वश्याः, नीहारो हि नदीप्रवाहवन्मनुष्यगतिं न प्रतिबध्नाति; ततो वश्यत्वम् ॥

गोरुल्व्याः गोर्गर्भवेष्टनगताः अपो गृह्णाति— ]-✻ 'शक्वरीः स्थ' इति ॥ गर्भसंरक्षणे शक्ताः शक्वर्यः । "वा छन्दसि" ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घत्वम् ॥

पयो गृह्णाति—'विश्वभृतः स्थ' इति ॥ विश्वं बिभ्रति धारयन्ति वा पोषयन्ति वा [v]विश्वभृतः, तद्रूपेण विवक्षितत्वात् बहुवचनं स्त्रीत्वं च ॥

३. तं—मन्दाः । ✻- -✻[ लिखितपुस्तकेषु त्रुटितोऽयत्रो ग्रन्थः सायणीयमनुसृत्य योजितः । ] ।

अभिषेकार्थजलविषया मन्त्राः ]

दधि गृह्णाति—' जनभृतः स्थ ' इति ॥ जनं बिभ्रति इति <sup>V</sup>जनभृतः ॥

घृतं गृह्णाति—' अग्नेस्तेजस्याः स्थ ' इति॥ <sup>V</sup>अग्नेः तेजसा सहिताः <sup>V</sup>तेजस्याः। गवादिभ्रष्टभ्यः ( पा ५·१·२ )। तेजसो वा निमित्तभूतास्तेजस्याः । " गोद्व्यचः " ( पा ५·१·३९ ) इति यत् । तेजसि वा भवाः, तदर्थं व्यापृतत्वात् ॥

मधु गृह्णाति—' अपामोषधीनां रसः स्थ ' इति ॥ अद्भ्य ओषधीभ्यश्च निष्पत्तेः ॥

इत्यष्टमे एकादशोऽनुवाकः ॥

---

स्वाहाकारान्तो ' राष्ट्रदाः ' इति मन्त्रो होमकाले शेषत्वेनानुषज्यते । तद्रहितस्तु ग्रहणकाले ॥ विधत्ते—" अर्थेतः स्थेति जुहोति । आहुत्यैवैना निष्क्रीय गृह्णाति । अथो हविष्कृतानामेवाभिघृतानां गृह्णाति " ( तैब्रा १·७·५ ) इति । एनाः सरस्वत्यादिनदीगता अपो निष्क्रीय निःशेषेण क्रीत्वा । किं चाऽऽहुत्या हविष्कृता हवीरूपत्वं प्रापिता भवन्ति । आज्यहोमस्याभिघारणरूपत्वात् ॥ होमादूर्ध्वमनेन मन्त्रेण ग्रहणं विधत्ते—" वहन्तीनां गृह्णाति । एता वा अपाꣳ राष्ट्रम् । राष्ट्रमेवास्मै गृह्णाति । अथो श्रियमेवैनमभिवहन्ति " ( तैब्रा १·७·५ ) इति । सरस्वत्यामन्यस्यां वा नद्यां प्रवाहरूपा वहन्त्यः, तासां सकाशात् गृह्णीयात् । एता एव वहन्त्यः कुल्यारूपेण बहुविधसस्योपकारित्वादपां[11] राष्ट्रमित्युच्यते । तद्ग्रहणेन यजमानार्थं राष्ट्रं कृतं[12] भवति । किं चैनं यजमानं प्रति श्रियं वहन्ति ॥ स्त्रीलिङ्गपुंलिङ्गस्य[13] अभिप्रायं दर्शयति—" अपां पतिरसीत्याह । मिथुनमेवाकः " ( तैब्रा १·७·५ ) इति ॥ यजमानस्य सस्याभिवृद्धये जलसंपत्तिं दर्शयति[14]—" वृषाऽस्यूर्मिरित्याह । ऊर्मिमन्तमेवैनं करोति " ( तैब्रा १·७·५ ) इति ॥ स्वाधीनसेनायुक्तत्वं दर्शयति—" वृषसेनोऽसीत्याह सेनामेवास्य सꣳश्यति " ( तैब्रा १·७·५ ) इति ॥ वैश्यादिप्रजासंपत्तिं दर्शयति— " व्रजक्षितः स्थेत्याह । एता वा अपां विशः । विशमेवास्मै पर्यूहति " ( तैब्रा १·७·५ ) इति । नगरस्थितवैश्यवत् कूपे सर्वदाऽवस्थानाद्वैश्यत्वम् । अन्नप्राप्तिं दर्शयति—" मरुतामोजः स्थेत्याह । अन्नं वै मरुतः अन्नमेवावरुन्द्धे " ( तैब्रा १·७·५ ) इति ॥ राष्ट्रस्य [15]वैर्येनभिभवरूपं तेजो दर्शयति— " सूर्यवर्चसः स्थेत्याह । राष्ट्रमेव वर्चस्व्यकः " ( तैब्रा १·७·५ ) इति ॥ सत्यानृतप्रयुक्तं स्वातन्त्र्यं दर्शयति[15]—" सूर्यत्वचसः स्थेत्याह । सत्यं वा एतत् । यद्वर्षति । अनृतं यदातपति वर्षति । सत्यानृते एवावरुन्द्धे " ( तैब्रा १·७·५ ) इति । आतपरहिताया वृष्टेः प्रभूतत्वेन [16]फलपर्यवसायित्वात् सत्यत्वम्[16] आतपयुक्तायास्तु तद्वैपरीत्यम् । सर्वत्र सत्यं वक्तुमनृतं वर्जयितुं क्षमत्वं तयोरवरोधः ॥ वेदनं प्रशंसति—" नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद " ( तैब्रा १·७·५ ) इति ॥ स्थिरास्वप्सु वर्षणादिकं विस्रम्भेण कर्तुं शक्यत्वात् राष्ट्रगतब्राह्मणवर्गस्य ब्रह्मवर्चसं दर्शयति—" मान्दाः स्थेत्याह । राष्ट्रमेव ब्रह्मवर्चस्यकः " ( तैब्रा १·७·५ ) इति ॥ नीहारे वश्यत्वस्य दर्शितत्वाद्राष्ट्रस्यापि

---

११. इ.उ.पा–त्वात्तदपाम् । १२. म४.म६–गृहीतम् । १३. म४.म६.मै३–°पुंलिंगनिर्देशस्य । १४. आ.क–प्रदर्शयति । १५–१५. म४–ब्रह्मवर्चसत्वमादर्शयति । १६–१६ आ.क–फलपर्यन्तस्थायित्वात् ।

वश्यत्वं दर्शयति—"वाशाः स्थेत्याह। राष्ट्रमेव वश्यकः" (तैब्रा १.७.५) इति॥ उल्बगतानामपां पशुप्राप्तिं दर्शयति—"शक्वरीः स्थेत्याह। पशवो वै शक्वरीः। पशूनेवावरुन्द्धे" (तैब्रा १.७.५) इति॥ क्षीरस्थजलेन क्षीरसंपत्तिं दर्शयति—"विश्वभृतः स्थेत्याह। राष्ट्रमेव पयस्व्यकः" (तैब्रा १.७.५) इति॥ दध्न [17]इन्द्रियप्रदत्वात् तज्जलेनेन्द्रियसंपत्तिं[18] दर्शयति—"जनभृतः स्थेत्याह राष्ट्रमेवेन्द्रियाव्यकः" (तैब्रा १.७.५) इति॥ घृतस्य तेजोरूपत्वात् तेजःसमृद्धिं[19] दर्शयति—"अग्नेस्तेजस्याः स्थेत्याह। राष्ट्रमेव तेजस्व्यकः" (तैब्रा १.७.५) इति॥ अपोषधिरसस्य मधुत्वात् मधुसंपत्तिं दर्शयति—"अपामोषधीनाꣳ रसः स्थेत्याह। राष्ट्रमेव मधव्यमकः" (तैब्रा १.७.५) इति। 'वहन्तीनां गृह्णाति' इति नदीमात्रप्रवाहे जलग्रहणं यदुक्तं तस्यानुकल्पत्वं द्योतयन् मुख्यकल्पं विधत्ते—"सारस्वतं ग्रहं गृह्णाति। एषा वा अपां पृष्ठम्। यत् सरस्वती। पृष्ठमेवैनꣳ समानानां करोति" (तैब्रा १.७.५) इति॥ सरस्वत्याख्यान्नदीविशेषादानीयमानः सारस्वतः। अपां पृष्ठं पृष्ठवदुपरिवर्तिनी प्रशस्तेत्यर्थः। पृष्ठमेव करोत्युत्कृष्टमेव करोतीत्यर्थः॥ शाखान्तरगतेनैकेन मन्त्रेण सह षोडशसंख्यां विधत्ते—"षोडशभिर्गृह्णाति। षोडशकलो वै पुरुषः। यावानेव पुरुषः। तस्मिन् वीर्यं दधाति" (तैब्रा १.७.५) इति। षोडशसंख्याकाः कला अवयवा यस्येति षोडशकलः। एकादशेन्द्रियैः पञ्चभूतैश्चोत्पादितत्वाच्छरीरस्य षोडशकलत्वम्[20]॥ 'अर्थेतः' इत्यादीनां षोडशमन्त्राणां होमशेषत्वं ग्रहणशेषत्वं च पूर्वं विहितम्। "अर्थेतः स्थेति जुहोति" (तैब्रा १.७.५), "वहन्तीनां गृह्णाति" (तैब्रा १.७.५) इत्यभिधानात्तत्रोभयत्रावस्थितां षोडशसंख्यां समस्य प्रशंसति—"षोडशभिर्जुहोति षोडशभिर्गृह्णाति। द्वात्रिꣳशत् संपद्यन्ते। द्वात्रिꣳशदक्षराऽनुष्टुक्। वागनुष्टुप् सर्वाणि छन्दाꣳसि। वाचैवैनꣳ सर्वेभिश्छन्दोभिरभिषिञ्चति" (तैब्रा १.७.५) इति। अनुष्टुप्छन्दसोऽक्षरसंघातगामित्वाद्वाग्रूपत्वम्। "अनुष्टुभो वा इमानि जायन्ते" (नृसिंहपूर्वतापनीयोपनिषत् १.१) इति तापनीये सर्वजगद्धेतुत्वाभिधानात् सर्वच्छन्दोरूपत्वम्॥

अत्र विनियोगसंग्रहः—

"सारस्वतीजलेऽर्थेति होमः सामुद्रिके त्वपाम्।
वृषाऽसीति प्रतीपोर्मावन्वीपोर्मौ पुनर्वृष॥ १॥
व्रज कृष्यासु मरुतां वायुप्रतिहतास्वथ।
[21]सूर्येस्यातपवृष्टासु सूर्यबिम्बयुतासु च॥ २॥
मान्दाः स्थिरासु वाशाः स्थ नीहारस्थासु शक्वरीः।
गवोल्बस्थासु विश्वेति क्षीरगासु जनेति तु॥ ३॥
दधिगासु घृतस्थासु त्वग्नेर्मधुगतासु तु।
अपामपः सर्वेऽप ऋग्गेषा राष्ट्रदा इति॥
स्वाहान्तो होमगोऽन्यस्तु ग्रहणे दश पञ्च च"॥ ४॥ इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके एकादशोऽनुवाकः॥ ११॥

१७. म४.म६.मै३—इन्द्रप्रियत्वात्। १८. म.४.म६.मै३—°द्रियप्रियत्वम्। १९. म४.म६.मै३—°तेजःसंपातम्। २०. म४.म६.मै३—षोडशावयवत्त्वम्। २१. आ.क.म६.मै३—सूर्यश्चातप°।

अभिषेकजलसंस्कारमन्त्राः ]

**दे॒वीरा॑पः॒ सं मधु॑मती॒र्मधु॑मतीभिः सृज्यध्वं॒ महि॒ वर्चः॑ क्ष॒त्रिया॑य वन्वा॒ना अना॑धृष्टाः॒ सीद॒तोर्ज॑स्वती॒र्महि॒ वर्चः॑ क्ष॒त्रिया॑य॒ दध॑ती॒रनि॑भृष्टमसि वा॒चो बन्धु॑स्**

देवीः । आपः । समिति । मधु॑मतीरिति मधु–मतीः । मधु॑मतीभिरिति मधु–मतीभिः । सृज्यध्वम् । महि । वर्चः । क्षत्रियाय । वन्वानाः । अनाधृष्टा इत्यना–धृष्टाः । सीदत । ऊर्जस्वतीः । महि । वर्चः । क्षत्रियाय । दधतीः । अनिभृष्टमित्यनि–भृष्टम् । असि । वाचः । बन्धुः ।

एवं गृहीत्वाऽथ वैतसे द्रोणकलशे ग्रहान् समवनयति—'देवीरापः' इति ॥ हे Vदेवीः Vआपः, मधुमतीः मधुमत्यः मधुरसवत्यः Vमधुमतीभिः Vसं Vसृज्यध्वं परस्परमेकीभवत । Vमहि महत् Vवर्चः Vक्षत्रियाय अस्मै Vवन्वानाः याचमानाः । वनु याचने । शानच् ( पा ३·२·१२४) ॥

*-अन्तरा होतुर्धिष्ण्यं ब्राह्मणाच्छंसिनश्च सादयति–' अनाधृष्टाः ' इति ॥ हे आपः Vअनाधृष्टाः केनाप्यतिरस्कृताः Vऊर्जस्वतीः बलवत्यः Vमहि महत् Vवर्चः Vक्षत्रियाय अस्मै-* Vदधतीः दधत्यः धारयन्त्यः ददत्यो वा । एवंभूताः सत्यः अत्र Vसीदत इति ॥

एकादशेऽभिषेकजलमन्त्रा उक्ताः । द्वादशे तज्जलसंस्कारमन्त्रा उच्यन्ते ।

देवीरिति ॥ कल्पः—" देवीराप इति वैतसे सते ग्रहान् समवनीय " ( आपश्रौ १८·१३·२१ ) इति । अप्सु जातो वृक्षविशेषो वेतसस्तेन निर्मितं द्रोणकलशसदृशं पात्रं सतम् । तस्मिन् सते वायव्यैर्गृहीतास्ता अपोऽवनयेत् । पाठस्तु—' देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वानाः ' इति ॥ हे Vआपः देव्यः, नानापात्रेषु गृहीता यूयं Vक्षत्रियाय राज्ञे Vमहि Vवर्चः Vवन्वानाः महत्तेजः संपादयन्त्यः परस्परं Vसं Vसृज्यध्वम् । कीदृश्यः ? कीदृशीभिः सह ? Vमधुमतीः मधुराः Vमधुमतीभिः मधुराभिः सह ॥ मन्त्रसामर्थ्येन परस्परसंसर्गः[1] संपद्यत इति दर्शयति—" देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह । ब्रह्मणैवैनाः सꣳसृजति " ( तैब्रा १·७·६ ) इति ॥

**अनाधृष्टा इति** ॥ कल्पः—" अनाधृष्टाः सीदतेत्यन्तरा होतुर्धिष्णियं ब्राह्मणाच्छंसिनश्च सादयित्वा " ( आपश्रौ १८·१३·२१ ) इति । [2-]पाठस्तु—' अनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीः " इति[-2] ॥ हे आपः, Vअनाधृष्टाः केनाप्यतिरस्कृताः Vऊर्जस्वतीः सारवत्यः[3] Vसीदत तिष्ठत । किं कुर्वत्यः ? राज्ञे महत् Vवर्चः दधत्यः ॥ मन्त्रसामर्थ्येनैवाऽऽसामुपवेशनमपि संपद्यत इत्याह—" अनाधृष्टाः सीदतेत्याह । ब्रह्मणैवैनाः सादयति " ( तैब्रा १·७·६ ) इति ॥ विधत्ते—" अन्तरा होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयति । आग्नेयो वै होता । ऐन्द्रो ब्राह्मणाच्छꣳसी । तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं परिगृह्णाति " ( तैब्रा १·७·६ ) इति । ' प्र वो देवायाग्नये ' इत्याद्याग्नेयशस्त्रपाठाद्धोताऽऽग्नेयः । ' इन्द्र त्वा वृषभं वयम् ' इत्याद्यैन्द्रशस्त्रपाठात् ब्राह्मणाच्छंसिन ऐन्द्रत्वम् ॥

**अनिभृष्टमिति** ॥ कल्पः—" अनिभृष्टमसीति तस्मिञ्शतमानं हिरण्यमवधाय " ( आपश्रौ १८·१३·२१) इति । [4-]पाठस्तु—' अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि ' इति[-4] । हे हिरण्य,

*-* अत्रत्यो ग्रन्थस्त्रुटित इति लिखितपुस्तकेषु अत्र अवशेषितेन कतिपयपङ्क्तिपर्याप्तेन स्थलेन ज्ञायते । अतः मैसूरमुद्रितपुस्तकानुसारं सायणीयमनुसृत्य अत्रत्यो ग्रन्थो योजितः ।

१. पा-पारस्परं संसर्गः; इ.उ.क.म४.म.६.मै३-परस्परसंसर्गः । २-२. म४.म६.मै३–' पाठस्तु ...इति ' नास्ति । ३. आ-सारवत्यः । ४-४. म४.म६.मै३–' पाठस्तु...इति ' नास्ति ।

**तपोजाः सोमस्य दात्रमसि शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः ।**

तपोजा इति तपः-जाः । सोमस्य । दात्रम् । असि । शुक्राः । वः । शुक्रेण । उदिति । पुनामि । चन्द्राः । चन्द्रेण । अमृताः । अमृतेन । स्वाहा । राजसूयायेति राज-सूयाय । चितानाः ॥

शतमानं हिरण्यं प्रग्रथ्नाति—'अनिभृष्टम्' इति ॥ अनिभृष्टम् असंतप्तम् असि रक्षोभिः । वाचः बन्धुः हिरण्यवतां हि वाक् सर्वानभिभवति, वाच उत्कर्षहेतुश्च । तपोजाः अग्नेर्जातत्वात् । "जनसनखनक्रमगमो विट्" (पा ३·२·६७) । "विड्वनोरनुनासिकस्यात्" (पा ६·४·४१) इत्यात्वम् । लिङ्गव्यत्ययः ॥

तद्वैतस अवदधाति—'सोमस्य' इति ॥ सोमस्य दात्रं देयं त्वम् असि दक्षिणारूपत्वात् ॥

हिरण्येनोत्पुनाति—'शुक्रा वः' इति । शुक्राः निर्मलाः वः युष्मान् शुक्रेण (उत्) पुनामि । चन्द्राः कान्ताः आह्लादनीर्वा चन्द्रेण तादृशेन हिरण्येन । अमृता अमरणाः अमरणहेतुभूताः तादृशेनानेन जीवनहेतुना वः उत्पुनामि । स्वाहा एवं कर्तव्यमिति सैव वागाह । "राजसूयाय चितानाः" इति व्याख्यातम् (तैसं १·८·११) । केचित्तु त्रिभिरुत्पवनमाहुः । तदा 'शुक्रा वः शुक्रेणोत्पुनामि स्वाहा राजसूयाय चितानाः' इति, 'चन्द्राश्चन्द्रेणोत्पुनामि स्वाहा राजसूयाय चितानाः' इति, 'अमृता अमृतेनोत्पुनामि स्वाहा राजसूयाय चितानाः' इति प्रयोगाः ॥

**त्वम् अनिभृष्टम् असि यवादिवत् वह्निसंयोगेऽपि नितरां भृष्टं नासि न भवसि[5] । किं च, वाचः बन्धुः असि । हिरण्यवतां[6] हि राजामात्यादीनां वाक् सर्वैरादियते । तपोजाः असि संतापवतोऽग्नेर्जातोऽसि हिरण्यस्याग्निरेतस्त्वात् । तथा चाऽऽधानप्रकरणेऽग्निं प्रकृत्य श्रूयते—"तस्य रेतः परापतत् । तद्धिरण्यमभवत्" (तैब्रा १·१·३) इति । सोमस्य दात्रम् असि सोमस्य क्रयार्थं त्वं दत्तमसि । "हिरण्येन क्रीणाति" (तैसं ६·१·१०) इति श्रुतेः ॥**

**शुक्रा इति ॥ कल्पः—"शुक्रा वः शुक्रेणोत्पुनामीति तेनोत्पूय" इति । पाठस्तु—'शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः' इति । हे आपः, शुक्राः वः दीप्तिमनीर्युष्मान् शुक्रेण दीप्तिमता हिरण्येन उत्पुनामि ॥ कीदृशीः कीदृशेन? चन्द्राः चन्द्रेण । उभयोराह्लादकत्वं प्रसिद्धम् । अमृताः अमृतेन । स्वादुत्वादापोऽमृताः । प्रियत्वाद्धिरण्यममृतम् । पुनरपि कीदृशीः? स्वाहाकारसंपादितहोमयुक्ताय राजसूयाय चितानाः संपादिताः ॥ विधत्ते—"हिरण्येनोत्पुनाति । आहुत्यै हि पवित्राभ्यामुत्पुनन्ति व्यावृत्त्यै" (तैब्रा १·७·६) इति । पात्रे स्थापितं हिरण्यं दर्भेण दीर्घसूत्रेण वा [7]प्रग्रथ्य तत्सूत्रं हस्ताभ्यां [8]धृत्वोत्पुनीयात् । आज्यं त्वाहुत्यर्थं पवित्राभ्यामेवोत्पूयते । आपस्त्वभिषेकार्था इत्याज्यादप्यावृत्त्यर्थं हिरण्येनोत्पवनम् ॥ हिरण्यपरिमाणं विधत्ते—"शत-**

५—५. मै३–न भवसि न विनश्यसीति यावत् । ६. आ.क–हिरण्यवत्तया । ७. मै३–प्रमथ्य । ८. म४–गृहीत्वोत्पु° ।

अभिषेकजलसंस्कारमन्त्राः ]

सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः ।
पस्त्यासु चक्रे वरुणः सधस्थमपां शिशुः (१) मातृतमास्वन्तः ॥
क्षत्रस्योल्बमसि क्षत्रस्य योनि-

सधमाद इति सध–मादः । द्युम्निनीः । ऊर्जः । एताः । अनिभृष्टा इत्यनि–भृष्टाः । अपस्युवः । वसानः ॥ पस्त्यासु । चक्रे । वरुणः । सधस्थमिति सध–स्थम् । अपाम् । शिशुः । (१) मातृतमास्विति मातृ–तमासु । अन्तः ॥
क्षत्रस्य । उल्बम् । असि । क्षत्रस्य । योनिः । असि ।

अथ पालाशादिषु पात्रेषु गृह्णाति—'सधमादः' इति त्रिष्टुभा ॥ सहैकस्मिन् पात्रे मादयन्त इति vसधमादः । मद तृप्तियोगे, चौरादिकः । क्विपि णिलोपः । "सध मादस्थयोश्छन्दसि" (पा ६·३·९६) इति सधादेशः । द्युम्निनीः धनवतीः दीप्तिमतीर्वा । vऊर्जः ऊर्जयित्रीः । ऊर्जयतेः कर्तरि क्विप् (पा ३·२·७६) । बलहेतुभूताः । vअनिभृष्टाः अक्लिष्टाः vअपस्युवः अपांसि कर्माणीच्छन्तीः । छान्दस उवङ् । एवंभूता एता अपः vवसानः आच्छादयन् एताभिरात्मानं छादयित्वा vपस्त्यासु गृहभूतास्वेतासु vसधस्थम् एताभिः सहस्थानं vवरुणः vचक्रे करोति । vअपाम् आसां vशिशुः शिशुरिव vमातृतमासु अतिशयेन जगतो निर्मात्रीषु पस्त्यासु भूतासु vअन्तः मध्ये वरुणः सधस्थं करोति यथा मातॄणामुदरे शिशुः सहवासं करोति । ता एवं महानुभावाः अस्याभिषेकाय गृह्णामि इति ॥

मानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति" (तैब्रा १·७·६) इति । वाजपेये (तैब्रा १·३·७) यूपावरोहणप्रसङ्गे वाक्यमेतद्व्याख्यातम् ॥ मन्त्रद्वयभागानामर्थो लोकसिद्ध[9] इति दर्शयति—"अनिभृष्टमसीत्याह । अनिभृष्टꣳ ह्येतत् । वाचो बन्धुरित्याह । वाचो ह्येष बन्धुः । तपोजा इत्याह । तपोजा ह्येतत् । सोमस्य दात्रमसीत्याह । सोमस्य ह्येतद्दात्रम् । शुक्रा वः शुक्रेणोत्पुनामीत्याह । शुक्रा ह्यापः । शुक्रꣳ हिरण्यम् । चन्द्राश्चन्द्रेणेत्याह । चन्द्रा ह्यापः । चन्द्रꣳ हिरण्यम् । अमृता अमृतेनेत्याह । अमृता ह्यापः । अमृतꣳ हिरण्यम् । स्वाहा राजसूयायेत्याह । राजसूयाय ह्येना उत्पुनाति" (तैब्रा १·७·६) इति । राजसूयाय [10]राजसूयान्तर्गतराजाभिषेकाय ॥

**सधमाद इति** ॥ कल्पः—"सधमादो द्युम्निनीरिति चतुर्षूदपात्रेषु व्यानयति । पालाश औदुम्बर आश्वत्थे नैयग्रोधे च" (आपश्रौ १८·१३·२१) इति । पाठस्तु—'सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः । पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः' इति ॥ vवरुणः vपस्त्यासु गृहस्थानीयास्वप्सु vअन्तः मध्ये vसधस्थं vचक्रे ताभिरद्भिः सह स्थितिं कृतवान् । कीदृशीषु पस्त्यासु ? vमातृतमासु । अतिशयेन मातरो मातृतमाः । अतिस्नेहयुक्ता मातरो [11]"यथा प्रियं पुत्रं पालयन्ति"[11]

९. मै३–लोके प्रसिद्धः; म४–लोकप्रसिद्धः १०. म४.म६.मै३–राजसूयगत° । ११–११. आ.क–हि पुत्रं पालयन्ति प्रियम् ।

रस्याविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्रावरुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते

आविन्नः । अग्निः । गृहपतिरिति गृह–पतिः । आविन्नः । इन्द्रः । वृद्धश्रवा इति वृद्ध–श्रवाः । आविन्नः । पूषा । विश्ववेदा इति विश्व–वेदाः । आविन्नौ । मित्रावरुणाविति मित्रा–वरुणौ । ऋतावृधावित्यृत–वृधौ । आविन्ने इति । द्यावापृथिवी इति द्यावा-पृथिवी । धृतव्रते इति धृत–व्रते ।

तार्प्यं परिधापयति—'क्षत्रस्योल्बम्' इति । व्याख्यातं वाजपेये ( तैसं १·७·९ ) । घृताक्तं तार्प्यम् ॥

पाण्डुरं वासः परिधत्ते—'क्षत्रस्य योनिरसि' इति ॥ ᵛक्षत्रस्य बलस्य राजन्यस्य वा ᵛयोनिः कारणम् ᵛअसि इति । अस्मिन् कर्मणि स जातो भवतीति हि स्तुतिः ॥

आविदो यजमानं वाचयन् बर्हिरुदानयति—'आविन्नो अग्निः' इत्यादि ॥ ᵛअग्निः इदानीमनेन मुख्येन कर्मणा ᵛगृहपतिः ᵛआविन्नः लब्धात्मा, परिनिष्पन्नात्मा वा । विदन्तेर्विद्यतेर्वा निष्ठा । अग्नेर्गृहपतित्वमिदानीं परिनिष्पन्नमिति । "गतिरनन्तरः" ( पा ६·२·४९ ) इति गतेः प्रकृतिस्वरत्वम् । कर्तरि निष्ठायां तु व्यत्ययेन । ᵛइन्द्रः च इदानीं वृद्धश्रवाः प्रवृद्धकीर्तिः ᵛआविन्नः । ᵛपूषा चेदानीं ᵛविश्ववेदाः विश्वस्य वेदिता ᵛआविन्नः । "गतिकारकयोरपि" ( उ ६७६ ) इत्यसुन् । विश्वधनो वा । ᵛमित्रावरुणौ चेदानीम् ᵛऋतावृधौ ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारौ ᵛआविन्नौ । "अन्येषामपि दृश्यते" ( पा ६·३·१३७ ) इति दीर्घत्वम् । "देवताद्वन्द्वे च" ( पा ६·२·१४१ ) इति मित्रावरुणशब्दे पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ।

तद्वत् पालयिष्य इत्यर्थः । कीदृशो वरुणः ? ᵛअपां ᵛशिशुः, मातृस्थानीयानामपां पुत्रस्थानीयः । किं कुर्वन् ? ᵛवसानः एता अपो वस्त्रवदाच्छादयन् । कीदृशीरपः ? ᵛसधमादः स्वान्तस्थितेन वरुणेन सहैकस्मिन् देशे स्थित्वा तं वरुणं मादयित्रीर्हर्षयित्रीः, ᵛद्युम्निनीर्दीप्तिमतीर्धनवतीर्वा । ᵛऊर्जः बलहेतुभूताः, ᵛअनिभृष्टाः यवादिवद्वर्जनायोग्याः ᵛअपस्युवः कर्माणीच्छन्तीः । विधत्ते—"सधमादो द्युम्निनीरूर्ज एता इति वारुण्यर्चा गृह्णाति । वरुणसवमेवावरुन्द्धे" ( तैब्रा १·७·६ ) इति । वरुणसवं वरुणानुज्ञानम् ॥ ऋच एकत्वं प्रशंसति—"एकया गृह्णाति । एकधैव यजमाने वीर्यं दधाति" ( तैब्रा १·७·६ ) इति ॥

क्षत्रस्येति ॥ कल्पः—"क्षत्रस्योल्बमसीति तार्प्यं यजमानः परिधत्ते । क्षत्रस्य योनिरसीति [१२]पाण्डरमुष्णीषं द्वितीयं श्वेतं पाण्डरमित्याचक्षते" ( आपश्रौ १८·१४·१ ) इति ॥ तार्प्यं घृताक्तं वस्त्रम् । *वाजपेये व्याख्यातौ मन्त्रौ ॥ विधत्ते—"क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति तार्प्यं चोष्णीषं च प्रयच्छति सयोनित्वाय" ( तैब्रा १·७·६ ) इति । यजमानो राजत्वात् क्षत्रियः । तार्प्योष्णीषयोरपि क्षत्रसंबन्धित्वे सयोनित्वं समानजातित्वं भवति ॥ विधत्ते—"एकशतेन दर्भपुञ्जीलैः पवयति । शतायुर्वै पुरुषः शतवीर्यः । आत्मैकशतः । यावानेव पुरुषः । तस्मिन् वीर्यं दधाति" ( तैब्रा १·७·६ ) इति ।

१२. आ.म४–पाण्डुरम । *( तैसं १·७·९ )

अभिषेकजलसंस्कारमन्त्राः ]

**आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन् राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं**

आविन्ना । देवी । अदितिः । विश्वरूपीति विश्व–रूपी । आविन्नः । अयम् । असौ । आमुष्यायणः । अस्याम् । विशि । अस्मिन् । राष्ट्रे । महते । क्षत्राय । महते । आधिपत्यायेत्याधि–पत्याय । महते । जानराज्यायेति जान–राज्याय । एषः । वः । भरताः । राजा । सोमः । अस्माकम् ।

द्यावापृथिवी द्यावापृथिव्यौ च धृतव्रते धृतकर्माणौ आविन्ने । "दिवो द्यावा" (पा ६·३·२९) इति द्यावादेशः, पूर्ववत्प्रकृतिस्वरत्वम् । अदितिः देवमाता पृथिवी वा । देवी दीप्तिमती । इदानीं विश्वरूपैः सर्वैर्विकाररूपैस्तद्वती आविन्ना । गौरादित्वात् ङीष् (पा ४·१·४१) । तथा अयं च यजमानः असौ नरसिंहवर्मा आमुष्यायणः राजेन्द्रवर्मणोऽपत्यमिति युवप्रत्ययान्तं पितुर्नाम गृह्यते, राजेन्द्रायण इति यथा । अमुष्यशब्दान्नडादित्वात् फक् (पा ४·१·९९) । अस्यां विशि । जातावेकवचनम् । कुटुम्बभूतासु प्रजासु अस्मिन् राष्ट्रे सर्वजनपदे आविन्नः । 'महते क्षत्राय' इति व्याख्यातम् (तैसं १·८·१०) ॥

यजमानायतने तिष्ठन्तं प्राह—'एष वः' इति ॥ व्याख्यातमेव (तैसं १·८·१०) ॥

'सोमोऽस्माकम्' इति ब्रह्मणश्च जपो व्याख्यातः (तैसं १·८·१०) ॥

बहुभिर्दर्भनाडीभिर्युक्तमेकं काण्डं दर्भपुञ्जीलम् । तादृशैरेकाधिकशतसंख्याकैर्यजमानं शोधयेत् । शतवीर्यः शतेन्द्रिय आत्मा यजमानजीवः शताधिकामेकत्वसंख्यां पूरयति ॥ द्रव्यत्रयभक्षणं क्रमेण विधत्ते—"दध्याशयति । इन्द्रियमेवावरुन्द्धे । उदुम्बरमाशयति । अन्नाद्यस्यावरुद्ध्यै । शष्पाण्याशयति । सुराबलिमेवैनं करोति" (तैब्रा १·७·६) इति । दध्न इन्द्रियप्रियत्वात्तेनेन्द्रियावरोधः । उदुम्बरफलस्य मधुरत्वात् मृदुत्वाच्चान्नं योग्यत्वम् । शष्पाणि बालतृणानि व्रीहियवाङ्कुराणीत्यर्थः । तेषां सुराजनकत्वात् सुरात्वम् । सा च सुरा बलिः पूजा यस्य सोऽयं यजमानः सुराबलिः ॥

**आविन्न इति** ॥ कल्पः—"आविन्नो अग्निरित्याविदो[13] यजमानं वाचयन् बहिरुदानीय[14]" (आपश्रौ १८·१४·९) इति ॥ आविद आवित्संज्ञका मन्त्राः सप्त । उदानीयाऽऽग्नीध्रीयाद्बहिर्निःसार्य । पाठस्तु—'आविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्रावरुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन् राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्याय' इति । अग्निः इदानीं गृहपतिः आविन्नः अनेन कर्मणा गृहपतित्वं लब्धवान् । इन्द्रः प्रवृद्धकीर्तिं लब्धवान् । पूषा [15]विज्ञानं लब्धवान् । मित्रावरुणौ सत्यवचनवृद्धिं लब्धवन्तौ । द्यावापृथिव्यौ नियमेन सर्वस्वव्यापाररूपं[16] व्रतधारणं लब्धवत्यौ । अदितिः देवमाता च सर्वदेवशरीरयुक्तत्वं लब्धवती । देवतारूपान् बहुपुत्रानुत्पादयन्तीत्यर्थः । अयं पुरतो वर्तमानोऽसौ नरसिंहवर्मा आमुष्यायणः अमुष्य राजेन्द्रवर्मणः पुत्रः पौत्रो वा तादृशो यजमानः अस्यां प्रजायाम् अस्मिन् राष्ट्रे महद्भ्यः क्षत्रत्वादिपूर्वव्याख्यातगुणेभ्यः पर्याप्तः सन्नाविन्नस्तान् गुणान् लब्धवानित्यर्थः ॥

१३. इ.उ–अग्निर्गृहपतिरिला° । १४. म४–उन्नीय । १५. म४.म६–विश्वज्ञानम् । १६.म६–स्वर्गव्यापारकरणरूपम्; म४.मै३ स्वस्वव्या° ।

**ब्राह्मणाना॑ᳪ॒ राजेन्द्र॑स्य (२) वज्रो॑ऽसि॒ वार्त्र॑घ्नस्त्वया॒ऽयं वृ॒त्रं व॑ध्याच्छत्रु॒बाध॑नाः स्थ पा॒त मा॑ प्र॒त्यञ्चं॒ पात मा॑ ति॒र्यञ्च॑म॒न्वञ्चं॒ मा पा॒त**

ब्रा॒ह्म॒णाना॑म् । राजा॑ । इन्द्र॑स्य ( २ ) । वज्रः॑ । अ॒सि॒ । वार्त्र॑घ्न॒ इति॒ वार्त्र॑घ्नः । त्वया॑ । अ॒यम् । वृ॒त्रम् । व॒ध्या॒त् । श॒त्रु॒बाध॑ना॒ इति॑ शत्रु-बाध॑नाः । स्थ॒ । पा॒त । मा॒ । प्र॒त्यञ्च॑म् । पा॒त । मा॒ । ति॒र्यञ्च॑म् । अ॒न्वञ्च॑म् । मा॒ । पा॒त ।

यजमानाय धनुः प्रयच्छति—' इन्द्रस्य ' इति ॥ व्याख्यातं वाजपेये ( तैसं १·७·७ ) ॥ इषून् प्रयच्छति—' शत्रुबाधनाः स्थ ' इति ॥ शत्रवो बाध्यन्ते यैस्तादृशाः स्थ इति ॥ प्रतिगृह्णाति—' पात मा ' इति ॥ हे इषवः, मा पात रक्षत प्रत्यञ्चं प्रत्यग्गमनं युष्माकमभिमुखम् आगच्छन्तं शत्रोर्वा । तथा पात मा तिर्यञ्चं तिरश्चीनगमनं पार्श्वयोश्चरन्तम् । तथा पात मा अन्वञ्चम् अन्वग्गमनं पृष्ठतो गच्छन्तम् । ऋत्विगादिना क्विन् ( पा ३·२·५९ )

एष इति ॥ कल्पः—" एष वो भरता राजेत्युक्त्वा " ( आपश्रौ १८·१४·१० ) इति ॥ पूर्ववदनेन मन्त्रेण यजमानं रत्निभ्यः प्रदाय ' सोमोऽस्माकᳪ ब्राह्मणानाᳪ राजा ' इति ब्रह्मा जपतीत्यर्थः ॥ विधत्ते—" आविद एता भवन्ति । आविदमेवैनं गमयन्ति " ( तैब्रा १·७·६ ) इति । एता ' आविन्नः ' इत्याद्या आवित्संज्ञका मन्त्रवाचो वाचनीया भवन्तीत्यर्थः[17] । तेनैनं यजमानमाविदं गृहपतित्वादिलाभं प्रापयन्तीत्यर्थः ॥ आद्यमन्त्रचतुष्टयपाठं प्रशंसति—" अग्निरेवैनं गार्हपत्येनावति । इन्द्र इन्द्रियेण । पूषा पशुभिः । मित्रावरुणौ प्राणापानाभ्याम् " ( तैब्रा १·७·६ ) इति । गार्हपत्यं गृहपतित्वम् । इन्द्रियेणावतीत्यनुवर्तते ॥

पञ्चममन्त्रं प्रशंसति—" इन्द्रो वृत्राय वज्रमुदयच्छत् । स दिवमलिखत् । सोऽर्यम्णः पन्था अभवत् । स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथिवी उपाधावत् । स आभ्यामेव प्रसूत इन्द्रो वृत्राय वज्रं प्राहरत् । आविन्ने द्यावापृथिवी धृतव्रते इति यदाह । आभ्यामेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्रहरति " ( तैब्रा १·७·६ ) इति । इन्द्रेणोद्यतस्य वज्रस्य तीक्ष्णतया द्युलोके रेखा संपन्ना । सा च सूर्यस्य मार्गोऽभवत् । तदानीं द्यौरुत्पाटनेन क्षुब्धा यदा वज्रप्रहारायानुज्ञां दत्तवती तदा स इन्द्रोऽनेन मन्त्रेण द्यावापृथिव्यौ सेवित्वा ताभ्यामनुज्ञातो वृत्राय वज्रं प्राहरत् । एवं यजमानोऽप्यनेन मन्त्रेण वैरिणे वज्रं प्रहरति ॥

षष्ठमन्त्रं प्रशंसति—" आविन्ना देव्यदितिर्विश्वरूपीत्याह । इयं वै देव्यदितिर्विश्वरूपी । अस्यामेव प्रतितिष्ठति " ( तैब्रा १·७·६ ) इति । भूमिरेव कांचित् मूर्तिं धृत्वा देवमाताऽदितिरित्युच्यते ॥

सप्तममन्त्रस्य पूर्वभागं प्रशंसति—" आविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन् राष्ट्र इत्याह । विशैवैनᳪ राष्ट्रेण समर्धयति " ( तैब्रा १·७·६ ) इति । विशा करप्रदायिन्या प्रजया राष्ट्रेण सर्वसस्ययुक्तेन भूमिविशेषेण च यजमानं समर्धयत्येव ॥ तस्य मन्त्रस्योत्तरभागमुत्तरौ च मन्त्रौ पूर्ववद्व्याचष्टे—" महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह । आशिषमेवैतामाशास्ते । एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाᳪ राजेत्याह । तस्मात् सोमराजानो ब्राह्मणाः " ( तैब्रा १·७·६ ) इति ॥

इन्द्रस्येति ॥ कल्पः—" इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुर्यजमानाय प्रयच्छति " ( आपश्रौ १८·१४·१० ) इति । पाठस्तु—' इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात् ' इति ॥ हे धनुः, त्वम्

१७. म४.म६–मवेयुः ।

अभिषेकजलसंस्कारमन्त्राः ]

**दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात हिरण्यवर्णावुषसां विरोके-ऽयःस्थूणावुदितौ सूर्यस्याऽऽरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च ॥१२॥**

[ शिशुरिन्द्रस्यैकचत्वारिंशच्च ]

दिग्भ्य इति दिक्-भ्यः । मा । पात । विश्वाभ्यः । मा । नाष्ट्राभ्यः । पात । हिरण्यवर्णाविति हिरण्य-वर्णौ । उषसाम् । विरोक इति वि-रोके । अयःस्थूणावित्ययः-स्थूणौ । उदिताविल्युत्-इतौ । सूर्यस्य । एति । रोहतम् । वरुण । मित्र गर्तम् । ततः । चक्षाथाम् । अदितिम् । दितिम् । च ॥ १२ ॥

[ मैसं २.६.८,९; कासं १५.६,७; वासं १०.१, ७-९ ]

किं बहुना, दिग्भ्यः सर्वाभ्यः [v]मा [v]पात सर्वासु दिक्षु स्थितं, सर्वदिगवस्थितशत्रुपीडाभ्यो वा । अपि च—[v]विश्वाभ्यः अपि भौमान्तरिक्षद्युप्रभवाभ्योऽपि [v]नाष्ट्राभ्यः नाशहेतुभ्यः [v]पात माम् । नशेरौणादिकस्त्रप्रत्ययः वृद्धिश्च ( द्र.उ ६०८;६०९ ) ॥

बाहू उद्गृह्णाति—' हिरण्यवर्णौ ' इति त्रिष्टुभा ॥ हे [v]हिरण्यवर्णौ, हिरण्मयाभरण-सन्नद्धौ हिरण्यवदुज्ज्वलवर्णौ वा । हे ईदृशौ बाहू । [v]अयःस्थूणौ वा । अयःस्थूणसदृशौ अप्रधृष्यौ । " इवे प्रतिकृतौ " ( पा ५.३.९६ ) इति कनः " देवपथादिभ्यश्च " ( ५.३.१०० ) इति लुप् । " स्फिगन्तस्योपमेयनामधेयस्य " ( फि ३९ ) इत्याद्युदात्तत्वम् । अतश्च बाहू एकैकेनामन्त्र्येते—हे [v]वरुण शत्रूणां वारक, हे [v]मित्र तेषां प्रमापक, अस्माकं वा हिंसायाः त्रायक, ईदृशौ युवां [v]गर्तम् एतं रथपृष्ठम् आकाशोदरं वा [v]आ [v]रोहतम् [v]उषसां [v]विरोके व्युष्टौ । पूजनार्थमेकस्मिन् बहुवचनम् । उषसो व्युष्टिकाले । एतस्या लक्षणमाह—' सूर्यस्य ' इति । [v]उदितौ उदये । " तादौ च° " ( पा ६.२.५० ) इति गतेः प्रकृतिस्वरत्वम् । तत आरोहणानन्तरं [v]चक्षाथां पश्यतम् [v]अदितिम् अखण्डितं स्वजनं [v]दितिं च खण्डितं शत्रुजनं च तदुचितेन चक्षुषा सानुग्रहेण सनिग्रहेण च स्वीकुरुतमित्यर्थः । यद्वा—अखण्डनं खण्डनं च स्वेषां परेषां च पश्यतमुत्पादयतम् ॥

इत्यष्टमे द्वादशोऽनुवाकः ॥

---

[v]इन्द्रस्य वज्रवत् प्रहारसाधनम् [v]असि । अतः [v]त्वया [v]अयं यजमानो वैरिणं [v]वध्यात् ॥ विधत्ते—" इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुः प्रयच्छति विजित्यै " ( तैब्रा १.७.६ ) इति ॥

शत्रुबाधना इति ॥ कल्पः—" [18]-शत्रुबाधना स्थेति त्रीन् बाणावतः-[18] " ( आपश्रौ १८.१४.११ ) इति ॥ बाणा शल्वं [19]-तद्युक्तान् तीक्ष्णाग्रानित्यर्थः-[19] । त्रीनिषून् प्रयच्छतीति शेषः । हे इषवो यूयं शत्रूणां बाधका भवथ ॥ विधत्ते—" शत्रुबाधनाः स्थेतीषून् । शत्रूनेवास्य बाधन्ते " ( तैब्रा १.७.६ ) इति । प्रयच्छतीत्यनुवर्तते ॥

पातेति ॥ कल्पः—" पात मा प्रत्यञ्चमिति प्रदीयमानाननुमन्त्रयते " इति । पाठस्तु—' पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात ' इति ॥ यदा वैरी पुरतः स्थित्वा बाणं मुञ्चति तदानीमयं विध्यमानो बाणस्य प्रत्यङ्मुखो

---

१८-१८. मै३-शत्रुबाधना इति त्रीन् बाणवतः; इ.उ-शत्रुबाधना इति त्रीनिषून् बाणवतः ; पा.म४.म६-शत्रुबाधना इति त्रीन् बाणावतः । १९-१९. आ.क-तद्युक्ताग्रानित्यर्थः ।

भवति । पार्श्वयोः स्थित्वा बाणमोक्षणे[20] अयं तिर्यक् भवति । पृष्ठतः स्थित्वा बाणमोक्षणे[21] पलायमानोऽयमन्वग्भवति । हे मदीया बाणाः, प्रत्यगादिरूपं मां पात परकीयेभ्यो यथोक्तप्रकारेण मां प्रत्यागच्छद्भ्यो बाणेभ्यो रक्षत । युद्धकुशला हि स्वकीयैर्बाणैः परकीयानपसारयन्ति खण्डयन्ति वा । अतो मद्धस्तेऽवस्थिता हे बाणाः, सर्वाभ्यः दिग्भ्यः मां पात । न केवलं परकीयबाणेभ्य एव रक्षणं किं तु विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यः नाशहेतुभ्यः शरकृतपीडाभ्यो मां पात ॥ मन्त्रस्य पूर्वभागं व्याचष्टे— “ पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पातेत्याह । तिस्रो वै शरव्याः । प्रतीची तिरश्च्यनूची । ताभ्य एवैनं पान्ति ” ( तैब्रा १.७.६ ) इति । शरव्या हिंसिकाः परकीयहेतयस्ताश्च पूर्वोक्तरीत्या प्रत्यगादिरूपाः ॥ मध्यमभागं व्याचष्टे— “ दिग्भ्यो मा पातेत्याह । दिग्भ्य एवैनं पान्ति ” ( तैब्रा १·७·६ ) इति । दूरदेशवर्तिनीषु दिक्षु स्थिताः[22] संधिविग्रहकारिमनुष्यमुखेन वैरिणो भीषयन्ति । ताभ्यो दूरदेशवर्तिनीभ्यो दिग्भ्य एनं यजमानं हस्तस्थाः बाणाः पान्त्येव ॥ तृतीयभागं व्याचष्टे—“ विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्याह । अपरिमितादेवैनं पान्ति ” ( तैब्रा १·७·६ ) इति । अपरिमिताद्बहुविधाद्ग्रामापहारादिरूपाद्बाधात् ॥

हिरण्येति ॥ कल्पः—“ हिरण्यवर्णावित्युद्यतावभिमन्त्रयते ” ( आपश्रौ १८·१४·१६ ) इति । वेद्मुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ । पाठस्तु—‘ हिरण्यवर्णावुषसां विरोकेऽयःस्थूणावुदितौ सूर्यस्याऽऽरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च ’ इति ॥ हे वरुण, शत्रुनिवारक वामहस्त, हे मित्र शत्रुमारक दक्षिणहस्त, युवां गर्तम्[23] आ रोहतं[24]-वेद्मुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ रथस्योपरिभागं[25] गर्तसदृशमारोहतं परकीयबाणेभ्यो रक्षतम् । परितश्चर्मफलकादिभिराच्छादिते सति[-24] रथस्योपरिभागो गर्तसदृशो भवति । आरोहणं कदा कर्तव्यमित्युच्यते—उषसां विरोके सूर्यस्य उदितौ प्रतिदिनं यान्युषांसि सूर्योदयात् पूर्वभावीनि तेषां संबन्धिनि विशिष्ट आलोके प्रवर्तमाने सति यः सूर्यस्योदयस्तस्मिन्नुत्पन्ने सति । कीदृशौ बाहू ? हिरण्यवर्णौ सुवर्णखचितकवचप्रतिमोकेन[26] हिरण्यवद्भासमानौ । अयःस्थूणौ लोहस्तम्भवदत्यन्तदृढौ । ततः रथारोहणादूर्ध्वम् अदितिम् अखण्डितां स्वसेनां दितिं खण्डितां परसेनां च चक्षाथां क्रमेणानुग्रहनिग्रहदृष्ट्या समीक्षेथाम् ॥ विधत्ते—“ हिरण्यवर्णावुषसां विरोक इति त्रिष्टुभा बाहू उद्गृह्णाति । इन्द्रियं वै वीर्यं त्रिष्टुक् । इन्द्रियमेव वीर्यमुपरिष्टादात्मन् धत्ते ” ( तैब्रा १·७·६ ) इति । उद्ग्रहणमुद्यतयोरभिमन्त्रणम् । बौधायनपक्षे तु यथाब्राह्मणं बाहूद्यमनार्थ एव मन्त्रः । इन्द्रियं वीर्यं हस्तपादादिगतसामर्थ्यं, तत्सामर्थ्यप्रदत्वात् त्रिष्टुप्छन्दसस्तद्रूपत्वः ॥

अत्र विनियोगसंग्रहः—

“ देवीति वैतसे पात्रे सर्वा अपि नयेदपः ।
अनेति सादयेन्मध्ये होतुर्ब्राह्मणस्यधिष्ण्ययोः ॥ १ ॥
अनिभृष्टेति तास्वन्तः शतस्वर्णं विनिक्षिपेत् ।
स्वर्णेनोत्पवनं शुक्राः पात्रेषु व्यानयेत् सध ॥ २ ॥
क्षत्रेति धारयेत् स्वामी तार्प्योष्णीषद्वयं क्रमात् ।
स्वामिनं वाचयेदाविसक्षमन्त्रान् विनिर्गतौ[27] ॥ ३ ॥
एष वः स्वामिनं दद्यात् सोमोऽस्मा ब्रह्मणे जपः ।
इन्द्र दद्यात् स्वामिनोऽन्यो धनुः शम्विति बाणकान् ॥ ४ ॥
पातेषून्मन्त्रयेत् स्वामी हिर बाहू तथोद्यतौ ।
अनुवाके द्वादशेऽस्मिन् मन्त्रा विंशतिरीरिताः ” ॥ ५ ॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

२०. म४.म६.मै३–बाणमोक्षे तु । २१. म४.म६.मै३–बाणमोक्षे । २२. क–स्थित्वा ! २३. इ.पा–आरोहतं रथस्योपरि तम् । २४–२४. उ–‘ वेद्मु...सति ’ नास्ति; म६.मै३–‘ वेद्मु...हस्तौ ’ नास्ति । २५. म६–रथस्योपरितनभागम् । २६. इ.उ.पा–प्रतिमोचकेन । २७. मै३–विनिर्मितौ ।

समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथंतरꣳ सामाग्निर्देवता ब्रह्म द्रविण-

समिधमिति सम्-इधम् । एति । तिष्ठ । गायत्री । त्वा । छन्दसाम् । अवतु । त्रिवृदिति त्रि-वृत् । स्तोमः । रथंतरमिति रथम्-तरम् । साम । अग्निः । देवता । ब्रह्म । द्रविणम् ।

~~~~~~~~~~

अथ यजमानमध्वर्युर्दिशो व्यास्थापयति, मध्ये पश्चिमेन समिधमातिष्ठति पञ्चभिः । तत्र प्राचीं—'समिधम्' इति समिध्यतेऽस्यामादित्य इति समित् प्राची दिक् उपर्युपरि समिद्धा भवतीति । ताम् आतिष्ठ अधितिष्ठ स्वीकुरु । गायत्री चतुर्विंशत्यक्षरा छन्दसां मध्ये प्राच्यां दिशि स्थिता त्वाम् अवतु । त्रिवृदाख्यः स्तोमश्च त्वाम् अवत्वित्येव । स्तोमानां मध्य इति गम्यते । त्रयोऽवयवास्तिस्रो वृत्तयो यस्य स त्रिवृत् नवस्तोत्रीयः । "त्रिच-क्रादीनां छन्दसि" ( पा ६·२·१९९ वा १ ) इत्युत्तरपदाद्युदात्तत्वम् । रथन्तरं च साम त्वाम-वतु साम्नां मध्ये । "संज्ञायां भृतॄवृजि" ( पा ३·२·४६ ) इत्यादिना खच् । अग्निः देवता त्वामवतु देवतानां मध्ये । ब्रह्म ब्राह्मणः द्रविणं प्रशस्तं धनं त्वामवतु द्रविणानां मध्ये ॥

~~~~~~~~~~

द्वादशेऽभिषेकार्थजलसंस्कारादिमन्त्रा उक्ताः । त्रयोदशे दिग्व्यास्थापनमन्त्रा उच्यन्ते ।

समिधमिति ॥ कल्पः—"अथैनं पञ्चभिर्दिशो व्यास्थापयति । समिधमा तिष्ठेति । मनसा चानु प्रक्रामति" ( आपश्रौ १८·१४·१७–१८·१५·२ ) इति ॥ व्यास्थापयति विविधदिगभिमुखत्वेन विजयाय प्रस्थापयतीत्यर्थः । तत्र प्रथममन्त्रपाठस्तु—'समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथन्तरꣳ सामाग्निर्देवता ब्रह्म द्रविणम्' इति ॥ समिध्यतेऽस्यामादित्य इति समित् प्राची दिक् तां दिशम् आ तिष्ठ आक्रम्य तिष्ठ । तथा स्थितं त्वां छन्दसां मध्ये गायत्री रक्षतु । स्तोमानां मध्ये त्रिवृत् स्तोमः रक्षतु । साम्नां मध्ये रथन्तरं साम रक्षतु । देवानां[1] मध्ये अग्निः देवो रक्षतु । ब्रह्म ब्राह्मणस्त्वदीयं द्रविणं धनं रक्षतु । त्रिवृत्स्तोमस्य स्वरूपं सामब्राह्मणे समाम्नातम्—"तिसृभ्यो हिं करोति स प्रथमया तिसृभ्यो हिं करोति स मध्यमया तिसृभ्यो हिं करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः" ( तांब्रा २·१·१ ) इति ॥ अयमर्थः—"उपास्मै गायता" इत्यादीनि तृचात्मकानि त्रीणि सूक्तानि सन्ति । तेषु तिसृभ्य ऋग्भ्यो हिं करोति गायेत् । [2]काभिस्तिसृभिः ? प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत् । तथा सति तिसृभिर्गीतं भवति । सोऽयं प्रथमः पर्यायः । द्वितीये सूक्तत्रयगतया मध्यमया गायेत् । तृतीये पर्याये सूक्तत्रयगतयो-त्तमया गायेत् । अनेन प्रकारेण त्रिवृत्स्तोमसंबन्धिनी विशिष्टा स्तुतिः संपद्यते । सेयं स्तुतिरुद्यती-नाम्नाऽभिधीयत इति । "अभि त्वा शूर नोनुमः" ( ऋसं ७·३२·२२ ) इत्यस्यामृच्युत्पन्नं साम रथन्तरम् ॥

~~~~~~~~~~

१. मै३–देवतानाम् । २. इ.उ.पा.म६–ताभिस्तिसृभिः ।
~~~~~~~~~~

मुग्रामा तिष्ठ त्रिष्टुप् त्वा छन्दसामवतु पञ्चदशः स्तोमो बृहत् सामेन्द्रो देवता क्षत्रं द्रविणं विराजमा तिष्ठ जगती त्वा छन्दसामवतु सप्तदशः स्तोमो वैरूपꣳ साम मरुतो देवता विड्द्रविण-

उग्राम् । एति । तिष्ठ । त्रिष्टुप् । त्वा । छन्दसाम् । अवतु । पञ्चदश इति पञ्च-दशः । स्तोमः । बृहत् । साम । इन्द्रः । देवता । क्षत्रम् । द्रविणम् । विराजमिति वि-राजम् । एति । तिष्ठ । जगती । त्वा । छन्दसाम् । अवतु । सप्तदश इति सप्त-दशः । स्तोमः । वैरूपम् । साम । मरुतः । देवता । विट् । द्रविणम् ।

दक्षिणां—‘ उग्राम् ’ इति ॥ [v]उग्रां पितृसंबन्धात् दक्षिणाम् [v]आ [v]तिष्ठ । [v]त्रिष्टुप् चतुश्चत्वारिंशदक्षरा । [v]पञ्चदशस्तोमः पञ्चदशस्तोत्रीयः परिमाणमस्य । “ स्तोमे डविधिः पञ्चदशाद्यर्थे ” ( पा ५·१·५८ वा ८ ) इति डः । [v]बृहत् [v]साम [v]इन्द्रः च [v]क्षत्रं क्षत्रियाः । गतमन्यत् ॥

प्रतीचीं—‘ विराजम् ’ इति ॥ [v]जगती विराट् उपर्युपरि शान्ता भवतीति । अष्टाचत्वारिंशदक्षरा जगती । सप्तदशस्तोमः सप्तदशस्तोत्रीयः । वैरूपाख्यं [v]साम । [v]मरुतः [v]देवता । [v]विट् वैश्याः ॥

**उग्रामिति** ॥ द्वितीयमन्त्रपाठस्तु— ‘ उग्रामा तिष्ठ त्रिष्टुप् त्वा छन्दसामवतु पञ्चदशः स्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणम् ’ इति ॥ पूर्वन्यायेन योजनीयम् । पापिनां शिक्षकेण यमेनाधिष्ठितत्वाद्दक्षिणा दिगुग्रा । पञ्चदशस्तोम एवमाम्नातः-- “ पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिः ” ( तांब्रा २·४·१ ) इति । पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः । अन्ये तु स्तोमा एकैकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते । तत्रायं क्रमः । प्रथमपर्याय आवृत्तिः पञ्चभिर्ऋग्भिर्गायेत् । तद्यथा–प्रथमामृचं त्रिर्गायेत् । इतरे द्वे सकृत् सकृत् गायेत । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याय उत्तमां त्रिर्गायेत् । सेयं पञ्चदशस्तोमस्य संबन्धिनी विष्टुतिरिति । तस्याः पञ्चपञ्चिनीति नाम । ‘ त्वामिद्धि हवामहे ’ ( ऋसं ६·४६·१, तांब्रा २·७·१ ) [3]इत्येतस्यामृच्युत्पन्नं साम[3] बृहत् ॥

**विराजमिति** ॥ तृतीयमन्त्रपाठस्तु—‘ विराजमा तिष्ठ जगती त्वा छन्दसामवतु सप्तदशः स्तोमो वैरूपꣳ साम मरुतो देवता विड्द्रविणम् ’ इति ॥ जलाधिपेन वरुणेन पालिता सती सम्यक्फलितैः सस्यैर्विशेषेण राजत इति विराट् प्रतीची दिक् । सप्तदशस्तोम एवमाम्नातः—“ पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स ‘[4]तिसृभिर्दशसप्ता[5]’ सप्तदशस्य विष्टुतिः ” ( तांब्रा २·७·१ ) इति ।

३-३. इ.उ. इत्यस्यामत्युत्पन्नसाम; म६–‘ साम ’ नास्ति । ४. आ.इ.उ.क.पा–‘ तिसृभिरिति दश° ’ नास्ति । ५. मै३–‘ दशसप्ता ’ नास्ति ।

**मुदीचीमा तिष्ठानुष्टुप् त्वा ( १ ) छन्दसामवत्वेकविꣳशः स्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणमूर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविण-**

उदीचीम् । एति । तिष्ठ । अनुष्टुबित्यनु–स्तुप् । त्वा ( १ ) । छन्दसाम् । अवतु । एकविꣳश इत्येक–विꣳशः । स्तोमः । वैराजम् । साम । मित्रावरुणाविति मित्रा–वरुणौ । देवता । बलम् । द्रविणम् । ऊर्ध्वाम् । एति । तिष्ठ । पङ्क्तिः । त्वा । छन्दसाम् । अवतु । त्रिणवत्रयस्त्रिꣳशाविति त्रिणव–त्रयस्त्रिꣳशौ । स्तोमौ । शाक्वररैवते इति शाक्वर–रैवते । सामनी इति । बृहस्पतिः । देवता । वर्चः । द्रविणम् ।

---

उत्तरां—' उदीचीम् ' इति ॥ उत्क्रम्याञ्चति भूगोलमित्युदीची, यत्र गच्छन्नादित्यो न दृश्यते । " अनिगन्तोऽञ्चतौ " ( पा ६·२·५२ ) इति प्रकृतिस्वरत्वम् । ᵛअनुष्टुप् द्वात्रिंशदक्षरा । ᵛएकविंशः एकविंशतिस्तोत्रीयः । वैराजाख्यं ᵛसाम । ᵛमित्रावरुणौ ᵛदेवता । समुदायस्य देवतात्वादेकवचनं, देवतात्वमात्रस्य विवक्षितत्वात्, श्रुतयः प्रमाणमिति यथा । " देवताद्वन्द्वे च " ( पा ६·२·१४१ ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

मध्ये—' ऊर्ध्वाम् ' इति ॥ ᵛपङ्क्तिः पञ्चपदा चत्वारिंशदक्षरा । ᵛत्रिणवत्रयस्त्रिꣳशौ ᵛस्तोमौ त्रिणवः सप्तविंशस्तोत्रीयः त्रयस्त्रिंशस्त्रयस्त्रिंशस्तोत्रीयः । शाक्वरं रैवतं च सामद्वयम् । ᵛबृहस्पतिः ᵛदेवता । वनस्पत्यादित्वात् द्वयोर्युगपत्प्रकृतिस्वरत्वम् ( पा ६·२·१४० ) । ᵛवर्चः दीप्तिः । निगदसिद्धमन्यत् ॥

---

प्रथमपर्याये प्रथमामृचं त्रिर्गायेत् । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याये मध्यमामुत्तमां च त्रिर्गायेत् । सेयं सप्तदशस्तोमसंबन्धिनी विष्टुतिर्दशसप्तेत्यभिधीयते । " यद्द्याव इन्द्र " ( ऋसं ८·७०·५ ) इत्यस्यामृच्युत्पन्नं साम वैरूपम् ॥

उदीचीमिति ॥ चतुर्थमन्त्रपाठस्तु—' उदीचीमा तिष्ठानुष्टुप् त्वा छन्दसामवत्वेकविꣳशः स्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणम् ' इति ॥ एकविंशस्तोम एवमाम्नातः— " सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिः " ( तांब्रा २·१४·१ ) इति । प्रथमपर्याये उत्तमां सकृद्गायेत्, द्वितीयपर्याये प्रथमां, तृतीयपर्याये मध्यमां सकृद्गायेत् । सेयमेकविंशस्तोमसंबन्धिनी विष्टुतिरिति सप्तसप्तिनीत्यभिधीयत इत्यर्थः । " पिबा सोममिन्द्र मन्दतु त्वा " ( तैसं २·४·१४ ) इत्येतस्यामृच्युत्पन्नं साम वैराजम् ॥

ऊर्ध्वामिति ॥ पञ्चममन्त्रपाठस्तु—' ऊर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणम् ' इति ॥ त्रिणवस्तोम एवमाम्नातः—" नवभ्यो

**मीदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्चर्तपाश्च(२)त्यंहाः।**

ईदृङ् । च । अन्यादृङ् । च । एतादृङ् । च । प्रतिदृङ्ङिति प्रति-दृङ् । च । मितः । च । संमित इति सम्-मितः । च । सभरा इति स-भराः । शुक्रज्योतिरिति शुक्र-ज्योतिः । च । चित्रज्योतिरिति चित्र-ज्योतिः । च । सत्यज्योतिरिति सत्य-ज्योतिः । च । ज्योतिष्मान् । च । सत्यः । च । ऋतपा इत्यृत-पाः । च (२) । अत्यंहा इत्यति-अंहाः ।

अत्र मारुत एकविंशतिकपालोऽस्ति, तत्र मध्यमानि सप्तकपालानि "धुनिश्च ध्वान्तश्च" (तैआ ४.२४) इत्यारण्येनानुवाक्येनोपधीयन्ते। अन्यानि चतुर्दश, एताभ्यां गणाभ्यामुपदधाति—'ईदृङ्च' इत्यादिना, 'शुक्रज्योतिश्च' इत्यादिना च ॥ एते चतुर्दश मरुद्विशेषाः। तादर्थ्यात् कपालेषु ताच्छब्द्यम्। इदमिव पश्यति ईदृङ्। "त्यदादिषु दृशः" (पा ३.२.६०) इति किन्। "इदङ्किमोरीश्की" (पा ६.३.९०) इतीशादेशः। "दृक् स्ववस्स्वतवसां छन्दसि" (पा ७.१.८३) इति नुम्। "क्विन्प्रत्ययस्य कुः" (पा ८.२.६२) इति

हिं करोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिं करोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिं करोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणवः" इति (तांब्रा ३.१.१-२)। प्रथमपर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्, उत्तमां सकृद्गायेत्[६]। द्वितीयपर्याये प्रथमां सकृद्गायेत्[६], मध्यमां त्रिर्गायेत्[६], उत्तमां पञ्चकृत्वो गायेत्[६]। तृतीयपर्याये प्रथमां पञ्चकृत्वो गायेत्[६], मध्यमां सकृद्गायेत्[६], उत्तमां त्रिर्गायेत्[६]। सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात्त्रिणवनामको वज्रसमानः। त्रयस्त्रिंशस्तोम एवमाम्नातः—"एकादशभ्यो हिं करोति स तिसृभिः स सप्तभिः स एकयैकादशभ्यो हिं करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिं करोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंशः" (तांब्रा ३.३.१-२) इति। प्रथमपर्याये प्रथमां त्रिर्गायेत्, मध्यमां सप्तकृत्वः, उत्तमां सकृत्। द्वितीयपर्याये प्रथमां सकृन्मध्यमां[७] त्रिरुत्तमां[८] सप्तकृत्वः। तृतीयपर्याये प्रथमां सप्तकृत्वो मध्यमां[९] सकृदुत्तमां[१०] त्रिरिति। सोऽयं त्रयस्त्रिंशः स्तोमानामन्तः। यत्तु वाजपेये उज्जित्यनुवाके (तैसं १.७.११) त्रयोदशस्तोमश्चतुर्दशस्तोम इत्यादिकमाम्नातं तत्सर्वमुन्नेयस्तोमाभिप्रायेणेति द्रष्टव्यम्। उन्नयनप्रकारस्तु सामसूत्रे द्रष्टव्यः। "प्रो ष्वस्मै पुरोरथम्" (तैब्रा २.५.८) इत्यस्यामृच्युत्पन्नं साम शाक्वरम्। "रेवतीर्नः सधमाद" (तैसं १.७.१३) इत्यस्यामृच्युत्पन्नं साम रैवतम्। त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या द्रव्यरक्षका उक्ताः। चतुर्थे शारीरबलस्य तद्रक्षकत्वम्। पञ्चमे वर्चसः प्रख्यातशूरनामकृतस्य तेजसो धनरक्षकत्वम्॥ विधत्ते—"दिशो व्यास्थापयति। दिशामभिजित्यै" (तैब्रा १.७.७) इति॥ यजमानं दिक्षु प्रस्थापितवतोऽध्वर्योर्मानसमनुक्रमणं विधातुं प्रस्तौति—"यदनु प्रक्रामेत्। अभि दिशो जयेत्। उत्तु माद्येत्" (तैब्रा १.७.७) इति। यद्यध्वर्युर्यजमानमनु पादेन प्रक्रामेद्दिशामभिजयो भवेत् किं तु उन्माद्येत् बुद्धि-

६. इ.उ-'गायेत्' नास्ति। ७. आ.क-सकृद्द्वितीयाम्। ८. आ.क-त्रिस्तृतीयाम्। ९. आ.क-द्वितीयाम्। १०. आ.क-सकृत्तृतीयाम्।

कुत्वम् । अन्य इव पश्यति अन्यादृङ् । “ आ सर्वनाम्नः ” ( पा ६.३.९१ ) इत्यात्वम् । एष इव पश्यति एतादृङ् । परत्र संनिहितमेतच्छब्द आह, आत्मनि संनिहितमिदंशब्दः । प्रतिकूलं पश्यतीति प्रतिदृङ् । छान्दसः क्विन् । मितः निभृतः, संमितः संहतरूपः । “ गतिरनन्तरः ” ( पा ६.२.४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । सह बिभर्तीति सभराः । छान्दसोऽसुन् । भरसा सह वर्तत इति वा सभराः, भरो वेगः । शुक्रज्योतिः येन ज्योतींषि शुक्राणि क्रियन्ते । चित्राणि पूजनीयानि ज्योतींषि येन क्रियन्ते स चित्रज्योतिः । सत्सु साधूनि सत्यानि ज्योतींषि येन स सत्यज्योतिः । ज्योतिष्मान् ब्रह्मज्योतिः । सत्यः सति साधुः । छान्दसमन्तोदात्तत्वम् । ऋतस्य यज्ञस्य पाता रक्षकः ऋतपाः । अत्यंहाः अंहोऽतिक्रान्तवान् । अत्यर्थं वा गच्छतीत्यत्यंहाः । “ गतिकारकयोरपि ” ( द्र. उ ६७६ ) इत्यंहेरसुन् ॥

---

श्रमं प्राप्नुयात् ॥ विधत्ते—“ मनसाऽनु प्रक्रामति । अभि दिशो जयति । नोन्माद्यति ” ( तैब्रा १.७.७ ) इति । प्रक्रमणस्य कृतत्वात् दिग्विजयः । पादेन तदकरणादुन्मादाभावः ॥ समिदादीनि दिशां नामानि प्रशंसति—“ समिधमा तिष्ठेत्याह । तेज एवावरुन्धे । उग्रामा तिष्ठेत्याह । इन्द्रियमेवावरुन्धे । विराजमा तिष्ठेत्याह । अन्नाद्यमेवावरुन्धे । उदीचीमा तिष्ठेत्याह । पशूनेवावरुन्धे । ऊर्ध्वामातिष्ठेत्याह । सुवर्गमेव लोकमभिजयति ” ( तैब्रा १.७.७ ) इति ॥ समिच्छब्दस्य दीप्तिप्रतिपादकतया तेजःप्राप्तिः । उग्रशब्द इन्द्रियबलोपेतत्वमाचष्ट इतीन्द्रियप्राप्तिः । ‘ अन्नं वै विराट् ’ ( एब्रा १.५ ) इति श्रुत्यनुसारेण अन्नप्राप्तिः । “ यर्हि पशुमाप्रीतमुदञ्चं नयन्ति ” ( तैसं ३.१.२ ) इति पशोरुत्तरदिक्संबन्धश्रवणात् पशुप्राप्तिः । स्वर्गलोकस्योर्ध्वभावित्वादभिजयः ॥ विहितं मानसमनुक्रमणं प्रशंसति—“ अनूज्जिहीते । सुवर्गस्य लोकस्य समष्ट्यै ” ( तैब्रा १.७.७ ) इति ॥

ईदृङ्ङिति ॥ कल्पः—“ मारुतमेकविꣳशतिकपालं निर्वपति । वैश्वदेवीमामिक्षाम् । तस्यारण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधाति । ईदृङ्चान्यादृङ्चेत्येताभ्याम् । मध्येऽरण्येऽनुवाक्येन ” ( आपश्रौ १८.१२.११-१२) इति ॥ पाठस्तु–‘ ईदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च सत्यश्चर्तपाश्चात्यꣳहाः’ इति । ईदृङ्ङित्यादीनि मरुद्विशेषाणां नामधेयानि । तद्रूपेण भावितत्वात् कपालानामपि तन्नाम । हे प्रथमकपाल, त्वमीदृङ्चासि एतन्नामकमेवासि । एवमन्यत्रापि योज्यम् ॥ विधत्ते—“ मारुत एष भवति । अन्नं वै मरुतः । अन्नमेवावरुन्धे ” ( तैब्रा १.७.७ ) इति । एष पुरोडाश इत्यर्थः ॥ तस्मिन् गुणं विधत्ते—“ एकविꣳशतिकपालो भवति प्रतिष्ठित्यै ” ( तैब्रा १.७.७ ) इति । एकविंशः स्तोमानां प्रतिष्ठेत्युक्तत्वात् प्रतिष्ठाहेतुत्वम् ॥ कपालोपधानमन्त्राणां शेषं पूरयितुं विधत्ते—“ योऽरण्येऽनुवाक्यो गणः । तं मध्यत उपदधाति । ग्राम्यैरेव पशुभिरारण्यान् पशून् परिगृह्णाति । तस्माद्ग्राम्यैः पशुभिरारण्याः पशवः परिगृहीताः ” ( तैब्रा १.७.७ ) इति । अत्राऽऽम्नात ईदृङ्चेत्यादिः सप्तसंख्यायुक्त एको गणः । शुक्रज्योतिश्चेत्यादिः सप्तसंख्यायुक्तोऽपरो गणः । तयोर्गणयोर्मध्ये गणान्तरं प्रक्षेपणीयम् । अरण्ये गत्वाऽध्येतव्यो योऽनुवाकस्तस्मिन्ननुवाके स गण आम्नातः । तथा हि—“ धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च । निलिम्पश्च विलिम्पश्च विक्षिपः ” ( तैआ ४.२४ ) इति । एतस्य गणस्य मध्यत उपधाने सत्युभयतोऽवस्थितैर्ग्राम्यैः पशुभिः परितोऽवबध्याऽऽरण्यान् पशून् गृह्णाति । यस्मादत्रा रण्यगणो मध्ये प्रक्षिप्तस्तस्माल्लोकेऽप्यरण्यवासिनो हरिणादय आनीयमानाः पलायनं वारयितुं ग्रामे परिचयवद्भिर्हरिणादिभिरुभयत एकपाशेन बद्ध्वा परिगृहीता भवन्ति ॥

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाऽꣳशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा चराचरेभ्यः स्वाहा परिप्लवेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥

[ अनुष्टुप्स्वर्तपाश्च सरीसृपेभ्यः स्वाहा ]

अग्नये । स्वाहा । सोमाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । पूष्णे । स्वाहा । बृहस्पतये । स्वाहा । इन्द्राय । स्वाहा । घोषाय । स्वाहा । श्लोकाय । स्वाहा । अꣳशाय । स्वाहा । भगाय । स्वाहा । क्षेत्रस्य । पतये । स्वाहा । पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । नक्षत्रेभ्यः । स्वाहा । अद्भ्य इत्यत्—भ्यः । स्वाहा । ओषधीभ्य इत्योषधि—भ्यः । स्वाहा । वनस्पतिभ्य इति वनस्पति—भ्यः । स्वाहा । चराचरेभ्यः । स्वाहा । परिप्लवेभ्य इति परि—प्लवेभ्यः । स्वाहा । सरीसृपेभ्यः । स्वाहा ॥ १३ ॥

[ मैसं २·६·१०,११·१; कास १५·७; वा॰ १०·५, १०-१५ ]

षट् पार्थिवानि वारुणानि पुरस्तादभिषेकस्य जुहोति—'अग्नये स्वाहा' इत्यादीनि बृहस्पत्यन्तानि ॥ षडुपरिष्टात्—'इन्द्राय स्वाहा' इत्यादीनि 'क्षेत्रस्य पतये स्वाहा' इत्यन्तानि । सर्वाणि निगदसिद्धानि ॥

षट् पुरस्ताद्भूतानामवेष्टीर्जुहोति—'पृथिव्यै स्वाहा' इत्याद्यानि 'नक्षत्रेभ्यः स्वाहा' इत्यन्तानि ॥ पृथिव्यादिभ्यः मृत्युरवेष्टो भवति विनाशितो भवति ॥

षडुपरिष्टात् 'अद्भ्यः स्वाहा' इत्याद्याः 'सरीसृपेभ्यः स्वाहा' इत्यन्ताः । सर्वा निगदसिद्धाः । चरणशीलाः चराचराः । चरेर्यङ्लुगन्तात् (पा ३·४·७४) पचाद्यचि

**अग्नय इति** ॥ कल्पः—"अग्नये स्वाहेति षट् पार्थानि पुरस्तादभिषेकस्य जुहोति" (आपश्रौ १८·१५·८) इति । "इन्द्राय स्वाहेति षट् पार्थान्युपरिष्टादभिषेकस्य जुहोति" (आपश्रौ १८·१६·११) इति च । "पृथिव्यै स्वाहेति षड्भूतानामवेष्टीः" (आपश्रौ १८·१५·९) इति च । "अद्भ्यः स्वाहेति षड्भूतानामवेष्टीः" इति च ॥ एतस्मिन्नवेष्टिविनियोगेऽप्यभिषेकात् पूर्वं षट्कमेकं तत ऊर्ध्वमपरं षट्कमिति द्रष्टव्यम् ॥ पाठस्तु—'अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाऽꣳशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा चराचरेभ्यः स्वाहा परिप्लवेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा' इति ॥ अत्र चतुर्थ्यन्तैरुक्ताः सर्वे देवताविशेषा द्रष्टव्याः ॥ तत्र पार्थानि विधातुं प्रस्तौति—"पृथिर्वैन्यः । अभ्यषिच्यत । स राष्ट्रं नाभवत् । स एतानि पार्थान्यपश्यत् । तान्यजुहोत् । तैर्वै स राष्ट्रमभवत्" (तैब्रा १·७·७) इति । वेनस्य पुत्रः पृथिनामा कश्चिद्राजा राजसूये पार्थहोमं

(पा ३·१·१३४) अभ्यासस्यागागमः (पा ६·१·१२वा६)। परितः प्लवनशीलाः परिप्लवाः। स एवाच्। सर्पणशीलाः सरीसृपाः। सृपेर्यङ्लुगन्तात् (पा २·४·७४) पचाद्यचि अभ्यासस्य रीगागमः (पा ७·४·९०)। "न धातुलोप आर्धधातुके" (पा १·१·४) इति गुणाभावः ॥

इत्यष्टमे त्रयोदशोऽनुवाकः ॥

---

विनैवाभ्यषिच्यत। ततः स राष्ट्रं न प्राप्नोत्। अतो राष्ट्रप्राप्तये पार्थसंज्ञकानि 'अग्नये स्वाहा' इत्यादीनि मन्त्रवाक्यान्यपश्यत्। तैर्हुत्वा राष्ट्रं प्राप्नोत्॥ विधत्ते—"यत् पार्थानि जुहोति। राष्ट्रमेव भवति" (तैब्रा १·७·७) इति। भवत्येव प्राप्नोत्येव॥ षष्ठसप्तममन्त्रौ प्रशंसति—"बार्हस्पत्यं पूर्वेषामुत्तमं भवति। ऐन्द्रमुत्तरेषां प्रथमम्। ब्रह्म चैवास्मै क्षत्रं च समीची दधाति। अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति" (तैब्रा १·७·७) इति। 'बृहस्पतये स्वाहा' इत्येतन्मन्त्रवाक्यं पूर्वेषां षण्णां मन्त्राणां चरमम्। 'इन्द्राय स्वाहा' इत्येतद्वाक्यं उत्तरेषां षण्णां प्रथमम्। तथा सति बृहस्पतेरिन्द्रस्य च ब्राह्मणक्षत्रियाभिमानिदेवत्वादस्मै यजमानाय तज्जातिद्वयं समीची दधाति[११]। परस्परस्नेहयुक्तं करोतीत्यर्थः। किं च तयोर्मन्त्रयोः पूर्वोत्तरभावेन ब्राह्मणे क्षत्रियं प्रतिष्ठापयति ब्राह्मणानुकूलं करोतीत्यर्थः॥ विधत्ते—"षट् पुरस्तादभिषेकस्य जुहोति। षडुपरिष्टात्। द्वादश संपद्यन्ते। द्वादश मासाः संवत्सरः। संवत्सरः खलु वै देवानां पूः। देवानामेव पुरं मध्यतो व्यवसर्पति। तस्य न कुतश्चनोपाव्याधो भवति" (तैब्रा १·७·७) इति। वसन्ते वसन्ते देवैः सोमस्य पीयमानत्वाद्भोगस्थानत्वेन संवत्सरो देवानां पुरमिव भवति। यथा पुरे पण्यवीथी व्यवस्थिताभ्यामुभयतोवाटिकाभ्यां युक्ता भवति, तस्यां गच्छन् पुरुषश्चोरैरविद्धो भवति, तद्वत् पार्थयोः षट्कयोर्मध्येऽभिषेकाय यजमानो देवपुरमध्ये प्रविशति तस्य कुतोऽप्यन्यस्माद्बाधो न भवति॥ विधत्ते—"भूतानामवेष्टीर्जुहोति। अत्रात्र वै मृत्युर्जायते। यत्र यत्रैव मृत्युर्जायते। तत एवैनमवयजते। तस्माद्राजसूयेनेजानः सर्वमायुरेति। सर्वे ह्यस्य मृत्यवोऽवेष्टाः। तस्मात् राजसूयेनेजानो नाभिचरितवै। प्रत्यगेनमभिचारः स्तृणुते" (तैब्रा १·७·७) इति। भूतानां यक्षराक्षसपिशाचादीनां मृत्युहेतूनामवयजनस्य विनाशस्य हेतव आहुतयः, 'पृथिव्यै स्वाहा' इत्यादिद्वादशमन्त्रसाध्या आहुतयो भूतानामवेष्टयस्ता जुहुयात्। अत्रात्र संध्याकाले मध्यरात्रे निर्जनदेशे उच्छिष्टदेशे बाल्याद्यवस्थायां च भूतोपद्रवरूपो मृत्युरुत्पद्यते। अनेन तु होमेन तत एव देशात् कालादवस्थाविशेषाच्चैनं मृत्युमवयजते नाशयति। यस्मात् मृत्युर्नाशितस्तस्मात् राजसूयेनेष्टवतो यजमानस्यापमृत्युपरिहारेण कृत्स्नायुःप्राप्तिर्भवति। यस्माद्वैरिभिरापादितो भूताद्युपद्रवो राजसूययाजिनं न प्राप्नोति तस्मादयं नाभिचरितवै नाभिचरणीयः। स च परैः कृतोऽभिचारः प्रत्यक्कर्तुरेवाभिमुखो भूत्वा तमेनमभिचारकर्तारं स्तृणुते हिनस्ति॥

अत्र विनियोगसंग्रहः—

"दिशो व्यास्थापयेद्भूपमध्वर्युः समिपञ्चभिः।
मारुतस्य कपालानि दध्यादीङ्क्चतुर्दश॥ १॥
अग्नाभिषेकतः पूर्वं षट् पार्थान्युत्तराणि षट्।
पृथिषट्कद्वयं तद्वत् स्युर्भूतानामवेष्टयः॥
त्रयोदशेऽनुवाकेऽस्मिंश्चत्वारिंशदीरिताः॥ २॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

११. म४.मै३—संदधाति।

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि
दिद्योन्मा पाह्यवेष्टा दन्दशूका निरस्तं नमुचेः शिरः ॥

सोमस्य । त्विषिः । असि । तव । इव । मे । त्विषिः । भूयात् ।
अमृतम् । असि । मृत्योः । मा । पाहि ।
दिद्योत् । मा । पाहि । अवेष्टा इत्यव-इष्टाः । दन्दशूकाः ।
निरस्तमिति निः-अस्तम् । नमुचेः । शिरः ॥

---

यजमानायतने शार्दूलचर्मोपस्तृणाति—'सोमस्य त्विषिरसि' इति ॥ सोमस्य या त्विषिः दीप्तिः सैव त्वम् असि दीप्तत्वात् व्यापित्वाच्छान्तत्वाच्च । तव इव मे ममापि त्विषिः भूयाद् दीप्ता व्यापिनी शान्ता चेत्याशास्ते ॥

चर्मणोऽधस्ताद्रजतमुपास्यति—'अमृतम्' इति ॥ अमृतम् अमरणहेतुः असि इति । मृत्योः मा पाहि । "मृत्योर्वा एष वर्णः । यच्छार्दूलः" (तैब्रा १.७.८) इति शार्दूलचर्मणोऽधस्तादन्तर्धानकरणेन मृत्योरन्तर्धानकरणमाशास्ते ॥

---

**अथोदशेऽनुवाके बिम्बास्थापनमुक्तम् । चतुर्दशेऽभिषेक उच्यते ।**

**सोमस्येति** ॥ **कल्पः— "अग्रेण प्रशास्तुर्धिष्णियं खादिरीमौदुम्बरीं वाऽऽसन्दीं प्रतिष्ठाप्य सोमस्य त्विषिरसीति तस्यां शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य" (आपश्रौ १८.१५.५) इति ॥ पाठस्तु—'सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात्' इति ॥ हे शार्दूलचर्म, त्वं सोमस्य दीप्तिः असि अतः तव इव मे दीप्तिः भूयात् ॥ विधत्ते—"सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्मोपस्तृणाति । यैव सोमे त्विषिः । या शार्दूले । तामेवावरुन्द्धे" (तैब्रा १.७.८) इति । शार्दूलचर्मगतां दीप्तिं दृष्ट्वा सोमदीप्तित्वेन भावनादुभयावरोधः ॥**

**अमृतमिति** ॥ **कल्पः— "अमृतमसीति तस्मिञ्छतमानं हिरण्यं निधाय" (आपश्रौ १८.१५.५) इति । तस्मिञ्शार्दूलचर्मणि ॥ पाठस्तु—'अमृतमसि मृत्योर्मा पाहि' इति ॥ हिरण्यस्यामृतत्वमसकृत् पूर्वमुक्तम् ॥ हिरण्यस्य स्थापनं तत्प्रमाणं च क्रमेण विधत्ते—"मृत्योर्वा एष वर्णः । यच्छार्दूलः । अमृतं हिरण्यम् । अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति । अमृतमेव मृत्योरन्तर्धत्ते । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति" (तैब्रा १.७.८) इति । वर्णो देहः ॥**

उपरिष्टात् सुवर्णमधिनिदधाति—'दिद्योत्' इति ॥ दिद्युत् आयुधमुच्यते । द्युतेः क्विपि द्विर्वचनम्, "द्युतिस्वाप्योः संप्रसारणम्" ( पा ७.४.६७ ) अत्रापि भवति । ततो मां [v]पाहि । "सुपां सुलुक्" ( पा ७.१.३९ ) इति पञ्चम्या लुक् । वर्णव्यत्ययेन उकारस्योकारः । यद्वा—द्युतेर्विचि द्विर्वचने गुणे दिद्योदिति । शब्दान्तरं दितेः[1] दिद्युत् अवखण्डनकृदिति केचित् । सुवर्णविशेषणं वा । हे सुवर्ण [v]दिद्योत् द्योतमान, [1-v]मा मां[2] [v]पाहि इति ॥

क्लीबं सीसेन विध्यति—'अवेष्टाः' इति ॥ [v]अवेष्टाः विनाशिताः । अवपूर्वो यजिर्विनाशने । [v]दन्दशूकाः दशनशीलाः सर्पादयः । "यजजपदशां यङः" ( पा ३.२.१६६ ) इत्यूकप्रत्ययः ॥

लोहितायसं पादेन निरस्यति—'निरस्तम्' इति गायत्र्यैकपदया ॥ [v]निरस्तं निष्कृष्यास्तं [v]नमुचेः [v]शिरः, न मुञ्चति पुरुषमिति नमुचिः अधर्मः । न मुञ्चत्यधर्ममिति वा नमुचिरसुरः बाधकः, तस्य शिरो निरस्तमनेन लोहितायसेन ॥

अभिषेकानवेक्षते—'सोमः' इति षट्पदया त्रिष्टुभा ॥ [v]सोमः [v]राजा [v]वरुणः [v]च [v]देवाः च अन्ये [v]ये [v]धर्मसुवः धर्मस्यानुज्ञातारः उत्पादयितारो वा । [v]ते [v]ते [v]वाचं [v]सुवन्तां प्रेरयन्तु । [v]ते [v]ते [v]प्राणं [v]सुवन्ताम् इत्यादि स्पष्टम् ॥

**दिद्योदिति** ॥ कल्पः— "दिद्योन्मा पाहीति सौवर्णेन शतमानेन शताक्षरेण शतकृष्णलेन यजमानस्य शीर्षन्नधि निधत्ते" ( आपश्रौ १८.१५.५ ) इति ॥ हे [v]दिद्योत् द्योतनात्मक शिरस्यभिषेकजलसेचनार्थं स्थापित शतच्छिद्रयुक्त सुवर्णपात्र, त्वं मां रक्ष ॥ विधत्ते—"दिद्योन्मा पाहीत्युपरिष्टादधिनिदधाति । उभयत एवास्मै शर्म दधाति" ( तैब्रा १.७.८ ) इति । उभयतोऽधस्तादुपरिष्टाच्चामृतरूपस्य सुवर्णस्य स्थितत्वात् सुखं भवति ॥

**अवेष्टा इति** ॥ कल्पः — "अवेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबं सीसेन विध्यति" ( बौश्रौ १२.१० ) इति । [v]दन्दशूकाः सर्पाः [v]अवेष्टाः विनाशिताः ॥ विधत्ते—"अवेष्टा दन्दशूका इति क्लीबꣳ सीसेन विध्यति । दन्दशूकानेवावयजते । तस्मात् क्लीबं दन्दशूका दꣳशुकाः" ( तैब्रा १.७.८ ) इति । यस्मात् सर्पत्वेन भावितं सीसं क्लीबे पातितं तस्माल्लोकेऽपि क्लीबं पुंस्वरहितं पलायनाद्यक्षमं बहुवल्मीकोपेतेऽरण्ये गच्छन्तं सर्पा दन्दशूका दंशुका भवन्ति । दंशशीला इत्यर्थः ॥

**निरस्तमिति** ॥ कल्पः—"सव्येन पदा लोहितायसं निरस्यति निरस्तं नमुचेः शिर इति" ( बौश्रौ १२.१० ) इति ॥ लोहितायसं ताम्रं पूर्वं फेनेन पातितं यत् [v]नमुचेः [v]शिरः तदिदं ताम्ररूपं सत् [v]निरस्तं परित्यक्तम् । एतच्च ताम्रं नापितस्योपरि प्रक्षेप्तव्यम् । अत एवाऽऽपस्तम्ब आह—"तामारोहन् यजमानोऽवेष्टा दन्दशूका इति दक्षिणेन पदा सीसं पण्डकाय प्रत्यस्यति, निरस्तं नमुचेः शिर इति सव्येन लोहितायसं केशवापाय, तौ बहिर्वेदि निरस्यतः" ( आपश्रौ १८.१५.६-७ ) इति ॥ विधत्ते— "निरस्तं नमुचेः शिर इति लोहितायसं निरस्यति । पाप्मानमेव नमुचिं निरवदयते" ( तैब्रा १.७.८ ) इति ॥

१. तं.ग्रि–द्युतेः । २–२ त्रि.मै–मा; तं–माम् ।

सोमो राजा वरुणो देवा धर्मसुवश्च ये ।
ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्ताꣳ सोमस्य त्वा द्युम्नेनाभि षिञ्चाम्यग्ने(१)स्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा

सोमः । राजा । वरुणः । देवाः । धर्मसुव इति धर्म-सुवः । च । ये ॥
ते । ते । वाचम् । सुवन्ताम् । ते । ते । प्राणमिति प्र-अनम् । सुवन्ताम् । ते । ते । चक्षुः । सुवन्ताम् । ते । ते । श्रोत्रम् । सुवन्ताम् । सोमस्य । त्वा । द्युम्नेन । अभीति । सिञ्चामि । अग्नेः ( १ ) । तेजसा । सूर्यस्य । वर्चसा । इन्द्रस्य । इन्द्रियेण । मित्रावरुणयोरिति मित्रा-वरुणयोः । वीर्येण । मरुताम् । ओजसा ।

---

अध्वर्युरभिषिञ्चति—'सोमस्य'॥ सोमस्य द्युम्नेन दीप्त्या सह यशसा वा त्वाम् अभि षिञ्चामि [३]अस्योपरि क्षारयामि त्वाम् । अग्नेः तेजसा अभि षिञ्चामि त्वामित्येव । एवं मरुताम् ओजसा इत्यादि निगदसिद्धम् । क्षत्राणां बलानां सर्वेषामपि क्षत्रपतिः असि त्वम्, न पुनरेकस्य पतित्वादित्यसमासेन प्रतिपाद्यते; "गवामसि गोपतिः" ( तैब्रा २.८.२ ) इति यथा।

---

**सोम इति** ॥ कल्पः—"ऊर्ध्वबाहुं तिष्ठन्तं माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति सोमो राजेत्यभिमन्त्र्य सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति पालाशेन पुरस्तादध्वर्युरेवमितरत्रौदुम्बरेण दक्षिणतो ब्रह्मा राजन्यो वाऽऽश्वत्थेन पश्चाद्वैश्यो नैयग्रोधेनोत्तरतो जन्यः" ( आपश्रौ १८.१५.१०, १८.१६.१-५ ) इति । जन्यः सखा ॥ अभिमन्त्रणमन्त्रपाठस्तु—'सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्ताम्' इति ॥ यः सोमः राजा वरुणः यो राजा ये चान्ये देवा गृहपत्यग्न्यादयः धर्मसुवः धर्ममनुजानन्तः सन्ति ते सर्वे तव वाचम् अनुजानन्तु । एवं प्राणादिषु योज्यम् ॥

**सोमस्येति** ॥ अभिषेकमन्त्रपाठस्तु—'सोमस्य त्वा द्युम्नेनाभि षिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा' इति । हे यजमान, त्वां सोमस्य द्युम्नेन दीप्त्या अभि षिञ्चामि । एवम् 'अग्नेः तेजसा' इत्यादौ योज्यम् ॥ अभिमन्त्रणमन्त्रस्य प्रयोजनं दर्शयति—"प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः । सोमो राजा वरुणः । देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तामित्याह । प्राणानेवाऽऽत्मनः पूर्वानभिषिञ्चति" ( तैब्रा १.७.८ ) इति । आत्मनो यजमानस्य प्राणा वागादयो ये सन्ति ते यजमानाभिषेकात् पूर्वमभिषिच्या [१-]इत्यभिज्ञा आहुः[-१] । युक्तो हि तेषाममूर्तानां मन्त्रपाठमात्रेणाभिषेकः । मन्त्रे हि सोमादयो

---

३. ति.तस्योपरि ।

---

१-१ आ.क-इत्याहुरभिज्ञाः ।

क्षत्राणां क्षत्रपतिरस्यति दिवस्पाहि समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु संचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयानाः ॥

क्षत्राणाम् । क्षत्रपतिरिति क्षत्र-पतिः । असि । अतीति । दिवः । पाहि ।
समाववृत्रन्निति सम्-आववृत्रन् । अधराक् । उदीचीः ।
अहिम् । बुध्नियम् । अन्विति । संचरन्तीरिति सम्-चरन्तीः ।
ताः । पर्वतस्य । वृषभस्य । पृष्ठे । नावः । चरन्ति । स्वसिच इति स्व-सिचः । इयानाः ॥

स त्वं [v]दिवः द्युमतः सर्वान् सोमादीन् द्युलोकवासिनो वा सोमादीनतिक्रम्य एनं यजमानं [v]पाहि । यद्वा---यजमान एवोच्यते, हे यजमान, त्वामभि षिञ्चामीति । क्षत्राणां क्षत्रपतिरसि त्वं दीप्तिमतोऽतिक्रम्य लोकान् पाहि, दिवो वा उपरि पाहि । " पातौ च बहुलम् " ( पा ८·३·५२ ) इति सत्वम् । कस्कादिर्वा द्रष्टव्यः ( पा ८·३·४८ ) ॥

ऊर्ध्वं धाराः समुन्मार्ष्टि---' समाववृत्रन् ' इति त्रिष्टुभा ॥ एकीभूत्वा समन्ताद्वर्तन्ताम् । [v]अधराक् अधस्तात् गताः । [v]उदीचीः ऊर्ध्वगाः[4] उपलक्षणं चैतत; सर्वं देहं व्याप्य वर्तन्तामनेनोन्मार्जनेन । वृतेर्लुङि व्यत्ययेन च्लेश्लुङ् । " द्युद्भ्यो लुङि " ( पा १·३·९१ ) इति परस्मैपदम् । " बहुलं छन्दसि " ( पा ७·१·८ ) इति रुट् । [v]अहिं स्थिराणि स्थानानि [v]बुध्नियं सुषिराणि च [v]अनु [v]संचरन्तीः अनुक्रमेण संचरन्त्यः । अहिं बुध्नियं वाऽनुप्राप्य संचरन्तीः

देवा वागादीनभिषिक्ताननुजानन्त्वित्येवावबुध्यते[2] । तस्मात् तत्पाठ एवाभिषेकः । स च पाठः प्रथमतः कृत इत्यसौ पूर्वाभिषेकः ॥ अभिषेकमन्त्रे प्रथमभागस्य शाखान्तरपाठं ( वासं १०·१७ ) निराकृत्यात्रत्यं पाठं विधत्ते--" यद्ब्रूयात् । अग्नेस्त्वा तेजसाऽभिषिञ्चामीति । तेजस्व्येव स्यात् । दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह । सौम्यो वै देवतया पुरुषः । स्वयैवैनं देवतयाऽभिषिञ्चति " ( तैब्रा १·७·८ ) इति । " सोमो वै रेतोधाः " ( तैब्रा १·७·२ ) इत्यादौ रेतोधारिणः पुरुषस्य सोमत्वनिरूपणात् पुरुषः सोमदेवत्यः । सोमदेवतयाऽभिषेके सति लावण्यलाभात् दुश्चर्मत्वं न भवेत् ॥ उक्तभागानां पाठं तत्तत्प्राप्त्या प्रशंसति--" अग्नेस्तेजसेत्याह । तेज एवास्मिन् दधाति । सूर्यस्य वर्चसेत्याह । वर्च एवास्मिन् दधाति । इन्द्रस्येन्द्रियेणेत्याह । इन्द्रियमेवास्मिन् दधाति । मित्रावरुणयोर्वीर्येणेत्याह । वीर्यमेवास्मिन् दधाति । मरुतामोजसेत्याह । ओज एवास्मिन् दधाति " ( तैब्रा १·७·८ ) इति ॥

क्षत्राणामिति ॥ कल्पः-- " क्षत्राणां क्षत्रपतिरसीत्यभिषिच्यमानमभिमन्त्रयते " ( आपश्रौ १८·१६·६ ) इति ॥ हे यजमान, त्वं क्षत्रियाणां पतिः [v]असि । नात्र केषांचित् पतिः,

४. तं.त्रि–ऊर्ध्वगताः ।

२. म४.म६.मै३–जानन्त्वित्येव श्रूयते ।

रुद्र यत् ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि ।

रुद्र । यत् । ते । क्रयि । परम् । नाम । तस्मै । हुतम् । असि । यमेष्टमिति यम–इष्टम् । असि ॥

---

vताः । vपर्वतस्य पर्ववतः । " पर्वमरुद्भ्यस्तः " ( पा ५.२.१२२ वा १० ) इति मत्वर्थीयस्तः । vवृषभस्य प्रधानस्य वर्षितुर्वा यजमानस्य vपृष्ठे देहस्योपरि vनावः नाव्या इवापः vचरन्ति प्रभृताः प्रवर्तन्ते, vस्वसिचः स्वयमेव सर्वमङ्गं सिञ्चन्त्यः, vइयानाः सर्वमङ्गं व्याप्नुवन्त्यः । लिटः कानजादेशः ( पा ३.२.१०६ ) । यद्वा—समाववृत्रन् संहृत्य समन्तात् वर्तन्ताम् । अधरागुपरिष्टाच्च सर्वास्वपि दिक्षु अहिं मेघं बुध्नियमन्तरिक्षं चानुसंचरन्त्यः मेघमनुप्राप्यान्तरिक्षे वर्तमानाः । वर्षकाले पर्वतस्य पर्ववतो वृषभस्य वर्षितुः मेघस्य पृष्ठे नाव्या आप इव प्रभूताः संचरन्ति ओषधिनिष्पत्तये । स्वसिचः स्वयमेव विश्वं सिञ्चन्त्यः इयाना दिगन्तं व्याप्नुवत्यः इति । नौभिः कार्याभिः कारणभूता आपो लक्ष्यन्ते ॥

आग्नीध्रे प्ररेकं जुहोति—' रुद्र यत्ते ' इति ॥ हे vरुद्र vयत् vते तव रुद्रेत्यादिकं नामधेयं परमुत्कृष्टं vक्रयि क्रीणात्यात्मसात् करोति विश्वमिति क्रयि । छान्दस इप्रत्ययः ।

---

किं तु सर्वेषां क्षत्रियाणाम् । अनेनैवाभिप्रायेण क्षत्रशब्दस्य द्विरुक्तिः ॥ मन्त्रसामर्थ्यादशेषक्षत्रियपतित्वसिद्धिं दर्शयति— " क्षत्राणां क्षत्रपतिरसीत्याह । क्षत्राणामेवैनं क्षत्रपतिं करोति " ( तैब्रा १.७.८ ) इति ॥

**अतीति** ॥ कल्पः—" कृष्णविषाणया वासांसि *विचचृत एकं द्वे सर्वाणि वा । एतान्युत्करं उदस्यत्यति दिवस्पाहीति " ( आपश्रौ १८.१६.९–१० ) इति ॥ यान्यभिषेककाले लेपलिप्तानि वस्त्राणि तेषामेव त्यागः । हे यजमान, दिवो द्योतमानानन्यान् पार्थिवानतिक्रम्य स्वमेव सर्वां भूमिं vपाहि ॥ द्युशब्दस्येतरपुरुषपरत्वं दर्शयति—" अति दिवस्पाहीत्याह । अत्यन्यान् पाहीति वावैतदाह " ( तैब्रा १.७.८ ) इति ॥

**समाववृत्रन्निति** ॥ कल्पः—" समाववृत्रन्निति येऽभिषिच्यमानस्य लेपा व्यवस्रवन्ति । तान् पात्रैरुन्मार्ष्टि " ( आपश्रौ १८.१६.७–८ ) इति ॥ पाठस्तु—' समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु संचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयानाः ' इति ॥ या आपो लेपरूपेण स्रवन्ति vअधराक् अधोगताः, vउदीचीः ऊर्ध्वं गताः, vसमाववृत्रन् सम्यगावृत्य स्थिताः, न हीयते इत्यहिरुत्तमाङ्गम्, बुध्नस्य पादस्याग्रभागो बुध्नियः, शिरःप्रभृति पादाग्रपर्यन्तमनुक्रमेण संचरन्ति vअस्ताः आपः vपर्वतस्य vवृषभस्य पृष्ठे पर्वतसदृशस्य वर्षणक्षमस्य मेघस्योपरि नद्यां vनाव इव चरन्ति । यद्वा नावो नौयोग्या बहुलाश्चरन्ति । कीदृश्यः ? vस्वसिचः स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्तीति स्वसिचः । vइयानाः आगच्छन्त्यः, बाहुल्येन सर्वत्र प्रभवन्त्य इत्यर्थः । वस्त्रनिरसनमन्त्रः पूर्वमाम्नातोऽपि सामर्थ्यात् पश्चात् प्रयोक्तव्यः ॥ लेपोदकानामूर्ध्वाधोभागयोः सम्यगावृत्य स्थितया राष्ट्रध्रौव्यसंपत्तिं दर्शयति—" समाववृत्रन्नधरागुदीचीरित्याह । राष्ट्रमेवास्मिन् ध्रुवमकः " ( तैब्रा १.७.८ ) इति ॥

**रुद्रेति** ॥ कल्पः—" आग्नीध्रे प्ररेकं जुहोति रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेति " ( बौश्रौ १२.११ ) इति ॥ अत्र स्वाहाकारोऽध्याहृतः । हे vरुद्र, vयत् तव vपरम् उत्कृष्टं vनाम

---

* [ आपश्रौसूत्रानुसारं शुद्धीकृतः । लिखितपुस्तकेषु पूर्वमुद्रितपुस्तकयोः ' विचृते ' इति । ]

१.८.१४ )
अभिषेकः ]

**प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ १४ ॥**

[ अग्नेश्चैकादश च ]

प्रजापत इति प्रजा–पते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि । परीति । ता । बभूव । यत्कामा इति यत्–कामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ १४ ॥

[ मैसं २·६·१०–११; कासं १५·७; वासं १०·१०, १४–२० ]

छान्दसं सांहितिकं दीर्घत्वम् । करोत्यर्थे वा क्रीणातिः । अन्य आह—करोतेः कर्मणि छान्दस केन्प्रत्ययः । क्रे इति कर्मनाम । सप्तम्येकवचने अयादेशः । " सावेकाचः° " ( पा ६·१·१६८ ) इति व्यत्ययेन न प्रवर्तते । क्रयि कर्मणिकर्मणि यदुपादीयते शिवो रुद्रः त्र्यम्बकः कृत्तिवासा विरूपाक्ष इत्यादि तव ᵛनाम ᵛपरं प्रशस्तं ᵛतस्मै इदं ᵛहुतं तदिदमिति त्वमेव ᵛअसि । ᵛयमेष्टं यद्यमेनापीष्टं पूजितं तच्छ्रुत्वा मृत्युरपि बिभेति, तेन च मनसा तत् पूजितमिति भावः । तदिदं त्वमेव ᵛअसि । यजतेर्निष्ठा । " तृतीया कर्मणि " ( पा ६·२·४८ ) इति पूर्वपदप्रकृति-स्वरत्वम् । तस्मात्तव नाम्ने इदमुदकाख्यं हविर्जुहोमीति शेषः । यद्वा—लिङर्थे आशिषि लोट् । पुरुषव्यत्ययः । तस्मादिदं हुतमसि हुतं भूयादित्यर्थः, यमेष्टं चास्त्विति ॥

युवराजस्य प्रतिहितस्य गृहे जुहोति—' प्रजापते ' इति त्रिष्टुभा ॥ हे ᵛप्रजापते, त्वत्तः ᵛअन्यः कश्चिदपि तानि ᵛएतानि ᵛविश्वा विश्वानि ᵛजातानि जन्मवन्ति वस्तूनि ᵛपरि

शर्वादिकं " नमः [3]शर्वाय च पशुपतये " ( तैसं ४·४·५ ) इत्यादिश्रुतिप्रसिद्धं ᵛक्रयि जपपरान् पुरुषान् फलप्रदानेन क्रीणाति वशीकरोतीति क्रयि, ᵛतस्मै नाम्ने ᵛहुतम् ᵛअसि । अभिषेकशेषभूतं पात्रस्थं जलं हुतमस्तु । तच्च यमस्य इष्टम् अस्तु ॥ विधत्ते— " उच्छेषणेन जुहोति । उच्छेषणभागो वै रुद्रः । २ भागधेयेनैव तद्रुद्रꣳ समर्धयति " इति श्रुतत्वात् रुद्रस्योच्छेषणभागत्वम् ॥ तत्रैव कंचिद्विशेषं विधत्ते— " उदङ्परेत्याऽऽग्नीध्रे जुहोति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते " ( तैब्रा १·७·८ ) इति ॥ नाम्न आहुतिप्रदाने[4] प्रयोजनं दर्शयति— " रुद्र यत्ते क्रयी परं नामेत्याह । यद्वा अस्य क्रयी परं नाम । तेन वा एष हिनस्ति । यꣳ हिनस्ति । तेनैवैनꣳ सह शमयति " ( तैब्रा १·७·८ ) इति । एष रुद्रस्तेनैव शर्वादिनाम्ना स्वक्रोधविषयं पुरुषं हिनस्ति । तथा सति यो वध्योऽस्ति तमेनं पुरुषं तेनैव घातकेन नाम्ना सह शमयति । आहुतिदानेन घातकं नाम शाम्यति । तदानीमेव वध्योऽपि शाम्यति, वध्यत्वं निवर्तत इत्यर्थः ॥ ' यमेष्टम् ' इत्यस्य पदस्य तात्पर्यं दर्शयति— " तस्मै हुतमसि यमेष्टमसीत्याह । यमादेवास्य मृत्युमवयजते " ( तैब्रा १·७·८ ) इति । यमस्येष्टसिद्धौ तदनुग्रहादेव यजमानस्यापमृत्युं विनाशयति ॥

३. [ शुद्धीकृतः पाठः; लिखितपुस्तकेषु पूर्वमुद्रितपुस्तकयोश्च ' शिवाय ' । ] । ४. आ–°प्रदानेन ।

बभूव परिभवति व्याप्नोति[५] परिगृह्णाति वा । यद्वा—त्वदेतानि त्वत्तो जातानि विश्वानि वस्तूनि कश्चिदन्यः परिबभूव न त्वमेव परिभवसि, तस्मादेवं तावन्महानुभावस्त्वम् । न च मया किंचिदज्ञातमस्ति; अतः यत्कामाः यत्फलं कामयमानाः ते जुहुमः तत् नः अस्माकम् अस्तु त्वत्प्रसादात् स कामोऽस्माकं संपद्यताम । "शीलिकामिभिक्षाचरिभ्यः" ( पा ३.२.१ वा ७ ) इति णः, पूर्वपदप्रकृतिस्वरत्वं च । इदं तु विशेषणेत्याह—वय रयीणां धनानां पतयः सर्वदा स्याम इत्याशास्ते ॥

इत्यष्टमे चतुर्दशोऽनुवाकः ॥

**प्रजापत इति** ॥ कल्पः—"अत्रैतेषामभिषेकाणां[६] मुख्यपात्रे संस्रावान् समवनीय प्रतिहितस्य गृहानेत्य अन्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति । प्रजापते न त्वदेतान्यन्य इति" ( बौश्रौ १२.११ ) इति । प्रतिहितोऽत्यन्तप्रियपुत्रस्तं च महिषीं च स्पर्शयित्वा जुहुयात् ॥ पाठस्तु—'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयः स्याम पतयो रयीणाम्' इति ॥ हे प्रजापते, त्वत् अन्यः कोऽपि पुरुष उत्पन्नानि तानि एतानि विश्वानि न परि बभूव परिभवितुं समर्थो नाभूत् । परिभवः सृष्टेरप्युपलक्षणम् । सृष्टिसंहारयोरशक्त इत्यर्थः । अतः ते तव वयं यत्कामाः जुहुमः तत् फलमस्माकम् अस्तु । वयं धनानां पतयः स्याम ॥ विधत्ते—"प्रजापते न त्वदेतान्यन्य इति तस्यै गृहे जुहुयात् । यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति । राष्ट्रमेवास्यै प्रजा भवति" ( तैब्रा १.७.८ ) इति । अस्यै प्रजा राष्ट्रं स्यात् । प्रियाया भार्यायाः पुत्रो राष्ट्रं पालयितुं समर्थो भूयादित्यर्थः ॥ विधत्ते—"पर्णमयेनाध्वर्युरभिषिञ्चति । ब्रह्मवर्चसमेवास्मिन्त्विषि दधाति । औदुम्बरेण राजन्यः । ऊर्जमेवास्मिन्नन्नाद्यं दधाति । अश्वत्थेन वैश्यः । विशमेवास्मिन् पुष्टिं दधाति । नैयग्रोधेन जन्यः । मित्राण्येवास्मै कल्पयति । अथो प्रतिष्ठित्यै" ( तैब्रा १.७.८ ) इति । ब्रह्मवर्चसमेव त्विषिमध्ययनादिकृतमुत्कर्षम् । ऊर्जमेवान्नाद्यं बलप्रदमन्नं प्रियं चान्नम् । विशमेव पुष्टिं करप्रदातृप्रजासंपत्तिम् ॥

अत्र विनियोगसंग्रहः—

"सोमाऽऽसन्द्यां व्याघ्रचर्माऽऽस्तीर्यामृ स्वर्णकं क्षिपेत् ।
दिव्योद्राजा स्वर्णपात्रं दध्यान्मूर्ध्नि शतक्षरम् ॥ १ ॥
अवे रोहन्निहाऽऽसन्दीं क्लीबं सीसेन विध्यति ।
निरस्तं केशवापाय निरस्येल्लोहितायसम् ॥ २ ॥
सोमोऽध्वर्युर्मन्त्रयेत सोमस्येत्यभिषिञ्चति ।
क्षत्राभिषिक्तं[७] संमन्त्र्य त्यजेद्दण्डमतीत्यतः ॥ ३ ॥
समालेपान्मार्जनं स्यात् रुद्रशेषं जुहोति हि ।
प्रजापते काम्यहोमो मन्त्रा द्वादश वर्णिताः ॥ ४ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

५. मै–वाऽऽप्नोति ।

५. मै३–अथैते; म४–तत्रैते । ६. म४–षेकपात्राणाम् । ७. मै३–दानाभिषिक्तम्; म४–क्षत्राभिषेकम् ।

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यान्-

मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन विष्णोः क्रमोऽसि

इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र—घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् । मित्रावरुणयोरिति मित्रा—वरुणयोः । त्वा । प्रशास्त्रोरिति प्र—शास्त्रोः । प्रशिषेति प्र—शिषा । युनज्मि । यज्ञस्य । योगेन । विष्णोः । क्रमः । असि ।

रथमुपावहरति—‘ इन्द्रस्य ’ इति ॥ व्याख्यातम् ( तैसं १·८·१२ ) । यो वृत्रं हतवान् तस्य ᵛइन्द्रस्य ᵛवज्रः वृत्रवधसाधनभूतो रथः ᵛअसि, तस्मात् तादृशेन ᵛत्वया ᵛअयं यजमानः ᵛवृत्रं ᵛवध्यात् इति ॥

प्रष्टिवाहिनं रथं युनक्ति—‘ मित्रावरुणयोः ’ इति ॥ ᵛमित्रावरुणयोः ᵛप्रशास्त्रोः । औणादिकस्तृच् ( द्र. उ २५९ ) । तृच इडभावः । ᵛप्रशिषा प्रकृष्टेन शासनेनाज्ञया[1] त्वां ᵛयुनज्मि । “ शास इदङ्हलोः ” ( पा ६·४·३४ ) इतीत्वम् । “ शासिवसिघसीनाम्° ” ( पा ८·३·६० ) इति षत्वम् । ᵛयज्ञस्य ᵛयोगेन हेतुना यज्ञो यथा युज्येतेति ॥

रथमभिप्रैति—‘ विष्णोः ’ इत्यादि ॥ व्याख्यातम् ( तैसं १·७·७ ) ॥

चतुर्दशेऽभिषेक उक्तः । पञ्चदशे रथेन विजयोऽभिधीयते ।

**इन्द्रस्येति** ॥ कल्पः—“ इन्द्रस्य वज्रोऽसि ✠वार्त्रघ्न इति रथमुपावहृत्य ” ( आपश्रौ १८·१७·१ ) इति ॥ पाठस्तु—‘ इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात् ’ इति ॥ व्याख्यातो वाजपेये ॥ विधत्ते—“ इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै ” ( तैब्रा १·७·९ ) इति ॥

**मित्रावरुणयोरिति** ॥ कल्पः—“ अथ दक्षिणं योग्यं युनक्ति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेनेति ” ( द्र.आपश्रौ १८·७·१ ) इति ॥ हे दक्षिणाश्व, त्वां ᵛप्रशास्त्रोः आज्ञापयित्रोः ᵛमित्रावरुणयोः ᵛप्रशिषा प्रशासनेन यज्ञसंबन्धिनिमित्तं रथे युनज्मि ॥ मित्रावरुणपदाभिप्रायं[1] दर्शयति—“ मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीत्याह । ब्रह्मणैवैनं देवताभ्यां युनक्ति ” ( तैब्रा १·७·९ ) इति । ब्रह्मणा मन्त्रेण प्रतिपादिताभ्यां मित्रावरुणदेवताभ्यां प्रशासितो युनक्ति ॥ रथस्याश्वत्रयोपेतत्वं विधत्ते—“ प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देवरथमेवास्मै युनक्ति ” ( तैब्रा १·७·९ ) इति ॥ तादृशं रथं प्रकारान्तरेण प्रशंसति—“ त्रयोऽश्वा भवन्ति । रथश्चतुर्थः । द्वौ सव्येष्ठसारथी । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं युनक्ति ” ( तैब्रा १·७·९ ) इति । सव्येष्ठेत्यत्र दक्षिणस्थेत्यध्याहार्यम् । ततः पार्श्वद्वयवर्तिनौ द्वौ सारथी संपद्येते ।

**विष्णोरिति** ॥ कल्पः—“ विष्णोः क्रमोऽसीति रथं यजमानोऽत्येति* ” ( आपश्रौ १८·१७·२ ) इति । पाठस्तु—‘ विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि ’ इति ॥ एते त्रयो मन्त्रा

१. त्रि—°नेनानुज्ञया ।

✠[ आपश्रौसूत्रे—‘ वार्त्रघ्नः ’ नास्ति । ] । १. म६.मै३—°वरुणशब्दाभि° । ] *[ आपश्रौसूत्रे ‘ अभ्येति ’ इति । ] ।

विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि मरुतां प्रसवे जेषमाप्तं मनः

विष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमिति वि-क्रान्तम् । असि । मरुताम् । प्रसव इति प्र-सवे । जेषम् । आप्तम् । मनः ।

रथमातिष्ठति— ' मरुताम् ' इति ॥ मरुतां प्रसवे अनुज्ञायां सत्यां मरुद्भिरेवाहं जेषं जीयासं शत्रून् । जयतेर्लेटि " सिब्बहुलं लेटि " ( पा ३·१·३४ ) इत्यडागमः । इतश्च लोपः ॥

कूबरमभिमन्त्रयते — ' आप्तम् ' इति ॥ आप्तं सुहृद्भूतं यत् मनः तदेव त्वम् असि । यद्वा—यत् मनसेप्सितं तन्मन उच्यते । मननीयं वा मनः । तत्सर्वं मया आप्तं लब्ध-मनेन कर्मणा । किंच—अहम् इन्द्रियेण चक्षुरादिना वीर्येण च प्रजननसामर्थ्यैनैश्वर्येण वा संगतोऽस्मि । योग्यं क्रियापदमध्याह्रियते । " इन्द्रियमिन्द्रलिङ्गम् " ( पा ५·२·९३ ) इति निपात्यते ॥

वाजपेये व्याख्याताः ( तैसं १·७·७ ) ॥ विधत्ते— " विष्णुक्रमान् क्रमते । विष्णुरेव भूत्वेमाँल्लोकानभि-जयति " ( तैब्रा १·७·९ ) इति ॥ प्रियपुत्रस्यान्वारम्भणं विधत्ते— " यः क्षत्रियः प्रतिहितः । सोऽन्वारभते । राष्ट्रमेव भवति " ( तैब्रा १·७·९ ) इति । प्राप्नोतीत्यर्थः ॥ " प्र ससाहिषे " इत्येतामृचं विधत्ते— " त्रिष्टुभाऽन्वारभते । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति " ( तैब्रा १·७·९ ) इति ॥ सेयमृगुपानुवाक्यकाण्डे चतुर्थप्रपाठकान्ते " त्वमग्ने बृहद्वयः " ( तैसं ३·४·११ ) इत्यस्मिन्ननुवाके समाम्नातेति तत्रैव व्याख्यास्यते ॥

**मरुतामिति** ॥ कल्पः— " मरुतां प्रसवे जेषमिति प्रयाति " ( आपश्रौ १८·१७·५ ) इति ॥ मरुत्संज्ञकानां देवानामनुज्ञायां सत्यामहं जेष्यामि ॥ तदनुज्ञायां जयहेतुताम् दर्शयति— " मरुतां प्रसवे जेषमित्याह । मरुद्भिरेव प्रसूत उज्जयति " ( तैब्रा १·७·९ ) इति ॥

**आप्तमिति** ॥ कल्पः— " सधनू राजन्यः पुरस्तादुत्तरतो वाऽवस्थितो भवति । तस्मा एतानिषूनस्यति आप्तं मन इति " ( आपश्रौ १८·१७·६–७ ) इति ॥ मनः अभिमतम् आप्तं प्राप्तम् ॥ अमुमेवार्थं दर्शयति— " आप्तं मन इत्याह । यदेव मनसैप्सीत् । तदापत् " ( तैब्रा १·७·९ ) इति ॥ ऐप्सीदाप्तुमिष्टवान् । आपत् प्राप्नोति ॥ विधत्ते— " राजन्यं जिनाति । अनाक्रान्त एवाऽऽक्रमते " ( तैब्रा १·७·९ ) इति । बाणविमोकेन राजन्ये जिते सति स्वयं शत्रुणाऽनपक्रान्त एव सन् शत्रुमाक्रान्त-वान् भवति ॥

**समिति** ॥ कल्पः— " तं जित्वा समहमिन्द्रियेण वीर्येणेति प्रदक्षिणमावर्तते " ( आपश्रौ १८·१७·८ ) इति । हस्तादीन्द्रियगतेन सामर्थ्येनाऽहं संगतोऽभूवम् ॥ मन्त्रपाठेन वीर्यसंगतिं दर्शयति— " वि वा एष इन्द्रियेण वीर्येणर्ध्यते । यो राजन्यं जिनाति । समहमिन्द्रियेण वीर्येणेत्याह । इन्द्रियमेव वीर्यमात्मन् धत्ते " ( तैब्रा १·७·९ ) इति ॥

समहमिन्द्रियेण वीर्येण पशूनां मन्युरसि तवेव मे मन्युर्भूयात्-
नमो मात्रे पृथिव्यै माऽहं मातरं पृथिवीꣳ हिꣳसिषं

समिति । अहम् । इन्द्रियेण । वीर्येण । पशूनाम् । मन्युः । असि । तव । इव । मे । मन्युः । भूयात् ।
नमः । मात्रे । पृथिव्यै । मा । अहम् । मातरम् । पृथिवीम् । हिꣳसिषम् ।

वाराही उपानहावुपमुञ्चते—'पशूनां मन्युः असि' इति ॥ पशूनां मन्युः दीप्तिः असि, क्रोधजन्मा गृह्यते । प्रकृतिशब्देन विकार उच्यते "पशूनां वा एष मन्युः । यद्वराहः" (तैब्रा १·७·९) इति च ब्राह्मणम् । "नामन्यतरस्याम्" (पा ६·१·१७७) इति नाम उदात्तत्वम् । तव इव ममापि मन्युः भूयात्, दीप्तिमान् स्याम् ॥

इमामभिमृशति—'नमः' इति ॥ मात्रे सर्वस्योत्पादयित्र्यै पृथिव्यै नमः । उभयत्रापि "उदात्तयणः°" (पा ६·१·१७४) इति चतुर्थ्या उदात्तत्वम् ॥

तस्य दक्षिणं पादमुपावहरति—मातरं पृथिवीम् अहम् मा हिंसिषम् अनेन पादक्रमेण । न हि कश्चिन्मातरं हिनस्ति पृथिवी च माता च [१-]मा मां[-१] हिंसीत् । नहि कंचिदपि माता हिनस्ति ॥

पशूनामिति ॥ कल्पः—"पशूनां मन्युरसीति वाराही उपानहावुपमुच्य" (आपश्रौ १८·१७·१२) इति ॥ पाठस्तु—'पशूनां मन्युरसि तवेव मे मन्युर्भूयात्' इति ॥ हे वराहचर्मनिर्मित उपानत्, त्वं पशूनां मन्युरूपा असि । अतो यथा तव मन्युरूपत्वं तद्वत् ममापि वैरिषु मन्युः भूयात् ॥ विधत्ते—"पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति वाराही उपानहावुपमुञ्चते । पशूनां वा एष मन्युः । यद्वराहः । तेनैव पशूनां मन्युमात्मन् धत्ते" (तैब्रा १·७·९) इति ॥ वराहस्याभिनिवेशाधिक्यं मन्युरूपत्वम् ॥ वाराहत्वं प्रशस्योपानह उपमोकं प्रशंसति—"अभि वा इयꣳ सुषुवाणं कामयते । तस्येश्वरेन्द्रियं वीर्यमादातोः । वाराही उपानहावुपमुञ्चते । अस्या एवान्तर्धत्ते । इन्द्रियस्य वीर्यस्यानात्यै" (तैब्रा १·७·९) इति । इयं भूमिः सुषुवाणमभिषिक्तमभिलक्ष्य तदीयमिन्द्रियं वीर्यमादातुं कामयते । कामयित्वा च तस्येन्द्रियं वीर्यमादातुमीश्वरा शक्ता भवति । उपानदुपमोकेन भूम्याः सकाशादन्तर्धानं कृतवान् भवति । तस्यान्तर्धानमनात्यै भूम्या वीर्यस्यास्वीकाराय भवति ॥

नम इति ॥ कल्पः—"नमो मात्रे इत्यवरोक्ष्यन् पृथिवीमभिमन्त्र्य" (आपश्रौ १८·१७·१२) इति । पाठस्तु—'नमो मात्रे पृथिव्यै माऽहं मातरं पृथिवीꣳ हिꣳसिषं मा मां माता पृथिवी हिꣳसीत्' इति ॥ अन्योन्यहिंसाऽभावप्रार्थनं विस्पष्टम् ॥ एतदेव दर्शयति—"नमो मात्रे पृथिव्या इत्याहाहिꣳसायै" (तैब्रा १·७·९) इति ॥

२. मै—मा ।

मा (१) मां माता पृथिवी हिꣳसीदियदस्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चोऽसि वर्चो मयि

मा (१) । माम् । माता । पृथिवी । हिꣳसीत् । इयत् । असि । आयुः । असि । आयुः । मे । धेहि । ऊर्क् । असि । ऊर्जम् । मे । धेहि । युङ् । असि । वर्चः । असि । वर्चः । मयि ।

---

सव्येंऽसे राजतं मणिं प्रतिमुञ्चते—‘इयद्’ इति ॥ इदं परिमाणमस्य [v]इयत् । “ किमिदम्भ्यां वो घः ” ( ५·२·४० ) इति मतुप्, “ इदङ्किमोरीश्की[3] ” ( पा ६·३·९० )। “ यस्येति॰ ” ( पा ६·४·१४८ ) लोपः । उदात्तनिवृत्तिस्वरेण इकार उदात्तः । इयत्तया परिच्छिन्नमसि, तस्मादायुरसीति, आयुरिवेयत्तया परिच्छिन्नत्वात्, आयुर्हेतुत्वाद्वा; तस्मात् तादृशस्त्वम् [v]आयुः [v]मे [v]धेहि ॥

दक्षिणेंऽसे औदुम्बरम्—‘ऊर्गसि’ इति ॥ [v]ऊर्ग् अन्नम्, तदेव त्वम् [v]असि तद्धेतुर्वा । [4]तादृशं त्वमूर्जं धेहि[4] ॥

दक्षिण एवांऽसे सौवर्णं—‘युङ्ङसि’ इति ॥ योजयतीति [v]युङ्, युक्तो वा । सर्वत्र ऋत्विगादिना क्विन् ( पा ३·२·५९ ) । “ युजेरसमासे ” ( पा ७·१·७१ ) इति नुम् । “ क्विन्प्रत्ययस्य॰ ” ( पा ८·२·६२ ) इति कुत्वम् । तस्मात् त्वम् [v]वर्चः दीप्तिः [v]असि । दीप्त्या हि योग्यतां भजते तत् त्वं [v]वर्चः मे [v]धेहि स्थापय ॥

---

**इयदिति** ॥ कल्पः—“ अवरुह्य । मणीन् प्रतिमुञ्चते । इयदसीति राजतम् । ऊर्गसीत्यौदुम्बरम् । युङ्ङसीति सौवर्णम् ” ( आपश्रौ १८·१७·१२ ) इति ॥ औदुम्बरं ताम्रमयम्” । पाठस्तु—‘ इयदस्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चोऽसि वर्चो मयि धेहि ’ इति । [2]हे राजतमणे, त्वम् [v]इयत् [v]असि एतावत्परिमाणोऽसि। अत्र तत्परिमाणं हस्तेनाभिनीयते। परिमितत्वादेवायुःस्वरूपः [v]असि । तस्मात् [v]आयुः [v]मे प्रयच्छ । हे ताम्रमणे, [v]ऊर्क् [v]असि बलरूपोऽस्यतो बलं [v]मे प्रयच्छ। हे सौवर्णमणे, [v]युङ् [v]असि धारयितुं योग्योऽसि । धारिते सति च [v]वर्चः [v]असि तेजस्वी भवस्यतो मे कान्तिं प्रयच्छ ॥ मन्त्राणां पाठादेव तदुक्तफलसिद्धिं दर्शयति—“ इयदस्यायुरस्यायुर्मे धेहीत्याह । आयुरेवात्मन् धत्ते । ऊर्गस्यूर्जं मे धेहीत्याह । ऊर्जमेवात्मन् धत्ते । युङ्ङसि वर्चोऽसि वर्चो मयि धेहीत्याह[2] । वर्च एवात्मन् धत्ते ” ( तैब्रा १·७·९ ) इति ॥ विधत्ते—“ एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुरूर्जं वर्चो दधाति ” ( तैब्रा १·७·९ ) इति ॥ तदिदं सूत्रकारेण स्पष्टीकृतम्—“ उपहूतायामिडायामुन्मुच्य मणीन् ब्रह्मणे ददाति ” ( आपश्रौ १८·१९·१७ ) इति ॥

---

३. तं.ति–‘मोरिति ईश् । ४–४. तं–तादृशस्त्वमूर्जं मे देहि; ति.त्रि–तादृश . . . . मे देहि ।

---

२–२. म६.मै३–‘ हे राजतमणे . . . . धेहीत्याह ’ नास्ति ।

धेह्यग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुतामोजसे स्वाहा

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

धेहि । अग्नये । गृहपतय इति गृह–पतये । स्वाहा । सोमाय । वनस्पतये । स्वाहा । इन्द्रस्य । बलाय । स्वाहा । मरुताम् । ओजसे । स्वाहा ।

हꣳसः । शुचिषदिति शुचि–सत् । वसुः । अन्तरिक्षसदित्यन्तरिक्ष–सत् । होता । वेदिषदिति वेदि–सत् । अतिथिः । दुरोणसदिति दुरोण–सत् ।

~~~~~~~~~~

रथविमोचनीयं(याः) जुहोति—‘अग्नये’ इत्याद्याः ॥ Vअग्नये गृहाणां निवासाधाराणां पात्रे । Vसोमाय वनानां वनप्रभवानां दारूणां पात्रे । “इन्द्रस्य वज्रोऽसि” ( तैसं १·८·१५ ) इत्युक्तम् । तदात्मने Vमरुताम् Vओजसे वेगाय ॥

रथवाहने रथमादधाति—‘हंसः’ इत्यतिजगत्या ॥ “अतिच्छन्दसा दधाति” ( तैब्रा १·७·९ ) इत्यादि ब्राह्मणम् । अध्यात्मम् अधिदैवम् अधियज्ञं चाधिकृत्य त्रेधेमं मन्त्रं व्याचक्षते, तत्र प्रकरणानुरूपोऽर्थविशेषो ग्रहीतव्यः । अध्यात्मे तावत्—Vहंसः आत्मा । शुचिषु स्थानेषु सीदतीति Vशुचिषत् । वासयिता Vवसुः वरिष्ठो वा । अन्तरिक्षे हृदयाकाशादिषु सीदतीति Vअन्तरिक्षसत् । Vहोता आह्वाता देवानामादाता वा । वेद्यां यागार्थं सीदति इति Vवेदिषत् । Vअतिथिः सततगतिः, तिथिकृतविशेषरहितो वा । दुःखरक्षणेषु गृहादिषु सीदतीति Vदुरोणसत् । नृषु प्राणिशरीरेषु तद्भावेन सीदतीति Vनृषत् । वरेषु फलेषु भोक्तृत्वेन सीदतीति Vवरसत् । ऋते यज्ञे सत्ये वा सीदतीति Vऋतसत् । विविधे

~~~~~~~~~~

**अग्नय इति** ॥ कल्पः—“अग्नये गृहपतये स्वाहेति रथविमोचनीयान् होमान् हुत्वा” ( आपश्रौ १८·१७·१४ ) इति ॥ पाठस्तु—‘अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुतामोजसे स्वाहा’ इति ॥ स्पष्टोऽर्थः ॥ विधत्ते—“रथविमोचनीया जुहोति प्रतिष्ठित्यै” ( तैब्रा १·७·९ ) इति । पाठप्राप्तामाहुतिसंख्यां प्रशंसति—“त्रयोऽश्वा भवन्ति । रथश्चतुर्थः । तस्माच्चतुर्जुहोति” ( तैब्रा १·७·९ ) इति ।

**हꣳस इति** ॥ कल्पः—“हꣳसः शुचिषदिति सह संग्रहीत्रा रथवाहने रथमत्यादधाति” ( आपश्रौ १८·१७·१४ ) इति ॥ अश्वस्य प्रग्रहं सम्यग्गृह्णातीति संग्रहीता । पाठस्तु—‘हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्’ इति ॥ हन्ति पृथिवीम् इति Vहंसः रथः । शुचौ देवयजने रथवाहने च सीदति इति Vशुचिषत् । स्वस्योपरि

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा(२) अद्रिजा ऋतं बृहत् ॥ १५ ॥

[ हिꣳसिषं मर्तजाश्चीणि च ]

नृषदिति नृ–सत् । वरसदिति वर–सत् । ऋतसदित्यृत–सत् । व्योमसदिति व्योम–सत् । अब्जा इत्यप्–जाः । गोजा इति गो–जाः । ऋतजा इत्यृत–जाः (२) । अद्रिजा इत्यद्रि–जाः । ऋतम् । बृहत् ॥ १५ ॥

[ मैसं २·६·१२; कासं १५·८; वासं १०·१९, २१, २३–२५ ]

रक्षणे तृप्तौ वा सीदतीति vव्योमसत् । अद्भ्यो जातः vअब्जाः शरीराभिप्रायं, शुक्लाज्जातत्वात् । यथा–" पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति " ( छाउ ५·३·३ ) इति । अपां वा यागद्वारेण जनयिता । अन्तर्भावितण्यर्थात् " जनसनखन° " ( पा ६·४·४२ ) इति विट् । " विड्वनो° " ( पा ६·४·४१ ) इत्यात्वम् । गोषु पशुषु अनुग्राहकतया जातः vगोजाः । ऋते यज्ञे ऋतार्थं वा जातः प्रादुर्भूतः vऋतजाः । vअद्रिजाः पर्वतादिष्वपि प्रादुर्भूतः । vऋतं सत्यरूपम् । vबृहत् ब्रह्म ॥ अथाधिदैवे—vहंसः आदित्यः शुचिनि मण्डले सीदतीति vशुचिषत् । vहोता अपामादाता । वेद्यामाराध्यतया सीदतीति vवेदिषत् । vअतिथिः सततगतिः । दुरोणेषु गृहेषु मेषादिषु[5] सीदतीति vदुरोणसत् । वराणां दातृत्वेन तेषु सीदतीति vवरसत् । अपो जनयतीति vअब्जाः । vगोजाः रश्मिसमूहवर्ती । ऋते सत्ये जातः vऋतजाः । vअद्रिजाः उदयाचलात् प्रादुर्भूतः । समानमन्यत् । अथाधियज्ञे—vहंसः रथः, हन्ति पृथिवीमिति । शुचौ देवयजने रथवाहने च सीदतीति vशुचिषत् । शुचिर्यजमानः सीदत्यस्मिन्निति वा vशुचिषत् । होतेव वेद्यां सीदतीति vवेदिषत् । vअतिथिः सर्वत्राप्रतिहतगतिः । vनृषत् मनुष्यार्थं शूरार्थं वा सीदतीति नृषु वा उपकारार्थं सीदतीति नृषत् । ऋतार्थं सत्यार्थं यज्ञार्थं वा सीदतीति vऋतसत् । vअब्जाः उदकाज्जातः । vगोजाः गोविकारचर्मादिग्रथितत्वात् ततो जात इत्युच्यते । अद्रिभिर्दारुभिरुत्पादितत्वात् ततो जात इत्युच्यते vअद्रिजाः । गतमन्यत् ॥

इत्यष्टमे पञ्चदशोनुवाकः ॥

यजमानं वासयतीति vवसुः । तस्रुगुलमाद्यनवस्थेऽन्तरिक्षे सीदतीति vअन्तरिक्षसत् । vहोता होतृसमानः । तदेव कथमित्युच्यते– वेद्यां सीदतीति vवेदिषत् । अतिथिसदृशश्च । तदपि कथमित्युच्यते– दुरोणेषु गृहेषु सीदतीति vदुरोणसत् । यो यस्तमारोढुं नयति तस्य तस्य गृहे सीदति । नृषु मनुष्येषु [3]–उपकारं कर्तुं[3]

५. त्रि–' मेषादिषु ' नास्ति ।

३–३. म४–' उपकारं कर्तुम् ' नास्ति ।

सीदतीति [V]नृषत्। वरे श्रेष्ठे राजादिगृहे[4] सीदनीति [V]वरसत्। ऋते यज्ञे राजसूयादौ[5] सीदतीति [V]ऋतसत्। सूर्यं वोढुं व्योमनि आकाशे सीदतीति [V]व्योमसत्। "अप्सुयोनिर्वा अश्वः" (तैसं ५·३·१२) इति श्रुतेरद्भ्यो जातैरश्वैरुपेतत्वात् [V]अब्जाः। गोशब्दवाच्याद्भूम्याजायत इति [V]गोजाः। एतच्च "स्फ्यस्तृतीयꣳ रथस्तृतीयम्" (तैसं ५·२·६) इत्याम्नातम्। [V]ऋतजाः प्रष्टिवाहिन ऋतार्थं यज्ञार्थं जातत्वात्। अद्रिभ्यः पाषाणसदृशेभ्यो दृढभ्यः काष्ठेभ्यो जातत्वात् [V]अद्रिजाः। ईदृशो रथो बृहत्प्रौढं राजसूयाख्यम् [V]ऋतं यज्ञं संपादयत्विति शेषः॥ "यदुभौ सहावतिष्ठेताम्। समानं लोकमियाताम्। सह संग्रहीत्रा रथवाहने रथमादधाति। सुवर्गादेवैनं लोकादन्तर्दधाति" (तैब्रा १·७·९) इति। अश्वप्रग्रह-धारी यः संग्रहीता यश्च रथादवरूढो यजमानस्तावुभौ सह स्वर्गरूपायां वेद्यां यद्यवतिष्ठेतां तदानीं यज्वा चेतरश्च सदृशं लोकं प्राप्नुयातां, तच्चायुक्तम्, तस्माद्रथ एवावस्थितेन संग्रहीत्रा सह तं रथं रथवाहने काष्ठे स्थापयेत्। तथा सति संग्रहीता वेदिरूपात् स्वर्गादन्तर्हितो भवति॥ मन्त्रं विनियुङ्क्ते— "हꣳसः शुचिषदित्यादधाति। ब्रह्मणैवैनमुपावहरति। ब्रह्मणा दधाति" (तैब्रा १·७·९) इति। पूर्वम् "इन्द्रस्य वज्रोऽसि" (तैसं १·७·७) इति मन्त्रेणैवैनं रथमुपावहृतवान्, तस्मादिदानीमपि 'हंसः' इति मन्त्रेण रथमाधातुं युक्तम्॥ मन्त्रगतच्छन्दोविशेषं प्रशंसति— "अतिच्छन्दसा दधाति। अति-च्छन्दा वै सर्वाणि छन्दाꣳसि। सर्वेभिरेवैनं छन्दोभिरादधाति। वर्ष्म वा एषा छन्दसाम्। यदतिच्छन्दाः। यदतिच्छन्दसा दधाति। वर्ष्मैवैनꣳ समानानां करोति" (तैब्रा १·७·९) इति। हंसमन्त्रस्य छन्दो-ऽतिजगती। सा च गायत्र्यादीनि अल्पच्छन्दांस्यतिक्रम्य वर्तत इति तस्या अतिच्छन्दस्त्वम्। अत एव छन्दसां तत्रान्तर्भावात् सर्वच्छन्दोरूपत्वम्। तथा सत्यनया रथ आहिते सति सर्वैश्छन्दोभिराहितो भवति। किं च, एषाऽतिजगती सर्वेषां छन्दसां शरीरम्। अत्रत्यैरक्षरैः कैश्चित् क्वचित् कस्यचिच्छन्दसः संपादयितुं शक्यत्वात्। तथा सत्यनया रथाधाने यजमानः सर्वेषां समानानां शरीरस्थानीयो भवति॥

अत्र विनियोगसंग्रहः—

"इन्द्रेति रथमाहृत्य मित्रेत्येतं युनक्ति हि।
विष्णोस्त्रिभी रथं गत्वा मर्वारुह्य प्रयाति सः॥ १॥
आसं क्षत्र इषुं मुक्त्वा संप्रदक्षिणमाव्रजेत्।
पश्चित्युपानहौ धृत्वा नमो भूम्यभिमन्त्रणम्॥ २॥
ईयन्मणिं राजतं चोर्ग्बध्नात्यौदुम्बरं मणिम्।
युङ्क्सावर्णं चाग्न हुत्वा चतस्रो रथमोचनीः॥ ३॥
हंसो रथं स्थापयीत मन्त्रा अष्टादशेरिताः॥ ४॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः॥ १५॥

४. म४.मै३–राजगृहे। ५. आ.क–वाजपेयादौ।

[ जितवतो राज्ञः सेवोपचारः

मित्रोऽसि वरुणोऽसि समहं विश्वैर्देवैः क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि

मित्रः । असि । वरुणः । असि । समिति । अहम् । विश्वैः । देवैः ।

क्षत्रस्य । नाभिः । असि । क्षत्रस्य । योनिः । असि ।

---

वैश्वदेव्यामिक्षायां यजमानो दक्षिणं बाहुमुपावहरते—‘ मित्रोऽसि ’ इति ॥ मित्रः देवस्त्वम् असि वैश्वदेवत्वादन्यतररूपत्वेन भेदेन स्तुतिः। यद्वा—[1]हिंसायास्त्रायकस्तुतिस्त्वमसि ॥

सव्यमुपावहरति—‘ वरुणोऽसि ’ इति ॥ वरुणः देवः त्वम् असि। पूर्ववत् स्तुतिः। वारको वा शत्रूणामसि ॥

तामभिमृशति—‘ समहम् ’ इति ॥ समित्युपसर्गः ससाधनां क्रियामाह (द्र.पाभा ५·२·२८)। संहतः अहम् विश्वैः देवैः। यद्वा—विश्वैर्देवैः युक्तां त्वामहं संस्पृशामि ॥

आसन्दीं मिनोति—‘ क्षत्रस्य ’ इति ॥ क्षत्रस्य बलस्य नाभिः संनहनं त्वमसि। “ नहो भश्च ” ( उ ५७५ ) इति इञ्प्रत्ययः ॥

तस्यामधिवासं स्तृणाति—‘ क्षत्रस्य योनिरसि ’ इति ॥ योनिः कारणं क्षत्रस्य असि, अतो ह्ययं जायते। “ अधीवासमास्तृणाति सयोनित्वाय ” ( तैब्रा १·७·१० ) ॥

---

पञ्चदशे दिग्विजयोऽभिहितः। षोडशे विजयादूर्ध्वमासन उपविश्य सर्वैः सेव्यत्वं वर्ण्यते।

**मित्रोऽसीति** ॥ कल्पः—“ मित्रोऽसीति दक्षिणं बाहुं यजमान उपावहरते। वरुणोऽसीति सव्यम् ” ( आपश्रौ १८·१८·१ ) इति ॥ पूर्वं “ हिरण्यवर्णावुषसाम् ” ( तैसं १·८·१२ ) इति मन्त्रेण यजमानस्य बाहू उद्गृहीतौ तयोरिदानीमधस्तादुपावहरणमुच्यते। हे दक्षिणबाहो, त्वं मित्रः असि मित्रवद्भोजनादाविष्टार्थप्रापकत्वात्। हे वामबाहो, त्वं वरुणः असि। शौचादावनिष्टनिवारकत्वात् ॥

**समिति** ॥ कल्पः—“ समहं विश्वैर्देवैरिति वैश्वदेव्यामामिक्षायां हस्तावुपावहरते ” ( आपश्रौ १८·१८·३ ) इति ॥ अहं सर्वैर्देवैः संगच्छेय ॥ मित्रशब्दस्य सूर्यवाचित्वात् तन्नाम्ना व्यवहृतस्य दक्षिणबाहोरहोरूपत्वं वरुणशब्दस्यान्धकारवदावरकवाचित्वात् तन्नाम्ना व्यवहृतस्य रात्रिरूपत्वमिति व्याचष्टे—“ मित्रोऽसि वरुणोऽसीत्याह। मैत्रं वा अहः। वारुणी रात्रिः। अहोरात्राभ्यामेवैनमुपावहरति ” ( तैब्रा १·७·१० ) इति ॥ मित्रावरुणयोरनेकदेवरूपत्वात् सर्वदेवसंबन्धिन्यामामिक्षायां मित्रावरुणात्मकत्वेन निरूपितयोर्हस्तयोरुपावहरणं युक्तमित्येतद्दर्शयति—“ मित्रोऽसि वरुणोऽसीत्याह। मैत्रो वै दक्षिणः। वारुणः सव्यः। वैश्वदेव्यामिक्षा। स्वमेवैनौ भागधेयमुपावहरति ” ( तैब्रा १·७·१० ) इति ॥ विश्वैर्देवैरिति पदोच्चारणेन तत्संबन्धिनीनां प्रजानां यजमानभोग्यत्वं संपद्यत इत्यभिप्रेत्य व्याचष्टे—“ समहं विश्वैर्देवैरित्याह। वैश्वदेव्यो वै प्रजाः। ता एवाऽऽद्याः कुरुते ” ( तैब्रा १·७·१० ) इति ॥

**क्षत्रस्येति** ॥ कल्पः—“ खादिरीमासन्दीं प्रतिष्ठाप्य क्षत्रस्य नाभिरसीति तस्यां कृत्यधीवासमास्तीर्य ” ( आपश्रौ १८·१८·६ ) इति ॥ कृत्यधीवासं चर्मपटः। पाठस्तु—‘ क्षत्रस्य नाभिरसि

---

[1]. त्रि.मै–हिंसायास्त्रासक°।

स्योनामा सीद सुषदामा सीद मा त्वा हिꣳसीन्मा मा हिꣳसीन्-
नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः

स्योनाम् । एति । सीद । सुषदामिति सु-सदाम् । एति । सीद ।
मा । त्वा । हिꣳसीत् । मा । मा । हिꣳसीत् ।
नीति । ससाद । धृतव्रत इति धृत-व्रतः । वरुणः । पस्त्यासु । एति ।
साम्राज्यायेति सम्-राज्याय । सुक्रतुरिति सु-क्रतुः ।

---

तत्रासीनं तमभिमन्त्रयते—'स्योनामासीद' इति ॥ स्योनां सुखाम् आ सीद आस्थायाऽऽस्व । सुषदां सुखेन आसादनीयाम् आ सीद । खलि कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। सिवेरौणादिके नप्रत्यये (उ २९६) ऊठि गुणे च स्योनेति भवति । मा त्वा हिंसीत् इयमासन्दी । तां च त्वं मा हिंसीः ॥

अनुमन्त्रयमाणमासन्नमभिमन्त्रयते—'नि षसाद' इति गायत्र्या त्रिपदया ॥ 'वरुणः पस्त्यास्वा' इति द्वितीयः पादः । इयादिपूरणेनाक्षरसंख्या संपद्यते । नि षसाद निषण्णवान् । धृतव्रतः धृतकर्मा वरुणः एव स्वयमिहास्ति । यद्वा—वरुणो वारयिता अरीणां यजमानोऽयं

---

क्षत्रस्य योनिरसि' इति ॥ हे कृत्त्यधीवास, क्षत्रस्य उपवेशनाय त्वं नाभिवत् मध्यस्थानम् असि । मातृवद्धारकत्वेन क्षत्रस्य योनिः कारणम् असि ॥ विधत्ते—"क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीत्यधीवासमास्तृणाति सयोनित्वाय" (तैब्रा १·७·१०) इति । 'योनिरसि' इति चर्मपटस्य कारणत्वेन भावनया सकारणत्वं क्षत्रस्य संपद्यते ॥

स्योनामिति ॥ कल्पः—"स्योनामा सीद सुषदामा सीदेति तामासाद्य यजमानो मा त्वा हिꣳसीन्मा मा हिꣳसीदित्युपविशति" (आपश्रौ १८·१८·७) इति ॥ हे मदीयशरीर, स्योनां सुखकरीमेनामासन्दीं प्रति आ सीद समीपस्थं भव । सुषदां सुखेनोपवेष्टुं योग्याम् आ सीद । इयमासन्दी त्वां शरीरं मा हिꣳसीत् । मामपि शरीरस्वामिनं मा हिꣳसीत् ॥ मन्त्रद्वयार्थस्य विस्पष्टतां दर्शयति—"स्योनामा सीद सुषदामा सीदेत्याह । यथायजुरेवैतत् । मा त्वा हिꣳसीन्मा मा हिꣳसीदित्याहाहिꣳसायै" (तैब्रा १·७·१०) इति ॥

नीति ॥ कल्पः—"नि षसाद धृतव्रत इत्यासीनमनुमन्त्रयते" (आपश्रौ १८.१८·८) इति ॥ पाठस्तु—'नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः' इति ॥ अयं यजमानः धृतव्रतः स्वीकृतयज्ञः वरुणः अनिष्टनिवारकः भूत्वा नि षसाद अस्यामासन्द्यामुपविवेश । पस्त्यासु बहुषु वैरिगृहेष्वागत्य साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पो भवतु ॥ साम्राज्यमुद्दिश्य सम्यक्संकल्पसिद्धिमेव दर्शयति—"नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुरित्याह । साम्राज्यमेवैनꣳ सुक्रतुं करोति" (तैब्रा १·७·१०) इति ॥

---

२. तं-ओः; ति-ऊ ।

**ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि सविताऽसि सत्यसवो ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसीन्द्रोऽसि सत्यौजा (१) ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि मित्रोऽसि सुशेवो**

ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । सविता । असि । सत्यसव इति सत्य–सवः । ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । इन्द्रः । असि । सत्यौजा इति सत्य–ओजाः (१) । ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । मित्रः । असि । सुशेव इति सु–शेवः ।

सिंहासन इवात्र निषसाद धृतव्रतः स्थितव्रतः । पस्त्यासु गृहेषु । आकारः समुच्चये । गृहेषु च निषसाद शत्रूणां सर्वमनेन जितमिदानीम् । यदा साम्राज्याय शोभनराज्याय सुक्रतुः शोभन कर्मा शोभनसंकल्पो वाऽयमत्र नि षसाद पस्त्यासु च तदैव[3] नि षसादेति । यद्वा—आकार उपर्यर्थे । पस्त्याग्रहणं चोपलक्षणम् । गृहनगरजनपदादिषु यत्तद्विषयसाम्राज्यं तदर्थं निषसाद शोभनकर्माऽयमिति । “ क्त्वादयश्च ” ( पा ६.२.११८ ) इत्युत्तरपदाद्युदात्तत्वम् ॥

अथ ऋत्विक्षु[4] सर्वतः पर्युपविष्टेषु अध्वर्युं राजाभिमन्त्रयते—‘ ब्रह्मा३न् ’ इति ॥ हे ब्रह्मन् इति । “ दूराद्धूते च ” ( पा ८.२.८४ ) इति वाक्यस्य टेरुदात्तः प्लुतश्च । “ पूर्वत्रासिद्धम् ” ( पा ८.२.१ ) इति तस्यासिद्धत्वात् “ आमन्त्रितस्य[5] ” ( पा ६.१.१९८ ) इति षाष्ठिकम् आद्युदात्तत्व[5] प्रवर्तते, “ अनुदात्तं पदमेकवर्जम् ” ( पा ६.१.१५८ ) इति च न प्रवर्तते ॥

अध्वर्युः प्रत्याह—‘ त्वम् ’ इति ॥ हे राजन्, त्वम् एव ब्रह्मा असि नाहम् । हेतुमाह—यतः सविता सर्वस्य प्रेरकः अनुज्ञाता वा त्वमसि त्वदाज्ञया हि सर्वं प्रवर्तते । सत्यसवः सत्यानुज्ञः अमोघशासनः, अतस्त्वमेव ब्रह्मासि ॥

ब्रह्मन्निति ॥ कल्पः—“ तमृत्विजो रत्निनश्च सर्वतः पर्युपविशन्ति । पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा । पश्चाद्धोता । उत्तरत उद्गाता । उपविष्टेषु ब्रह्मा३न् ओमित्यध्वर्युं राजा मन्त्रयते । त्वꣳ राजन् ब्रह्माऽसीतीतरः प्रत्याह । एवं ब्रह्माणं होतारमुद्गातारं चोत्तरोत्तरेणेतरे प्रत्याहुः ” ( आपश्रौ १८.१८.९–१३ ) इति । एतेषामष्टानां मन्त्राणां पाठस्तु—‘ ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि सविताऽसि सत्यसवो ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसीन्द्रोऽसि सत्यौजा ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि मित्रोऽसि सुशेवो ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि वरुणोऽसि सत्यधर्मा ’ इति ॥ दूरादाह्वातुं[1] प्लुतिः । हे राजन्, त्वम् एव ब्रह्मा असि ब्राह्मणोऽसि न त्वहम् । कुतः ? यतस्त्वमेव सविता असि ब्राह्मणधर्मान् पालयन् अस्माकमनुष्ठानायानुज्ञाताऽसि । सत्यसवः त्वममोघानुज्ञः । अतो ब्राह्मणवर्णाश्रमधर्माणां त्वदधीनत्वात्

३. मै-तथैव; ति.त्रि–तदेव । ४. मै–ऋत्विक्षु च । ५. मै–आमन्त्रिताद्युदात्तत्वम् ।

१. इ.मै१–°दाह्वानम् ।

राज्ञः सेवोपचारः ]

ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि वरुणोऽसि सत्यधर्मे-

ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । वरुणः । असि । सत्यधर्मेति सत्य-धर्मा ।

अथ ब्रह्माणमामन्त्रयते—'ब्रह्मा३न्' इति ॥ व्याख्यातम् ॥

ब्रह्मा प्रत्याह—'त्वम्' इति । हे राजन्, त्वम् एव ब्रह्मा असि, यतस्त्वम् इन्द्रः असि सर्वस्येश्वरोऽसि । सत्यौजाः अवितथबलः ॥

होतारमामन्त्रयते—'ब्रह्मा३न्' इति । ।

स प्रत्याह—'त्वम्' इति ॥ हे राजन्, त्वम् एव ब्रह्मा असि, यतः मित्रः असि सर्वस्य हिंसाभ्यस्त्राताऽसि । सुशेवः सुसुखः । "आद्युदात्तं द्व्यच् छन्दसि" (पा ६·२·११९) इत्युत्तरपदाद्युदात्तत्वम्[६] ॥

उद्गातारमामन्त्रयते—'ब्रह्मा३न्' इति ॥

स प्रत्याह—'त्वम्' इति ॥ हे राजन्, त्वम् एव ब्रह्मा असि, यतः त्वं वरुणः असि वारयिता शत्रूणां पापचोरव्याघ्रादीनां वारयितासि । सत्यधर्मा सत्यस्वभावः । "धर्मादनिच् केवलात्" (पा ५·४·१२४) ॥

त्वमेव ब्रह्मा । तथा इन्द्रः असि परमैश्वर्यवानसि । सत्यौजाः अमोघवीर्योऽसि । तथा मित्रः असि शिष्टपरिपालनाय देवनामासि[२] । सुशेवः सुष्ठु सेवितुं योग्योऽसि । तथा वरुणः असि अनिष्टनिवारकोऽसि । सत्यधर्मा शास्त्रीयधर्मयुक्तोऽसि । यथा लोके परराष्ट्रं जित्वा समागत्य सिंहासने समासीनं राजानमध उपविष्टाः पुरोहितादयो बहुभिराशीर्भिः स्तुतिभिश्च स्तुवन्ति तद्वदत्रापि सेवोपचारः क्रियते । एतयाऽऽशीर्वादरूपया सेवया ब्राह्मणेषु यत् सामर्थ्यं शापानुग्रहरूपं तद्राजनि प्रतिष्ठापितं भवति । तदेतदभिप्रेत्य वाजसनेयिनो बृहदारण्यके क्षत्रियसृष्टिप्रस्तावे समामनन्ति— "क्षत्रात्परं नास्ति तस्माद्-ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति" (बृउ १·४·११) इति । यथोक्तार्थपरत्वेन मन्त्रान् व्याचष्टे— "ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि सवितासि सत्यसव इत्याह । सवितारमेवैनꣳ सत्यसवं करोति । ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसीन्द्रोऽसि सत्यौजा इत्याह । इन्द्रमेवैनꣳ सत्यौजसं करोति । ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि मित्रोऽसि सुशेव इत्याह । मित्रमेवैनꣳ सुशेवं करोति । ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि वरुणोऽसि सत्यधर्मेत्याह । वरुणमेवैनꣳ सत्यधर्माणं करोति" (तैब्रा १·७·१०) इति ॥ सविता इन्द्रो मित्र इति देवतापदानामुच्चारणेन तद्देवताप्रियाणां छन्दसामुच्चारणं सपद्यत इति दर्शयति— "सविताऽसि सत्यसव इत्याह । गायत्रीमेवैतेनाभिव्याहरति । इन्द्रोऽसि सत्यौजा इत्याह । त्रिष्टुभमेवैतेनाभिव्याहरति । मित्रोऽसि सुशेव इत्याह । जगतीमेवैतेनाभिव्याहरति । सत्यमेता देवताः । सत्यमेतानि छन्दाꣳसि । सत्यमेवावरुन्द्धे" (तैब्रा १·७·१०) इति । एता इन्द्रादयो देवताः सत्यं पालयन्त्येतानि गायत्र्यादिच्छन्दांसि च सत्यममोघं फलं प्रयच्छन्ति । अत उभयोः सत्यरूपत्वादिन्द्रादिपदोच्चारणेन गायत्र्याद्युच्चारणसिद्धिः । तेन यजमानः सत्यवादित्वमेव सर्वतः

६. तं.ति—इत्याद्युदात्तत्वम् ।

२. आ.क-देवनामाऽसि ('मित्रनामासि' इति आ-संभावितः पाठः) ।

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य दिशोऽभ्ययꣳ राजाऽभूत्

इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र-घ्नः । तेन । मे । रध्य । दिशः । अभीति । अयम् । राजा । अभूत् ।

ब्रह्मा स्फ्यं राज्ञे प्रयच्छति—'इन्द्रस्य' इति ॥ व्याख्यातम् ( तैसं १·७·७ ) । तस्मात् तेन वज्रेण हेतुना मम दस्यून् रध्य नाशय । यद्वा—साधयाभिमतानीति । रध हिंसासिद्ध्योः दैवादिकः ॥

पञ्चाक्षान् राज्ञे प्रयच्छति—'दिशः' इति ॥ अयं राजा सर्वाः दिशः अभि अभूत् अभिभवतु सर्वा दिशोऽधिष्ठाय स्वयमेव राजा भवत्वित्यर्थः । यद्वा—"अभिरभागे" ( पा १·४·९१ ) इति लक्षणे अभेः कर्मप्रवचनीयत्वम् । दिशोऽभि सर्वासु दिक्षु अयं राजा भवति सर्वदा ॥

संपादयति ॥ वरुणपदोच्चारणेनानुष्टुबुच्चारणसिद्धिं दर्शयति—"वरुणोऽसि सत्यधर्मेत्याह । अनुष्टुभमेवैतेनाभिव्याहरति । सत्यानृते वा अनुष्टुप् । सत्यानृते वरुणः । सत्यानृते एवावरुन्द्धे" ( तैब्रा १·७·१० ) इति । "विश्वे देवस्य नेतुः" ( तैसं १·२·२ ) इत्यस्यामनुष्टुभि प्रथमपादः सप्ताक्षर इत्यनृतत्वम्, उत्तरे त्रयः पादा अष्टाक्षरा इति सत्यत्वम् । एतच्च "एकस्मादक्षरादनाप्तं प्रथमं पदम्" ( तैसं ६·१·२ ) इत्यादिब्राह्मणेनैव दर्शितम् । वरुणोऽपि क्वचिदनिष्टकारित्वादनृतरूपः । क्वचित्तन्निवर्तकत्वात् सत्यरूपः । एतच्च "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति" ( तैसं २·३·१२ ) इत्यादिषु ब्राह्मणेषु द्रष्टव्यम्[3] । अत उभयरूपत्वसाम्याद्वरुणपदोच्चारणेनानुष्टुबुच्चारिता भवति । तेन च यजमानोऽनृतं त्यक्तुं सत्यं वक्तुं च समर्थत्वात् सत्यानृते स्वाधीने करोति ॥ वेदनं प्रशंसति—"नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद" ( तैब्रा १·७·१० ) इति ॥

इन्द्रस्येति ॥ कल्पः—"इन्द्रस्य वज्रोऽसीति स्फ्यं ब्रह्मा राज्ञे प्रयच्छति" ( आपश्रौ १८·१८·१४ ) इति ॥ पाठस्तु—'इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य' इति ॥ हे स्फ्य, वज्रतृतीयांशत्वात् त्वं वज्रः असि । "स्फ्यस्तृतीयम्" ( तैसं ५·२·६ ) इति श्रुतेः । यतो विरोधिघाती त्वं, तेन कारणेन मे मदर्थं रध्य द्यूतस्थानपरिलेखनरूपं कार्यं साधय ॥ विधत्ते—"इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति स्फ्यं प्रयच्छति । वज्रो वै स्फ्यः । वज्रेणैवास्मा अवरपरꣳ रन्धयति । एवꣳ हि तच्छ्रेयः । यदस्मा एते रध्येयुः" ( तैब्रा १·७·१० ) इति । रध्येत्युच्चारणेनास्मै यजमानायावरं परं चापेक्षितं सर्वकार्यं रन्धयति साधयति । यद्यदि यजमानायैते कार्यविशेषा रध्येयुः सिध्येयुः, एवं सति श्रेयो हि तत् प्रशस्ततरं खलु ॥

दिश इति ॥ कल्पः—"दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षान् राज्ञे प्रयच्छति" ( आपश्रौ १८·१९·५ ) इति ॥ अयं यजमान ऊर्ध्वदिक्सहिताः पञ्च दिशोऽभिलक्ष्य राजा अभूत् ॥ विधत्ते—"दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षान् प्रयच्छति । एते वै सर्वेऽयाः । अपराजायिनमेवैनं करोति" ( तैब्रा १·७·१० ) इति । अक्षाः कपर्दकाः सुवर्णनिर्मिताः । विभीतकफलानि सौवर्णानि इत्येके । ते चाक्षा द्यूतस्थाने निवपनीयाः । तथा चाऽऽपस्तम्बेन दर्शितम्—"अक्षावापोऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेत्

३. आ.क–स्पष्टं द्रष्टव्यम् ।

सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न् । अपां नप्त्रे स्वाहोर्जो

सुश्लोकाँ३ इति सु-श्लोकाँ३ । सुमङ्गलाँ३ इति सु-मङ्गलाँ३ । सत्यराजा३निति सत्य-राजा३न् । अपाम् । नप्त्रे । स्वाहा । ऊर्जः ।

मङ्गलयनाम्नो राजाऽऽह्वयति—'सुश्लोकाँ३' इति ॥ संग्रहीता भागदुघः क्षत्ता चेत्येते मङ्गलयनामानः, एषामेतानि सुश्लोकादीनि नामानि, एतैरेत आमन्त्रयन्ते । सुश्लोकः शोभनकीर्तिः, धनेन राज्ञः शोभनकीर्तिहेतुत्वात् । [7]यद्वा– अहं सदा सुश्लोकः स्यामित्याह्वातुरभिप्रायः । सुमङ्गलः शोभनमङ्गलहेतुः । निरुपसृष्टाभिप्रेतार्थसिद्धिहेतुर्मङ्गलम् । सत्यराज्ञः सत्यो राजा येन । राज्ञः सत्यत्वहेतुः । "आशिषमेवैतामाशास्ते" (तैब्रा १·७·१०) इत्यादि ब्राह्मणम् । पूर्ववत् द्वौ उदात्तौ । "अणोऽप्रगृह्यस्यानुनासिकः" (पा ८·४·५७) इति प्रथमद्वितीययोः [8]अन्त्यरूपस्यानुनासिकः ॥

अथावभृथेन प्रचर्यापामन्ते जुहोति—'अपां नप्त्रे' इति ॥ अपां चतुर्थ्याग्नये स्वाहा । अद्भ्य ओषधयः ओषधीभ्योऽन्नम् अन्नादग्निरिति । "ऊडिदम्" (पा ६·१·१७१) इति षष्ठ्युदात्ता ॥

सौवर्णान् परःशतान् परःसहस्रान् वा" (आपश्रौ १८·१८·१६–१८·१९·१) इति । तेभ्यः पञ्चाक्षानुद्गृह्य जितवानयं राजेत्यभिप्रायेण तस्मै राज्ञे दद्यात् । एत एव पञ्चाक्षा अयाः सर्वे संपद्यन्ते । अयशब्दोऽक्षवाची । पञ्चदिग्वर्त्यक्षाभिप्रायेण पञ्चाक्षाणां दत्तत्वात् राशिस्थाः सर्वेऽप्यक्षा दत्ता भवन्ति । तथा सत्येनं यजमानमपराजायिनं कदाचिदपि पराजयरहितमेव करोति ॥ विधत्ते—"ओदनमुद्ब्रुवते । परमेष्ठी वा एषः । यदोदनः । परमामेवैनं[4] श्रियं गमयति" (तैब्रा १·७·१०) इति । अधिदेवनकाल ओदनं पणत्वेन सर्वे परस्परं ब्रूयुः । "अन्नाद्वै प्रजाः प्रजायन्ते" (तैआ ८·२·१) इति श्रुतेरोदनः परमेष्ठिरूपः । तथा सत्योदनपणप्रतिज्ञया परमां श्रियं यजमानः प्राप्नोति ॥

सुश्लोकाँ३ इति ॥ कल्पः—"मङ्गल्यनाम्नो[5] राजाऽऽह्वयति सुश्लोकाँ३ इति संग्रहीतारम् । सुमङ्गलाँ३ इति भागदुघम् । सत्यराजा३निति क्षत्तारम्" (आपश्रौ १८·१९·६) इति ॥ शोभनः श्लोकः स्तुतिर्यस्यासौ सुश्लोकः[6] कोशाध्यक्षोऽश्वप्रग्रहधारी वा । तावुभावपि स्वस्वकार्यं सम्यगनुतिष्ठन्तौ शोभनस्तुतियुक्तौ भवतः । शोभनं मङ्गलं मर्यादानुल्लङ्घनेन प्रजाभ्यः करादानरूपं यस्य भागदुघस्य सोऽयं सुमङ्गलः । सत्यस्यावश्यंभाविनोऽन्तःपुररक्षणस्य स्वामी क्षत्ता सत्यराजा । एतेषां संबोधनानि प्लुतयश्च दूरादाह्वानार्थाः । द्वयोः सानुनासिकत्वं सांप्रदायिकम् ॥ स्वकीयाः संग्रहीत्रादयः सुश्लोकादयो भूयासुरित्येवमाशीःपरतया व्याचष्टे— "सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३नित्याह । आशिषमेवैतामाशास्ते" (तैब्रा १·७·१०) इति ॥ विधत्ते—"शौनःशेपमाख्यापयते । वरुणपाशादेवैनं मुञ्चति" (तैब्रा १·७·१०) इति । शुनःशेपेन दृष्टं शस्त्रं शौनःशेपं तदध्वर्युर्होतारं वाचयेत् । तेन यजमानं वरुणपाशान् मोचयतीति ॥ तत्र ऋक्संख्यां विधत्ते—"परःशतं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति" (तैब्रा १·७·१०) इति । परःशतं शतादधिकम् । ऋक्संख्या चाऽऽपस्तम्बेन स्पष्टीकृता—

७. मै-'यद्वा' नास्ति । ८. ति.मै–अन्त्यस्य; त्रि–अन्यस्य ।

४. म४–°प्रतीक्षया । ५. आ.क.म६.मै३.पा–मङ्गल्य° । ६. म४.मै३–सुश्लोकः संग्रहीता ।

नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहा ॥ १६ ॥

[ सत्यौजाश्चत्वारिंशच्च ]

नप्त्रे । स्वाहा । अग्नये । गृहपतय इति गृह-पतये ।स्वाहा ॥ १६ ॥

[ मैसं २·६१२; कासं १५·८; वासं १०·२६–२८ ]

विषुवति दर्भस्तम्बे जुहोति—‘ ऊर्जो नप्त्रे ’ इति ॥ ऊर्गन्नं, तस्य नप्त्रे चतुर्थाय स्वाहा । अन्नाद्बलं बलान्मथनवेगः ततोऽग्निरिति । “ सावेकाचः° ” ( पा ६·१·१६८ ) इत्यूर्जः षष्ठ्युदात्ता ॥

पुनरेत्य गार्हपत्ये जुहोति—‘ अग्नये गृहपतये स्वाहा ’ इति । गतम् ( तैसं १·८·१५ )॥

इत्यष्टमे षोडशोऽनुवाकः ॥

“ शौनःशेपमाख्यापयत ऋचो गाथामिश्राः परःशताः परःसहस्रा वा ” ( आपश्रौ १८·१९·१० ) इति ॥ विधत्ते— “ मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यै चाऽऽमिक्षाया अग्नये स्विष्टकृते समवद्यति । देवताभिरेवैनमुभयतः परिगृह्णाति ” ( तैब्रा १·७·१० ) इति । समवद्यति समस्यैकीकृत्यावद्येत् । तेनोभयतः कर्मद्वयेऽवस्थिताभिर्देवताभिरेवैनं यजमानमुभयोः पार्श्वयोः पालितवान् भवति ॥

अपामिति ॥ कल्पः—“ अवभृथेन प्रचर्यापां नप्त्रे स्वाहेत्यप्सु जुहोति । ऊर्जो नप्त्रे स्वाहेत्यन्तरा दर्भस्तम्बे स्थाणौ वल्मीकवपायां वा हुत्वाऽग्नये गृहपतये स्वाहेति प्रत्येत्य गार्हपत्ये हुत्वा ” ( आपश्रौ १८·२०·३–४ ) इति ॥ अपां नप्त्रे नपातयित्रे विनाशमकुर्वते वह्नये । न खल्वग्निरपो नाशयति किं तूत्पादयति । “ अग्नेरापः ” ( तैऊ २·१ ) इति सृष्टिप्रकरणे श्रवणात् । ऊर्जो बलस्य नपातयित्रे वह्नय ऊर्जो नप्त्रे । उदराग्निना भुक्तेऽन्ने जीर्णे सति बलं वर्धते न तद्विनाश्यते ॥ विधत्ते— “ अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति ” ( तैब्रा १·७·१० ) इति ॥

**अत्र विनियोगसंग्रहः—**

“ बाहू अधो हरेद्द्वाभ्यां मित्रेति वरुणेति च ।
स्वाम्युपाहृत्य बाहू सं वैश्वदेव्यां प्रसादयेत्[7] ॥ १ ॥
क्षत्रासन्द्यां तु खादिर्यां कृत्यधीवाससंस्तृतिः ।
स्योना स्वामी समागत्य मा त्वा तत्रोपसीदति ॥ २ ॥
नि षोपविष्टं संमन्त्र्य ब्रह्मा३नध्वर्युमीरयेत् ।
प्रत्याह सोऽपि त्वमिति ब्रह्मा होता च सामगः ॥ ३ ॥
राज्ञोक्ता उत्तरं प्राहुरिन्द्र स्फ्यं स्वामिनेऽर्पयेत् ।
“[8]दिशोऽक्षान् दापयेत् पञ्च सुश्लोक इति च क्रमात्[8] ॥ ४ ॥
संग्रहीता भागदुघ क्षत्ता चाऽऽहूयते त्रिभिः ।
अपां जुहोत्यप्सु दर्भे गार्हपत्ये त्रिभिः क्रमात् ॥
अनुवाके षोडशेऽस्मिंस्त्रयोविंशतिरीरिताः ॥ ५ ॥ ” इति ॥

७. म.४. मै३–प्रसारयेत् । ८–८. इ.उ.पा.म६–दिशोऽक्षान् पञ्च राजैभ्यो दद्यात् सुश्लोक इरितः ।

अथ मीमांसा ॥ तृतीयाध्यायस्य तृतीयपादे चिन्तितम्--

" राजसूयेऽभिषेच्याख्ये यागे ये देवनादयः ।
तच्छेषास्तेऽखिलार्था वा तच्छेषास्तस्य संनिधेः ॥
राजसूयकथंभावानुवृत्तेः सर्वशेषता ।
कल्प्याऽऽकाङ्क्षाऽभिषेच्यस्य प्रक्रिया प्रबला ततः ॥" (जैन्या ३·३·२५-२६)॥

राजसूये पश्विष्टिसोमयागा बहवः प्रधानभूताः । तत्राभिषेचनीयाख्यः कश्चित् सोमयागः । तत्संनिधौ देवनादयः श्रूयन्ते । " अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेपमाख्यापयते " (तैब्रा १·७·१०) इति । जिनाति जयति । बह्वृचब्राह्मणे ( ऐब्रा ७·१८ ) समाम्नातं शुनःशेपविषयमुपाख्यानं शौनःशेपम् । तत्र संनिधिबलात् देवनादयोऽभिषेचनीयाङ्गमिति चेत् । मैवम् । राजसूयस्य कथंभावाकाङ्क्षायामनुवृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः । राजसूयश्च बहुयागात्मक इत्यत्र सर्वशेषत्वम् । न चाभिषेचनीयस्य काचिदाकाङ्क्षा देवनादिष्वस्ति । ज्योतिष्टोमविकृतित्वेनातिदिष्टैः प्राकृताङ्गैरेव तदाकाङ्क्षानिवृत्तेः । संनिहितविधिबलादाकाङ्क्षोत्थाप्यत इति चेत् । अत एवाऽऽकाङ्क्षारूपमवान्तरप्रकरणमादौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया संनिधिर्विप्रकृष्यते । राजसूयाकाङ्क्षारूपं तु महाप्रकरणं क्लृप्तत्वादेकया कक्ष्यया संनिकृष्यते । तस्मात् प्रकरणेन संनिधिबाधात् सर्वशेषा देवनादयः ॥

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्--

" अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादिकम् ।
मध्ये वा पूर्ववत् सर्वसमाप्तौ देवनादयः ॥
अभिषेकोऽपकृष्टोऽस्मात् पूर्वं प्रत्यक्षपाठतः ।
देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रतः पुरा ॥" (जैन्या ५·२·१७–१८) ॥

राजसूये सोमयागस्याभिषेचनीयस्य संनिधौ देवनशौनःशेपोपाख्यानाभिषेकाः क्रमेणाऽऽम्नाताः । तत्राभिषेचनीये चोदकप्राप्तमङ्गजातं नारिष्ठन्यायेन प्रथमं समाप्य[९] पश्चात् देवनादयः कार्या इति प्राप्ते [१०]ब्रूमः--" माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते " (द्र. आपश्रौ १८·१६·१०)। इति वाक्येन तस्य सोमयागस्य मध्येऽभिषेकोऽपकृष्टः । अभिषेकात् पूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठप्राप्तम् । ततो माहेन्द्रस्तोत्रादपि पूर्वस्मिन् काले प्रयाजाद्यारचद्विदेवनादीनामपकर्षः कर्तव्यः ॥

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्--

" एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा ।
राजसूयस्यापकर्षादाद्यः प्रक्रिययोत्तरः ॥ " (जैन्या ४·४·३) ॥

यदेतद्देवनादिकमङ्गमित्युक्तं तदेतदभिषेचनीयस्य सोमयागस्यैकस्यैवाङ्गम् । कुतः ? अपकर्षात् । यद्यप्यभिषेचनीयविधेरूर्ध्वं तत्संनिधौ देवनादय आम्नातास्तथाऽप्यभिषेचनीयमध्ये तेऽपकृष्यन्ते । माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति वाक्येन राज्ञो यजमानस्याभिषेको माध्यंदिनसवने स्तोत्रकालेऽपकृष्यते । तस्मिन्नपकृष्टे सति ततः पूर्वमाम्नातानां विदेवनादीनामर्थसिद्धोऽपकर्षः । ततो माहेन्द्रस्तोत्रादिवदभिषेचनीयप्रयोगान्तःपातित्वात् देवनादिकमभिषेचनीयस्यैवाङ्गमिति प्राप्ते ब्रूमः--किं तदङ्गत्वे संनिधिः प्रमाणम् ? किं वा प्रयोगपरिकल्पितमवान्तरप्रकरणम् ? उभयथाऽपि प्रत्यक्षस्य महाप्रकरणस्य प्रबलत्वात् देवनादिकं राजसूयस्याङ्गम् । राजसूयशब्दश्चानुमत्यादीन् सर्वान् यागानभिधत्ते । तस्मात् सर्वेषामेतदङ्गम् । अनुष्ठानं तु राजसूयमध्ये क्वचिदपेक्षितमिति वचनबलादभिषेचनीयगतमाहेन्द्रस्तोत्रकाले तदनुष्ठीयते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

९. आ.क–संपाद्य । १०. इ.उ.पा–ब्रूमहे ।

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ

आग्नेयम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । सारस्वतम् । चरुम् । वत्सतरी । दक्षिणा । सावित्रम् । द्वादशकपालमिति द्वादश–कपालम् । उपध्वस्त इत्युप–ध्वस्तः । दक्षिणा । पौष्णम् । चरुम् । श्यामः । दक्षिणा । बार्हस्पत्यम् । चरुम् ।

---

एवमभिषेचनार्थे पञ्चम्यां संस्थिते दशपेयस्यागामिनो देवयजनस्य पश्चात् संसृपां हविर्भिर्यजेत, तानि विदधाति—'आग्नेयमष्टाकपालम्' इति ॥ षष्ठ्यामुपक्रमः । तत्र पूर्वंपूर्वं देवयजनमध्यवस्यति । यत्र पूर्वस्या आहवनीयः तत्र उत्तरस्या गार्हपत्यः । [1]दशपेयस्य संकल्पात् प्रागेव अष्टाकपालम् आग्नेयं निर्वपति । हिरण्यं दक्षिणा । "वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्" ( तैब्रा १·८·१ ) इत्यादि ब्राह्मणम् ॥

श्वोभूते सारस्वतं चरुं निर्वपति । आग्नेयस्याहवनीयायतने सारस्वतस्य गार्हपत्यायतनम् । एवमुत्तरत्र द्रष्टव्यम् । अत्र वत्सतरी द्वितीयं वयः प्राप्नुवन्ती गौः दक्षिणा । "वत्सोक्षा°" ( पा ५·३·९१ ) इति ष्टरच् ॥

श्वोभूते सावित्रं द्वादशकपालं निर्वपति । तत्र उपध्वस्तः गौः दक्षिणा अन्येन वर्णेन परिभूतो निजवर्ण इत्यर्थः ॥

श्वोभूते पौष्णं चरुं निर्वपति । तत्र श्यामः गौः दक्षिणा ॥

श्वोभूते बार्हस्पत्यं चरुं निर्वपति । तत्र शितिपृष्ठः शुक्लपृष्ठो गौः दक्षिणा ॥

श्वोभूते ऐन्द्रम् एकादशकपालं निर्वपति । तत्र ऋषभः दक्षिणा ॥

श्वोभूते वारुणं दशकपाल निर्वपति । तत्र महानिरष्टः पीडितवृषणो गौः दक्षिणा ॥

---

आग्नेयमिति ॥ षोडशे जितवतो राज्ञ इतरसैन्यस्वरूप उपचारो वर्णितः । सप्तदशे संसृपां हवींषि दशसंख्याकानि विधीयन्ते—'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वारुणं दशकपालं महानिरष्टो दक्षिणा सौम्यं चरुं बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवं त्रिकपालं वामनो दक्षिणा' इति ॥ उपरतस्तनपाना वत्सतरी । शुष्ककायः शुण्ठः ॥ तान्येतानि हवींषि प्रशंसति—"वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । तत्सꣳसृद्भिरनु समसर्पत् । तत्सꣳसृपाꣳ सꣳसृप्त्वम् । अग्निना देवेन प्रथमेऽहन्नु प्रायुङ्क्त । सरस्वत्या वाचा द्वितीये । सवित्रा प्रसवेन तृतीये । पूष्णा पशुभिश्चतुर्थे । बृहस्पतिना ब्रह्मणा पञ्चमे । इन्द्रेण देवेन षष्ठे । वरुणेन

---

१. तं–तत्र दशपेयस्य; ति–तत्र दशपेय° ।

शि॒ति॒पृ॒ष्ठो दक्षि॑णै॒न्द्रमेका॑दशकपालमृष॒भो दक्षि॑णा वारु॒णं दश॑कपालं म॒हानि॑र॒ष्टो दक्षि॑णा सौ॒म्यं च॒रुं ब॒भ्रुर्दक्षि॑णा त्वा॒ष्ट्रम॒ष्टाक॑पाल॒ꣳ शु॒ण्ठो दक्षि॑णा वैष्ण॒वं त्रिक॒पा॒लं वा॑म॒नो दक्षि॑णा ॥ १७ ॥

[ आ॒ग्ने॒यꣳ हिर॑ण्य॒ꣳ सार॒स्व॒तं द्विच॑त्वारिꣳशत् ]

शि॒ति॒पृ॒ष्ठ इति॑ शि॒ति–पृ॒ष्ठः । दक्षि॑णा । ऐ॒न्द्रम् । एका॑दशकपाल॒मित्येका॑दश–क॒पा॒ल॒म् । ऋ॒ष॒भः । दक्षि॑णा । वा॒रु॒णम् । दश॑कपाल॒मिति॒ दश॑–क॒पा॒ल॒म् । म॒हानि॑र॒ष्ट इति॑ म॒हा–नि॒र॒ष्टः । दक्षि॑णा । सौ॒म्यम् । च॒रुम् । ब॒भ्रुः । दक्षि॑णा । त्वा॒ष्ट्रम् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा–क॒पा॒ल॒म् । शु॒ण्ठः । दक्षि॑णा । वै॒ष्ण॒वम् । त्रि॒क॒पा॒ल॒मिति॑ त्रि–क॒पा॒ल॒म् । वा॒म॒नः । दक्षि॑णा ॥ १७ ॥

[ मैसं २·६·१३,४·४·७; कासं १५·९; शब्रा ५·४·५·६ ]

अथ दशपेये प्रक्रान्ते आतिथ्यया प्रचर्य उपसदां पुरस्तात् [v]सौम्यं [v]चरुं निर्वपति द्वादश्याम् ।। तत्र [v]बभ्रुः श्वेतलोहितो गौः [v]दक्षिणा ।।

श्वोभूते त्रयोदश्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्यान्ते [v]त्वाष्ट्रम् [v]अष्टाकपालं निर्वपति ।। तत्र [v]शुण्ठः अल्पकायो गौः [v]दक्षिणा ।।

श्वोभूते प्रवर्ग्योद्वासनात् प्राक् वैष्णवं [v]त्रिकपालं निर्वपति ।। तत्र [v]वामनः ह्रस्वो गौः [v]दक्षिणा ।।

इत्यष्टमे सप्तदशोऽनुवाकः ।।

स्वया देवतया सप्तमे। सोमेण राज्ञाऽष्टमे । त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाऽऽप्नोत्। यत्संसृपो भवन्ति । इन्द्रियमेव तद्वीर्यं यजमान आप्नोति " (तैब्रा १·८·१) इति। सुषुवाणस्य सुष्ठु सोममभिषेचनीयकर्मण्यभिषुतवतो वरुणस्येन्द्रियं [1]वीर्यं सामर्थ्यं दशधा भूत्वा परापतद्विनष्टम् । स च वरुणस्तदिन्द्रियं संसृप्शब्दाभिहितैर्यथोक्तहविर्भिरनुक्रमेण सम्यक् प्राप्तवान् । सम्यक् सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपो देवतास्तासां हवींष्यपि तन्नामकानि । स वरुणः प्रथमेऽहनि देवेन द्योतनात्मकेनाग्निना सहाष्टाकपालं प्रायुङ्क्ताऽऽग्नेयमष्टाकपालं निरवपदित्यर्थः । द्वितीयेऽहनि वाग्रूपया सरस्वत्या चरुं निरवपत् । तृतीये प्रसवकारणेन सवित्रा सह द्वादशकपालं निरवपत् । चतुर्थे पशुभिरुपलक्षितेन पूष्णा सह चरुं निरवपत् । पञ्चमे ब्राह्मणाभिमानिना बृहस्पतिना सह चरुं निरवपत् । षष्ठे द्योतमानात्मकेनेन्द्रेण सहैकादशकपालं निरवपत् । सप्तमे स्वकीयदेवतारूपेणातीतकल्पगतवरुणेन सह दशकपालं निरवपत् । अष्टमे राज्ञा

१. आ.इ.उ.क.पा.म४–'वीर्यम्' नास्ति ।

यजमानेन सोमेन सह चरुं निरवपत्। नवमे रूपवता त्वष्ट्रा सहाष्टाकपालं निरवपत्। दशमे यज्ञरूपेण विष्णुना सह त्रिकपालं निरुप्य तदिन्द्रियमाप्नोत्। यदि यजमानस्यापि संसृपो यागा भवेयुस्तदाऽसौ यजमान इन्द्रियसामर्थ्यं प्राप्नोतीति। उत्पत्तिविधिभिर्विहितानां संसृपामनेनार्थवादेन भिन्नदिनानुष्ठानविधिरुन्नेयः॥ अन्यं प्रकारविशेषं विधत्ते— "पूर्वा पूर्वा वेदिर्भवति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै" (तैब्रा १·८·१) इति। पूर्वा पूर्वदिग्गता दिनभेदेन बहुवेदित्वद्योतनार्था वीप्सा। तत्प्रकारश्चाऽऽपस्तम्बेन स्पष्टीकृतः—"श्वोभूते परेण सौमिकदेवयजनं दशभिः सप्तभिर्वा संसृपां हविर्भिर्यजते। आग्नेयमष्टाकपालमिति। पूर्वंपूर्वं देवयजनमध्यवस्यति। यत्र पूर्वस्याहवनीयस्तत्रोत्तरस्य गार्हपत्यः। उत्तमायाः प्राग्वंश आहवनीयः। बहिर्गार्हपत्यः" (आपश्रौसू १८·२०·७–१०) इति॥ अष्टमनवमदशमानां हविषां स्वस्वदिनेषु कंचित् कालविशेषं विधत्ते—"पुरस्तादुपसदाꣳ सौम्येन प्रचरति। सोमो वै रेतोधाः। रेत एव तद्दधाति। अन्तरा त्वाष्ट्रेण। रेत एव हितं त्वष्टा रूपाणि विकरोति। उपरिष्टाद्वैष्णवेन। यज्ञो वै विष्णुः। यज्ञ एवान्ततः प्रतितिष्ठति।" (तैब्रा १·८·१) इति। अभिषेचनीयात् सोमयागादूर्ध्वं दशपेयः सोमयागः कर्तव्यः। तस्य च संसृब्यागसंबन्धिनि सप्तमेऽहन्येका दीक्षा कर्तव्या। तत ऊर्ध्वं त्रिषु दिनेषूपसदः कर्तव्याः। तत्र प्रथमोपसद्दिने उपसद्यागात् पूर्वं सौमाख्येन संसृपाऽष्टमहविषा प्रचरेत्। मध्यमोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदोर्मध्ये त्वाष्ट्रेण नवमहविषा प्रचरेत्। तृतीयोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदावनुष्ठायोपरिष्टाद्वैष्णवेन दशमहविषा प्रचरेत्। सोमस्य रेतोधारणहेतुत्वात् प्रथमतस्तत्प्रयोगे यजमानो रेतो दधाति। ततस्त्वष्टुः प्रयोगे सति धृतं रेतोऽवष्टभ्य त्वष्टा रूपाणि विविधानि करोति। विष्णोर्यज्ञरूपत्वादन्ते तद्धविःप्रयोगे सति यजमानो राजसूयादूर्ध्वमपि यज्ञानुष्ठान एव प्रतिष्ठितो भवति। दशपेयतन्त्रमध्ये त्रयाणां हविषामनुष्ठानमापस्तम्बेन स्पष्टीकृतम्। "अपराह्णे दशपेयस्य तन्त्रं प्रक्रमयति" इति उपक्रम्यैवं पठ्यते—"एका दीक्षा तिस्र उपसदः पुरस्तादुपसदाꣳ सौम्यं चरुं निर्वपति अन्तरा त्वाष्ट्रमष्टाकपालमुपरिष्टाद्वैष्णवं त्रिकपालम्" इति॥

अथ मीमांसा॥ चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

"किं पुरस्तादुपसदां सौम्येन प्रचरेदिति।
अङ्गाङ्गिभावः कालो वा वाक्यादाद्यः प्रतीयते॥
पुरस्तादिति कालोऽत्र भाति[2] कालविधिस्ततः।
नाङ्गं कस्यापि सौम्यादि प्रधानमितरेष्टिवत्॥" (जैन्या ४·४·४–५)॥

राजसूये संसृप्शब्दवाच्यान्याग्नेयाष्टाकपालादीनि दश हवींष्याम्नातानि। तेष्वष्टमनवमदशमानि सौम्यत्वाष्ट्रवैष्णवानि। तद्विषयमिदं वाक्यमाम्नायते—"पुरस्तादुपसदाꣳ सौम्येन प्रचरति। ... अन्तरा त्वाष्ट्रेण ...। उपरिष्टाद्वैष्णवेन" (तैब्रा १·८·१) इति। योऽयं राजसूये सोमयागस्तस्मिन्नुपदिष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते। ततो वाक्यात् सौम्यादीन्युपसदामङ्गानीति प्राप्ते ब्रूमः—उपसदामिति षष्ठ्याः कालवाचिना पुरस्तादिति शब्देनान्वयात् सौम्यादीनां कालविशेषसंबन्धपरमिदं वाक्यं न त्वङ्गाङ्गिभावपरम्। ततो न कस्याप्यङ्गं सौम्यादिकं किं त्वनुमत्यादिवत् प्रधानम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डेऽष्टमप्रपाठके सप्तदशोऽनुवाकः॥ १७॥

---

२. जै. न्यायमालामनुसृत्य शुद्धीकृतः, लिखितपुस्तकेषु पूर्वमुद्रितपुस्तकयोश्च 'भाविकाल°' इति पाठः।

**स॒द्यो दी॑क्षयन्ति स॒द्यः सोमं॑ क्रीणान्ति पुण्डरिस्र॒जां प्र य॑च्छति**

स॒द्यः । दी॒क्ष॒यन्ति॒ । स॒द्यः । सोम॑म् । क्री॒णन्ति॒ । पु॒ण्ड॒रि॒स्र॒जाम् । प्रेति॑ । य॒च्छ॒ति॒ ।

---

अथ दशपेयस्य तन्त्रविशेषान् कांश्चिद्विदधाति—‘ सद्यो दीक्षयन्ति ’ इत्यादि ।। सद्यः समानेऽह्नि । “ सद्यःपरुत्° ” ( पा ५.३.२२ ) इति निपात्यते । दीक्षाया यद्भवति, सोमक्रयस्य च यद्भवति सर्वं समानेऽह्नि कुर्यात् । अशक्यं लुप्यते, शक्यं क्रियते, एतदुक्तं भवति—एका दीक्षा, तिस्र उपसदः । तत्र द्वादश्यां वारुणयागानन्तरं दशपेयेन दीक्षा इत्यादि प्रथमोपसदं तदहरेव कुर्युरिति । सोमपरिवेषणं परिलुप्यते । दीक्षणीयां कृत्वा [1]वपनदन्तधावन-तूष्णींस्नानानि क्रियन्ते । “ आपो अस्मान् ” ( तैसं १.२.१ ) इति स्नानमारभ्य यदपवदितव्यं तस्य स्थाने श्रुतिरेवापवादं विदधाति—‘ पुण्डरिस्रजाम् ’ इति । पुण्डरीकं पद्मम् । छान्दसो वर्णविकारः, पर्यायान्तरं वा । द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते यजमानस्य शरीरे बध्नाति तूष्णीम् । “ अच् ” ( पा ५.४.७५ ) इति योगविभागात् [2]समासान्तः । “ अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत् ” ( तैब्रा १.८.२ ) इत्यादि ब्राह्मणम् । “ अथास्मै क्षौममहतम् ” ( आपश्रौ १०.६.४ ) इत्यादि आ सनीहारप्रस्थापनदीक्षात् ( आपश्रौ १०.१८.५ ) । दीक्षाव्रतं प्रायणीयाक्रियया क्रियते । “ प्रायणीयाया ध्रौवादष्टौ ” ( आपश्रौ १०.२२.१ ) इत्यादेः, “ तत्सा गृहेषु निदधाति ” ( आपश्रौ १०.२२.२० ) इत्यन्तस्य लोपः । अभिषेचनीय एव दशपेयार्थं विक्रयस्य कृतत्वात् “ देव सूर्य ” ( आपश्रौ १०.२५.१ ) इत्यादि, “ प्रजाभ्यस्त्वा ” ( आपश्रौ १०.२४.१२ ) इत्यन्तो लुप्यते; पूर्वक्रीतत्वात् ।।

---

सप्तदशे संसृपां हवींष्युक्तानि । अष्टादशे दशपेय उच्यते ॥

**सद्य इति** ।। तत्र दीक्षासोमक्रययोश्चोदकप्राप्तं दिनभेदमपवदितुं विधत्ते—‘ सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति ’ इति ।।

**पुण्डरिस्रजामिति** ।। प्रकृतौ ‘ अप्सु स्नात्यपोऽश्नाति ’ इति यद्विहितं तदपवदितुं विधत्ते—‘ पुण्डरिस्रजां प्र यच्छति ’ इति । तदेतत् सूत्रकारः स्पष्टीचकार—“ अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते ” ( आपश्रौ १८.२०.१४ ) इति । प्रतिमोचयेदित्यर्थः ॥ तदेतत् प्रशंसति—“ जामि वा एतत् कुर्वन्ति । यत् सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति । पुण्डरिस्रजां प्र यच्छत्यजामित्वाय । अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत् पुण्डरीकमभवत् । यत् पुण्डरिस्रजां प्र यच्छति । साक्षादेव दीक्षातपसी अवरुन्धे ” ( तैब्रा १.८.२ ) इति ॥

---

१. ति–वपनं दन्तधावनं तूष्णीं स्नानं च । २. तं–अचि समासान्तः; तं.त्रि–अच् समासान्तः

दुशभिर्वत्सतुरैः सोमं क्रीणाति दुशपेयो भवति

दुशभिरिति दुश--भिः । वृत्सतुरैः । सोमम् । क्रीणाति । दुशपेय इति दश--पेयः । भवति ।

---

अथ [3]क्रमविशेषमाह--‘ दशभिर्वत्सतरैः ’ इति ॥ पूर्वमेव क्रीतं पुरोहितगृहं गतं सोमं फलेन सहाहृत्य[4] ‘ क्षौमेण वाससोपसंगृह्य ’ इत्यादि विस्रंसनान्तं कृत्वा सोमविक्रयिणे प्रदाय [V]दशभिः [V]वत्सतरैः [V]क्रीणाति। द्वितीयं वयः प्राप्नुवन्तो वत्सतराः। “ वत्सोक्षाश्व ” ( ५.३.९१ ) इति ष्टरच् । दशवत्सतरान् सोमविक्रयिणे दक्षिणां दत्वा “ अस्मे ज्योतिः ” ( आपश्रौ १०.२६.७ ) इत्यादि कृत्वाऽऽदत्ते सोमम्। “ मित्रो न एहि ” ( आपश्रौ १०.२७.३ ) इत्यादि लुप्यते । “ वनेषु व्यन्तरिक्षम् ” ( आपश्रौ १०.२७.१० ) इत्यादि कुर्यात्। ततो हस्तेन राज्ञो नयनम् आ प्राग्वंशात्। प्राग्वंशसमीपे यत्र कुत्रचित् सोमफले स्थापयित्वाऽऽतिथ्यं कुर्यात्। आतिथ्यानन्तरं [5-]सौम्येन वारुणेन चेष्ट्वा[-5] पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, तदहरेवापराह्णिकीभ्यां प्रचर्य विरामः; एवं प्रथमोपसदन्तमहः संतिष्ठते । ‘ दशपेयो भवति ’ इति । एकैकस्मिन् चमसे दशदश ब्राह्मणाः सोमं पिबन्ति यस्मिन् स [V]दशपेयः। अधिकरणे “ अचो यत्[※] ” इति यत्। “ ईद्यति ” ( पा ६.४.६५ ) इतीत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वे “ यतोऽनावः ” ( पा ६.१.२१३ ) इत्याद्युदात्तत्वं। *सप्तपर्णादिवद्वीप्सार्थलाभः। पात्रसंसादनकाले प्राकृतेभ्योऽ-

---

**दशभिरिति** ॥ चोदकप्राप्तानि हिरण्यवासःप्रभृतीनि दशविधक्रयद्रव्याण्यपवदितुं विधत्ते--‘ दशभिर्वत्सतरैः सोमं क्रीणाति ’ इति । वत्सतरा उपरतस्तनपानाः । अत एव सूत्रकारो विशिनष्टि--“ दशभिर्वत्सतरैः साण्डैः[1] सोमं क्रीणाति ” ( आपश्रौ १८.२०.१५ ) इति ॥ अत्र संख्यां प्रशंसति--“ दशभिर्वत्सतरैः सोमं क्रीणाति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्द्धे ” ( तैब्रा १.८.२ ) इति ॥ साण्डत्वं विधाय प्रशंसति--“ मुष्करा भवन्ति सेन्द्रत्वाय ” ( तैब्रा १.८.२ ) इति । सेन्द्रत्वमिन्द्रियसामर्थ्यसहितत्वम् ॥

**दशपेय इति** ॥ प्रधानं कर्म विधत्ते--‘ दशपेयो भवति ’ इति । दशसु वैकृतचमसेषु पातव्यः सोमरसो यस्मिन् क्रतौ स क्रतुर्दशपेयः । यद्वा--एकैकस्मिन् पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमो यस्मिन् स दशपेयः । एतदेवाभिप्रेत्य सूत्रकार आह--“ अभिषुते पात्रसंसादनकाले दश चमसानधिकान् प्रयुनक्ति तानुन्नयनकाल उन्नयति । भक्षणकाले दशदशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्ति ” ( आपश्रौ १८.२१.१-२ ) इति ॥ तं विधिं प्रशंसति--“ दशपेयो भवति । अन्नाद्यस्यावरुद्ध्यै ” ( तैब्रा १.८.२ ) इति ॥

---

३. त्रि--क्रमशेषम् । ४. त्रि--सहासज्य । ५-५. त्रि.मै--सौर्येण चरुणेष्ट्वा । ※( पा ३.१.९७ ) ।
*( द्र. पाभा २.३.१ वा १; ८.१.१ वा ५ ) ।

---

१. आ.क.पा.म६--‘ साण्डैः ’ नास्ति ।

**शतं ब्राह्मणाः पिबन्ति सप्तदशꣳ स्तोत्रं भवति प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे**

शतम् । ब्राह्मणाः । पिबन्ति । सप्तदशमिति सप्त-दशम् । स्तोत्रम् । भवति ।
प्राकाशौ । अध्वर्यवे । ददाति । स्रजम् । उद्गात्र इत्युत्--गात्रे ।

तिरिक्ता दश चमसाः प्रयोक्तव्याः, उन्नयनकाले चोन्नेतव्या इति । ᵛशतं ᵛब्राह्मणाः ᵛपिबन्ति इति । यत एवं चमसेचमसे दशदश ब्राह्मणाः पिबन्ति, तस्मात् संहृत्य शतं सोमस्य पातारः सन्तीत्यर्थः । एतेन दशपेयार्थे वीप्सां द्योतयति । ब्राह्मणग्रहणं विशिष्टब्राह्मणपरिग्रहणार्थम् । तेन सोमयाजिनः आ दशमात् पुरुषादविच्छिन्नसोमपीथाः विद्यावन्तस्त्रैविद्यवृद्धा वा मीमांसादिशास्त्राभियुक्ताः वाकोवाक्येतिहासादिपुराणादिज्ञाः[६] कृच्छ्रचान्द्रायणादितपोनिष्ठाः पवित्रार्थेष्टियज्ञक्रतूनामाहर्तारश्च ब्राह्मणाः पातारो वेदितव्याः । ' सप्तदशं स्तोत्रं भवति ' इति । सप्तदशस्तोत्रीयाः ᴹपरिमाणमस्य ᵛसप्तदशम् । इदमेव ᵛस्तोत्रं स्तोमः ᵛभवति । अनुब्राह्मणं च भवति—" सप्तदशो दशपेयः " ( तैब्रा १·८·८ ) इति ।

' प्राकाशौ ' इत्यादि ॥ सौवर्णं दर्पणद्वयम् ᵛअध्वर्यवे ᵛददाति । प्रकाशन्तेऽत्र रूपाणीति प्राकाशः । अधिकरणे घञ् । " उपसर्गस्य घञ्यमनुष्ये " ( पा ६·३·१२२ ) इति दीर्घश्छान्दसो वा । थाथादिनोत्तरपदान्तोदात्तत्वम् । " स्रजम् " इत्यादि[७] । अत्रापि हिरण्यस्रजम्

**शतमिति** ॥ विधत्ते—' शतं ब्राह्मणाः पिबन्ति ' इति । एकैकस्मिन् पात्रे दश दश ब्राह्मणा इति मिलित्वा शतं ब्राह्मणाः पिबन्ति ॥ तदेतत्[२] प्रशंसति—" शतं ब्राह्मणाः पिबन्ति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति " ( तैब्रा १·८·२ ) इति ॥

**सप्तदशमिति** ॥ विधत्ते—' सप्तदशꣳ स्तोत्रं भवति ' इति । अस्मिन् क्रतौ यद्यत् स्तोत्रं तस्य सर्वस्य [३]सप्तदशस्तोमत्वमेव कुर्यात् ॥ प्रशंसति—" सप्तदशꣳ स्तोत्रं भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै " ( तैब्रा १·८·२ ) इति ॥

**प्राकाशाविति** ॥ विधत्ते— ' प्राकाशावध्वर्यवे ददाति ' इति । प्राकाशौ सुवर्णदर्पणौ ॥ प्रशंसति—" प्राकाशावध्वर्यवे ददाति । प्रकाशमेवैनं गमयति " ( तैब्रा १·८·२ ) इति ॥

**स्रजमिति** ॥ हिरण्यस्रजो दानं विधत्ते— ' स्रजमुद्गात्रे ' इति । तथा च सूत्रकारः—" दक्षिणाकाले हिरण्यप्राकाशावध्वर्यवे ददाति । हिरण्यस्रजमुद्गात्रे" ( आपश्रौ १८·२१·६ ) इति ॥ प्रशंसति--" स्रजमुद्गात्रे । व्येवास्मै वासयति " ( तैब्रा १·८·२ ) इति । अस्य यजमानस्य व्येव विशिष्टमेव दुकूलादिकं वासयति । उत्तरीयत्वेनाऽऽच्छादयति ॥

६. तं–'तिहासादिज्ञाः ; ति–'पुराणाभिज्ञाः । ᴹ( द्र.पा ५·१·५७-५८ ) । ७.–' इत्यादि ' नास्ति; ति–इति ।

२. आ.क–' तदेतत् ' नास्ति । ३. क–सप्तदशस्तोत्रत्व° ।

रुक्मꣳ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे
वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने

रुक्मम् । होत्रे । अश्वम् । प्रस्तोतृप्रतिहर्तृभ्यामिति प्रस्तोतृप्रतिहर्तृ--भ्याम् । द्वादश । पष्ठौहीः । ब्रह्मणे । वशाम् । मैत्रावरुणायेति मैत्रा--वरुणाय । ऋषभम् । ब्राह्मणाच्छꣳसिने ।

---

[V]उद्गात्रे ददाति । ‘ रुक्मम् ’ इति । [V]रुक्मं रुचकम्, हिरण्यमिति केचित् । ‘ अश्वम् ’ इति । गतम् ( तैसं १·८·८ ) । ‘ द्वादश ’ इति । चतुर्वर्षाः स्त्रीगवीः । पष्ठं वहन्तीति । “ वहेश्च ” ( पा ३·२·६४ ) इति ण्विः । “ वाहः ” ( पा ४·१·६१ ) इति ङीष् । “ वाह ऊठ् ” ( पा ६·४·१३२ ), “ एत्येधत्यूठ्सु ” ( पा ६·१·८९ ) इति वृद्धिः । द्वौ च दश च [V]द्वादश । “ अष्टनः संज्ञायाम् ” ( पा ६·३·१२५ ) इत्यात्वम् । “ संख्या ” ( पा ६·२·३५ ) इति पूर्वपदप्रकृतिस्वरत्वम् । वशा वन्ध्या । ऋषभः खेलगतिः । ब्राह्मणादाहृत्य शंसति, ब्राह्मणानि शंसति वा ब्राह्मणाच्छंसीति । “ सुप्यजातौ णिनिः° ” ( पा ३·२·७८ ) । “ ब्राह्मणाच्छंसिन उपसंख्यानम् ” ( पा ६·३·२ वा १ ) इति पञ्चम्या अलुक् । पक्षान्तरे छान्दसोऽदुगागमः । नेष्टा च पोता च नेष्टापोतारौ । “ आनङृतो द्वन्द्वे ” ( पा ६·३·२५ ) इत्यानङ् । ‘ स्थूरि ’ इति । स्थूरिः पष्ठवाट् । तत्साधर्म्यात् गोयुक्तो रथ उच्यते । [V]यवाचितं यवा अस्मिन्नार्चीयन्ते, यवैर्वा आचितमिति शाकटमुच्यते । “ संज्ञायामनाचितादीनाम् ” ( पा ६.२·१४६ ) इत्युत्तरपदान्तोदात्तत्वं व्यत्ययेन

---

**रुक्ममिति** ॥ वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते--‘ रुक्मꣳ होत्रे ’ इति ॥ प्रशंसति-- “ रुक्मꣳ होत्रे । आदित्यमेवास्मा उन्नयति ” ( तैब्रा १·८·२ ) इति । उदयं प्रापयतीत्यर्थः ॥

**अश्वमिति** ॥ विधत्ते--‘ अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् ’ इति । ददातीत्यनुषज्यते । द्वाभ्यामेकद्रव्यदानं वाचनिकम् ॥ प्रशंसति--“ अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । प्राजापत्यो वा अश्वः । प्रजापतेराप्त्यै ” ( तैब्रा १·८·२ ) इति । अश्वमेधप्रकरणे “ प्रजापतेरक्ष्यश्वयत् तत् परापतत् [४]तदश्वोऽभवत्[४] ” ( तैसं ५·३·१२ ) इति श्रुतेरश्वस्य प्राजापत्यत्वम् ॥

**द्वादश इति** ॥ बालगर्भिणीनां गवां दानं विधत्ते--‘ द्वादश पष्ठौहीर्ब्रह्मणे ’ इति ॥ वत्सद्वाराऽभिवृद्धिसूचनादायुष्याऽऽभिवृद्ध्या प्रशंसति-- “ द्वादश पष्ठौहीर्ब्रह्मणे । आयुरेवावरुन्धे ” ( तैब्रा १·८·२ ) इति ॥

**वशामिति** ॥ वन्ध्याया गोर्दानं विधत्ते--‘ वशां मैत्रावरुणाय ’ इति ॥ वशाशब्देन बुद्धिस्थं वशित्वमभिप्रेत्य प्रशंसति--“ वशां मैत्रावरुणाय । राष्ट्रमेव वश्यकः ” ( तैब्रा १·८·२ ) इति ॥

**ऋषभमिति** ॥ रेतःसेचनसमर्थस्य गोर्दानं विधत्ते--‘ ऋषभं ब्राह्मणाच्छꣳसिने ’ इति ॥ ऋषभशब्देन बुद्धिस्थमिन्द्रियमित्यभिप्रेत्य प्रशंसति--“ ऋषभं ब्राह्मणाच्छꣳसिने । राष्ट्रमेवेन्द्रियाव्यकः ” ( तैब्रा १·८·२ ) इति ॥

---

४-४. आ.क-‘ तदश्वोऽभवत् ° नास्ति ।

वाससी नेष्टापोतृभ्याᳪ स्थूरि यवाचितमच्छावाकायानड्वाहमग्नीधे भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति

वाससी इति । नेष्टापोतृभ्यामिति नेष्टापोतृ–भ्याम् । स्थूरि । यवाचितमिति यव–आचितम् । अच्छावाकाय । अनड्वाहम् । अग्नीध इत्यग्नि–इधे । भार्गवः । होता । भवति । श्रायन्तीयम् । ब्रह्मसाममिति ब्रह्म–सामम् । भवति ।

प्रवर्तते । अच्छाभिमुख्येन ब्रवीतीत्यच्छवाकः । "हलश्च" (पा ३·३·१२१) इति संज्ञायां घञ् । छान्दसो दीर्घः । 'अनड्वाहम्' इति । अनो वहतीत्यनड्वान् । पृषोदरादिः (पा ६·३·१०९) । अग्निमिन्ध इत्यग्नीत् । 'भार्गवः' इति । ऋत्विग्वरण एव [v]भार्गवः भृगोरपत्यं तत्र वरितव्यः । 'श्रायन्तीयम्' इति । ब्रह्मणः साम [v]ब्रह्मसामम् । पूर्ववदच् । [v]श्रायन्तीयं [v]भवति । "श्रायन्तइव सूर्यम्" (सास २·५·२·१४) इत्यस्यामृचि गेयं भवति । श्रायन्तशब्दोऽस्मिन्नस्तीति श्रायन्तीयं साम । "मतौ छः सूक्तसाम्नोः" (पा ५·२·५९) इति छः । तत् [v]वारवन्तीयं इति । अग्निष्टोमस्य साम [v]अग्निष्टोमसाम, येनाग्निष्टोमः सतिष्ठते । पूर्ववदच् । तत् [v]वारवन्तीयम् भवति । "अश्वं न त्वा वारवन्तम्" (सासं २·८·१·७) इत्यस्यामृचि गेयं भवति ।

**वाससी इति** ॥ द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते—'वाससी नेष्टापोतृभ्याम्' इति ॥ धौतवस्त्रयोः शुद्धिहेतुत्वमभिप्रेत्य प्रशंसति—"वाससी नेष्टापोतृभ्याम् । पवित्रे एवास्यैते" (तैब्रा १·८·२) इति ॥

**स्थूरीति** ॥ स्थूलस्य यवपूर्णशकटस्य दानं विधत्ते —'स्थूरि यवाचितमच्छावाकाय' इति ॥ "वारुणं यवमयं चरुम्" (तैसं १·८·७) इति श्रुतत्वात् यवप्रियं वरुणं स्वकीयभागप्रदानेन स्वकीय-देशान्ताद्बहिर्निःसारितवान् भवतीत्यभिप्रेत्य प्रशंसति—"स्थूरि यवाचितमच्छावाकाय । अन्तत एव वरुणमवयजते" (तैब्रा १·८·२) इति ॥

**अनड्वाहमिति** ॥ विधत्ते—'अनड्वाहमग्नीधे' इति ॥ वह्निद्वारकेणोभयोः संबन्धेन प्रशंसति— "अनड्वाहमग्नीधे । वह्निर्वा अनड्वान् । वह्निरग्नीत् । वह्निनैव वह्नि यज्ञस्यावरुन्धे" (तैब्रा १·८·२) इति । दर्शपूर्णमासयोराग्नेयहविर्युक्तस्य शकटस्य वहनादनड्वान् वह्निः । अग्नेरिन्ध-नादाग्नीध्रोऽपि वह्निः । उभयोः संबन्धे सति वह्निरूपेणानडुहा यज्ञस्य वह्नि वाहकमाग्नीध्राख्यृत्विग्जातं स्वाधीनं करोति ॥

**भार्गव इति** ॥ चोदकप्राप्तं होतृसामान्यादिकं बाधितुं विशेषान् विधत्ते—'भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामᳪ सारस्वतीरपो गृह्णाति' इति ॥ प्रकृतौ यः कोऽपि होतेत्यत्रापि तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते । प्रकृतौ ब्राह्मणाच्छंसिनं प्रत्याज्यस्तोत्रे गायत्रसाम्नो विहितत्वात्तदपवादाय श्रायन्तीयं सामात्र विधीयते । "श्रायन्तइव सूर्यम्" (ऋसं ८·९९·३ सासं २·५·२·१४ ऊह ५·२·९) इत्यस्यामृच्युत्पन्नं साम श्रायन्तीयम् । प्रकृतौ यज्ञायज्ञियस्याग्निष्टोमसामत्वात्

वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति ॥ १८ ॥

[ वारवन्तीयं चत्वारि च ]

वारवन्तीयमिति वार–वन्तीयम् । अग्निष्टोमसाममित्यग्निष्टोम–सामम् । सारस्वतीः । अपः । गृह्णाति ॥ १८ ॥

[ मैसं ४·४·७–९ शब्रा ५·४·५ ]

---

वारवन्तमित्यस्मात् पूर्ववन्मत्वर्थे छः । 'सारस्वतीः' इति । सरस्वती नाम नदी । तदीया [v]अपः वसतीवरीः [v]गृह्णाति, यदा सरस्वत्याः समीपे यजते । इतरथा सरस्वतीजलमाहृत्य बहुयाजिकुम्भस्थं गृह्णातीत्याहुः । "ऊडिदम्" (पा ६·१·१७१) इत्यद्भ्यो द्वितीयाया उदात्तत्वम् ॥

इत्यष्टमेऽष्टादशोऽनुवाकः ॥

---

तदपोद्य वारवन्तीयं साम विधीयते । "अश्वं न त्वा वारवन्तम्" (ऋसं १·२७·१ सासं २·८·१·७, ऊह १२·२·१७) इत्यस्यामृच्युत्पन्नं वारवन्तीयं साम । प्रकृतौ "वहन्तीनां गृह्णाति" (तैसं ६·४·२) इति प्रवाहमात्रगतानामपां वसतीवरीत्वादत्रापि तत्प्राप्तौ सरस्वतीगता एवाऽऽपो विधीयन्ते ॥ इन्द्रवीर्यत्वेन[5] त्रयं प्रशंसति—"इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं परापतत् । भृगुस्तृतीयमभवत् । श्रायन्तीयं तृतीयम् । सरस्वती तृतीयम् । भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्निष्टोमसामम् । सारस्वतीरपो गृह्णाति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै" (तैब्रा १·८·२) इति ॥ वारवन्तीयस्य [6]इन्द्रवीर्यत्वाभावेनात्र[6] स्तुतेरप्रतीतत्वात् तेन सह स्तोतुं श्रायन्तीयमपि पुनरुपादत्ते—"श्रायन्तीयं ब्रह्मसामं भवति । इन्द्रियमेवास्मिन् वीर्यꣳ श्रयति । वारवन्तीयमग्निष्टोमसामम् । इन्द्रियमेवास्मिन् वीर्यं वारयति" (तैब्रा १·८·२) इति । सामनाम्नि श्रयतिधातोः प्रतीतत्वाद्यजमानेन वीर्यमाश्रीयते । द्वितीयनाम्नि वारयितृत्वप्रतीतेरस्मिन् यजमाने प्रयुक्तं वैरिवीर्यं निवारितं भवति ॥

[7]अत्र मीमांसा ॥ एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"दशपेये चाभिषेचनीये तन्त्रं भिदाऽथ वा ।
क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता ॥" (जैन्या ११·२·१८) ॥

राजसूये दशपेयाभिषेचनीयसंज्ञकौ द्वौ सोमयागौ । तयोरङ्गानुष्ठानं तन्त्रेण कार्यम् । कुतः ? [8]क्रयसाहित्यात् । "सह सोमौ [9]क्रीणात्यभिषेचनीयदशपेययोः" (द्र. आपश्रौ १८·१२·२) इति श्रूयते । तथा सत्यभिषेचनीयस्य[9] यदा सोमक्रयस्तदैव दशपेयस्यापि सोमे क्रेतव्ये सति क्रयात् पूर्वभाविनां दशपेयाङ्गानामपकर्षात् तन्त्रं स्यादिति प्राप्ते ब्रूमः—भिन्नकालीनयोरभिषेचनीयदशपेययोरङ्गानां भेदो युक्तः । संसृप्शब्दवाच्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वमपराह्णे दशपेयस्योपक्रमः । ताभ्यः प्राचीनेऽत्यन्तव्यवहिते कालेऽभि-

---

५. उ.क.पा.म४.म६–इन्द्रियवीर्यत्वेन । ६–६. म४–इन्द्रवीर्यत्वाभावात् प्रस्तुते; म६–इन्द्रियवीर्यत्वाभावेनात्र; इ.उ.पा–इन्द्रियवीर्यत्वेनाभावेनात्र । ७. आ.क–अथ । ८. आ–क्रयस्याभिन्नत्वात् । ९–९. आ–क्रीणाति [ इति । ] अभिषेचनीस्य ।

दशपेयः ]

षेचनीयः । न च क्रयसाहित्यमस्ति, "सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति" इति दशपेये क्रयस्य सद्यस्कालत्वाविधानात्[10] । 'सह सौमौ' इति वचनेन क्रयार्थसंवादे साहित्यं विवक्षितम् । तस्मादुभयोरङ्गानां भेदः ॥

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" राजसूये क्वचित् कर्तुश्चमसो दशभिर्जनैः ।
भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥
आद्यो भानात्[11] संख्ययैकजातेर्विप्राः शतं दश ।
चमसानग्रुरित्युक्त्या राजपात्रं च विप्रगम् ॥ " ( जैन्या ३·५·३४–३५ ) ॥

राजसूये दशपेयनामके यागे श्रूयते–"दशदशैकैकं चमसमनुसर्पन्ति" (द्र.आपश्रौ १८·२१·३) इति । तत्र यजमानस्य राजन्यस्य[12] यश्चमसः सोऽयं राजन्यैरेव दशभिर्भक्षणीयः । कुतः[13] ? दशेतिसंख्यया जात्येकत्वप्रतिभानात् । तथा हि—दशपेयस्य ज्योतिष्टोमविकृतित्वात् प्रकृतं धर्मजातं चोदकेन प्राप्तम् । प्रकृतौ च यजमानचमसस्य भिन्नजातिभिर्भक्षणं नास्तीत्यत्रापि तथैव प्राप्तम् । यद्यत्र दशेति विशेषो विधीयते तर्हि प्राकृतं भक्षकसंख्यामात्रं [14]निवर्तेतां न त्वेकजातित्वम्[15] । तस्मात् राजन्यो यजमानो राजन्यैर्नवभिः सह भक्षयेदिति प्राप्ते ब्रूमः—प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुसर्पतां पुरुषाणां दश दशेतिवीप्सया प्रतिचमसं दशसंख्यां [16]विधायार्थसिद्धां शतसंख्यामनूद्य संख्येयानां सर्वेषां ब्राह्मण्यं विधीयते—" शतं ब्राह्मणाः पिबन्ति " इति । तथा सति यजमानस्यापि राजन्यस्य यत्र भक्षो नास्ति तत्र कुतोऽन्ये राजन्या भक्षयेयुः । तस्माद्ब्राह्मणा एव भक्षकाः ॥

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

" किं प्राकाशौ बाधकौ स्तः कृत्स्नयाऽऽध्वर्यवस्य वा ॥
ददातियोगात् कृत्स्नस्य न विशिष्टेन योगतः ॥ " ( जैन्या १०·३·२७ ) ॥

[17]राजसूये श्रूयते—" हिरण्मयौ प्राकाशावध्वर्यवे ददाति " ( द्र. शब्रा ५·४·५·२२, आपश्रौ १८·२१·६ ) इति । प्राकाशौ दीपस्तम्भावित्येके । दर्पणावित्यपरे । तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य [18]कृत्स्नस्य बाधकौ उताध्वर्युभागस्यैव । तत्र 'प्राकाशौ ददाति' इति कर्मकारकवाचिद्वितीयाश्रुतिकृतेन दानसंबन्धेन 'प्राकाशावध्वर्यवे' इति वाक्यकृते पुरुषसंबन्धेऽपोदिते[19] सति देयद्रव्यप्रतीतेर्देयान्तरस्य कृत्स्नस्य बाध इति पूर्वः पक्षः । 'अध्वर्यवे ददाति' इति संप्रदानकारकवाचिचतुर्थीश्रुतिकृतस्य दानक्रियासंबन्धस्यापवदितुमशक्यत्वात् संप्रदानविशिष्टदानक्रियासंबन्धेऽपि द्वितीयाश्रुतेरविरोधादध्वर्युभागस्यैव बाध इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

१०. आ.क–कालत्वाभिधानात् । ११. जैन्यायमालामनुसृत्य शुद्धीकृतः, लिखितपुस्तकेषु 'भागात्' । १२. म४–' राजन्यस्य ' नास्ति । १३. आ.क–' कुतः ' नास्ति । १४. इ.उ–निर्वर्त्यताम् ; आ–निवर्त्यताम् ; म४–निर्वर्तताम् । १५. आ.क–एकजातीयत्वम् । १६. म६–विधातुमर्थ° १७. म४–अश्वमेधे । १८. आ.क–' कृत्स्नस्य ' नास्ति । १९. भ–°न्धे चोदिते ।

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा-

आग्नेयम् । अष्टाकपालमित्यष्टा--कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश--कपालम् । ऋषभः । दक्षिणा । वैश्वदेवमिति वैश्व--देवम् । चरुम् । पिशङ्गी । पष्ठौही । दक्षिणा । मैत्रावरुणीमिति मैत्रा--वरुणीम् । आमिक्षाम् । वशा । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठ इति शिति--पृष्ठः । दक्षिणा ।

---

अथ पञ्चहविषामवेष्टयोदवस्यति, तां विदधाति—' आग्नेयम् ' इत्यादि ॥ " ईश्वरो वा एष दिशोऽनून्मदितोः " ( तैब्रा १·८·३ ) इत्यादि ब्राह्मणम् । आग्नेयैन्द्रवैश्वदेवमैत्रावरुणबार्हस्पत्यानि पञ्च हवींषि निर्वपति । हिरण्यऋषभपष्ठौहीवशाशितिपृष्ठेत्येतानि दक्षिणाकाले देयानि । संतिष्ठते दशपेयः । " एतया दिशामवेष्टया तेजस्कामो ब्राह्मणो राजन्यो वा वैश्यो वा " इत्ययज्ञसंयुक्तं केचिदाहुः ॥

---

अष्टादशे दशपेयोऽभिहितः[1] । एकोनविंशे दिशामवेष्टयः पशुद्वयं सात्यदूतानां हवींषि च विधीयन्ते ।

आग्नेयमिति ॥ तत्राऽऽदौ पञ्च हवींषि विधत्ते—' आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा ' इति । पिशङ्गी पिङ्गलवर्णा ॥ दिग्व्यास्थापनप्रयुक्तोन्मादपरिहारेणावेष्टिविधिं प्रस्तौति—" ईश्वरो वा एष दिशोऽनून्मदितोः । यं दिशोऽनु व्यास्थापयन्ति । दिशामवेष्टयो भवन्ति । दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय " ( तैब्रा १·८·३ ) इति । यं यजमानमध्वर्युः प्रस्थापयत्येष यजमानो दिशोऽनुप्राप्य दिग्भ्रमेणोन्मदितोरुन्मत्तो भवितुमीश्वरः प्रभुर्भवति ॥ विधिवाक्यावगतं देवतापञ्चकं प्रशंसति —" पञ्च देवता यजति । पञ्च दिशः । दिक्ष्वेव प्रतितिष्ठति " ( तैब्रा १·८·३ ) इति ॥ आग्नेयादीनां चतुर्णां मध्य एकैकयागादूर्ध्वं पञ्चमहविषि अभिघारणं विधत्ते—" हविषो हविष इष्ट्वा बार्हस्पत्यमभिघारयति । यजमानदेवत्यो वै बृहस्पतिः । यजमानमेव तेजसा समर्धयति " ( तैब्रा १·८·३ ) इति । यजमानस्य देवता उक्ता अग्न्यादयश्चतस्रस्ताभ्यो हितो यजमानदेवत्यः ॥

---

१. म४.म.६–°पेयो वर्णितः ।

ऽऽदि॒त्यां म॒ल्हां ग॒र्भिणी॒मा ल॑भते मारु॒तीं पृश्नि॑ं पष्ठौ॒हीम॒श्विभ्या॑ं पू॒ष्णे पु॑रो॒डाश॑ं द्वाद॑शकपाल॒ं निर्व॑पति॒ सर॑स्वते स॒त्यवा॑चे च॒रुꣳ

आ॒दि॒त्याम् । म॒ल्हाम् । ग॒र्भिणी॑म् । एति॑ । ल॒भ॒ते । मा॒रु॒तीम् । पृश्नि॑म् । प॒ष्ठौ॒हीम् । अ॒श्विभ्या॒मित्य॒श्वि--भ्याम् । पू॒ष्णे । पु॒रो॒डाश॑म् । द्वाद॑शकपाल॒मिति॒ द्वाद॑श–क॒पा॒ल॒म् । निरिति॑ । व॒प॒ति॒ । सर॑स्वते । स॒त्यवा॑च॒ इति॑ स॒त्य–वा॑चे । च॒रुम् ।

अथ यस्यां दशपेयासमाप्तिस्तस्यां प्रथमायामपराह्णे द्विपशुना पशुबन्धेन यजते, तं विदधाति—'आदित्यां मल्हाम्' इति ॥ आदित्यो देवता । "दित्यदित्यादित्य°" (पा ४·१·८५) इति ण्यः । मल्हा [1]मणिला [2]अजा, यस्या[2] ग्रीवायां मणिवन्मांसद्वयमवलम्बते । तादृशीं गर्भिणीम् आ लभते । मारुतीं च पृश्निं श्वेतवर्णां पष्ठौहीम् । उक्ता पष्ठौही ( तैसं १·८·१८ ) ॥

श्वोभूते द्वितीयायां सात्यदूतानां त्रिहविषेष्ट्या यजते, तां विदधाति—'अश्विभ्याम्' इत्यादि ॥ अश्विनौ पूषा च संभूय देवते । 'अश्विभ्यां पूष्णे जुष्टं निर्वपामि' इति निर्वापः ।

आदित्यामिति ॥ अवेष्टीर्विधाय द्विपशुयुक्तं पशुबन्धकर्म विधत्ते—'आदित्यां मल्हां गर्भिणीमा लभते मारुतीं पृश्निं पष्ठौहीम्' इति । अदितिर्देवता यस्याः सेयादित्या मल्हा मणिला गलस्तनयुक्तेत्यर्थः । पृश्निरल्पतनुः श्वेतवर्णा वा ॥ अदितेर्भूमित्वेन राष्ट्रत्वं मरुतां च वैश्यत्वमसकृदुक्तं, तदेतदभिप्रेत्य प्रशंसति—"आदित्यां मल्हां गर्भिणीमा लभते । मारुतीं पृश्निं पष्ठौहीम् । विशं चैवास्मै राष्ट्रं च समीची दधाति" ( तैब्रा १·८·३ ) इति । करप्रदानेन विशः सम्यक्त्वं, सस्यानिष्पादकत्वेन राष्ट्रस्य सम्यक्त्वम् ॥ पाठप्राप्तं क्रमं प्रशंसति—"आदित्यया पूर्वया प्रचरति । मारुत्योत्तरया । राष्ट्र एव विशमनु बध्नाति" ( तैब्रा १·८·३ ) इति ॥ आश्रावणस्य चोदकप्राप्तमुच्चध्वनित्वमादित्ययागेऽनूद्यापवदितुं विधत्ते—"उच्चैरादित्याया आ श्रावयति । उपांशु मारुत्यै । तस्माद्राष्ट्रं विशमतिवदति" ( तैब्रा १·८·३ ) इति । यस्माद्राष्ट्ररूपायामादित्येष्टावुच्चध्वनिर्विड्रूपायां मारुतीष्टावुपांशुध्वनिस्तस्माल्लोकेऽपि[2] राष्ट्रमुज्जित्य[3] तत्पालको राजादिः सहस्रकरदानाय विशमतिवदति [4]निर्भर्त्सयतीत्यर्थः ॥ पूर्वोक्तं पशुविशेषणं प्रशंसति—"गर्भिण्यादित्या भवति । इन्द्रियं वै गर्भः । राष्ट्रमेवेन्द्रियाव्यकः । अगर्भा मारुती । विड्वै मरुतः । विशमेव निरिन्द्रियामकः" ( तैब्रा १·८·३ ) इति । गर्भस्येन्द्रियकार्यत्वादिन्द्रियत्वं, तेन गर्भेण राष्ट्रगता ब्राह्मणक्षत्रियप्रजा इन्द्रिययुक्ता भवन्ति । मारुत्या गर्भराहित्येन वैश्या निरिन्द्रिया इतरापेक्षया क्षीणसामर्थ्या भवन्ति । ननु पष्ठौही बालगर्भिणीत्यसकृदुक्तं कथमगर्भा मारुतीतीहोच्यते । नायं दोषः । पञ्चवर्षाया अपि पष्ठौहीशब्दवाच्यत्वात् ॥

पशुबन्धं विधाय सात्यदूतानां हवींषि विधत्ते ॥

अश्विभ्यामिति ॥ 'अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा' इति ॥ पूष्णे चेति देवता-

१. तं.ति–मणित्वक्का । २–२. तं.ति–यथा ३. त्रि.मै–आलभेत ।

२. इ.उ.पा–तस्माच्चोदकोऽपि; म६–तस्माच्चोदकेऽपि । ३. म४–°मुद्दिश्य । ४. म.४.म६–भर्त्सयती° ।

सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं
तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा ॥१९॥

[ आग्नेयꣳ हिरण्यमैन्द्रं वैश्वदेवं पिशङ्गी बार्हस्पत्यꣳ सप्तचत्वारिꣳशत् ]

सवित्रे । सत्यप्रसवायेति सत्य–प्रसवाय । पुरोडाशम् । द्वादशकपालमिति द्वादश–कपालम् । तिसृधन्वमिति तिसृ–धन्वम् । शुष्कदृतिरिति शुष्क–दृतिः । दक्षिणा ॥ १९ ॥

[ मैसं २·६·१३; कासं १५·९; शब्रा ५·५·१·१–१२ ]

पूष्ण इत्याद्युदात्तनिवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । सरस्वान् सत्यवाक् नाम देवता । सत्यं वक्ति सत्यवाक् । "क्विब्वचि°" (द्र. पा ३·२·१७८ वा १–२ ) इत्यादिना क्विब्दीर्घौ । कृदुत्तरपद-प्रकृतिस्वरत्वम् । "अन्तोदात्तादुत्तरपदात्°" ( पा ६·१·१६९ ) इति विभक्त्युदात्तत्वं नित्य-समासत्वान्न भवति । बहुव्रीहौ त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् ( पा ६·२·१९९ वा २ )। "°अन्यतरस्याम्" ( पा ६·१·१६९ ) इति वचनात् विभक्त्युदात्तत्वाभावः । [v]सवित्रे । "उदात्तयणः" ( पा ६·१·१७४ ) इति विभक्त्युदात्तत्वम् । [v]सत्यप्रसवाय सत्याभ्यनुज्ञानाय । [v]तिसृधन्वं [v]शुष्कदृतिः च दक्षिणा । तिसृभिरिषुभिर्युक्तं धनुः तिसृधन्वम् । शुष्का केवला दृतिः शुष्कदृतिः ॥

इत्यष्टमे एकोनविंशोऽनुवाकः ॥

समुच्चयो द्रष्टव्यः । सत्यं वक्तीति सत्यवाक्, तस्मै सरस्वन्नामकाय देवाय । [v]सत्यप्रसवाय अमोघानुज्ञानाय । तिसृभिरिषुभिर्युक्तं धनुः [v]तिसृधन्वं, तत्प्रक्षेपाय निर्मिता [v]शुष्कदृतिः । तदुभयमत्र देयम् ॥ तेषु हविःषु प्रथमं हविः[५] प्रशंसति––"देवासुराः संयत्ता आसन् । ते देवा अश्विनोः पूषन् वाचः सत्यꣳ संनिधाय । अनृतेनासुरानभ्यभवन् । तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निरवपन् । ततो वै ते वाचः सत्यमवारुन्धत । यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । अनृतेनैव भ्रातृव्यानभिभूय । वाचः सत्यमवरुन्द्धे" ( तैब्रा १·८·३ ) इति । वाचः संबन्धि यत् सत्यमनृतपरित्यागेन भाषणं तत् सर्वं स्वकीयमश्विनोः पूष्णि च निक्षेपरूपेणावस्थाप्य युष्मान्न हनिष्याम इत्यनृतेन वचनेनासुराणामग्रे भाषां कृत्वा तद्विश्वासेन युद्धसंनाहं परित्यज्य कदाचित् निद्राणानसुरान्निहतवन्तः । ततोऽनृतदोषपरिहारक्षमं पूर्वनिक्षिप्तं वाचः सत्यं ग्रहीतुमश्विनोः पूष्णः स्वोत्कोचरूपं पुरोडाशं निरुप्य तत्सत्यं स्वाधीनं कृतवन्तः । तद्वद्यजमानस्यापि

५. आ.क.म४.म६ 'हविः' नास्ति ।

द्रष्टव्यम् ॥ द्वितीयं हविः प्रशंसति—" सरस्वते सत्यवाचे चरुम् । पूर्वमेवोदितम् । उत्तरेणाभिगृणाति " ( तैब्रा १·८·३ ) इति ॥ पूर्वं प्रथमहविःप्रशंसार्थं वाचः सत्यमवरुन्द्धे इति यदुक्तं तदेवोत्तरेण सत्यवाच इत्यनेन देवताविशेषणेन विधिवाक्यविशेषो गृणाति उच्चारयति । अतोऽनेनापि यागेन सत्यस्वीकार एव दृढो भवतीत्यभिप्रायः ॥ सत्यप्रसवायेत्येतद्विशेषणं प्रशंसति—"सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं प्रसूत्यै " ( तैब्रा १·८·३ ) इति ॥ विधत्ते—" दूतान् प्रहिणोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति । अथो दूतेभ्य एव न छिद्यते " ( तैब्रा १·८·३ ) इति । प्रतिराजभ्यो दूतान् प्रेषयति । एते दूता आविदो भवन्त्येतदीयं शासनमा समन्ताद्वेदयन्ति ख्यापयन्तीत्याविदः । तेन दूतप्रेषणेनैनं यजमानमाविदं गमयन्ति आ समन्ताद्वेद्यते ख्याप्यत इत्यावित् कीर्तिस्तां प्रापयन्ति । किं चायं दूतेभ्यो न विच्छिद्यते । सर्वतः प्रेषयितुं [illegible] न लभ्यन्त इत्येवं विच्छेदो न भवति किं तु सर्वदा बहवो दूताः संनिहिता वर्तन्ते । दूतप्रेषणप्रकारः सूत्रकारेण स्पष्टीकृतः—" तान्यभ्यवस्नाय प्रतिराजभ्यः प्रहिणोत्यभ्यषिक्षि राजाऽभूवमित्यावेदयते " ( आपश्रौ १८·२२·३–४ ) इति । तानि तिसृधन्वादीनि दक्षिणाद्रव्याण्यभ्यवस्नायामित आक्रम्य स्नात्वा तानि प्रतिराजभ्यो दर्शयितुं दूतहस्ते दत्त्वा प्रेषयति । स च दूतो राज्ञ एतद्वचनं तेषामग्रे कथयति । अभिषिक्तोऽस्मि युष्माकं सर्वेषां राजाऽभूवमिति ॥ दक्षिणां प्रशंसति—" तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा समृद्ध्यै " ( तैब्रा १·८·३ ) इति ॥

अथ मीमांसा ॥

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

" राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुताऽत्र तु ।
विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ॥
विप्रादेरनुवादः स्यात् प्रापणं वाऽनुवादगीः ।
व्यत्ययाय त्रयाणां च राजत्वात् प्राप्तिरस्ति हि ॥
न राज्ययोगाद्राजत्वं [6]क्षत्रियत्वं तु तत् ततः[6] ।
अप्राप्तप्रापणं तस्मात्र रथंतरतुल्यता ॥ " ( जैन्या २·३·४-६ ) ॥

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामिका श्रूयते— " आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा " इति ॥ तस्यामवेष्टौ हविषां क्रमव्यत्ययः श्रूयते— " यदि ब्राह्मणो यजेत बार्हस्पत्यं [7]मध्ये निधायाऽऽहुतिमाहुतिं[7] हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम् " ( द्र.मैसं ४·४·९ ) इति । तत्र यथा पूर्वाधिकरणम् ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्दयुक्तेन वाक्येन रथन्तरं निमित्तत्वेनानूदितम्, एवमत्रापि पञ्चमस्थाने श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने

६–६. इ.उ.पा–क्षत्रियत्वे कृतं कृतः, आ.क–क्षत्रियत्वकृतं ततः । ७–७. इ.उ.मध्ये कृत्वाऽऽहुतिं; आ.क.पा–मध्यतो निधायाहु° ।

स्थापयितुं 'यदि ब्राह्मणः' इत्येतन्निमित्ततयाऽनूद्यते। द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयत्वेन स्थापयितुं 'यदि राजन्यः' इत्यनुवादः। वैश्वदेवस्य तृतीयस्थाने श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः। ननु राजकर्तृकराजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो युक्त इति चेत्। न। तयोरपि राज्ययोगेन राजशब्दार्थत्वादिति प्राप्ते ब्रूमः — राजशब्दः क्षत्रियजातौ रूढः, न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम्, प्रत्युत राज्यशब्दस्य राजयोगः प्रवृत्तिनिमित्तम्। राज्ञः कर्मेति विगृह्य राजप्रातिपदिकस्योपरि प्रत्ययविशेषविधानात्। ब्राह्मणवैश्ययोः प्रजापालने [8]राज्यशब्द औपचारिकः[8]। तस्मादवेष्टौ[9] ब्राह्मणवैश्यौ पूर्वमप्राप्तावनेन प्राप्येते। ननु राजसूयस्य राजकर्मत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात् तस्यां[10] ब्राह्मणवैश्ययोः प्रापणमयुक्तमिति चेत्। मैवम्। अन्तरवेष्टौ तदसंभवेऽपि राजसूयाद्बहिः प्रयुज्यमानायामवेष्टौ तत्संभवात्। तस्मादत्र ब्राह्मणादिकर्तृकं यथोक्तगुणविशिष्टं कर्मान्तरं विधीयत इति न रथंतरादितुल्यत्वम्। यदिशब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्युन्नेयम्।

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः।
नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगम्॥" (जैन्या ११·४·४)॥

राजसूयप्रकरणे श्रूयते—"दिशामवेष्टयो भवन्ति" (तैब्रा १·८·३) इति। ताश्चावेष्टयः उत्पत्तिवाक्यैरेवमाम्नायन्ते—"आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यꣳ चरुं शितिपृष्ठो दक्षिणा" इति। तास्ववेष्टिषु तन्त्रेणाङ्गानुष्ठानम्। कुतः? तल्लिङ्गात्। "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्" (द्र. मैसं ४·४·९) इति। तत्र मध्ये निधानं प्रयोगैक्यनिमित्तमिति लिङ्गम्। तदैक्याच्च तन्त्रमिति प्राप्ते ब्रूमः— उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमादङ्गानां भेदः। लिङ्गं तु बहिष्प्रयोगविषयम्। अस्ति च प्रयोगद्वयम्। राजसूयप्रकरणपाठादन्तःप्रयोग एकः। न च प्रकरणादुत्कर्षः कर्तुं शक्यः। [11]राजसूयाङ्गभूतदिग्व्यास्थापननिमित्तोन्मादपरिहाररूपेणार्थवादेन तत्संबन्धावगमात्। तथा च श्रूयते—"ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिक्ष्वनुव्यास्थापयन्ति। दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय" (तैब्रा १·८·३) इति। राजसूयाद्बहिष्प्रयोगस्तु—"एतयाऽन्नाद्यकामं याजयेत" इति विहितः। न चासौ राजसूयान्तःपाती। 'यदि ब्राह्मणः' इत्यादिना वर्णत्रयसंयोगावगमात्। राजसूये च ब्राह्मणवैश्ययोरनधिकारात्। तस्माद्बहिष्प्रयोगे तन्त्रमन्तःप्रयोगे भेद इति निर्णयः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टप्रपाठक एकोनविंशोऽनुवाकः॥ १९॥

---

८–८. म४-राजशब्द उपचरितः। ९. आ.म६–तस्मादेवेष्टौ। १०. म४–तत्र। ११. इ.उ–राजसूयाङ्गभूतदिग्व्यास्थापनरूपनिमि°।

प्रयुजां हवींषि ]

**आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालं दक्षिणो रथवाहनवाहो दक्षिणा**

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । बार्हस्पत्यम् । चरुम् । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा—कपालम् । वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । दक्षिणः । रथवाहनवाह इति रथवाहन—वाहः । दक्षिणा ।

तस्मिन्नपराह्णे षड्भिः प्रयुजां हविर्भिर्यजते, तानि विदधाति—'आग्नेयम्' इति ॥ प्रयुजां हविर्भिर्यक्ष्ये इति संकल्पः । षड्ढविष्क एको यज्ञ इति आग्नेयेष्ट्यन्ते सत्यान् दूतान् दक्षिणाद्रव्यहस्तान् प्रतिराजभ्यः प्रहिणोति । "अभ्यषिक्षि राजाऽभूवम्" (आपश्रौ १८·२२·४) इति चावेदनम्, आगतेषु दक्षिणाद्रव्याणि ऋत्विग्भ्य एव ददाति । ततः सौम्यसावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानराणि हवींषि । विश्वेषां नराणां संबन्धी वैश्वानरः । "नरे संज्ञायाम्" (पा ६·३·१२९) इति दीर्घत्वम् । अत्र [v]दक्षिणः दक्षिणतो युक्तः रथवाहनस्यासौ वाहो वाहकः गौः [v]दक्षिणा देया ॥

एकोनविंशे दिशामवेष्टयः पशुबन्धः सात्यदूतानां हवींषि चोक्तानि ॥

**आग्नेयमिति** ॥ अथ विंशे प्रयुजां हवींष्युच्यन्ते । तत्प्रकारः सूत्रकारेण दर्शितः—"अपराह्णे षड्भिः प्रयुजां हविर्भिर्यजते । आग्नेयमष्टाकपालमिति । दक्षिणो रथवाहनवाहो दक्षिणा । श्वोभूते षड्भिरुत्तरो रथवाहनवाहः" (आपश्रौ १८·२२·५–८) इति । तान्येतानि हवींषि विधत्ते—'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालं दक्षिणो रथवाहनवाहो दक्षिणा सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमुत्तरो रथवाहनवाहो दक्षिणा' इति ॥ रथस्य वाहनं, रथवाहनमन्यच्छकटं, यस्मिञ्छकटे रथस्येषयोरग्रमवस्थाप्यते । तस्य रथवाहनस्य शकटस्य वाहको दक्षिणो यो बलीवर्दोऽसौ पूर्वषट्के दातव्यः । एवमुत्तरषट्केऽपि योज्यम् ॥

अत्र[1] पूर्वषट्कगतं प्रथमं हविः प्रशंसति—"आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति" (तैब्रा १·८·४) इति । उपरिष्टात् परकीयपक्षा उपन्यस्यन्ते—"मासि मास्येतानि हवीꣳषि निरुप्याणीत्याहुः" (तैब्रा १·८·४) इति । तत्पक्षानुसारेण फाल्गुनमासमारभ्य क्रमेणैकैकस्मिन् मास एकैकं हविर्निर्वपणीयम् । तथा हि—फाल्गुन्याः पौर्णमास्याः प्रागेव राजसूयमुपक्रम्य पवित्रनामकमग्निष्टोममानुमतादीनि चानुष्ठाय फाल्गुन्यां पौर्णमास्यामारभ्य वैश्वदेववरुणप्रघाससाकमेधांश्चतुर्षु चतुर्षु मासेषु निष्पाद्य द्वितीयस्यां फाल्गुन्यां पौर्णमास्यां शुनासीरीयेन्द्रतु[illegible]त्तरदिनेषु देविकादीनि यथोक्तक्रमेण रत्निनां हवींषि चानुष्ठाय फाल्गुनामावास्यायामभिषेचनीयार्थं दीक्षयित्वा [2]तस्य दीक्षा वर्धनीयाः । तथा चाऽऽपस्तम्ब आह—"तथाऽभिषेचनीयस्योक्थ्यस्य दीक्षाः प्रवर्धयति यथा

१. म४.म.६–तत्र । २. इ.उ.पा.म६–ताश्च ।

सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमुत्तरो रथवाहनवाहो दक्षिणा ॥ २० ॥

[ आग्नेयꣳ सौम्यं बार्हस्पत्यं चतुस्त्रिꣳशत् ]

सारस्वतम् । चरुम् । निरिति । वपति । पौष्णम् । चरुम् । मैत्रम् । चरुम् । वारुणम् । चरुम् । क्षैत्रपत्यमिति क्षैत्र-पत्यम् । चरुम् । आदित्यम् । चरुम् । उत्तर इत्युत्-तरः । रथवाहनवाह इति रथवाहन-वाहः । दक्षिणा ॥ २० ॥

[ मैसं २.६.१३; कासं १५.९; शब्रा ५.५.२.६-७ ]

श्वोभूते सारस्वतादिभिः प्रयुजां हविर्भिर्यजते, तानि विदधाति—' सारस्वतं चरुम् ' इत्यादि ॥ सारस्वतपौष्णमैत्रवारुणक्षैत्रपत्यादित्यानि हवींषि । अत्र [v]उत्तरः उत्तरतो युक्तः रथवाहनवाहो बलीवर्दः [v]दक्षिणा देया । " आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति " ( तैब्रा १.८.४ ) इत्यादि ब्राह्मणम् ॥

अथ राजसूयशेषः केशवपनीयोऽतिरात्रः, व्युष्टिर्द्विरात्रः, अग्निष्टोमातिरात्रः, क्षत्राणां धृतिस्त्रिष्टोमोऽग्निष्टोमश्चेति । सर्वोऽनुब्राह्मणेनावगन्तव्यः ॥ राजसूयः समाप्तः ॥

इत्यष्टमे विंशोऽनुवाकः ॥

संवत्सरस्य दशरात्रेऽवशिष्टे दशपेयो भविष्यति " ( आपश्रौ १८.१२.१ ) इति । स च दशपेयः संवत्सरे दशरात्रीरवशेष्य पञ्चम्यामुपक्रम्यते, पञ्चभिर्दिनैर्निष्पाद्यत्वेन नवम्यां समाप्यते, दशम्यां प्रातः सात्यदूतानि निरुप्यापराह्णे प्रयुजां हवींष्युपक्रमितव्यानि । तथा सत्याग्नेयस्य फाल्गुनरूपो द्वितीयः शिशिरमासः प्राप्यते । तस्मिञ्शिशिरे तन्निर्वापाच्छिशिरद्वारा तद्धविः स्तूयते । कुरुपञ्चालदेशवर्तिनो राजानः प्राच्येषु देशेषु सस्याभिवृद्धिमवगत्य दिग्विजयाय प्राञ्चः प्रयान्ति । यस्मादाग्नेययागकालः शिशिरः सस्याभिवृद्धिहेतुः तस्मात् प्राञ्चो यान्तीत्येवं स्तुतिः ॥

द्वितीयं हविः प्रशंसति—" सौम्यं चरुम् । तस्माद्वसन्तं व्यवसायाऽऽदयन्ति " ( तैब्रा १.८.४ ) इति ॥ उक्तक्रमेण वासन्तिकयोः प्रथममासि सौम्यं चरुं निर्वपति । यस्मादन्नस्य देवता सोमोऽत्र चरुणेज्यते तस्मात् प्रथमो वसन्तमास आगतोऽयमिति निश्चित्य प्राग्देशं जेतुं गता राजानस्तत्रत्यं धान्यं सर्वमुपहृत्य स्वसेनामादयन्ति, वसन्तः समुपस्थितः सम्यक् पक्वं समृद्धमन्नं कामं भुञ्जतामिति वदन्तो हस्तेन सर्वां सेनां प्रेरयन्ति ॥

तृतीयं हविः प्रशंसति—" सावित्रं द्वादशकपालम् । तस्मात् पुरस्ताद्यवानाꣳ सवित्रा विरुन्धते " ( तैब्रा १.८.४ ) इति । यस्माद्द्वितीये वसन्तमासे सावित्रयागः कृतस्तस्मात् पुरस्तात् पूर्वस्यां दिशि गता राजानः सवित्रानुज्ञाताः सन्तो यवानां विरुन्धते यवादीनि धान्यानि परकीयाणि विशेषेणावरुन्धते यथा कृषीवला न गृह्णन्ति तद्वदवरोधं कुर्वते ॥

चतुर्थं प्रशंसति—" बार्हस्पत्यं चरुम् । सवित्रैव विरुध्य । ब्रह्मणा यवानादधते " ( तैब्रा १·८·४ ) इति । यस्मात् प्रथमे ग्रीष्मे मासि बार्हस्पत्ययागः[3] कृतस्तस्माद्ब्रह्मणा बृहस्पतिनाऽनुज्ञाताः सन्तो यवानादधते । पूर्वं सवितृप्रसादाद्ये यवाः परदेशवर्तिभ्यः कृषीवलेभ्योऽवरुद्धास्तान् सर्वानानीय स्वगृहेषु स्थापयन्ति ॥

पञ्चमं प्रशंसति—" त्वाष्ट्रमष्टाकपालम् । रूपाण्येव तेन कुर्वते " ( तैब्रा १·८·४ ) इति । यस्मात् द्वितीये ग्रीष्मे मासि त्वाष्ट्रयागः कृतस्तेन कारणेन रूपनिर्मात्रा त्वष्ट्राऽनुज्ञाताः सन्तो रूपाण्येव परकीयधान्यानां यथेष्टभोजनेन पुष्टिमन्त्येव शरीराणि कुर्वते ॥

षष्ठं प्रशंसति—" वैश्वानरं द्वादशकपालम् । तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति " ( तैब्रा १·८·४ ) इति । यस्माद्वार्षिके प्रथमे मासि वैश्वानरयागः कृतस्तस्माद्वैश्वानरेणानुज्ञाता[4] जघन्ये नैदाघे द्वितीयस्मिन् ग्रीष्ममासेऽपगते सति वर्षर्तुप्रथममासे परकीयराष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखाः कुरुपञ्चाला राजानो यान्ति । तदेतदुपलक्षणं सर्वेऽपि राजान उक्तरीत्या कुर्वन्तीति द्रष्टव्यम् ॥

उत्तरषट्कस्य प्रथमं हविः प्रशंसति—" सारस्वतं चरुं निर्वपति । तस्मात् प्रावृषि सर्वा वाचो वदन्ति " ( तैब्रा १·८·४ ) इति । यस्मात् द्वितीये वार्षिकमासि सारस्वतयागः कृतः तस्मात् प्रावृषि वृष्ट्या संतुष्टाः कृषीवलाः "[5]त्वरया कृषिः कार्या[5] मया कृषिकार्यं क्रियते, बीजानि सन्ति, के वाऽनड्वाह इत्यादिकाः सर्वा वाचः परस्परं वदन्ति ॥

उत्तरहविःपञ्चकं प्रशंसति—" पौष्णेन व्यवस्यन्ति । मैत्रेण कृषन्ते । वारुणेन विधृता आसते । क्षैत्रपत्येन पाचयन्ते । आदित्येनाऽऽदधते " ( तैब्रा १·८·४ ) इति । शारदे प्रथमे मासि पौष्णयागस्य कृतत्वात् तेन पौष्णेन व्यवस्यन्ति पूषदेवताया अनुग्रहेण पुष्टिमानेतावतीं भूमिं कृषामीत्यादिनिश्चयं कुर्वन्ति। शारदे द्वितीये मासि मैत्रयागस्य कृतत्वात् मित्रदेवताया अनुग्रहेण निर्विघ्नाः कृषन्ति । हैमन्ते प्रथमे मासि वारुणयागस्य कृतत्वाद्वरुणदेवताया अनुग्रहेण गोमयादिकं प्रक्षिप्य नीरपूर्णे क्षेत्रे विशेषेण धृतवन्तः पोषयन्त आसते । हैमन्ते द्वितीये मासि क्षैत्रपत्ययागस्य कृतत्वात् क्षेत्रपतिदेवताया अनुग्रहेण सस्यमध्ये यथेष्टमुत्पन्नं निरर्थकं तृणादिकमुन्मूल्य फलपाकं संपादयन्ति । शैशिरे प्रथमे मास्यादित्ययागस्य कृतत्वाददितिदेवताया अनुग्रहेण पक्वानि धान्यानि स्वगृहेष्वादधते ॥ यथोक्तं प्रतिमासनिर्वापं परपक्षत्वेनोपन्यस्यति—" मासि मास्येतानि हवींषि निरुप्याणीत्याहुः । तेनैवर्तून् प्रयुङ्क्त इति " ( तैब्रा १·८·४ ) इति । तेनैव प्रतिमासं पृथङ्निर्वापेणैव सर्वान् ऋतून् प्रयुक्तवान् भवति । ऋतुधर्मान् यथायथं प्रयुक्तवान् भवति । यस्मादृतुप्रयोगस्तेषु संपद्यते तस्मादेतानि प्रयुजां हवींषीत्यभिप्रायः ॥ तं पक्षं निराकृत्य पक्षान्तरं विधत्ते—" अथो खल्वाहुः । कः संवत्सरं जीविष्यतीति । षडेव पूर्वेद्युर्निरुप्याणि । षडुत्तरेद्युः । तेनैवर्तून् प्रयुङ्क्ते " ( तैब्रा १·८·४ ) इति । आयुष्परिमाणस्यावगन्तुमशक्यत्वात् ' धर्मस्य त्वरिता गतिः ' इति न्यायेन दिनद्वये एव[6] निरुप्याणि । तथा सति षट्संख्यायाः " षड्वा ऋतवः " ( तैसं ५·४·९ ) इति श्रुत्यनुसारेण ऋतुप्रयोगसिद्धिः । प्रयुजां हविष्ट्वमप्युपपन्नमित्यभिप्रायः ॥ दक्षिणाद्वयं प्रशंसति—" दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा । उत्तर उत्तरेषाम् । संवत्सरस्यैवान्तौ युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै " ( तैब्रा १·८·४ ) इति । शकटयुगस्योभयोरन्तयोर्बद्धावेतावनड्वाहौ तयोर्दानेन संवत्सरस्योभयोर्मासषट्कयोरन्तौ संपादितवान् भवति । तेन स्वर्गः प्राप्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

३. म-४बार्हस्पत्यश्चरुः । ४. म४-अनुज्ञाता सन्तः । ५-५. आ-त्वया कृषिकार्यम् ।
६. आ.क-' एव ' नास्ति ।

**स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व**

स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन । सृजामि । समिति । सोमेन । सोमः । असि । अश्विभ्यामित्यश्वि-भ्याम् । पच्यस्व । सरस्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्ण इति सु-त्राम्णे । पच्यस्व ।

अथ राजसूयेनेष्ट्वा सौत्रामण्या यजेत, तामधिकृत्य उच्यते । वैश्वदेवं काण्डम् । [1]मासरेण अवोक्षन्[2] सोमं संपादयति—‘ स्वाद्वीम् ’ इति । इयं गायत्री, एकादशकः पादः अभितः-सप्तकः ॥ सुराऽभिप्रायेणाऽऽह—[V]स्वाद्वीं स्वादुरसां [V]स्वादुना स्वादुरसेनानेन [V]तीव्राम् उत्कृष्टां [V]तीव्रेण उत्कृष्टेन अनेन । यद्वा—उत्कृष्टरसत्वं तीव्रत्वम् । तीव स्थौल्ये । औणादिको रप्रत्ययः[*] । [V]अमृताम् अमृतत्वहेतुं त्वाम् [V]अमृतेन अमृतत्वहेतुनाऽनेन [V]सोमेन सोमसदृशेन प्रशस्तेन [V]सं [V]सृजामि । पादादित्वान्न निहन्यते । “ सोममेवैनां करोति ” ( तैब्रा १·८·५ ) इत्यादि ब्राह्मणम् । यद्वा—सम्यक् सृजामि सोमेन समायुत्य [3]उत्पादयामि । ओदनं करोमि ॥

तामुपरिस्थितामभिमृशति—‘ सोमोऽसि ’ इति ॥ सोमवत् प्रशस्तः [V]असि । [V]अश्विभ्याम् [V]अश्व्यर्थं [V]पच्यस्व सुरारूपेण । कर्मवद्भावात् ( पा ३·१·८७ ) यगात्मनेपदे ( पा ३·१·६७, १·३·१३ ), स्वयमेव पच्यस्वेति । [V]सरस्वत्यै [V]पच्यस्व । [V]इन्द्राय [V]सुत्राम्णे । सुष्ठु त्रायते शत्रुभ्य इति सुत्रामा । “ आतो मनिन्° ” ( पा ३·२·७४ ) इति मनिन् । “ एताभ्यो ह्येषा देवताभ्यः पच्यते ” ( तैब्रा १·८·५ ) इत्यादि ब्राह्मणम् । यद्वा—सोमोऽसि सोमसमो वा भव । पावनो भव । सुनोतेः क्रन्, सुरा । तत एव मन्प्रत्यये[**] सोमः ॥

विंशेऽनुवाके प्रयुज्ञां हवींष्युक्तानि । एकविंशे सौत्रामण्या मन्त्राः पशवो हवींषि चोच्यन्ते ।

**स्वाद्वीमिति** ॥ कल्पः—“ अग्रेण गार्हपत्यमवटं खात्वा तस्मिन् सुरायाः कल्पेन सुरां संदधाति । परिस्रुद्भवति । स्वाद्वीं त्वा स्वादुनेति शष्पैः सुरां संसृजति ” ( आपश्रौ १९·१·७–९ ) इति । पाठस्तु—‘ स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व’ इति । हे सुरे, [V]स्वाद्वीं [V]त्वा [V]स्वादुना सोमेन [V]सं [V]सृजामि । अत्र सोमशब्देन व्रीहियवाद्यङ्कुरं शष्पशब्दाभिधेयं बालतृणं चोपलक्ष्यते । [1]सोमश्चौषधिराजत्वेनोपलक्षयितुं शक्यते । कीदृशीं त्वाम् ? तीव्राम् उग्रगन्धाम्, [V]अमृताम् अमृतवदाप्यायनकारिणीम् । अत एव बलीवर्दाश्वादीनाप्याययितुं पाययन्ति । कीदृशेन सोमेन ? [V]तीव्रेण, वमनाद्युपयुक्तौषधित्वेन तीव्रत्वम् । [V]अमृतेन, “अपाम

१. त्रि.मै-आसरेण । २. मै-अवेक्षन् । ३. त्रि.मै-पादयामि । [*](द्र. उ २८१) । [**](द्र. उ १३७) ।

१. शुद्धीकृतः पाठः ; पूर्वमुद्रित पुस्तकयोः, लिखितपुस्तकेषु ‘ सोमस्यौषधि° ’-इत्यस्ति ।

सोममममृता अभूम " ( तैसं ३·२·५ ) इत्यादिश्रुतेनामृतत्वप्रापकेण। एवंविधसोमात्मकेन शष्पेण संसृष्टत्वात् त्वं सोमः असि इति। तस्माद्देवतात्रयार्थं त्वं पच्यस्व। सुत्राम्णे सुष्ठु रक्षकाय॥

सक्तुप्रभृतिकद्रव्यविधानाय प्रस्तौति—" इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽपतत्। स यत्प्रथमं निरष्ठीवत्। तत् क्वलमभवत्। यद्द्वितीयम्। तद्बदरम्। यत् तृतीयम्। तत् कर्कन्धु। यन्नस्तः। स सिꣳहः। यदक्ष्योः। स शार्दूलः। यत् कर्णयोः। स वृकः। य ऊर्ध्वः। स सोमः। याऽवाची। सा सुरा " ( तैब्रा १·८·५ ) इति। सोममभिषुतवत इन्द्रस्य सामर्थ्यं दशधा भिन्नं सत् पतितमभूत्। युक्तं चैतत्। अभिषवस्य वधरूपत्वात्। " घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति " ( तैसं ६·४·४ ) इति श्रुतेः। स चेन्द्रो [2]वक्त्रेण त्रिवारं निष्ठीवनं कृतवान्। तेन द्रव्यत्रयमभूत्। प्रथमनिष्ठीवनेन क्वलं बालखर्जूरफलमभूत्। बदरं क्रमुकपरिमितं सूक्ष्मं बदरीफलम्। कर्कन्धु हरीतकीपरिमितं स्थूलं बदरीफलम्। तदेतत्त्रयं मुखच्छिद्रान्निःसृतम्। यत्तु वीर्यं नासिकाछिद्राभ्यां[3] निःसृतं स सिंहमृगोऽभूत्। यच्चाक्षिच्छिद्राभ्यां निःसृतं स शार्दूलोऽभवत्। यदपि कर्णच्छिद्राभ्यां [4]निःसृतं स वृक आरण्यश्वाऽभूत्। यो वीर्यभागो मूर्धच्छिद्रादूर्ध्वो [4]निःसृतः स सोमोऽभवत्। या च वीर्यकला पायुगुह्याभ्यामवाची निर्गता सा सुराऽभवत्। यद्यपि क्वलादीन्यष्टैव द्रव्याणि तथाऽपि छिद्रदशकान्निर्गतत्वेन दशधा वीर्यपातोऽभिहितः॥ द्रव्याणि विधत्ते—" त्रयाः सक्तवो भवन्ति। इन्द्रियस्यावरुद्ध्यै। त्रयाणि लोमानि। त्विषिमेवावरुन्द्धे। त्रयो ग्रहाः। वीर्यमेवावरुन्द्धे " ( तैब्रा १·८·५ ) इति। त्रयास्त्रिविधाः सक्तवो भवेयुः कर्तव्या इत्यर्थः। क्वलैर्बदरैः कर्कन्धुभिश्च निष्पाद्यत्वात् त्रिविधाः। सक्तूनामिन्द्रियाभिवृद्धिहेतुत्वादिन्द्रियसंपत्तिः। त्रयाणि सिंहशार्दूलवृकाणां संबन्धीनि त्रीणि त्रिविधानि लोमानि संपाद्यानि। त्रयस्त्रिसंख्याका अश्विसरस्वतीसुत्रामदेवताका ग्रहा ग्रहीतव्याः। लोमभिस्त्विषिर्दीप्तिः संपद्यते ग्रहैश्च वीर्यम्॥ सौत्रामण्या द्रव्यान्तरत्वशङ्कां[5] वारयन् सक्तुत्रयादीनि द्रव्याणि प्रशंसति—" नाम्ना दशमी। नव वै पुरुषे प्राणाः। नाभिर्दशमी। प्राणा इन्द्रियं वीर्यम्। प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन् धत्ते " ( तैब्रा १·८·५ ) इति॥ सक्तुत्रयलोमत्रयग्रहत्रयैर्निष्पन्ना नवसंख्या। तत्र सौत्रामणीदशमीत्वं नामरूपेणैव न तु द्रव्यरूपेण यथोक्तद्रव्यनिष्पाद्यकर्मसंघनामत्वात्। पुरुषेऽपि मुख्यच्छिद्राणि शिरसि सप्ताधो द्वे इति नवसंख्याकानि प्राणाधारत्वात् प्राणा इत्युच्यन्ते। नाभिस्तु दशमी। सा च छिद्राभासरूपत्वान्न मुख्यच्छिद्रम्। यथा सौत्रामणी न द्रव्यं तद्वत्। नवच्छिद्रगताश्च प्राणा इन्द्रियशब्देन वीर्यशब्देन चोच्यन्ते। अतोऽत्र द्रव्यगतया नवसंख्यया प्राणानिन्द्रियं वीर्यं च यजमाने संपादयति॥ विधत्ते—" सीसेन क्लीबाच्छष्पाणि क्रीणाति। न वा एतदयो न हिरण्यम्। यत् सीसम्। न स्त्री न पुमान्। यत् क्लीबः। न सोमो न सुरा। यत् सौत्रामणी समृद्ध्यै " ( तैब्रा १·८·५ ) इति। सीसक्लीबशष्पाणामन्तरालवर्तित्वं साम्यम्। सीसमयसोऽधिकं हिरण्यात् तु न्यूनम्। क्लीबोऽपि स्त्रिया अधिकः पुरुषात्तु न्यूनः। शष्पाण्यपि सुराजनकत्वात् सुराया अधिकानि सोमवत् पूतत्वाभावात् ततो न्यूनानि। तान्येतानि सौत्रामणीहेतुतया तच्छब्देन निर्दिश्यन्ते॥ सोमेन संसृजामीत्यस्याभिप्रायं दर्शयति—" स्वाद्वीं त्वा स्वादुनेत्याह। सोममेवैनां करोति " ( तैब्रा १·८·५ ) इति॥ देवतार्थपाकस्य प्रसिद्धतां दर्शयति—" सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पच्यते " ( तैब्रा १·८·५ ) इति॥ शष्पैः संसृष्टायास्त्रिषु दिनेषु तथैव निवासं विधत्ते—" तिस्रः सꣳसृष्टा वसति। तिस्रो हि रात्रीः क्रीतः सोमो वसति " ( तैब्रा १·८·५ ) इति।

---

२. इ.उ.पा.म६-वज्रेण। ३. आ.क-°छिद्रात्। ४. आ.क.म४.म६-निर्गतम्। ५. इ.उ-द्रव्यान्तरसंख्याम्।

पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता ।
वारेण शश्वता तना ॥

पुनातु । ते । परिस्रुतमिति परि—स्रुतम् । सोमम् । सूर्यस्य । दुहिता ।
वारेण । शश्वता । तना ॥

सुरां पुनाति वालेन—‘ पुनातु ’ इति गायत्र्या ॥ हे इन्द्र, ते तव तुभ्यं वा परिस्रुतं परिस्रवणजन्मा सुरा परिस्रुत्, तस्मिन् यदा प्रस्रवति सा परिस्रुत् भवति, तां पुनातु सोमं सोमीभूतां सोमवद् प्रशस्तभावमापन्नां, सूर्यस्य दुहिता, सूर्यो वरुण उच्यते, तस्य सुता वारुणी प्रसिद्धा सुरा। यद्वा—सूर्येण दोहनीया दुहिता करसंतापविशेषजन्मा सुराविशेषः । यद्वा— श्रद्धा सूर्यस्य दुहिता । उक्तं च शतपथे ( शब्रा १२·७·३·११ ) । सा पुनातु वारेण वालेन । कपिलादित्वाल्लत्वविकल्पः ( पाभा ८·२·१८ ) । शश्वता नित्येन तना विस्तीर्णेन । तृतीयायाः “ सुपां सुलुक्° ” ( पा ७·१·३९ ) इत्याकारः । यद्वा— शश्वता वारेण कालेन पुनातु नित्यं पुनात्विति यावत् । तना सूर्यस्य दुहिता । पचाद्यचि ( पा ३·१·१३४ ) पृषोदरादिर्द्रष्टव्यः ( पा ६·३·१०९ ) । यद्वा— तनेति निपातः नित्ये वर्तते, शश्वता अविनाशेन वालेन नित्यं पुनात्विति । निपातनादाद्युदात्तत्वम् । यद्वा— शश्वता तना सदातनेनेत्यर्थः । शश्वतेत्याकारान्तो निपातितः । तेनाऽव्ययलक्षणः टयुल्प्रत्ययः “ टयुटयुलौ तुट् च ” ( पा ४·३·२३ ) इति । प्रकृतिप्रत्यययोश्च पृथक्पदत्वं[4] दृश्यते, यथा— ‘ मा च ते क्या स्म ती रिषत् ’ ( तैआ १·२७·२ ) इति ॥

क्रीतसोमस्य त्रिरात्रवासोऽन्यत्र प्रसिद्धः । तथा च श्रूयते— “ तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् स तिस्रो रात्रीः परिमुषितोऽवसत् तस्मात् तिस्रो रात्रीः क्रीतः सोमो वसति ” ( तैसं ६·१·६ ) इति ॥

**पुनात्विति** ॥ कल्पः— “ पुनातु ते परिस्रुतमिति वालमयेन पवित्रेण सुरां पावयति ” ( आपश्रौ १९·१·१८ ) इति । यथा शुद्ध्यर्थं जलं वस्त्रेण गालितं भवति तद्वदियं वालपवित्रेण गालिता कार्या । पाठस्तु— ‘ पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना । वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा ’ इति । हे इन्द्र, ते त्वदर्थं सूर्यस्य दुहिता सुरां पावयतु सूर्यसंबन्धिनी दुहितृस्थानीया दीप्तिः [6]परिस्रुतं द्रवीभूतं सोमं पूर्वमन्त्रेण सोमीकृतं सुराद्रव्यं वारेण वालजन्येन पवित्रेण पुनातु शोधयतु । कीदृशेन वारेण ? शश्वता शाश्वतेन दृढेन, तना विस्तीर्णेन । पवित्रेण अनेन पूतः सोमो वायुवच्छीघ्रगामी भूत्वा प्रत्यङ् अधोवर्ती पात्राभिमुखः सन्नभितः शीघ्रं द्रुतः अभवत् । कीदृशः सोमः ? इन्द्रस्य युज्यः योग्यः सखा ॥ विधत्ते— “ पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै ” ( तैब्रा १·८·५ ) इति । लौकिकजलादिकं न मन्त्रेणाऽऽविलं पुनन्तीति ततो व्यावृत्तिर्भवति ॥

४. तं.ति–पृथक्पृथक्त्वम्, त्रि-पृथक्पथत्वम् ।

६. इ.उ.पा.म४–स्रुतम् ।

वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा ॥

वायुः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अतिद्रुत इत्यति-द्रुतः । इन्द्रस्य । युज्यः । सखा ॥

सोमातिपवितस्य सोमवामिनो वा पुनाति—' वायुः ' इति गायत्र्या च ॥ [v]पवित्रेण अनेन [v]पूतः [v]सोमः [v]इन्द्रस्य [v]युज्यः [v]सखा । युजि साधुर्युज्यः युक्तः सखा । ऐन्द्राग्नवायवादिषु सहपानभोजनत्वात् सोमविशेषणमिदम् । स सोमः [v]वायुः वायुसदृशः वायुवत् स्वस्थानचलितः [v]प्रत्यङ् प्रतिकूलो घनः । [v]अतिद्रुतः अधस्ताद्गतः अतिगतो वा । यद्वा—वायुः इति, 'सुपां सुलुक्' '' ( पा ७·१·३९ ) इति तृतीयायाः स्वादेशः । वायुना प्रत्यङ् अतिद्रुतः[5] अतीतः तमेतेन पवनेन [6-]स्वस्थानस्थं करोमीति[-6] शेषः । एवमनेन कर्मणा स्वस्थानस्थित एव भवतीति । अपरा योजना—वायुः शरीरस्थः प्राणः पवित्रेण पावनेन सोमेन पीतेन पूतः प्रथमं शोधितः इन्द्रस्य युज्यः सखा स प्रत्यङ् प्रतीपमतिद्रुतः । स्वस्थानात् पीडितोऽतिक्रम्य निर्गतः सोमश्च सोऽतिद्रुतः । यद्वा-पूर्ववत् तृतीयायाः स्वादेशः । अनेन सोमेन स वायुः अतिद्रुतः । यद्वा—सोमश्च वायुश्चेति तदुभयमनेन कर्मणा स्वस्थानस्थं भवति ॥

सुराग्रहान् गृह्णाति—'कुविदङ्ग' इति त्रिष्टुभा ॥ कुविदिति बहुप्रसिद्धानुवादे । अङ्गेत्यप्रातिलोम्ये बहुप्रसिद्धमेतत् सर्वानुकूलमिति द्योतयतः । किं पुनस्तत् ? आह—[v]यवमन्तः बहुयवाः । यवग्रहणेन यवितव्या यवमुद्गव्रीहिगोधूमादयो धान्यविशेषा गृह्यन्ते । भूम्नि मतुप् ( पाभा ५·२·९४ वा १ ) । यथा चित् इति द्वे अप्युपमार्थे ( द्र. निघण्टु ३·१३ निरुक्त १·४ ), एकानेकोपमेयत्वादुपमायाः । यवमिति जातावेकवचनम् । अयमर्थः— यथा यवादिबहुधान्यवन्तो यवादीन्

साधनं विधत्ते—'' पवित्रेण पुनाति । पवित्रेण हि सोमं पुनन्ति '' ( तैब्रा १·८·५ ) इति । दशापवित्रेण सोमस्य शोधनं प्रसिद्धम् ॥ सोमसाम्याय वालस्वीकार इति दर्शयति—'' वारेण शश्वता तनेत्याह । वारेण हि सोमं पुनन्ति '' ( तैब्रा १·८·५ ) इति । वालेन सोमशोधनं सोमप्रकरणे सूत्रकारेण दर्शितम्— '' शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति तां स काले दशापवित्रस्य नाभिं कुरुते '' ( आपश्रौ १०·२६·७ ) इति ॥

' वायुः पूतः ' इत्यस्या ऋचः प्रयोगं पुरुषभेदेन व्यवस्थापयति— '' वायुः पूतः पवित्रेणेति नैतया पुनीयात् । व्यृद्धा ह्येषा । अतिपवितस्यैतया पुनीयात् '' ( तैब्रा १·८·५ ) इति ॥ द्विविधो हि सोमपाः सोमवामी जीर्णसोमश्चेति । तत्र सोमवामिनः सोमो बहिर्निर्गत इति प्राङ् सोमो अतिद्रुत इत्येतादृशः पाठस्तस्मिन् युक्तः प्रत्यङ्ङित्यस्यार्थस्य तस्मिन्नभावात । तं प्रत्येषा व्यृद्धा समृद्धिहीना । यस्त्वतिपवितो जीर्णसोमस्तं प्रत्यर्थसद्भावात् समृद्धैव । तदेतत्सूत्रकारेण विशदीकृतम्—'' प्राङ् सोमो अतिद्रुत इति सोमवामिनः । प्रत्यङ् सोमो अतिद्रुत इति सोमातिपवितस्य '' ( आपश्रौ १९·१·१९ ) इति ॥

५. मे-प्रतिहतः । ६-६. तं.त्रि-स्वर्गस्थानं करोतीति ।

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय।
इहेहैषां कृणुत भोजनानि (१) ये बर्हिषो नमोवृक्तिं न जग्मुः॥

कुवित्। अङ्ग। यवमन्त इति यव—मन्तः। यवम्। चित्।
यथा। दान्ति। अनुपूर्वमित्यनु—पूर्वम्। वियूयेति वि—यूय॥
इहेहेतीह—इह। एषाम्। कृणुत। भोजनानि (१)।
ये। बर्हिषः। नमोवृक्तिमिति नमः—वृक्तिम्। न। जग्मुः॥

सहोत्पद्यमानाननुपूर्वं परिपाट्या ᵛवियूय पृथक्कृत्य ᵛदान्ति पृथक्त्वेन स्थापयन्ति, परस्परं काण्डपलालादिभ्यो[७] वा। दाप् लवने आदादिकः। ᵛयवमन्तः ᵛयवं ᵛयथा तुषकणादिभ्यः[८] पृथक्कृत्य तानि शोधयन्ति; दैप् शोधने भौवादिकः। "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक्। तथा यूयमपि ᵛइहेह ᵛएषां ᵛभोजनानि ᵛकृणुत अस्वादुभूतं तुषादिकं पृथक्कृत्य भोजनानि भोक्तव्यानि स्वादूनि कृणुत उत्पाद्य धारयत। इहेहेति वीप्सा। सर्वत्र स्थानेस्थाने गृहेगृहे लोकेलोके वा। "अनुदात्तं च" (पा ८·१·३) इति द्वितीयस्य निघातः। वियूयेति यौतेर्ल्यपि छान्दसो दीर्घः। उक्तमेषां भोजनानि कृणुतेति, केषामित्याह—ᵛये ᵛबर्हिषः यज्ञस्य ᵛनमोवृक्तिं नमस्कारनाशनं साङ्गस्य नाशनं ᵛन ᵛजग्मुः न गता ये यज्ञस्य नमस्कारादिकं न नाशयन्ति अस्माकमुपकारिणः तेषां कृणुत। ये पुनर्नाशयन्ति ते त्वनेन विनाश्यन्ताम्। यथोक्तं—"नमोवृक्तिमेवैषां वृङ्क्ते" (तैसं ३·१·३) इति। नमःशब्दे ऊर्यादिगतित्वात् (पा १·४·६१) "तादौ च निति" (पा ६·२·५०) इति प्रकृतिस्वरत्वम्॥

**कुविदिति**॥ कल्पः—"अपरस्मिन् खरे सुराग्रहान् गृह्णाति कुविदङ्ग" (आपश्रौ १९·२·७-८) इति। पाठस्तु—'कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः' इति। अङ्गशब्दः प्रियसंबोधनवाची। हे प्रिया अश्विसरस्वतीसुत्रामेन्द्राः, ᵛये यज्वानः ᵛबर्हिषः यागस्य ᵛनमोवृक्तिं नमस्कारविनाशं ᵛन ᵛजग्मुः न प्रापुः किं त्वश्यन्तश्रद्धालवोऽनुतिष्ठन्ति, तेषामेषां यज्वनां हविर्विषयाणि ᵛभोजनानि ᵛइहेह ᵛकृणुत। ग्रहणपात्राणामनेकत्वाद्वीप्सा। तत्रोपमानमुच्यते। कुविच्छब्दो बह्वर्थवाची। चिच्छब्दः समुच्चये। ᵛयथा लोके ᵛयवमन्तः यवादिधान्योपेताः कृषिकाः ᵛकुवित् ᵛयवं ᵛचित् बहुलं यवम्, अन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि ᵛअनुपूर्वं तत्परीक्षाक्रमेण ᵛवियूय इदं पक्वमिदमपक्वमिति पृथक्कृत्य ᵛदान्ति लुनन्ति तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा, श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ध्वम्॥ विधत्ते—"कुविदङ्गेत्यनिरुक्तया प्राजापत्यया गृह्णाति। अनिरुक्तः प्रजापतिः। प्रजापतेराप्त्यै" (तैब्रा १·८·५) इति। अस्यामृचि प्रस्तुतान्यश्विसरस्वत्यादिनामानि न श्रुतानि। किं त्वङ्गेति साधारणशब्दः श्रुतस्तस्मादत्रेयं देवतेति विशेषनिरुक्तवर्जितेयमृक्। प्रजापतिर्जगदीश्वरोऽपि मूर्तिरहितत्वादनिरुक्तः। अत एव जगत्कारणप्रतिपादनपरे नासदीयसूक्ते श्रूयते—"को अद्धा

७ तं-'पर्वादिभ्यः। ८. तं-तुषादिभ्यः।

**आश्विनं धूम्रमा लभते सारस्वतं मेषमैन्द्रमृषभमैन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपाल॑ सोमप्रतीकाः पितरस्तृप्णुत वडबा दक्षिणा ॥२१॥**

[ भोजनानि षड्विं॑शतिश्च ]

आश्विनम् । धूम्रम् । एति । लभते । सारस्वतम् । मेषम् । ऐन्द्रम् । ऋषभम् । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपति । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । वारुणम् । दशकपालमिति दश—कपालम् । सोमप्रतीका इति सोम—प्रतीकाः । पितरः । तृप्णुत । वडबा । दक्षिणा ॥ २१ ॥

[ मैसं २.३.८; ३.११.७; कासं १२.९; वासं १०.३१–३२; शब्रा ५.५.४ ]

अथ त्रीन् पशून् विदधाति—' आश्विनम् ' इति । ˇआश्विनं ˇधूम्रललामम् ˇआ ˇलभते, ˇसारस्वतं सरस्वत्यै ˇमेषम् , ˇऐन्द्रम् ˇऋषभम् । सुराग्रहाश्च त्रयो भवन्ति आश्विनसारस्वतैन्द्राः ॥

अथ त्रीन् पुरोडाशान् विदधाति—' ऐन्द्रमेकादशकपालम् ' इति ॥ ऐन्द्रसावित्रवारुणाः ॥

अथ शतातृण्णायां स्थाल्यां सुराशेषमवनयति—' सोमप्रतीकाः ' इति ॥ सोमप्रतीकाः सोमः प्रतीकः उपक्रमः येषां ते । हे सोमप्रभृतयः ˇपितरः, ˇतृप्णुत अनेन सुराशेषेण तृप्यत । व्यत्ययेन श्नः । अस्मिन् कर्मणि ˇवडबा अश्वा ˇदक्षिणा । " उत वा एषाऽश्वं सूते " ( तैब्रा १.८.६ ) इति ब्राह्मणम् ॥ सौत्रामणी समाप्ता ॥

इत्यष्टमे एकविंशोऽनुवाकः ॥

वेद क इह प्र वोचत् । कुत आजाता कुत इयं विसृष्टिः " ( ऋसं १०.१२९.६ ) इति । "यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद " ( ऋसं १०.१२९.७ ) इति च । अतो निरुक्तराहित्यसाम्यादस्याः प्राजापत्यत्वम् ॥ अत्र ग्रहाणां भिन्नत्वेन मन्त्रान्तरप्रसक्तिं वारयितुं विधत्ते—" एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति " ( तैब्रा १.८.५ ) इति ॥

**आश्विनमिति** ॥ मन्त्रानुक्त्वा पशून् विधत्ते—' आश्विनं धूम्रमा लभते सारस्वतं मेषमैन्द्रमृषभम् ' इति । मलिनश्वैत्यवर्णोपेतो धूम्रः ॥ अत्रत्या देवताः प्रशंसति—" आश्विनं धूम्रमा लभते । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सारस्वतं मेषम् । वाग्वै सरस्वती । वाचैवैनं भिषज्यति । ऐन्द्रमृषभ॑ सेन्द्रत्वाय " ( तैब्रा १.८.५ ) इति ॥

**ऐन्द्रमिति** ॥ पशून् विधाय पुरोडाशान् विधत्ते—' ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालम् ' इति ॥ कल्पः—" दक्षिणेऽग्नौ शतातृण्णां स्थालीं प्रबद्धां धारयति । तस्या बिल उदीचीनदशं पवित्रं वितत्य यन्मे मनः परागतमिति तस्मिन्शतमानं हिरण्यं निधाय सोमप्रतीकाः पितरस्तृप्णुतेति तस्मिन् सुराशेषमानयति " ( आपश्रौ १९.३.६–७ ) इति ॥ सोमप्रतीकाः सोमप्रमुखाः ॥

**वडबेति** ॥ दक्षिणां विधत्ते—' वडबा दक्षिणा ' इति ॥ ' अश्वस्य योषित् वडबा ' इति ॥ पशुभेदेन प्रसक्तं यूपभेदमपोह्य[7] यूपैक्यं विधत्ते—"यतित्रषु यूपेष्वा लभेत । बहिर्धाऽस्मादिन्द्रियं

७. क–अपोद्य ।

वीर्यं दध्यात्। भ्रातृव्यमस्मै जनयेत्। एकयूप आलभते। एकधैवास्मिन्निन्द्रियं वीर्यं दधाति। नास्मै भ्रातृव्यं जनयति " ( तैब्रा १·८·६ ) इति। अस्माद्बहिर्धा यजमानशरीराद्बहिर्देशे ॥ प्रकृतौ 'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इत्यभिधानादत्रापि तत्प्राप्तौ निषेधति—" नैतेषां पशूनां पुरोडाशा भवन्ति। ग्रहपुरोडाशा ह्येते " ( तैब्रा १·८·६ ) इति। ग्रहा एवात्र पुरोडाशस्थानीया इत्यर्थः ॥ यदुक्तं सूत्रकारेण—" सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्या " ( आपश्रौ १९·२·८ ) इति। तत्र त्रयाणां ग्रहाणां याज्यानुवाक्ये विधत्ते—" युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः। सर्वा एव देवताः प्रीणाति " ( तैब्रा १·८·६ ) इति। 'युवꣳ सुरामम्' इत्यादृग्द्वयं ब्राह्मणग्रन्थे प्रथमकाण्डस्य चतुर्थप्रपाठके द्वितीयानुवाके समाम्नातम्, अतस्तत्रैव व्याख्यास्यते। तत्र चाश्विशब्दो यथा श्रुतस्तथैवेन्द्रावतमितीन्द्रशब्दोऽपि श्रुतः। 'सरस्वती त्वा' इति सरस्वतीशब्दोऽपि श्रुतः। ततोऽनयोः सर्वदेवत्यत्वं प्रकृतानां सर्वेषां देवानां प्रतीयमानत्वात् ॥ विधत्ते—" ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्। ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता " ( तैब्रा १·८·६ ) इति। हुतायाः सुरायाः शेष उच्छेषणम् ॥ तत्रैवानुकल्पं विधत्ते—" यदि ब्राह्मणं न विन्देत्। वल्मीकवपायामवनयेत्। सैव ततः प्रायश्चित्तिः " ( तैब्रा १·८·६ ) इति। येयमवनयनक्रिया सैव ततस्तत्र ब्राह्मणपानाभाववैकल्ये प्रायश्चित्तिः ॥ पशूनां पुरोडाशानां च विलक्षणदेवत्यत्वं प्रशंसति—" यद्वै सौत्रामण्यै व्यृद्धम्। तदस्यै समृद्धम्। नानादेवत्याः पशवश्च पुरोडाशाश्च भवन्ति समृद्ध्यै " ( तैब्रा १·८·६ ) इति। कर्मान्तरे पशोः पुरोडाशस्य चैकदेवत्यत्वविधानात् भिन्नदेवत्यत्वं समृद्धिहीनं भवति। यदेवान्यत्र समृद्धिहीनं भिन्नदेवत्यत्वं सौत्रामण्यां क्रियते तद्भिन्नदेवत्यत्वं सौत्रामण्यामस्यां वाचनिकत्वात् समृद्धं संपद्यते। तस्मादत्र समृद्ध्यै पशवश्च पुरोडाशाश्च भिन्नदेवत्या भवन्ति ॥ ऐन्द्रस्य पशोः पुरोडाशस्य च नैरन्तर्यं प्रशंसति—" ऐन्द्रः पशूनामुत्तमो भवति। ऐन्द्रः पुरोडाशानां प्रथमः। इन्द्रिये एवास्मै समीची दधाति " ( तैब्रा १·८·६ ) इति। 'ऐन्द्रमृषभम्' इति पशुविधीनामन्ते पठितं, तदनन्तरमेव 'ऐन्द्रमेकादशकपालं निर्वपति' इति पुरोडाशविधीनामादौ पठितं, तस्मादैन्द्रयोर्नैरन्तर्यादस्य यजमानस्य दक्षिणवामभागस्थे द्वे अपीन्द्रिये सम्यक् स्थापिते भवतः ॥ प्रकृतौ पशूनामङ्गयागात् पूर्वं पुरोडाशप्रचारो विहितः। अत्र त्वङ्गयागादूर्ध्वं तदीयेभ्योऽनूयाजेभ्यः पुरा तं प्रचारं विधत्ते—" पुरस्तादनूयाजानां पुरोडाशैः प्रचरति। पशवो वै पुरोडाशाः। पशूनेवावरुन्द्धे " ( तैब्रा १·८·६ ) इति। पशुप्रयोगमध्ये प्रचारात् पुरोडाशानां पशुत्वम् ॥ पुरोडाशदेवताः प्रशंसति—" ऐन्द्रमेकादशकपालं निर्वपति। इन्द्रियमेवावरुन्द्धे। सावित्रं द्वादशकपालं प्रसूत्यै। वारुणं दशकपालम्। अन्तत एव वरुणमवयजते " ( तैब्रा १·८·६ ) इति ॥ वडबायाः सौत्रामण्याश्च साम्येन दक्षिणां प्रशंसति—" वडबा दक्षिणा। उत वा एषाऽश्वꣳ सूते। उताश्वतरम्। उत सोम उत सुरा। यत् सौत्रामणी समृद्ध्यै " ( तैब्रा १·८·६ ) इति। एषा वडबा यदश्वमश्वतरं वोभयं प्रसूते। अश्वगर्दभजातिद्वयसंगमादुत्पन्नोऽश्वतरः। या सौत्रामणी साऽपि तद्वत् सोमः सुरा वेत्युभयरूपा भवति। अतः सदृशदक्षिणा समृद्धिकरी ॥ सोमवामिन उक्तास्त्रय एव पशवः। सोमातिपवितस्य तु विशेषं विधत्ते—" बार्हस्पत्यं पशुं चतुर्थमतिपवितस्याऽऽलभते। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैव यज्ञस्य व्यृद्धमपिवपति " ( तैब्रा १·८·६ ) इति। व्यृद्धं विकलाङ्गमपिवपति समृद्धं करोति ॥ पूर्वपशुवत् समानदेवत्यपुरोडाशाभावप्रसक्तौ प्रकृतिवत् तादृशस्य पुरोडाशस्य प्रतिप्रसवं विधत्ते—" पुरोडाशवानेष पशुर्भवति। न ह्येतस्य ग्रहं गृह्णन्ति " ( तैब्रा १·८·६ ) इति। पूर्वेषां पशूनां समानदेवत्या ग्रहा एव पुरोडाशस्थानीया इत्युक्तम्। अत्र तु ग्रहाभावात् पुरोडाशः कार्यः ॥ विधत्ते—" सोमप्रतीकाः पितरस्तृप्णुतेति शतातृण्णायाꣳ समवनयति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति " ( तैब्रा १·८·६ ) इति। शतातृण्णा शतच्छिद्रा स्थाली ॥ दक्षिणाग्नेरुपरि शतातृण्णाया बन्धनं यत् सूत्र-

कारेणोक्तं तदिदं विधत्ते—" दक्षिणेऽग्नौ जुहोति । पापवस्यसस्य व्यावृत्त्यै " ( तैब्रा १.८.६ ) इति । पापवस्यसं पापेन धनवत्तरत्वम् । निषिद्धां हि सुरां स्वकीयद्रव्यत्वेन संपादयन् पुरुषः पापाचरणेन धनवत्तरो भवति । तस्य व्यावृत्तिः कर्तव्या । सोमाज्यादिवदाहवनीय एव तद्धोमे व्यावृत्तिर्न भवेत् । तस्माद्दक्षिणेऽग्नौ जुहुयात् ॥ शतातृण्णायां हिरण्यस्थापनं विधत्ते—" हिरण्यमन्तरा धारयति । पूतामेवैनां जुहोति " ( तैब्रा १.८.६ ) इति । अन्तरा दक्षिणाग्निसुरयोर्मध्ये । सा च सुरा हिरण्यस्पर्शेन पूता भवति ॥ परिमाणं विधत्ते—" शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति " ( तैब्रा १.८.६ ) इति ॥ दक्षिणाग्नौ शतातृण्णायाः स्थापनं विधत्ते—" यत्रैव शतातृण्णां धारयति । तं निदधाति प्रतिष्ठित्यै " ( तैब्रा १.८.६ ) इति ॥ ' त्वꣳ सोम प्रचिकितः ' इत्यादिभिरुपस्थानं विधत्ते—" पितॄन् वा एतस्येन्द्रियं वीर्यं गच्छति । यꣳ सोमोऽतिपवते । पितृणां याज्यानुवाक्याभिरुपतिष्ठते । यदेवास्य पितॄनिन्द्रियं वीर्यं गच्छति । तदेवावरुन्द्धे " ( तैब्रा १.८.६ ) इति । यं यजमानं पीतः सोमोऽतिशयेन शोधयति स्वयं तदुदरे जीर्णत्वादेतस्येन्द्रियमिति, पूर्वत्राऽन्वयः ॥ संख्यां विधत्ते—" तिसृभिरुपतिष्ठते । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति " ( तैब्रा १.८.६ ) इति । तदेतदापस्तम्बेन स्पष्टीकृतम्— " [8]स्रवन्तीं सौमीभिः पितृमतीभिस्तिसृभिस्तिसृभिरुत्तरोत्तराभिरुपतिष्ठन्ते । त्वꣳ सोम प्रचिकित इत्येताः समाम्नाता भवन्ति । पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोता " ( आपश्रौ १९.३.८–१० ) इति । " त्वꣳ सोम प्रचिकितः[*] " ( तैसं २.६.१२ ) "त्वया हि नः पितरः[*] " ( तैसं २.६.१२ ) "त्वꣳ सोम पितृभिः[*] " ( तैसं २.६.१२ ) इत्यध्वर्योरेतास्तिस्रः । "बर्हिषदः पितरः[*] " ( तैसं २.६.१२ ) "आऽहं पितॄन्[*] " ( तैसं २.६.१२ ) "उपहूताः पितरः[*] " ( तैसं २.६.१२ ) इति ब्रह्मण एतास्तिस्रः । "अग्निष्वात्ताः पितरः[*] " ( तैसं २.६.१२ ) " ये अग्निष्वात्ताः " ( तैब्रा २.६.१६ ) " वान्यायै दुग्धे " ( तैब्रा २.६.१६ ) इति होतुरेतास्तिस्रः ॥ तानेतानुपस्थातॄन् विधत्ते—" अथो त्रीणि वै यज्ञस्येन्द्रियाणि । अध्वर्युर्होता ब्रह्मा । त उपतिष्ठन्ते । यान्येव यज्ञस्येन्द्रियाणि । तैरेवास्मै भेषजं करोति " ( तैब्रा १.८.६ ) इति । इन्द्रियवद्व्यवहारनिर्वाहकत्वादृत्विजां यज्ञेन्द्रियत्वम् ॥ तदेवमेतदन्तेनानुब्राह्मणेन मन्त्रकाण्डोक्ताः प्रधानकर्मविषयः तन्मन्त्राश्च व्याख्याताः । अथानुब्राह्मणशेषेण व्याख्येयमन्त्रकाण्डनिरपेक्षो राजसूयप्रयोगोऽभिधीयते । तत्राऽऽरम्भकाले कर्तव्यं पवित्राख्यं सोमयागं विधत्ते—" अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्निष्टोमः । यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते " ( तैब्रा १.८.७ ) इति । सोमयागानां सर्वेषां प्रकृतित्वेनाग्निष्टोमस्य यज्ञमुखत्वम् । सवमभिषेकयुक्तं राजसूयमाक्रमते प्राप्नोति ॥ विधत्ते—" अथैषोऽभिषेचनीयश्चतुस्त्रिꣳशपवमानो भवति । त्रयस्त्रिꣳशद्वै देवताः । ता एवाऽऽप्नोति । प्रजापतिश्चतुस्त्रिꣳशः । तमेवाऽऽप्नोति " ( तैब्रा १.८.७ ) इति । अथाग्निष्टोमादूर्ध्वं न तु तदनन्तरम् । आनुमतादिभी रत्निहविःपर्यन्तैर्यागैरग्निष्टोमाभिषेचनीययोर्व्यवहितत्वात् । प्रकृतौ बहिष्पवमानमाध्यंदिनपवमानार्भवपवमानानां क्रमेण त्रिवृत्पञ्चदशसप्तदशस्तोमा विहिताः । अत्र तु तान् परित्यज्य चतुस्त्रिंशस्तोमः प्रयोक्तव्यः । " समिधमातिष्ठ " ( तैसं १.८.१३ ) इत्यनुवाके त्रयस्त्रिंशस्तोमविधायकं ब्राह्मणमुदाहृतम् । तत्रैवावस्थितिविशेषेणैकां

८. आपश्रौसूत्रमनुसृत्य शुद्धीकृतः; आ.क.पा.म४–स्रवन्ति ; इ.उ.म ६–स्रवन्ती । [*][ द्र. तैब्रा २.६.१६ ]।

स्तोत्रीयामधिकां संपाद्य चतुस्त्रिंशस्तोमं कुर्यात्। स चाऽऽवृत्तिविशेषः सामसूत्रे द्रष्टव्यः। "ये देवा दिव्येकादश स्थ" (तैसं १.४.१०) इति मन्त्रे त्रयस्त्रिंशद्देवा उक्ताः। यद्वा वाजसनेयिनः शाकल्यब्राह्मणेऽधीयते—"अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशौ" (बृउ ३.९.२) इति। पूर्वोक्ताः कर्मभुज एताः सूपास्या इति तत्तत्प्रकरणादवगम्यते। एतासां त्रयस्त्रिꣳशद्देवतानां [9]प्रजारूपाणां पालकोऽन्यः प्रजापतिश्चतुस्त्रिꣳशः। यथोक्तस्तोमे तु यथोक्तसर्वदेवताप्राप्तिर्भवति॥ पवमानशब्देन प्रथमस्य बहिष्पवमानस्यैव सहसा बुद्धिस्थत्वात्तत्रैवायं चतुस्त्रिंशस्तोम इति भ्रमं व्युदसितुं त्रिष्वपि पवमानेष्वेतं स्तोमं विधत्ते—"सꣳशर एष स्तोमानामयथापूर्वम्। यद्विषमाः स्तोमाः। एतावान् वै यज्ञः यावान् पवमानाः। अन्तःश्लेषणं त्वा अन्यत्। यत्समाः पवमानाः। तेनासꣳशरः। तेन यथापूर्वम्" (तैब्रा १.८.७) इति। एतस्मिन् पवमाने चतुस्त्रिंशस्तोमं कृत्वैतयोस्तदकरणे सति यद्वैषम्यं भवति स एष स्तोमानां संशरः। सम्यक् हिंसनं भवति। द्वितीयतृतीयपवमानयोश्चोदकप्राप्तौ यौ पञ्चदशसप्तदशस्तोमौ तयोः प्रथमपवमानप्रयुक्ताच्चतुस्त्रिंशस्तोमान्न्यूनत्वेन हिंसैव भवति। किं चायथापूर्वत्वं परो दोषः। स्तोमेषु दुष्टेषु यज्ञस्य किमायातमिति न शङ्कनीयम्। पवमानस्तोमदोषस्य यज्ञभ्रंशे पर्यवसानात्। एते त्रयः पवमाना इति यावानेतावानेव मुख्यो यज्ञः। अन्यत्सर्वं यज्ञस्यान्तःश्लेषणम्[10]। यथा भित्तेर्दार्ढ्यायान्तर्दृढकाष्ठं पाषाणो वा प्रक्षिप्यते तद्वद्यज्ञस्यान्यदङ्गजातं संपूर्त्यर्थमेव क्रियते न तु मुख्यस्वरूपम्। त्रयाणामपि पवमानानां चतुस्त्रिंशस्तोमे सति पूर्वोक्तदोषद्वयं न भवति॥ अभिषेचनीयस्योक्थ्यसंस्थारूपत्वं विधत्ते—"आत्मनैवाग्निष्टोमेनर्ध्नोति। आत्मना पुण्यो भवति। प्रजा वा उक्थानि। पशव उक्थानि। यदुक्थ्यो भवत्यनुसंतत्यै" (तैब्रा १.८.७) इति। अग्निष्टोमे द्वादशैव शस्त्राणि। उक्थ्ये तु तेभ्य ऊर्ध्वं त्रीणि शस्त्राणि। तथा सति द्वादशशस्त्रयुक्तेनाग्निष्टोमभागेनायं यजमान आत्मनैव स्वयमेव धनादिभिः समृद्धो भवति। स्वर्गहेतुपुण्यया युक्तश्च भवति। तत उत्तरभाविनां त्रयाणां प्रजापशुरूपत्वात् पञ्चदशस्तोत्रयुक्तोक्थ्यरूपत्वे सति प्रजासु पशुषु च समृद्धिरनुसंतता भवति॥ बहिष्पवमानस्तोत्रस्य प्रारम्भे चोदकप्राप्तम् "उपास्मै गायता नरः" (सासं २.१.१.१) इत्येतामृचं बाधितुमृगन्तरं विधत्ते—"उप त्वा जामयो गिर इति प्रतिपद्भवति। वाग्वै वायुः। वाच एवैषोऽभिषेकः। सर्वासामेव प्रजानाꣳ सूयते। सर्वा एनं प्रजा राजेति वदन्ति" (तैब्रा १.८.८) इति। प्रतिपद्यत उपक्रम्यतेऽनया इति प्रतिपद् आदौ पठनीयेत्यर्थः। अस्यामृचि वायोरनीके अस्थिरन्निति गिरां वायुसमीपे स्थितिः पठ्यते। स च वायुर्वाक्स्वरूपः। कोष्ठाग्निप्रेरितस्य वायोः कण्ठताल्वाद्यभिघातेनाक्षरविशेषोत्पत्तेः। अभिषेचनीये योऽभिषेकः क्रियते सोऽयं वाच एवाऽभिषेकः। तत्कथमित्युच्यते, सर्वासामेव प्रजानां मध्ये सूयतेऽभिषिच्यते। सर्वाश्च प्रजा एनं राजेति वदन्त्यः सेवन्ते। तस्मात्तादृशवाक्प्रेरकवायुप्रतिपादिका सेयमृगेवाऽऽदौ पाठ्या॥ ऋगन्तरपाठं विधत्ते—"एतमु त्यं दशक्षिप इत्याह। आदित्या वै प्रजाः। प्रजानामेवैतेन सूयते" (तैब्रा १.८.८) इति। इत्याह, इत्येतामृचं पठेत्। अस्यामृचि "समादित्येभिरख्यत" (ऋसं ९.६१.७) इत्यादित्याः श्रूयन्ते। ते चाऽऽदित्या एव प्रजा अदितेरुत्पन्नत्वात्। तेन मन्त्रपाठेन प्रजानामेव मध्येऽभिसूयतेऽभिषिच्यते॥ ऋगन्तरपाठं विधत्ते—"यन्ति वा एते यज्ञमुखात्।

९. इ.उ.पा.म६–प्रजापतिरूपाणाम्। १०. इ.उ.पा–यज्ञस्याश्लेषणम्।

ये संभार्या अक्रन्। यदाह पवस्व वाचो अग्रिय इति। तेनैव यज्ञमुखान्नयन्ति " ( तैब्रा १·८·८ ) इति। सम्यक् [11]"भ्रियन्ते धीयन्ते"[11] पोष्यन्ते वा तृचा याभिराद्याभिर्ऋग्भिस्तास्तृचानामाद्या ऋचः संभार्याः। तादृश ऋचो य उद्गातारोऽक्रन् कुर्वन्ति पठन्ति त एत उद्गातारो यज्ञमुखाद्यन्ति वा अपगच्छन्त्येव। 'पवस्व' इति ऋचः पाठे तु-तत्र, हे सोम, त्वमग्रियोऽग्रेभव आदिभूतः सन् वाचः शोधयेत्यभिधानाद्यज्ञ-मुखादपगमनं न भवति॥ उच्छब्दयुक्ताः काश्चिदृचो विधत्ते—"अनुष्टुक्प्रथमा भवति। अनुष्टुगुत्तमा। वाग्वा अनुष्टुक्। वाचैव प्रयन्ति। वाचोद्यन्ति। उद्वतीर्भवन्ति। उद्वद्वा अनुष्टुभो रूपम्। आनुष्टुभो राजन्यः। तस्मादुद्वतीर्भवन्ति" ( तैब्रा १·८·८ ) इति। स्तोत्रस्याऽऽदावन्ते [12]चानुष्टुभावृचौ भवतः। तथा सत्यनुष्टुप्छन्दसो वाग्विशेषत्वेन वाग्रूपत्वाद्वाचैव प्रारम्भसमाप्ती कृते भवतः। यद्यपि "उप त्वा जामयो गिरः" ( तैब्रा १·८·८ ) इत्यादयो गायत्र्यः तथाऽप्युच्छब्दयुक्ताभिर्ऋग्भिरनुष्टुप्त्वं संपद्यते। अनुष्टुभो हि स्वरूपमुच्छब्दयुक्तं तस्योत्कृष्टत्वात्। यद्वा—सौरीष्वनुष्टुप्छन्दस्कासु "उद्यन्नद्य मित्र" ( तैब्रा ३·७·६ ) इत्यादिषूच्छब्ददर्शनादनुष्टुप्स्वरूपमुच्छब्दैरुपेतम्। अनुष्टुभः संबन्धी राजन्यः, "अनुष्टुप्छन्दसां प्रतिष्ठा" इति श्रुतेः ( तैसं २·५·१० )। यथा छन्दसां मध्येऽनुष्टुभ उत्तमत्वं तद्वद्राज्ञः सर्वपालकत्वेनोत्तमत्वम्। तस्मात् प्रशस्तत्वादुच्छब्दयुक्ता ऋचः कार्याः॥ स्तोत्रसमापिकामृचं विधत्ते—"सौर्यनुष्टुगुत्तमा भवति। सुवर्गस्य लोकस्य संतत्यै" ( तैब्रा १·८·८ ) इति। पूर्वोक्ता उद्वतीरिमां च सौरीं सामसूत्रे जानीयात्। सूर्यस्य स्वर्गवाचित्वात् सौर्या समापने स्वर्गः संततो भवति॥ प्राकृतानि पृष्ठस्तोत्राण्यपवदितुमन्यानि पृष्ठस्तोत्राणि विधत्ते—"यो वै सवादेति। नैनꣳ सव उपनमति। यः सामभ्य एति। पापीयान्त्सुषुवाणो भवति। एतानि खलु वै सामानि। यत्पृष्ठानि। यत्पृष्ठानि भवन्ति। तैरेव सवान्नैति" ( तैब्रा १·८·८ ) इति। यो यजमानः सवादेति प्रस्तुतात् सोमाभिषवादपगच्छति, एनं सवो नोपनमति भावी सोमाभिषवो न प्राप्नोति। तर्हि वर्तमानं सोमाभिषवं करोत्विति चेत्। मैवम्। यः सामभ्योऽपगच्छत्यसौ सुषुवाणः पापीयान् भवति। वर्तमानं सोमाभिषवं कुर्वतोऽपि सामराहित्यात् पापिष्ठ-त्वम्। तर्हि सामान्यपि कानिचिद्गायतु इति चेत्। मैवम्। नहि यानि कानिचित् सामान्यत्र मुख्यानि किंतु पृष्ठस्तोत्रगतान्येव। तस्मात् प्रयुज्यमानैस्तैरेव पृष्ठस्तोत्रैः सवान्नैति। सोमाभिषवान्नापगच्छति। पृष्ठ-विशेषस्वरूपं चान्यतोऽवगन्तव्यम्॥ [13]पृष्ठस्तोत्रगतान्युभयविधसामानि प्रशंसति—"यानि देवराजानाꣳ सामानि। तैरमुष्मिँल्लोक ऋध्नोति। यानि मनुष्यराजानाꣳ सामानि। तैरस्मिँल्लोक ऋध्नोति। उभयोरेव लोकयोर्ऋध्नोति। देवलोके च मनुष्यलोके च" ( तैब्रा १·८·८ ) इति। [13]एतच्च सामद्वैविध्यमन्यतो द्रष्टव्यम्॥ प्राप्तानेव स्तोमान् प्रशंसति—"एकविꣳशोऽभिषेचनीयस्योत्तमो भवति। एकविꣳशः केश-वपनीयस्य प्रथमः। सप्तदशो दशपेयः। विड्वा एकविꣳशः। राष्ट्रꣳ सप्तदशः। विश एवैतन्मध्यतोऽभि-षिच्यते। तस्माद्वा एष विशां प्रियः। विशो हि मध्यतोऽभिषिच्यते" ( तैब्रा १·८·८ ) इति। अभि-षेचनीयो दशपेयः केशवपनीय एवमत्रत्यानां त्रयाणां सोमयागानामनुक्रमः। तत्राभिषेचनीयस्योक्थ्य-विकृतित्वादुक्थ्ये चोत्तमस्तोत्रस्यैकविंशस्तोमयुक्तत्वादभिषेचनीयस्याप्युत्तम एकविंशो भवति। दशपेये सर्वेषु स्तोत्रेषु सप्तदशस्तोमो वाचनिकः। केशवपनीयेऽप्यग्निष्टोमगताः स्तोमा विपर्ययेण प्रयुज्यन्ते।

११-११. म४.म६-भ्रियन्ते धार्यन्ते। १२. आ-त्वनुष्टुभा°। १३. म६-एवं च।

अग्निष्टोमे च त्रिवृत् पञ्चदशः सप्तदश एकविंश इत्येष क्रमः। केशवपनीये त्वेकविंशः सप्तदशः पञ्चदशस्त्रिवृदित्येतादृशः क्रमो भवति। तत्राभिषेचनीये योऽन्त्य एकविंशो यश्च केशवपनीये प्रथम एकविंशस्तयोरुभयोः प्रजारूपयोर्मध्ये दशपेयगतस्य सप्तदशस्तोत्ररूपस्यावस्थितत्वादेतद्राष्ट्रं विश [१४]एवैतन्मध्यतस्तद्द्वयोर्विशोर्मध्येऽभिषिक्तं भवति। यस्मात् सप्तदशस्तोमरूपस्य राष्ट्रस्य पालक एष राजा यथोक्तरीत्या[१५] विशां मध्ये प्रजानां मध्येऽभिषिच्यते तस्मादेव कारणाद्विशां प्रजानां प्रियो भवति ॥ अवरोहक्रमानुष्ठितस्तोमयुक्तं केशवपनीयं विधत्ते—" यद्वा एनमदो दिशोऽनु व्यास्थापयन्ति। तत् सुवर्गं लोकमभ्यारोहति। यदिमं लोकं न प्रत्यवरोहेत्। अति जनं वेयात्। उद्वा माद्येत्। यदेष प्रतीचीनः स्तोमो भवति। इममेव तेन लोकं प्रत्यवरोहति। अथो अस्मिन्नेव लोके प्रतितिष्ठत्यनुन्मादाय " (तैब्रा १·८·८) इति। अद इत्यनेन प्रत्यक्षत्वं हस्तेनाभिनीय प्रदर्श्यते। यदा " समिधमा तिष्ठ " (तैसं १·८·१३) इत्यादिभिर्मन्त्रैरस्माकं दृष्टिपथ एवैनं राजानं दिशो व्यास्थापयन्ति। तदानीमेवायं स्वर्गं लोकमभ्यारोहति। अभ्यारुह्य च पुनरिमं लोकं प्रति नावरोहेच्चेत्तदानीमत्रत्यं बन्धुजनमतिक्रम्य यत्र क्वापि गच्छेदुन्मत्तो वा भवेत्। प्रतीचीनस्तोमोऽग्निष्टोमाद्विपर्ययेण प्रत्यावृत्ताः स्तोमा यस्य केशवपनीयस्य स एष यद्यत्र भवेत्तर्हि[१६] केशवपनीयेनेममेव लोकं प्रत्यवरोहति। किं चोन्मादाभावायास्मिन्नेव लोके प्रतितिष्ठति ॥ यो रुक्मोऽभिषेककाले पुरुषस्याधस्तादवस्थापितो यश्चान्यः शिरसि स्नातुं धृतस्तावुभौ प्रशंसति—" इयं वै रजता। असौ हरिणी। यद्रुक्मौ भवतः। आभ्यामेवैनमुभयतः परिगृह्णाति " (तैब्रा १·८·९) इति। अधस्तनो रुक्मो राजतो भूमिस्वरूप उपरितनस्तु हिरण्मयो द्युलोकः। तत[१७] आभ्यां [१८]द्यावापृथिवीरूपाभ्यामधस्तादुपरिष्टाच्च परिगृहीतो भवति। ननु " अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति " (तैब्रा १·७·८) इति श्रवणादधस्तनोऽपि रुक्मो राजतो न भवति। नायं दोषः। रजतस्यापि हिरण्यावान्तरभेदत्वात्। " तस्माद्रजतꣳ हिरण्यमदक्षिण्यम् " (तैब्रा १·५·१) इति पुनराधाने[१९] श्रवणात्। होतृब्राह्मणेऽपि द्वैविध्यमाम्नातम्—" तद्दुर्वर्णꣳ हिरण्यमभवत्। तद्दुर्वर्णस्य हिरण्यस्य जन्म। स द्वितीयमतप्यत। सोऽताम्यत्। स प्राङ्बाधत। स देवानसृजत। तदस्य प्रियमासीत्। तत्सुवर्णꣳ हिरण्यमभवत् " (तैब्रा २·२·४) इति च। उपरितनं रुक्मं पुनः प्रशंसति—" वरुणस्य वा अभिषिच्यमानस्याऽऽपः। इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णꣳ हिरण्यमभवत्। यद्रुक्ममन्तर्दधाति। इन्द्रियस्य वीर्यस्यानिर्घाताय " (तैब्रा १·८·९) इति। आपो वीर्यं निरघ्नन्निर्गमितवत्यः। तच्च निर्गतं वीर्यं सुवर्णमभवत् ॥ तस्य च रुक्मस्य परिमाणं छिद्राणि च विधत्ते—" शतमानो भवति शतक्षरः। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति " (तैब्रा १·८·९) इति ॥ हिरण्यद्रव्यं प्रशंसति—" आयुर्वै हिरण्यम्। आयुष्या एवैनमभ्यतिक्षरन्ति। तेजो वै हिरण्यम्। तेजस्या एवैनमभ्यतिक्षरन्ति। वर्चो वै हिरण्यम्। वर्चस्या एवैनमभ्यतिक्षरन्ति " (तैब्रा १·८·९) इति। हिरण्यदानेनापमृत्योः परिहर्तुं शक्यत्वात्तस्याऽऽयुष्ट्वम्। तत्संबन्धादायुर्हिता एवाऽऽप एनं यजमानमभितः क्षरन्ति। सुवर्णस्य दीप्तिमत्वात्तेजस्त्वम्। तत्संबन्धादापस्तेजस्याः। शरीरशोभा वर्चः। तच्चाऽऽभरणसंबन्धाज्जायत इति

१४. इ.उ.पा.म६–एव तन्मध्यतः। १५. इ.उ.पा.म६–यथोक्तनीत्या। १६. म४.म६–त्तेन। १७. म६–अतः १८. म४–द्यावापृथिवीभ्याम्। १९. उ.म४–पुनराधेये।

हिरण्यस्य वर्चस्त्वम्। तद्योगादापो वर्चस्याः॥ अथ व्युष्टिद्विरात्रं विधत्ते—"अप्रतिष्ठितो वा एष इत्याहुः। यो राजसूयेन यजत इति। यदा वा एष एतेन द्विरात्रेण यजते। अथ प्रतिष्ठा। अथ संवत्सरमाप्नोति। यावन्ति संवत्सरस्याहोरात्राणि। तावतीरेतस्य स्तोत्रीयाः। अहोरात्रेष्वेव प्रतितिष्ठति" (तैब्रा १·८·१०) इति। राजसूयेनेष्ट्वाऽपि द्विरात्राननुष्ठानेन संपूर्त्यभावादप्रतिष्ठितत्वम्। अत्रत्येषु स्तोमेषु आवर्त्यमानाः स्तोत्रीया ऋचो विंशत्यधिकसप्तशतसंख्याकाः संपद्यन्ते। तथा च संवत्सरगताहोरात्रसंख्यासामान्यादहोरात्रेषु प्रतिष्ठितत्वं संवत्सरप्राप्तिर्भवति॥ द्विरात्रावयवावहर्विशेषौ विधत्ते—"अग्निष्टोमः पूर्वमहर्भवति। अतिरात्र उत्तरम्। नानैवाहोरात्रयोः प्रतितिष्ठति" (तैब्रा १·८·१०) इति। विलक्षणयोरह्नोरनुष्ठितत्वादहोरात्रयोरस्य विविधप्रतिष्ठोपपद्यते॥ तयोरनुष्ठानाय शुक्लकृष्णपक्षौ विधत्ते—"पौर्णमास्यां पूर्वमहर्भवति। व्यष्टकायामुत्तरम्। नानैवार्धमासयोः प्रतितिष्ठति" (तैब्रा १·८·१०) इति। तयोरुभयोर्विलक्षणपक्षत्वादुभयोरर्धमासयोरस्य विविधा प्रतिष्ठोपपद्यते॥ पक्षान्तरत्वेन विलक्षणयोर्मासयोर्द्वयोरनुष्ठानं विधत्ते—"अमावास्यायां पूर्वमहर्भवति। उद्दृष्ट उत्तरम्। नानैव मासयोः प्रतितिष्ठति" (तैब्रा १·८·१०) इति। एकेनाह्ना निष्पाद्यः सोमयागोऽहःशब्देनोपलक्ष्यते। तादृशश्चाग्निष्टोमः पूर्वमहः। तच्चामावास्यायां कर्तव्यम्। उद्दृष्टं शुक्लप्रतिपत्, उत्कर्षेण दर्शनस्य तत्रोपक्रमात्। तस्मिन्नुद्दृष्ट उत्तरं द्वितीयमहरतिरात्राख्यं कर्तव्यम्। तथा सति विलक्षणयोर्मासयोः कृतत्वाद्विविधप्रतिष्ठा भवति॥ प्रकारान्तरं विधत्ते—"अथो खलु। ये एव समानपक्षे पुण्याहे स्याताम्। तयोः कार्यं प्रतिष्ठित्यै" (तैब्रा १·८·१०) इति। अथो खलु अथवेत्यर्थः। समानश्चासौ पक्षश्च तत्र ये पुण्यदिने ज्योतिःशास्त्रप्रसिद्धे शुभावहे दिने तयोरिदं [20]कर्म कार्यं,[20] न त्वत्र पक्षभेदो विवक्षितः। मासभेदस्तु दूरापेतः॥ अस्मिन् द्विरात्रे दोषमुद्भाव्य परिहरन् प्रशंसति—"अपशव्यो द्विरात्र इत्याहुः। द्वे ह्येते छन्दसी। गायत्रं च त्रैष्टुभं च। जगतीमन्तर्यन्ति। न तेन जगती कृतेत्याहुः। यदेनां तृतीयसवने कुर्वन्तीति। यदा वा एषाऽहीनस्याहर्भजते। साह्नस्य वा सवनम्। अथैव जगती कृता। अथ पशव्यः" (तैब्रा १·८·१०) इति। "जागताः पशवः" (तैसं २·५·१०) इति श्रुत्यन्तरे पशूनां जगतीसंबन्धश्रवणाद्द्विरात्रे च जगत्या अन्तरितत्वादपशव्यो द्विरात्र इत्याक्षेपवादिन आहुः। अथैवं मन्यसे, विद्यत एव जगती, "जागतं तृतीयसवनम्" (तैसं ३-२-९) इति श्रुतेस्तृतीयसवने जगत्याः कृतत्वादिति, तदयुक्तं खलु। अहीने तावन्मात्रेण जगत्यनुष्ठानं न संपूर्णं, किं तर्हि? यदा द्विरात्रस्यैतस्याहीनस्यैकमहः कृत्स्नं जगती व्याप्नोति तदा जगत्यनुष्ठानं संपूर्णं भवति। [21]साह्न एकेनाह्ना निष्पन्नत्वादेकाहः। तस्य तु तृतीयसवनसंबन्धमात्रेणापि जगत्यनुष्ठानं संपूर्णं भवति। तस्मादत्र कृत्स्नस्याह्नो जगतीव्याप्त्यभावादपशव्यत्वं तदवस्थमित्याक्षेपवादिनामभिप्रायः। तस्मिन्नाक्षेपे भङ्ग्यन्तरेण परिहारोऽप्यन्तर्भूतः। तत्कथमित्युच्यते। वाक्ये यदेतिशब्दं परित्यज्य परिहारो योजनीयः। एषा जगती प्रकृतस्य द्विरात्रस्याहीनस्य कृत्स्नस्याहर्भजते। तस्मादत्र जगती कृता। तस्मादयं द्विरात्रः पशव्य इति परिहारः। यद्यपि तस्मिन्नहनि छन्दोन्तराणि सन्ति तथापि जगतीव्याप्तावुपायः सप्तमकाण्डेऽङ्गिरसां द्विरात्रे समाम्नातः—"वैखानसं

---

२०–२०–कर्तव्यम्। २१. इ.उ.पा–यो हि।

पूर्वेऽहन्त्साम भवति तेन जगत्यै नैति ” ( तैसं ७·१·४ ) इति । वैखानसनामकं साम पूर्वस्मिन् दिने गायेत् । [22]तच्च जगतीसंबद्धमिति तदहः कृत्स्नं जगत्या नापगच्छति । अतो वैखानससाममहिम्नैव कृत्स्नेऽप्यह्नि जगत्याः पूरितत्वाद्द्विरात्रः पशव्य एव ॥ अस्य द्विरात्रस्य व्युष्टिनाम प्रशंसति—“ व्युष्टिर्वा एष द्विरात्रः । य एवं विद्वान् द्विरात्रेण यजते । व्येवास्मा उच्छति । अथो तम एवापहते ” ( तैब्रा १·८·१० ) इति । विशिष्ट उषःकालो यस्मिन् द्विरात्रे सोऽयं व्युष्टिः । यो यजमान एवं व्युष्टिनाम विद्वान् यजतेऽस्मै यजमानार्थं विशेषेणोच्छत्येव सर्वं कर्तव्यजातं बुद्धौ प्रकाशत एव । किं च तमो बुद्धिमान्द्यमयं यजमानो विनाशयत्येव ॥ यदुक्तं सूत्रकारेण—“ क्षत्राणां धृतिस्त्रिष्टोमोऽग्निष्टोमः पञ्चापवर्गस्तेनान्ते यजते । संतिष्ठते राजसूयः ” ( आपश्रौ १८·२२·१८-२० ) इति, क्षत्राणां धृतिरिति कर्मनामधेयम्, स च कर्मविशेषः प्रकृतिवत्त्रिवृदादिस्तोमचतुष्टयो न भवति, किं तर्हि त्रिभिरेव स्तोमैरुपेतः । तमेतं विधत्ते—“ अग्निष्टोममन्तत आहरति । अग्निः सर्वा देवताः । देवतास्वेव प्रतितिष्ठति ” ( तैब्रा १·८·१० ) इति । अग्निविषयः स्तोमो यस्य क्रतोरन्ते सोऽयमग्निष्टोमः । “ यज्ञायज्ञा वो अग्नयः ” ( सासं १·१·१·४ ) इत्येतस्यामाग्नेय्यामृचि स्तोत्रकाल आवृत्त्या स्तोमं संपादयन्ति । तेन च क्रतुः संस्थितो भवति । तस्मादयमग्निष्टोमः । अग्नेश्च सर्वदेवतारूपत्वमसकृदुक्तम् । तस्माद्राजसूयसमाप्त्यवसरेऽनुष्ठितेनाग्निष्टोमेन यजमानो देवतासु प्रतितिष्ठत्येव ॥

अत्र विनियोगसंग्रहः—

“ स्वाद्वीं शष्पैः सुरा योज्या पुनाद्वाभ्यां तु पावयेत् ।
कुवित् खरे सुरा ग्राह्या सोमावनयते सुराम् ।
शतच्छिद्रयुतस्थाल्यां मन्त्राः पञ्चेह वर्णिताः ” ॥ १ ॥ इति ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

“ सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वाऽस्ति तत् ।
शेषणान्न सुराक्षीरयोरन्यत्रोपयोगतः ” ॥ ( जैन्या ३·५·५ ) ॥

सौत्रामणीनामके यागे श्रूयते—“ पयोग्रहाः सुराग्रहाश्च गृह्यन्ते ” ( शब्रा १२·७·३·१७-१९ ) इति ॥ तत्र प्रकृतिगतसोमग्रहेष्विव शेषकार्यं स्विष्टकृदिडादिकमस्ति । न चात्र पूर्ववच्छेषाभावः, ‘ उच्छिनष्टि न सर्वं जुहोति ’ इत्यवशेषयितव्यत्वश्रवणादिति चेत् । मैवम् । [23]शिष्टस्यान्यत्रोपयोगश्रवणात्[23] । “ ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् ” ( तैब्रा १·८·६ ) इति श्रूयते, “ यदि ब्राह्मणं न विन्देत् । वल्मीकवपायामवनयेत् ’ ( तैब्रा १·८·६ ) इति च, “ शतातृण्णायां समवनयेत् ” ( द्र. तैब्रा १·८·६ ) इति च । शतच्छिद्रा कुम्भी शतातृण्णा । तस्मान्नास्ति स्विष्टकृदादिकम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डेऽष्टमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

२२. शुद्धीकृतः ; आ.इ.उ. आ.इ.उ.पा.म६–यत्र; क.म४–तत्र । २३. म६–विशिष्टस्यान्यत्र योगश्रवणात् इ.उ.–शिष्टस्यन्यत्रापि ( वि ) नियोगश्रवणात् क.पा–शिष्टस्यान्यत्रापि योगश्रवणात् ।

अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम ।
दमेदमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमा चरण्येत् ॥

अग्नाविष्णू इत्यग्ना—विष्णू । महि । तत् । वाम् । महित्वमिति महि--त्वम् ।
वीतम् । घृतस्य । गुह्यानि । नाम ।
दमेदम इति दमे--दमे । सप्त । रत्ना । दधाना ।
प्रतीति । वाम् । जिह्वा । घृतम् । एति । चरण्येत् ॥

---

अथ याज्याकाण्डं वैश्वदेवम् । तत्र " आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुः " ( तैसं २·२·९ ) इत्यस्याग्नावैष्णवस्य पुरोनुवाक्या— ' अग्नाविष्णू महि ' इति त्रिष्टुप् ॥ हे [v]अग्नाविष्णू, [v]महि महत् महनीयं पूजनीयम् । " इन् सर्वधातुभ्यः " ( उ ५५७ ) इति महेरिन् । [v]तत् वक्ष्यमाणं [v]वां युवयोः [v]महित्वं माहात्म्यं, ततो युवां [v]वीतं [v]घृतस्य [v]गुह्यानि [v]नाम । " सुपां सुलुक्° " ( पा ७·१·३९ ) इति शसो लुक् । आज्यसांनाय्यपशुपुरोडाशादिगुह्यनामवन्ति घृतसंबन्धीनि वस्तून्यश्नीतम् । वी गत्यादिषु । पादादित्वान्न निहन्यते । [v]प्रति प्रत्येकं [v]वां युवयोः [v]दमेदमे गृहे गृहे सर्वेषु यज्ञगृहेषु । " अनुदात्तं च " ( पा ८·१·३ ) इति द्वितीयस्यानुदात्तत्वम् । [v]सप्त सृप्तानि सप्तसंख्यानि वा अर्चींषि [v]रत्ना रत्नानि रमणीयानि । " शेश्छन्दसि° " ( पा ६·१·७० ) इति लोपः । [v]दधाना दधानौ सन्तौ । " सुपां सुलुक्° " ( पा ७·१·३९ ) इति द्विवचनस्याकारः । दधानौ वीतमिति । किंच—प्रति प्रत्येकं [v]वां युवयोः [v]जिह्वा [v]घृतम् [v]आ [v]चरण्येत् आभिमुख्येन प्राप्नोतु भक्षयत्वित्यर्थः । एतद्वां महिमेति पूर्वेणान्वीयते । चरण गतौ, कण्ड्वादिः ॥

---

एकविंशे सौत्रामणीमुक्त्वा राजसूयः समापितः । द्वाविंशे काम्ययाज्या [पुरोनुवाक्या] उच्यन्ते ॥

अग्नाविष्णू इति ॥ तत्र काम्येष्टिकाण्डे त्रिहविष्का काचिदिष्टिराम्नायते—" आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एकादशकपालो भवत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन चाभिचरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभि चरति बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभिचरति " ( तैसं २·२·९ ) इति । आज्यं भागो यस्याः साऽऽज्यभागा । आज्यमेव हविरित्यर्थः । स्पष्टमन्यत् ॥ तत्र प्रथमहविषः पुरोनुवाक्यामाह—' अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम । दमेदमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमा चरण्येत् ' इति । हे [v]अग्नाविष्णू, [v]वां युवयोः [v]तत् वक्ष्यमाणं [v]महित्वं म[illegible] [v]महि पूजनीयम् । कथमिति तदुच्यते । [v]घृतस्य यानि [v]गुह्यानि नामानि मन्त्रेषु गोप्यान्याज्यं पृषदाज्यं सर्पिरित्यादीनि तानि युवां [v]वीतं प्राप्नुतं, " पशूनां तेजसाऽग्नये जुष्टमभिघारयामि " इति, " आयुर्दा अग्ने

अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा ।
दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत् ॥

अग्नाविष्णू इत्यग्ना--विष्णू । महि । धाम । प्रियम् । वाम् ।
वीथः । घृतस्य । गुह्या । जुषाणा ॥
दमेदम इति दमे--दमे । सुष्टुतीरिति सु--स्तुतीः ।
वावृधाना । प्रतीति । वाम् । जिह्वा । घृतम् । उदिति । चरण्येत् ॥

---

तत्रैव याज्या—'अग्नाविष्णू' इति त्रिष्टुप् ॥ हे Vअग्नाविष्णू, Vवां युवयोः Vधाम स्थानं तेजो वा Vमहि महत् महनीयं वा Vप्रियम् इष्टं युवयोः । किंच—Vवीथः Vघृतस्य Vगुह्या गुह्यानि स्वरूपाणि चरुपुरोडाशरूपाणि । पूर्ववच्छेर्लोपः । Vजुषाणा जुषमाणौ प्रीयमाणौ, पूर्ववदाकारः । Vदमेदमे । गतम्[1] । Vसुष्टुतीः शोभनस्तुतिकाः गिरः Vवावृधाना वावृधानौ वर्धयन्तौ दधानौ । यद्वा—सुष्टुतीः क्रिया वर्धयन्तौ । ऋत्विगादिना किन् ( पा ३·२·५९ ) । प्रवर्तयन्तौ । अन्तर्भावितण्यर्थाद्वृधेर्लेटः[2] शानच् । "बहुलं छन्दसि" ( पा २·४·७६ ) इति शपः श्लुः । "तुजादीनाम्" ( पा ६·१·७ ) इत्यभ्यासस्य दीर्घत्वम् । "छन्दस्युभयथा" ( पा ३·४·११७ ) इत्यार्धधातुकत्वाल्लसार्वधातुकत्वाभावः । छान्दसो वा लिटः कानजादेशः; ताच्छीलिको वा चानश् । यस्मादेवं तस्मात् Vवां युवयोः Vजिह्वा [3]प्रति प्रत्येकं Vघृतम् Vउच्चरण्येत् प्राप्नोतु भक्षयतु ॥

---

हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि" (तैसं १·३·१४) इति, "आजुह्वानस्य सर्पिषः" (तैसं ४·४·४) इत्यादिमन्त्रान् सर्वदा शृणुतमित्यर्थः । कुत्रैतन्नामश्रवणम् ? Vदमेदमे सर्वेषां यजमानानां गृहे गृहे । किं च वां युवयोर्जिह्वा Vप्रति प्रत्येकं Vघृतम् आगत्य प्राप्य Vचरण्येत् भक्षयतु पिबत्वित्यर्थः । कीदृशी जिह्वा ? Vसप्त Vरत्ना Vदधाना सप्तसंख्याकान् रत्नसदृशाञ्ज्वालाविशेषान् धारयन्ती । छत्रिन्यायेनाग्निसाहित्याद्-विष्णोरपि तथात्वम् ॥

अग्नाविष्णू इति ॥ अत्रैव याज्यामाह—'अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा । दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत्' इति । हे Vअग्नाविष्णू, Vवां युवयोः Vप्रियं Vधाम यज्ञशालारूपं स्थानं Vमहि पूजनीयम् । युवां Vघृतस्य गुह्यं योग्यं सारमभिघारणरूपं Vजुषाणा सेवमानौ Vवीथः पुरोडाशं भक्षयथः । कीदृशौ युवाम् ? Vदमेदमे सर्वेषु यजमानगृहेषु Vसुष्टुतीः Vवावृधाना पूर्वोदाहृता 'आयुर्दा अग्ने' इत्यादिकाः शोभनाः स्तुतीर्वर्धयन्तौ । 'प्रति वां जिह्वा' इत्यादि पूर्ववत् । Vउच्चरण्येत् उत्कर्षेण भक्षयतु ॥

---

१. ति–'गतम्' नास्ति । २. मै–लट् । ३. मै–'प्रति' नास्ति ।

काम्ययाज्यापुरोनुवाक्याः ]

प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥

आ नो दिवो बृहतः (१) पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।

हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥

प्रेति । नः । देवी । सरस्वती । वाजेभिः । वाजिनीवतीति वाजिनी—वती ॥

धीनाम् । अवित्री । अवतु ॥

एति । नः । दिवः । बृहतः (१) । पर्वतात् । एति । सरस्वती । यजता । गन्तु । यज्ञम् ॥

हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु ॥

तत्रैव “ सरस्वत्याज्यभागा ” (तैसं २.२.९) इत्यत्र पुरोनुवाक्या—‘ प्र णः ’ इति गायत्री ॥ देवी सरस्वती वाजेभिः वाजैः रसैः नः अस्मान् प्र अवतु प्रकर्षेण रक्षतु अन्नादि[४] दत्त्वा । सरस्वती विशेष्यते—वाजिनीवती वाजवत् क्रियावती धीनां धियाम् अवित्री अभिमतप्रदानेन तर्पयित्री । यद्वा—धीनेति वाङ्नाम[*] । अस्माकं धीनां वाचं प्रावतु, अभिमतप्रदानेन अवित्री पालयित्री तृप्ता वा अस्मदभिमतं शत्रुमारणं करोत्विति । यद्वा—अस्मद्दत्तैर्वाजैः पुरोडाशादिभिरन्नैः देवी प्रकर्षेणावतु । “ उपसर्गाद्बहुलम् ” (पा ८.४.२८) इति नसो णत्वम् । धीनामिति । छान्दसो नुट् । “ नामन्यतरस्याम् ” (पा ६.१.१७७) इति नाम उदात्तत्वम् ॥

तत्रैव याज्या—‘ आ नः ’ इति त्रिष्टुप् ॥ ‘ पर्वतादा ’ इति प्रथमपादान्तः । सरस्वती देवी यजता यष्टव्या । यजेः क्तिच् [अतच्[*]] । दिवः द्युलोकात् नः अस्माकं यज्ञम् आ गन्तु आगच्छतु, यद्यप्युच्छ्रिते[५] प्रदेशे स्थिता शीघ्रमागच्छतु । छान्दसः शपो लुक् । किं च—बृहतः महतः अपि पर्वतात् आ गच्छतु, प्रकृष्टाद्विषमाच्च प्रदेशादागच्छत्वित्यर्थः । किं च—

प्रेति ॥ द्वितीयहविषः पुरोनुवाक्यामाह—‘ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ’ इति । सरस्वती देवी वाजेभिः अन्नैः नः अस्मान् प्रकर्षेण अवतु रक्षतु । कीदृशी ? वाजिनीवती वाजोऽस्यां क्रियायामस्तीत्यन्नप्रदा यागक्रिया वाजिनी, सा यस्यामस्ति सा वाजिनीवती । धीनाम् अवित्री यज्ञविषयाणामस्मद्बुद्धीनां पालयित्री ॥

एति ॥ तत्रैव याज्यामाह—‘ आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ’ इति । यजता यष्टव्या सरस्वती नः अस्माकं यज्ञं प्रति दिवः सकाशात् आ गन्तु आगच्छतु । बृहतः पर्वतादागच्छतु । यद्यप्येषा द्युलोके मेरौ वा तिष्ठति तथाऽप्यवश्यमागच्छत्वित्यर्थः ॥ सेयमागता देवी शग्मां सुखप्रापिकां नः अस्मदीयां स्तुतिरूपां वाचम् उशती कामयमाना शृणोतु । कीदृशी देवी ? हवम् अस्मदीयमाह्वानं जुजुषाणा सेवमाना, घृतमञ्चति प्राप्नोतीति घृताची ॥

४. तं–अन्नानि । [*](द्र. निघण्टु १.११.३९) । [*](द्र. उ ३९७) । ५. मै–०प्यनुच्छ्रिते । तैसं ५९

बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥
एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम् ॥

बृहस्पते । जुषस्व । नः । हव्यानि । विश्वदेव्येति विश्व-देव्य ॥ रास्व । रत्नानि । दाशुषे ॥
एवा । पित्रे । विश्वदेवायेति विश्व-देवाय । वृष्णे ।
यज्ञैः । विधेम । नमसा । हविर्भिरिति हविः-भिः ॥
बृहस्पते । सुप्रजा इति सु-प्रजाः । वीरवन्त इति वीर-वन्तः ।
वयम् । स्याम । पतयः । रयीणाम् ॥

हवम् अस्माकमाह्वानम् । "भावेऽनुपसर्गस्य" ( पा ३·३·७५ ) इत्यप्, संप्रसारणं च । जुजुषाणा सेवमाना प्रीयमाणा वा घृताची घृतमाज्यभागं प्रत्यञ्चती । "चौ" ( पा ६·३·१३८ ) इति पूर्वपदस्य दीर्घत्वमन्तोदात्तत्वं च । शग्मां सुखां समर्थां वा अस्माकं स्तुतिरूपां ( वाचं ) शृणोतु । उशती कामयमाना अस्मत्प्रत्तानि हवींषि स्तोत्राण्येव वा । वष्टेः शतरि "शतुरनुमः" ( पा ६·१·१७३ ) इति नद्या उदात्तत्वम् ॥

अथ तत्रैव "बार्हस्पत्यश्चरुः" ( तैसं २·२·९ ) इत्येतस्य पुरोनुवाक्या—'बृहस्पते' इति गायत्री ॥ हे बृहस्पते विश्वदेव्य विश्वेभ्यो देवेभ्यो हित । गवादिर्द्रष्टव्यः ( पा ५·१·२ ) । अस्माकं हव्यानि जुषस्व सेवस्व । यद्वा—बृहस्पते बृहतां पते ब्रह्मन् विश्वदेव्य विश्वदेवमय, हव्यानि जुषस्व सेवस्व । आमन्त्रितस्य अविद्यमानवत्त्वादाख्यातस्य ( पा ८·१·७२, २८ ) निघाताभावे अदुपदेशाल्लसार्वधातुकानुदात्तत्वे ( पा ६·१·१८६ ) शस्योदात्तत्वम् । सेवित्वा च दाशुषे दत्तवते अस्मै यजमानाय रत्नानि रमणीयानि रास्व देहि । रातेश्छान्दसमनुदात्तेत्त्वम्,

**बृहस्पत इति** ॥ तृतीयहविषः पुरोनुवाक्यामाह—'बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे' इति । विश्वदेव्य विश्वेभ्यो देवेभ्यो हित हे बृहस्पते, नः अस्माकं हव्यानि जुषस्व । दाशुषे हविर्दत्तवते यजमानाय रत्नानि रास्व देहि ॥

**एवेति** ॥ तत्रैव याज्यामाह—'एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः । बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम्' इति । [१-]एवा, एवं किंचेत्यर्थः[-१] । हे बृहस्पते, पित्रे पितृवत् पालकाय, विश्वे देवा यस्यासौ विश्वेदेवोऽस्मै सर्वदेवगुरवे वृष्णे अभिमतफलवर्षिणे तुभ्यं यज्ञैः बहुविधयागैः नमसा [२]भक्तिपूर्वकनमस्कारैः हविर्भिः आज्यपुरोडाशादिभिश्च परिचर्यां विधेम सर्वथा परिचरेम । त्वत्प्रसादाच्छोभनापत्ययुक्ताः शूरभटोपेता धनानां पतयः भवेम ॥

६. मै-विद्यमान° । ७. मै-तद्वत्तगते ।

१-१. म६-'एवा..... चेत्यर्थः' नास्ति । २. इ.उ.पा-भक्तिपूर्वनमस्कारैः; म६-भक्तिपूर्वनमस्कारेण ।

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस (२) तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥

बृहस्पते । अतीति । यत् । अर्यः । अर्हात् ।
द्युमदिति द्यु—मत् । विभातीति वि—भाति । क्रतुमदिति क्रतु—मत् । जनेषु ॥
यत् । दीदयत् । शवसा (२) । ऋतप्रजातेत्यृत—प्रजात ।
तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥

तेनात्मनेपदं ( पा १·३·१२ ), [8]लसार्वधातुकानुदात्तत्वं ( पा ६·१·१८६ ) च । " दाश्वान् साह्वान्° " ( पा ६·१·१२ ) इति दाशेः क्वसुन्निपात्यते ॥

तत्रैव याज्या—' एवा पित्रे ' इति त्रिष्टुप् ॥ एवमेव । लुगपवादः सोऽडादेशः । vपित्रे पात्रे रक्षित्रे vविश्वदेवाय विश्वे देवा अस्य सन्तीति, विश्वेऽपि देवा अस्याज्ञां कुर्वन्तीति । " बहुव्रीहौ विश्वं संज्ञायाम् " ( पा ६·२·१०६ ) इति विश्वशब्दस्यान्तोदात्तत्वम् । vवृष्णे वर्षित्रे । " क्रियाग्रहणं कर्तव्यम् " ( पाभा १·४·३२ ) इति कर्मणः संप्रदानत्वाच्चतुर्थी । इमं देवं vयज्ञैः vविधेम परिचरेम । विध विधाने, तौदादिकः । vनमसा नमस्कारेण vहविर्भिः च चर्वादिभिः, हे vबृहस्पते । किमर्थमिति चेत् ? vसुप्रजाः शोभनपुत्रपौत्राः vवीरवन्तः अन्यैश्च शूरैश्च तद्वन्तः vरयीणां धनानां च vपतयः vस्याम भवेमेत्येवमर्थं परिचरेम । " नामन्यतरस्याम् " ( पा ६·१·१७७ ) इति नाम उदात्तत्वम् ॥

तत्रैव याज्या विकल्प्यते—'बृहस्पते' इति त्रिष्टुप् ॥ हे vबृहस्पते, vअर्यः स्वामी विद्वान् राजा वा । vयत् द्रविणं vअति vअर्हात् अन्यानतिक्रम्य लब्धुमर्हति । यद्वा—यत् येन विशिष्टेन धनेन vद्युमत् दीप्तिमत् vक्रतुमत् स्वाद्वन्नभोगादिक्रियावत् यथा तथा vजनेषु vविभाति विशेषेण भाति । किं च—vयत् च धनं vशवसा बलेन अन्नेन वा vदीदयत् दीप्यते vशवसः हेतुभूतं भवत् लोके पूज्यते । दीदितिः दीप्तिकर्मा । छान्दसः लेट्यडागमः । धातोरन्तोदात्तत्वम् । हे vऋतप्रजात सत्यप्रभव, vतत् तादृशं vचित्रं चायनीयं प्रार्थनीयं vद्रविणम् vअस्मासु vधेहि स्थापय देहि वा ॥

**बृहस्पत इति** ॥ तत्रैव विकल्पितां याज्यामाह—' बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ' इति । हे vबृहस्पते, vअर्यः राजा vयत् द्रविणं रत्नादिरूपम् vअति इतरानतिक्रम्य vअर्हात् स्वयमेवानुभवितुमर्हति । यत् चास्मज्जनेष्वमात्यादिषु vद्युमत् आभूषणादिमत् vविभाति यजमानरूपेषु vजनेषु vक्रतुमत् यागसाधनवद्विभाति । पुनरपि vयत् द्रविणं vशवसा बलेन जीवितप्रदानसंपादितसैन्यरूपेण vदीदयत् दीप्यते vतत् यथोक्तगुणोपेतं vद्रविणं vचित्रं मणिमुक्तादिरूपं हे vऋतप्रजात, तत् vअस्मासु vधेहि स्थापय । ऋतात् सत्यात् परमात्मनः प्रकर्षेण

८. त्रि. मै–'सार्व' ।

देवगुरुत्वेनोत्पन्न ऋतप्रजात ॥ प्रथममभिचरतः शत्रोस्त्रिहविष्केष्टिर्विहिता । इदानीं तदीयादभिचारादूर्ध्वं प्रत्यभिचरतस्तामेवेष्टिं विहितामभिप्रेत्य तत्र विशेषं विधत्ते—" प्रति वै परस्तादभिचरन्तमभिचरन्ति द्वेद्वे पुरोनुवाक्ये कुर्यादतिप्रयुक्त्यै " ( तैसं २·२·९ ) इति । प्रथमतोऽभिचरन्तं शत्रुं ज्ञात्वा तद्विरोधिनः पुरुषाः पश्चात् प्रत्यभिचरन्ति तदानीं पूर्वोक्तायाः पुरोनुवाक्याया आवृत्त्या वा मन्त्रान्तरागमनेन वैकैकस्य हविषो द्वेद्वे पुरोनुवाक्ये कुर्यात् । मन्त्रान्तरपक्षे तु प्रथमस्य हविषः " अग्नाविष्णू सजोषसा " ( तैसं ४·७·१ ) इत्येषा समानेतव्या । द्वितीयस्य हविषः " पावीरवी कन्या " ( तैसं ४·१·११ ) इति । तृतीयस्य तु समाम्नाता एव तिस्र ऋचो वर्तन्ते[3] । किमर्थं पुरोनुवाक्याद्वित्वम् ? तदुच्यते । अतिप्रयुक्त्यै तस्मादप्यतिशयितप्रयोगार्थम् ॥ यस्तु पापभीरुः सन् प्रतिचारं न करोति किं तु केवलं स्वविषयमभिचारं परिहर्तुमिच्छति तस्य पूर्वोक्तामेव त्रिहविष्कामिष्टिं विधत्ते—" एतयैव यजेताभिचर्यमाणो देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म स देवताश्चैव यज्ञं च मध्यतो व्यवसर्पति तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुते " ( तैसं २·२·९ ) इति । देवताः प्रतिचरति निवारयति । स्वकीययज्ञेन तदीययज्ञं[4] निवारयति । स्वकीयवाचा तदीयवाचं निवारयति । [5-]स्वकीयब्रह्मणा तदीयं ब्रह्म[-5] निवारयति । लौकिकाधिक्षेपपरिहारो वाङ्निवारणं, ब्राह्मण्यपरिहारो मन्त्रनिवारणम् । स तादृशः पुरुषः शत्रोरात्मनश्च मध्ये स्वकीयदेवताः स्वकीययज्ञं च मध्यतो व्यवसर्पति व्यवधानरूपेण स्थापयति । तस्य तादृशस्य कुतोऽपि [6]व्याध्यादिर्बाधो न भवति । प्रथममभिचरन् पुरुष एनं न स्तृणुते न हिनस्ति ॥ यज्ञप्राप्तिकामिन एकहविष्कामिष्टिं विधत्ते—" आग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो नोपनमेदग्निः सर्वा देवता विष्णुर्यज्ञोऽग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवास्मै यज्ञं प्र यच्छत उपैनं यज्ञो नमति " ( तैसं २·२·९ ) इति । यं यज्ञानुष्ठानार्थं पुरुषं केनापि द्रव्याभावादिविघ्नेन स यज्ञो न प्राप्नुयात्तस्येयमिष्टिः ॥ दृष्टिपाटवार्थिन एकहविष्कामिष्टिं विधत्ते—" आग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति यज्ञस्य देवा अग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवास्मिंश्चक्षुर्धत्तश्चक्षुष्मानेव भवति " ( तैसं २·२·९ ) इति । अग्नेश्चक्षुषा दीपेनान्धकारादियुक्तप्रदेशे मनुष्याः पश्यन्ति । [7-]यज्ञस्य तु चक्षुषा सामर्थ्यरूपेण देवाः पश्यन्ति[-7] । अतो यागदेवस्य विष्णोरग्नेश्च हविषा तावुभौ कामलादिरोगपरिहारेणास्मिन् यजमाने चक्षुर्दृष्टिपाटवं धत्तः प्रयच्छतः । तेनासौ चक्षुष्मान् सूक्ष्मदर्शनेऽपि समर्थो भवति ॥ घृतं चरुप्रकृतिद्रव्यं च प्रशंसति—" धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्र जनयति " ( तैसं २·२·९ ) इति । भक्षिततृणसारत्वादाज्यस्य धेनुरेतस्त्वं, बलीवर्दकृष्टोत्पन्नत्वात्तण्डुलानामनडुद्रेतस्त्वं, धेन्वनडुद्रूपमिथुनादेवास्य दृष्टिलाभः ॥ प्रकारान्तरेण घृतं प्रशंसति— " घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरव रुन्द्धे " ( तैसं २·२·९ ) इति । दीप्यमानत्वाद्रूपभासकत्वाच्च घृतचक्षुषोस्तेजस्त्वम् ॥ [8]फलान्तराय त्रिहविष्कामिष्टिं विधत्ते—" इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति निर्वपेद्भ्रातृव्ये यजमाने नास्येन्द्रियं वीर्यं वृङ्क्ते " ( तैसं २·२·९ ) इति । परस्परविरोधिनोरुभयोर्मध्ये कश्चिदग्निष्टोमादियज्ञं न करोति तदीयस्तु भ्रातृव्यः करोति तदानीमयजमानस्येन्द्रियसामर्थ्यमितरो विनाशयति । प्रत्यक्षं ह्येतत् । दीक्षित, सोमयाजिन् , इत्यामन्त्रणादिभिरयजमानस्यानादृतत्वात्तस्येयमध्वरकल्पेषदसमाप्तोऽध्वरः । सवनत्रयसद्भावादध्वरत्वं सोमाभावादीषदसमाप्तिरतस्तामध्वरकल्पां तदीयस्य सोमयागस्य प्रतिपक्षत्वेन निर्वपेत् । [9]कदा ? भ्रातृव्ये यजमाने सति । तेन प्रतिनिर्वापेणेन्द्रियसामर्थ्यं न

३. म६–वियन्ते । ४. इ.उ–तदीयं यज्ञम् । ५–५. म६–स्वकीयमन्त्रेण तदीयमन्त्रम् । ६. म६–व्याघ्रादे° । ७–७. म६– देवास्तु यज्ञे स्वसामर्थ्यरूपेण चक्षुषा पश्यन्ति । ८. म६–फलान्तरेण । ९. इ. उ.पा–कदाचित् ।

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांꣳसि सुक्रतू ॥

एति । नः । मित्रावरुणेति मित्रा—वरुणा । घृतैः । गव्यूतिम् । उक्षतम् ॥

मध्वा । रजांꣳसि । सुक्रतू इति सु—क्रतू ॥

" मैत्रावरुणमेककपालं निर्वपेद्वशायै काले " ( तैसं २·२·९ ) इत्यस्य पुरोनुवाक्या— 'आ नः' इति गायत्री ॥ हे मित्रावरुणा मित्रावरुणौ । पूर्ववदाकारः । घृतैः उदकैः गव्यूतिं गोप्रचारम् । गावो यूयन्ते मिश्रयन्तेऽस्यामित्यधिकरणे क्तिन् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·४२ ) । " गोर्यूतौ छन्दसि " ( पा ६·१·७९ वा २ ) इत्यवादेशः । उपलक्षणं चैतत् । सर्वमप्यस्मदीयं क्षेत्रम् आ उक्षतम् आसिञ्चतं समन्तादभिवर्षतम् । यद्वा— गव्यूतिं व्रजं घृतैर्घृतदुग्धाभिः समन्तादुक्षतं बहुदोग्ध्रीकं कुरुतम् । किं च –हे सुक्रतू शोभनकर्माणौ शोभनप्रज्ञानौ वा मध्वा मधुना मधुरसेन जलेन घृतेनैव वा रजांसि लोकान् सर्वानपि समन्तादुक्षतमित्येव ॥

नश्यति, दीक्षादीनामभावेऽपि प्रभुत्वधनादेरुत्कर्षो भवतीत्यर्थः ॥ निर्वापकालं विधत्ते—" पुरा वाचः प्रवदितोर्निर्वपेद्यावत्येव वाक् तामप्रोदितां भ्रातृव्यस्य वृङ्क्ते तामस्य वाचं प्रवदन्तीमन्या वाचोऽनु प्र वदन्ति ता इन्द्रियं वीर्यं यजमाने दधति " ( तैसं २·२·९ ) इति । उषःकाले मनुष्याः शयनादुत्थाय परस्परं वाचः प्रवदन्ति । प्रवदितोः प्राक् प्रवदनात् पुरा निर्वपेत् । तथा सति भ्रातृव्यस्य यावती वाग्विद्यते तामप्रोदितामनुच्चारितां वृङ्क्ते यथा नोच्चारिता भवति तथा नाशयति । अस्य तु यजमानस्य संबन्धिनीं तां वाचं प्रवदन्तीमन्वन्या वाच इतरजनसंबन्धिन्यो वाचः प्रवदन्ति, यजमानेन यद्यथोच्यते तत्तथैव सर्वजना वदन्त्यस्य वचनमनुमन्यन्त इत्यर्थः । ता अन्यदीया वाच उपलालनेनेन्द्रियसामर्थ्यं यजमाने स्थापयन्ति ॥ अध्वरसाम्यं संपादयितुं त्रिषु कालेष्वनुष्ठानं विधत्ते—" आग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातःसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाऽऽप्नोत्याग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यंदिनस्य सवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यंदिनꣳ सवनं माध्यंदिनमेव सवनं तेनाऽऽप्नोत्याग्नावैष्णवं द्वादशकपालं निर्वपेत् तृतीयसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद्द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोति देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म कपालैरेव छन्दाꣳस्याप्नोति पुरोडाशैः सवनानि " ( तैसं २·२·९ ) इति । प्रातःसवनस्याऽऽकाले भ्रातृव्ययज्ञसंबन्धिनः प्रातःसवनस्य यावत्कालस्तावति काले कपालैरष्टैकादशद्वादशसंख्याकैरेव छन्दांसि प्रतिवादिप्रयुक्तानि गायत्रीत्रिष्टुब्जगतीरूपाणि व्याप्नोति । यथोक्तैस्त्रिभिः पुरोडाशैः प्रतिवाद्यनुष्ठितानि सवनानि त्रीणि सवनानि व्याप्नोति । तस्मादस्त्यध्वरसाम्यम् । उक्तासु प्रत्यभिचारादीष्टिषु पूर्वोक्ता एव याज्यानुवाक्याः ॥

एति ॥ एतस्यैवाध्वरकल्पानुष्ठायिनः प्रतिवाद्यनुष्ठितानूबन्ध्यास्थानीयामिष्टिं विधत्ते—" मैत्रावरुणमेककपालं निर्वपेद्वशायै काले यैवासौ भ्रातृव्यस्य वशाऽनूबन्ध्या सो एवैषैतस्यैककपालो भवति न हि कपालैः पशुमर्हत्याप्तुम् " ( तैसं २·२·९ ) इति । भ्रातृव्योऽवभृथं कृत्वा गृहे समागत्योदवसानीयामनुष्ठायानूबन्ध्यां वशामुपाकरोति, तस्मिन् काले मित्रावरुणदेवताकमेककपालं पुरोडाशं निर्वपेत् । भ्रातृव्यस्य

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन।
आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥

प्रेति। बाहवा। सिसृतम्। जीवसे। नः। एति। नः। गव्यूतिम्। उक्षतम्। घृतेन ॥
एति। नः। जने। श्रवयतम्। युवाना। श्रुतम्। मे। मित्रावरुणेति मित्रा—वरुणा। हवा। इमा ॥

तत्रैव याज्या—'प्र बाहवा' इति त्रिष्टुप् ॥ बाहोर्बलं बाहुशब्देनोच्यते। अर्शआदित्वादच् (पा ५·२·१२७)। बाहवा बाहवौ बाहुबलवन्तौ युवाम्। छान्दसं प्रत्ययात् पूर्वस्योदात्तत्वम्। प्र सिसृतम् आगच्छतम्। यद्वा—बाहवा बाहुबलेन सह बाहुबलवन्तावागच्छतम्। तृतीयैकवचनस्य नाभावाभावे गुणश्छान्दसः। किमर्थम्? नः अस्मान् जीवसे जीवयितुम्। "तुमर्थे सेसेन्°" (पा ३·४·९) इत्यसेप्रत्ययः। अस्माकं वा जीवसे जीवनाय। [९]असुन्याद्युदात्तत्वाभावश्छान्दसः। आगत्य च नः अस्माकं गव्यूतिं घृतेन समन्तात् उक्षतम् इति। गतम्। किंच—नः अस्मान् जने जनेषु जनपदेषु समन्तात् श्रावयतम्। यद्वा—अस्माकं जनपदेषु युवयोर्बाहुबलं ख्यापयतम्। शृणोतेर्णिचि वृद्ध्यभावश्छान्दसः। हे युवाना युवानौ नित्यतरुणौ मिश्रितौ वा। पूर्ववदाकारः। हे मित्रावरुणा मित्रावरुणौ, इमा इमान् अस्मदीयान् हवा हवान् आह्वानानि। पूर्ववच्छस[१०] आकारः (पा ७·१·३९)। ह्वयतेः पूर्ववदप् संप्रसारणं च। श्रुतं शृणुतम्। शपो लुक्। पादादित्वान्न निहन्यते।

साऽनूबन्ध्या वशा यैवास्ति एतस्याध्वरकल्पस्याधिकारिणोऽयमेककपालः सैवैषा वशा भवति। ननु पूर्वोक्तैः कपालैर्यथा छन्दांसि प्राप्तानि [१०]तथाऽनूबन्ध्याख्यः पशुरपि प्राप्यताम् इति चेत्। न। संख्यासाम्येन छन्दसां प्राप्तुं[११] शक्यत्वात्। नहि पशावष्टत्वादिसंख्याऽस्ति। अतः पूर्वोक्तैः कपालैरिमं पशुमाप्तुं न शक्नोति नार्हति। मैत्रावरुणस्य तु कपालैक्यात् [१२]संख्यासाम्येन पशुमेकं प्राप्तुमर्हति ॥ अस्मिन् मैत्रावरुणे पुरोनुवाक्यामाह—'आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू' इति। हे मित्रावरुणौ, [१३]नः गव्यूतिम् अस्मदीयगोयूथं घृतैः प्रभूतैः आ समन्तात् उक्षतं सिञ्चतम्। [१४]सुक्रतू शोभनक्रतुयुक्तौ रजांसि अस्मदीयक्षेत्रपांसून् मध्वा मधुना जलेन उक्षतम् ॥

प्रेति ॥ तत्रैव याज्यामाह—'प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा' इति। हे मित्रावरुणौ, नः अस्माकं जीवसे जीवितुं बाहवा धनपूर्णेन बाहुना सह प्रकर्षेण सिसृतं प्राप्नुतम्। आगत्य च नः अस्माकं गोयूथं घृतेन सिञ्चतम्। हे युवाना परस्परमिश्रितौ युवां जने ब्राह्मणादियजमानसभायां नः अस्मान् श्रवयतं प्रख्यापयतम्। मित्रावरुणौ मे मदीयम् इमा हवा इदमाह्वानं श्रुतं शृणुतम् ॥

९. तं· ति. त्रि–असुन्युदा०। १०. तं–पूर्ववच्छान्दसः।

१०. म६–तद्वदनू°। ११. इ.तत्र प्राप्तुम्। १२. म६–तत्संख्या। १३. इ. उ. पा.म६–'नो' नास्ति। १४. इ.उ.पा–नः सुक्रतू।

काम्ययाज्यापुरोनुवाक्याः ]

अ॒ग्निं वः॑ पू॒र्व्यं गि॒रा दे॒वमी॑डे॒ वसू॑नाम् । स॒प॒र्यन्तः॑ पुरुप्रि॒यं मि॒त्रं न क्षे॑त्र॒साध॑सम् ॥

अ॒ग्निम् । वः॒ । पू॒र्व्यम् । गि॒रा । दे॒वम् । ई॒डे॒ । वसू॑नाम् ॥

स॒प॒र्यन्तः॑ । पु॒रु॒प्रि॒यमिति॑ पुरु–प्रि॒यम् । मि॒त्रम् । न । क्षे॒त्र॒साध॑स॒मिति॑ क्षेत्र–साध॑सम् ॥

अत्र मैत्रावरुणसोमारौद्रयोर्मध्ये कर्मान्तरं न श्रूयते, तेन लिङ्गक्रमाभ्यां याज्यार्थतायाम-सत्यां सोमारौद्रादिषु सामिधेन्यादिषु इतःपरं काश्चिदृचो विनियुज्यन्ते; यथासंभवं द्रष्टव्याः । तत्र—' अग्निं वः ' इत्यनुष्टुप् ॥ हे ऋत्विग्यजमानाः, वः युष्मदर्थम् अग्निं पूर्व्यं पूर्वैः कृतं पूर्वैराराधितं, [11]गिरा स्तुत्या देवम् ईडे याचे । यद्वा—गिरा स्तोत्रेण स्तौमि ।

इष्ट्यन्तरं विधत्ते—" असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सोमारौद्रं चरुं निरवपन् तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सोमारौद्रं चरुं निर्वपेत् सोमं चैव रुद्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति " ( तैसं २·२·१० ) इति । न व्यरोचत विशेषेण दीप्तिं न प्राप्तवान् । प्रायश्चित्तिं प्रतीकारं, ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः ॥ कालं विधत्ते—" तिष्यापूर्णमासे निर्वपेद्रुद्रो वै तिष्यः सोमः पूर्णमासः साक्षादेव ब्रह्मवर्चसमव रुन्धे " ( तैसं २·२·१० ) इति । यथा रुद्रो दुःखं द्रावयति तथा पौषमासः शैत्यदानेन तापं वारयति । तस्मात् तस्य रुद्रत्वम् । सोमो हि पौर्णमास्यां [15]संपूर्णमण्डल इति तयोरैक्यम् । साक्षादेव मुख्यमेव नत्वनूचानस्य पुत्रत्वमात्रेणाऽऽपादितममुख्यं ब्रह्मवर्चसम् ॥ वेदेः परित आवरणं विधत्ते—" परिश्रिते याजयति ब्रह्मवर्चसस्य परिगृहीत्यै " ( तैसं २·२·१० ) इति । परिश्रयणेन वेद्यामावृतायां[16] ब्रह्मवर्चसं परिगृहीतं भवति ॥ चोदकप्राप्तमपवदितुं कांश्चिद्विशेषान्[17] विधत्ते—" श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते यावदेव ब्रह्मवर्चसं तत्सर्वं करोति " ( तैसं २·२·१० ) इति । श्वेतवत्सयुक्तायाः श्वेताया गोर्दुग्धं तदेवाऽऽतञ्चनेन दधिभावमापाद्य मथितं सत् पश्चादाज्यं भवति, न तु मैत्राबार्हस्पत्य इव स्वयंमूर्तस्वयंमथितत्वादिकमत्रास्ति । प्रकृतौ श्वेतवत्सा श्वेता गौरिति नास्ति नियमः । अत्र त्वस्ति । प्रकृतावद्भिः प्रोक्षणं मार्जनं च । अत्र तु सर्वमाज्येनेति विशेषः । तथा सति तु ब्रह्मवर्चसं संपूर्णं भवति ॥ सामिधेनीषु समिध्यमानेद्धवत्योर्मध्ये प्रक्षेपणीये द्वे ऋचौ विधत्ते—" अति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति मानवी ऋचौ धाय्ये कुर्याद्यद्वै किं च मनुरवदत्तद्भेषजं भेषजमेवास्मै करोति " ( तैसं २·२·१० ) इति । आज्यमात्रेण यद्ब्रह्मवर्चसं तद्युक्तमेव, श्वेतवत्साश्वेत-गोभ्यां यत्तदत्यधिकं, तेन दुश्चर्मा श्वेतकुष्ठयुक्तो भवितुं प्रभुर्भवति, तत्परिहाराय मनुना दृष्टे द्वे ऋचौ सामिधेनीषु धाय्ये प्रक्षेपणीये भवतः । मनोर्धर्मवृद्धत्वात्[18] तेन यन्मन्त्रजातमुक्तं तदौषधम् । [19]तदेव सर्वमापस्तम्ब आह—" [20]सर्वप्रोक्षणमार्जनानीत्याज्येन । मानवी ऋचौ धाय्ये कुर्यात् । [*]अग्निं व इत्येतासां द्वे " ( आपश्रौ १९·१९·७–८ ) इति ॥

अग्निमिति ॥ एतस्मिन् सोमारुद्रचरौ धाय्यात्वेन ' अग्निं वः पूर्व्यम् ' इत्यादिका विकल्पिताः षडृच आम्नाताः । तत्र प्रथमायाः पाठस्तु–'अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् । सपर्यन्तः पुरुप्रियं मित्रं

११. ति–यो च गिरा; मे–ते यौ [ तया ] च ।

१५. इ.उ–पूर्ण° । १६. आ.इ.क.पा.म६.हा–°वृत्तायां वेदिरे° । १७. म६–विशेषान् क्रमेण । १८. आ–मनोर्धर्मवक्तृत्वात् । १९. आ–तदेतत् । २०. इ.उ.क.पा.म६–°सर्वप्रेक्षामार्जे । *( आपश्रौ सूत्रे ' मक्षू देववत इत्येतासां द्वे ' इत्यस्ति । ) ।

मक्षू देववतो रथः (३) शूरो वा पृत्सु कासु चित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥

मक्षु । देववत इति देव-वतः । रथः (३) । शूरः । वा । पृत्स्विति पृत्-सु । कासु । चित् ॥
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभीति । इत् । अयज्वनः । भुवत् ॥

वसूनाम् । चतुर्थ्यर्थे षष्ठी । वस्वर्थं सपर्यन्तः पूजयन्तः । सपर पूजायां, कण्ड्वादिः । पूजार्थमेकस्मिन् बहुवचनं, तदा ईडे इति व्यत्ययेनैकवचनम् । यद्वा—हे सपर्यन्तः । व्यत्यये-नामन्त्रितायुदात्तत्वम् । रभावः औणादिको वा । वसन्तादिवत् झच् ( उ ४ १५ ) । सपर्यन्तो-ऽहमीडे । अग्निर्विशेष्यते—पुरुप्रियं बहूनां प्रियं मित्रं न मित्रमिव क्षेत्रस्य साधयितारम् ॥

[12]अथ चतस्रः पङ्क्तयः पञ्चपादाः । 'देवानां य इन्मनः' इति पादत्रयं सर्वास्वनुषज्यते । तत्र द्वेद्वे सोमारौद्रे—'मक्षु' इत्यादि ॥ मक्षु शीघ्रम् । "अन्येषा-मपि दृश्यते" ( पा ६·३·१३७ ) इति संहितायां दीर्घत्वम् । देववतः यज्वनः । स हि देववान्[13], देवानिष्टवान् तैस्तद्वान् भवति, रथः । स रथः शीघ्रो भवति शीघ्रं गच्छति निःसङ्गः पृत्सु संग्रामेषु शूरः वा शूर इव । वाशब्द उपमार्थीयः । यथा शूरो विक्रान्तः पुरुषः कासु चित् पृत्सु निःसङ्गः शीघ्रं गच्छति एवं देववतो रथः । यद्वा—शूर इति षष्ठ्यर्थे प्रथमा । [14]शूरस्येव रथो देववतः शीघ्रं गच्छतीति । कः पुनरसौ देववानित्याह—यः एव देवानां मनः भवति, यमेव देवा मन्यन्ते, देवानेव वा यो मन्यते । ईदृशो यः यजमानः इयक्षति पुन-र्देवान् यष्टुमिच्छति । आदिवर्णलोपश्छान्दसः । किं च—अयज्वनः अयजमानान् अभि भुवत् अभिभवदेव । तस्मात् वयमप्येवमर्थं यजामह इति । भवतेर्लेटि शपो लुक् । "लेटोऽडाटौ" ( पा ३·४·९४ ) इत्यडागमः । "भूसुवोस्तिङि" ( पा ७·३·८८ ) इति गुणाभावः ॥

**न क्षेत्रसाधसम्' इति । वसूनां वः युष्माकं मध्ये पूर्व्यं प्रथमभाविनम् अग्निं देवं गिरा वैदिक्या ईडे स्तौमि स्तावकोऽहम् । कीदृशः ? सपर्यन्तः पर्यन्तेन यागसमाप्त्या सह वर्तत इति सपर्यन्तः । सकृत् स्तुत्वा नोपरमं कुर्वे किं त्वा समाप्तेः स्तौमीत्यर्थः । कीदृशमग्निम् ? मित्रं न क्षेत्रसाधसं[21] पितृभ्रात्रा-द्यात्मकमित्रमिवास्मदीयस्य क्षेत्रस्य साधकम् ॥**

**मक्ष्विति ॥ अथ द्वितीया—' मक्षू देववतो रथः शूरो वा पृत्सु कासु चित् । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत्' इति । कासु चित् पृत्सु केषुचित् संग्रामेषु अत्यन्तमभिनिवेशेन प्रवर्तमानेषु शूरः वा शूरो भट इव देववतः यक्ष्यमाणदेवोपेतस्य यजमानस्य रथः मक्षु गच्छतीति शेषः । रामरावणयुद्धवदत्यभिनिवेशेन प्रवृत्ते युद्धे शूरो भटः स्वदेहं विस्मृत्य परसेनां हन्तुं यथा त्वरया गच्छति**

१२. मै–तत्र । १३. त्रि–यान् । १४. त्रि–शूरस्यैव ।

२१. इ.उ.क.पा.म६–°साधसमिति ।

न यजमान रिष्यसि न सुन्वान न देवयो ॥
अस॒दत्र॑ सुवीर्य॑मुत त्यदा॒श्वश्वि॑यम् ॥

न । य॒ज॒मा॒न॒ । रि॒ष्य॒सि॒ । न । सु॒न्वा॒न॒ । न । दे॒व॒यो॒ इति॑ दे॒व॒-यो॒ ॥
अस॑त् । अत्र॑ । सु॒वीर्य॒मिति॑ सु॒-वीर्य॑म् । उ॒त । त्यत् । आ॒श्व॒श्वि॒य॒मित्या॑शु-अ॒श्वि॑यम् ।

अथ द्वितीया—हे [V]यजमान, इष्टयादीन् कुर्वाण, त्वं [V]न [V]रिष्यसि न हिंस्यसे[१५] । हे [V]सुन्वान सोमानाहरन्, त्वमपि [V]न रिष्यसि । हे देवयो देवान् आत्मन इच्छन् पाकयज्ञादिभिः प्रचरन्, त्वमपि [V]न रिष्यसि । “न च्छन्दस्यपुत्रस्य” (पा ७·४·३५) इतीत्वाभावः । “क्याच्छन्दसि” (पा ३·२·१७०) इत्युप्रत्ययः । किं कारणमित्याह—‘देवानां य इन्मनः’ इत्यनुषज्यते । अयज्वानः सोपद्रवा भवन्तीति शेषः ॥

अथ तृतीया—‘असत्’ इति ॥ [V]असत् भवेत् । अस्तेर्लेट्यडागमः । [V]अत्र वक्ष्यमाणे [V]सुवीर्यं शोभनवीर्यं बलं धनं वा पुरुषे भवति । “वीरवीर्यौ च” (पा ६·२·१२०) इत्युत्तर-पदान्तोदात्तत्वम् । [V]उत अपि च [V]त्यद् [१६]तदेव [V]आश्वश्वियम्[१७] आशुना अश्वसमूहेन युक्तं भवति । “केशाश्वाभ्याम्” (पा ४·२·४८) इति छः । छान्दसं ह्रस्वत्वम् । “परादिश्छन्दसि बहुलम्” (पा ६·२·१९९) इत्युत्तरपदाद्युदात्तत्वम् । उपलक्षणं चैतत् हास्तिकादीनाम् । अत्रेत्युक्तम् । कुत्रेत्याह—‘देवानां य इन्मनः’ इत्यनुषज्यते । अयज्वानो निःश्रीका भवन्तीति शेषः ॥

---

तथा देवान् यष्टुमस्य यजमानस्य मनोवृत्तिस्त्वरया रथवद्गच्छतीत्यर्थः । [V]यः [V]इत् य एव यजमानो देवतानां [V]मनः [V]इयक्षति पूजयितुमिच्छति, तदीयं चित्तप्रसादं वाञ्छतीत्यर्थः । स एव [V]अयज्वनः यागरहितान् पुरुषान् [V]अभि [V]भुवत् [V]इत् अभिभवत्येव । इदमुत्तरार्धमुत्तरेषु त्रिषु मन्त्रेष्वनुवर्तते ॥

नेति ॥ अथ तृतीया—‘न यजमान रिष्यसि न सुन्वान न देवयो’ इति । हे [V]यजमान, त्वं यागं कृत्वा [V]न [V]रिष्यसि न विनश्यसि । अत्र यजमानत्वमिष्टिकर्तृत्वम् । हे [V]सुन्वान सोमयाजिन्, [V]न रिष्यसि । हे [V]देवयो, पाकयज्ञादिभिर्देवानिच्छंस्त्वं [V]न रिष्यसि । अनुवर्णितं देवानामित्युत्तरार्धं पूर्ववद्योज्यम् ॥

असदिति ॥ अथ चतुर्थी—‘असदत्र सुवीर्यमुत त्यदाश्वश्वियम्’ इति । [V]अत्र अस्मिन् यजमाने [V]सुवीर्यं शोभनं सामर्थ्यम् [V]असत् भवेदित्यर्थः । [V]उत अपि च [V]त्यत् तदस्तु । किं त्यत्[२२] ? [V]आश्वश्वियम् । आशवः शीघ्रगामिनश्च ते अश्वाश्च आश्वश्वाः, तेषां संबन्धि शोभनवीर्यमस्तु ॥

---

१५. मै-हिंस्य असि । १६. त्रि-तदेतत् । १७. तं.ति. त्रि-आश्वश्वियं भवति ।

---

२२. इ.उ.क.पा.म६-तत् ।

नकिष्टं कर्मणा नशन्न प्र योषन्न योषति ॥
उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।
पृणन्तं च पपुरिं च (४) श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ॥

नकिः । तम् । कर्मणा । नशत् । न । प्रेति । योषत् । न । योषति ॥
उपेति । क्षरन्ति । सिन्धवः । मयोभुव इति मयः-भुवः । ईजानम् । च । यक्ष्यमाणम् । च । धेनवः ॥
पृणन्तम् । च । पपुरिम् । च (४) । श्रवस्यवः । घृतस्य । धाराः । उपेति । यन्ति । विश्वतः ॥

अथ चतुर्थी—' नकिः ' इति ॥ तम् इति प्रथमास्थाने द्वितीया । स खलु कर्मणा धर्मेण नशत् नश्यति न दुःखाभिभूतो भवति । पूर्वजन्मकृतेन पापेन कर्मणा न बाध्यते । नशेर्लेटि व्यत्ययेन शप् । केचिदाहुः—कर्मणेति प्रथमैकवचनस्य लुगपवादः । " सुपां सुलुक्° " (पा ७.१.३९) इत्याकारः । नशेर्ण्यन्ताल्लेटि " बहुलं संज्ञाछन्दसोः " ( द्र. उ १९९ ) इति णिलुक् । + + + + + ईजानम् इष्टवन्तं देवान् । यजेः " लिटः कानज्वा " ( पा ३.२.१०६ ) इति कानच् । यक्ष्यमाणं च अचिराद्यक्ष्यमाणं यष्टुं कृताध्यवसायमिति । धेनवः देवान् प्रीणयन्त्यः पृणन्तं च श्राद्धेन पितॄन् प्रीणयन्तम् । पृ प्रीतौ, श्नं च । पपुरिं च पितॄणां प्रीणनशीलं च न पृणन्तमेव । " आदृगमहनः° " ( पा ३.२.१७१ ) इति किन्प्रत्ययः । न केवलमीजानं यक्ष्यमाणमेव, अपि तु पृणन्तं च पपुरिं चेति प्रासङ्गिकी वृत्तप्रशंसा, इष्टापूर्तकारिणां प्रशंसनात् । तद्वते कर्मण्यस्य विनियोगो द्रष्टव्यः । श्रवस्यवः, श्रवोऽन्नं तदिच्छन्त्यः अन्नयुक्ता इत्यर्थः । " क्याच्छन्दसि " ( पा ३.२.१७० ) इत्युप्रत्ययः । काः पुनस्ता इत्याह—घृतस्य धाराः अविच्छिन्नाः प्रवाहाः यथोक्तस्वभावाः यथोक्तलक्षणान् पुरुषान् उप क्षरन्ति । अपि च उप यन्ति विश्वतः सर्वाभ्यो दिग्भ्य उपागच्छन्ति ॥

**नकिरिति** ॥ अथ पञ्चमी—' नकिष्टं कर्मणा नशन्न प्र योषन्न योषति ' इति । नकिरिति शब्दो निषेधवाची । [२३]कर्मसहितं तं यजमानं नकिः नशत् राक्षसादिर्मा विनाशयतु । यज्ञविरोधी पाप्मा यजमानेन सह प्रकर्षेण न योषन् मैव मिश्रीभवतु ॥ यजमानोऽपि न योषति न पाप्मना सह मिश्रीभवति ॥

**उपेति** ॥ अथ षष्ठी—' उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः । पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः ' इति । सिन्धवः नदीसदृशाः मयोभुवः सुखं भावयित्र्यः धेनवः पूर्वमिष्टवन्तमितः परं यक्ष्यमाणं च पुरुषमेनमुपेत्य क्षरन्ति स्रवन्ति बहुतरं क्षीरं

+ + + [ अत्रत्यं भाष्यं त्रुटितं प्रतीयते । ] ।

२३. म६–कर्मणा सहितम् ।

काम्ययाज्यापुरोनुवाक्याः ]

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् ॥

सोमारुद्रेति सोमा-रुद्रा । वीति । वृहतम् । विषूचीम् ।
अमीवा । या । नः । गयम् । आविवेशेत्या-विवेश ॥
आरे । बाधेथाम् । निर्ऋतिमिति निः-ऋतिम् ।
पराचैः । कृतम् । चित् । एनः । प्रेति । मुमुक्तम् । अस्मत् ॥

" यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सोमारौद्रं चरुं निर्वपेत् " ( तैसं २.२.१० ) इत्यस्य पुरोनुवाक्या---' सोमारुद्रा वि वृहतम् ' इति त्रिष्टुप् ॥ हे Vसोमारुद्रा सोमारुद्रौ । पूर्ववदानङ्, आकारश्च । Vवि Vवृहतम् । वृहू उद्यमने तौदादिकः । Vविषूचीं विष्वग्गमनाम् । कामित्याह---Vया Vअमीवा रोगस्तेजोहानिरूपः Vनः अस्माकं Vगयं गृहम् Vआविवेश । किंच---Vआरे दूरे Vबाधेथां गमयतं, गमयित्वा नाशयतं Vनिर्ऋतिं निकृष्टां गतिं निकृष्टगमनहेतुं पापम् । " ※तादौ च " ( पा ६.२-५० ) इति गतेः प्रकृतिस्वरत्वं, प्रादिसमासो वा । Vपराचैः परावृत्तिभिर्गमनैः । यथा पुनरस्मत्पार्श्वं नागच्छति तथा बाधेथाम् । निपातोऽयं यथा---' उच्चैः नीचैः ' । [18]एवादित्वादन्तोदात्तत्वम् ( फि ८२ ) । किंच---चेदर्थे चिच्छब्दः । Vएनः अस्माभिः Vकृतं चेत् Vअस्मत् अस्मत्तः अस्मत्सकाशात् Vप्र Vमुमुक्तं प्रकर्षेण मोचयतम् । शपः श्लुः ।

प्रयच्छन्तीत्यर्थः । Vपृणन्तम् अस्मिन् कर्मणि जुहूं पूरयन्तं Vपपुरिं हविष्मत्सु कर्मसु पूरयिष्यन्तं Vच यजमानं Vश्रवस्यवः श्रोतुमिच्छन्त्य इव Vघृतस्य Vधाराः Vविश्वतः सर्वत Vउप Vयन्ति समीपे प्राप्नुवन्ति ॥

सोमारुद्रा इति ॥ विकल्पितानि त्रीणि धाय्यायुग्मान्युक्त्वा पुरोनुवाक्यामाह---' सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश । आरे बाधेथां निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् ' इति । [24]Vया Vअमीवा रोगरूपा निर्ऋतिः Vनः अस्माकं Vगयं गृहम् Vआविवेश, Vसोमारुद्रा हे सोमारुद्रौ, तां Vनिर्ऋतिं Vविषूचीं विष्वग्गतिं नानादिक्षु यथा पलायन्ते[25] तथा Vवि Vवृहतं विशेषेणोन्मूलयतं, Vपराचैः पराङ्मुखीं निर्ऋतिं ताम् Vआरे दूरे युवां Vबाधेथां, तया निर्ऋत्याऽस्मासु Vकृतम् Vएनः Vचित् पापं रोगरूपम् अपि Vअस्मत् Vप्रमुमुक्तं प्रकर्षेणास्मत्तो मोचयतम् ॥

सोमारुद्रा इति ॥ याज्यामाह---' सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ' इति । हे सोमारुद्रौ, Vयुवम् उभौ युवाम् Vअस्मे Vतनूषु अस्माकं शरीरेषु Vविश्वा सर्वाण्येतानि Vभेषजानि औषधानि Vधत्तं स्थापयतम् । Vअव Vस्यतं तैर्भेषजैरनिष्टं विनाशयतम् । निर्ऋत्या कृतं Vनः अस्माकं तनूषु Vयत् Vबद्धम् Vएनः अस्ति Vतत् अस्मत्तः Vमुञ्चतम् ॥

※शुद्धीकृतः पाठः । मैसूरमुद्रितपुस्तके, लिखितपुस्तकेषु ' पातौ च ' इत्यस्ति । १८. त्रि-प्राग्रपादित्वात् ।

२४. इ.उ.पा.म६-' या ' नास्ति । २५. आ-पलायति ।

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥
सोमापूषणा जनना रयीणां जनना दिवो जनना (५) पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥

सोमारुद्रेति सोमा-रुद्रा । युवम् । एतानि । अस्मे इति ।
विश्वा । तनूषु । भेषजानि । धत्तम् ॥
अवेति । स्यतम् । मुञ्चतम् । यत् । नः । अस्ति ।
तनूषु । बद्धम् । कृतम् । एनः । अस्मत् ॥
सोमापूषणेति सोमा-पूषणा । जनना । रयीणाम् । जनना । दिवः । जनना । पृथिव्याः ॥
जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥

तत्रैव याज्या—'सोमारुद्रा युवम्' इति त्रिष्टुप् ॥ हे सोमारुद्रा, युवं युवाम् एतानि भेषजानि यानि लोके सन्ति तानि विश्वा विश्वानि अस्मे अस्माकम् । "सुपां सुलुक्" (पा ७·१·३९) इति शेआदेशः । तनूषु शरीरेषु धत्तं स्थापयतं, दत्तं वा । किं च—नः अस्माकं तनूषु बद्धं यत् अस्माभिः कृतम् एनः पापम् अस्ति तत्प्रथमं तावत् अस्मत् अस्मतः मुञ्चतं विश्लेषयतम्[19] । तिङः परत्वान्न निहन्यते । ततो मुक्त्वा तत् अव स्यतं [20]अवसाययतं विनाशयतम्[20] । न इत्यस्य "प्रकृत्याऽन्तःपादम्" (पा ६·१·११५) इति प्रकृतिभावः ॥

**सोमापूषणा इति** ॥ इष्ट्यन्तरं विधत्ते—"यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत् सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति" (तैसं २·२·१०) इति । सोमसंबन्ध्योषधिरसेन जातत्वात् पुरुषः सोमदेवताकः । 'इयं वै पूषा' इति श्रुतेः पूषरूपया भूम्या तृणादिप्रदानेन पोषितत्वात् पशवः पौष्णाः । [26]अतो हविषा तुष्टा स्वदेवता पशुभिः सहिता समीचीनां त्वचं करोति । ततो दुश्चर्मत्वमपगच्छति ॥ तत्र पुरोनुवाक्यामाह—'सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः । जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम्' इति । हे सोमापूषणौ, युवां देवाः अमृतस्य कर्मफलस्य नाभिम् अकृण्वन् । णह बन्धन इत्यस्माद्धातोरुत्पन्नो नाभिशब्दः । बन्धनरज्जुं कृतवन्त इत्यर्थः । सोमापूषभ्यां हि कर्मफलं

१९. मे-विश्लेषयितम् । २०-२०. मे-अवसाययितं विनाशयितम्; तं-अवसाययतम् अविनाशयतम् ।

२६. म६-अनेन ।

काम्ययाज्यापुरोनुवाक्याः ]

इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु ॥ २२ ॥

[ बृहतः शवसा रथः पपुरिं च दिवो जनना पञ्चविंशतिश्च ]

इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् । अजुष्टा ॥
आभ्याम् । इन्द्रः । पक्वम् । आमासु । अन्तः ।
सोमापूषभ्यामिति सोमापूष–भ्याम् । जनत् । उस्रियासु ॥ २२ ॥

[ अनुमत्या आग्नेयमैन्द्राग्नमग्नये सोमाय प्रतिपूरुषमैन्द्राग्नं धात्रे बार्हस्पत्यमग्नयेर्थेतो देवीः समिधः सोमस्येन्द्रस्य मित्र आग्नेयः सद्य आग्नेयमाग्नेयः स्वाद्वीं त्वाग्नाविष्णू द्वाविंशतिः ]

[ अनुमत्यै यथाऽसति देवीरापो मित्रोऽसि शूरो वा द्विचत्वारिंशत् ] [ अनुमत्या उस्रियासु ]

---

"यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत्" ( तैसं २·२·१० ) इत्यस्य पुरोनुवाक्या––'सोमापूषणा' इति त्रिष्टुप् ॥ हे सोमापूषणौ । पूर्ववदाकारः । vरयीणां धनानां vजनना जननौ जनयितारौ युवाम् । "नामन्यतरस्याम्" ( पा ६·१·१७७ ) इति नाम उदात्तत्वम् । vदिवः च vपृथिव्याः च जनयितारौ । "ऊडिदम्°" ( पा ६·१·१७१ ) इति दिवो विभक्तिरुदात्ता । "उदात्तयणः°" ( पा ६·१·१७४ ) इति पृथिव्याः । vजातौ जातमात्रावेव युवां vविश्वस्य vभुवनस्य भूतजातस्य vगोपौ पालयितारौ[21] । ईदृशौ युवां vदेवाः vअकृण्वन् अकुर्वन् । vअमृतस्य[22] vनाभिं नहनौ बन्धनौ[23] ॥

तत्रैव याज्या––'इमौ देवौ' इति त्रिष्टुप् ॥ vइमौ vदेवौ सोमापूष्णौ vजायमानौ एवावस्थितौ vजुषन्त अजुषन्त सेवितवन्तः सर्वे देवाः । "बहुलं छन्दस्यमाङ्योगेऽपि"

---

यजमाने बध्यते । कीदृशौ युवाम् ? धनानां द्यावापृथिव्योश्च जनयितारौ । ऐहिकामुष्मिकफलदातृत्वमेवात्र द्यावापृथिव्योर्जनकत्वम् । किं च vजातौ सन्तौ जातमात्रेणैव vविश्वस्य सर्वस्य vभुवनस्य लोकस्य vगोपौ[27] गोपायितारौ ॥

इमाविति ॥ तत्रैव याज्यामाह––'इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा । आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु' इति ॥ सर्वे देवाः vजायमानौ vइमौ vदेवौ vजुषन्त सेवन्ते । vइमौ उभावजुष्टान्यप्रियाणि vतमांसि बुद्धिमान्द्यानि vगूहतां समावृणुतां विनाशयताम् ।

---

२१. मै–गोपयितारौ; तं–गोपायितारौ । २२. त्रि–अमृतत्वस्य । २३. तं–बद्धौ ।

---

२७. इ.उ.क.पा.म६–' गोपौ ' नास्ति ।

( पा ६·४·७५ ) इत्यडभावः । किंच—vइमौ देवौ vतमांसि vअजुष्टा अजुष्टानि अप्रियाणि । "शेश्छन्दसि" ( पा ६·१·७० ) इति लोपः । अजुष्टा अजुष्टौ तमोभिरसेवितौ । पूर्ववदाकारः । vगूहतां नाशयताम् । छान्दसो लिङ् । "ऊदुपधाया गोहः" ( पा ६·४·८९ ) । यद्वा—इमौ खलु सर्वस्य तमांसि गूहतां गूहयतः नाशयतः[24] । लडर्थे लिङ् । किं च—vआभ्यां vसोमापूषभ्यां सह । अन्वादेशत्वेऽपि व्यत्ययेन निघाताभावः । "ऊडिदम्°" ( पा ६·१·१७१ ) इति विभक्त्युदात्तत्वमेव प्रवर्तते । आभ्यां सह vइन्द्रः vआमासु तरुणीषु vउस्रियासु गोषु vअन्तः परिपक्वं पयः vजनत् जनयति उत्पादयति । जनेर्ण्यन्तात् पूर्ववल्लुङ् । पूर्ववदडभावः । "छन्दस्युभयथा" ( पा ३·४·११७ ) इति शप आर्धधातुकत्वाण्णिलोपः । ताविमावेवं महानुभावौ अस्माकं दुश्चर्मतां नाशयतां शोभनानि दत्तामित्यर्थः ।

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमे काण्डे अष्टमे प्रपाठके द्वाविंशोऽनुवाकः ॥

प्रपाठकः समाप्तः, काण्डश्च ॥ हरिः ॐ ॥

---

**vइन्द्रः vआभ्यां vसोमापूषभ्याम् vआमासु vउस्रियासु तरुणीषु गोषु vअन्तः रसपोषकाभ्यां vपक्वं क्षीरं vजनत् जनयति । गावो हि सारयुक्तायां भूमौ सोमेन वर्धिता ओषधीर्भक्षयित्वा बहुनवनीतगर्भं क्षीरं धारयन्ति ॥**

अस्मात् सोमापौष्णात् पूर्वं विहितमेव पुनः फलान्तराय विधत्ते—"सोमारौद्रं चरुं निर्वपेत् प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्रजनयति विन्दते प्रजाम्" ( तैसं २·२·१० ) इति । गर्भाशये धृतस्य रेतसोऽग्निना पच्यमानत्वादग्नेः प्रजनयितृत्वम् ॥ पुनरपि फलान्तराय विधत्ते— "सोमारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निः स्वाया एवैनं देवतायै निष्क्रीय रुद्रायापि दधाति ताजगार्तिमार्च्छति" ( तैसं २·२·१० ) इति । पुरुषस्य सोमदेवताकत्वं पूर्वमभिहितम् । "यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" ( तैसं १·५·१ ) इति श्रुत्या रुद्ररूपत्वमग्नेराम्नातम् । पुरुषस्य स्वामिभूता या सोमदेवता तस्या देवतायाः सकाशाच्चरुणा मुख्येन मूल्येन तं पुरुषं वैरिणं निष्क्रीय क्रूराय रुद्राय चरुरूपमुत्कोचं दत्त्वा तं वध्यं वैरिणं तस्मै प्रयच्छति । स च वैरी तदानीमेव मरणं प्राप्नोति ॥ पुनरपि फलान्तराय विधत्ते—"सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी सोमं वा एतस्य रसो गच्छत्यग्निं शरीरं यस्य ज्योगामयति सोमादेवास्य रसं निष्क्रीणात्यग्नेः शरीरमुत यदीतासुर्भवति जीवत्येव" ( तैसं २.२.१० ) इति । ज्योगामयावी दीर्घरोगयुक्तः । यस्य पुरुषस्य ज्योगामयति यं पुरुषं व्याधिश्चिरं पीडयति एतस्य पुरुषस्य शरीरप्राणयोर्बन्धको

---

२४. मै–' नाशयतः ' नास्ति ।

योऽन्नरसः स व्याधिकाले सोमं प्राप्नोति। भुक्तस्यान्नस्य संबन्धी योऽयं सूक्ष्मो रसो मनःप्रभृतेर्लिङ्ग-शरीरस्याऽऽप्यायनकरस्तेन रसेन प्राणो देहे बध्यत इतीममर्थं वाजसनेयिनः शिशुब्राह्मणे "अन्नं [28]दाम" (बृउ २-२-१) इति वाक्येन समामनन्ति। तस्मिन् सोमेऽन्नोपभृते सति अयं देहोऽग्निं गच्छति जाठराग्नेर्गर्भस्थान्नरसस्याभावात् मांसादिधातूनग्निर्भक्षयति। अत एवाऽऽमयाविनः शरीरं कृशं दृश्यते। एवं सति यजमानश्चरुणा मूल्येन सोमाग्निभ्यां रसं शरीरं निष्क्रीणाति। ततोऽयमरोगो भवति। किं च यद्यप्ययं मुहूर्तमात्रं गतप्राणस्तथाऽपि भूमौ शयानस्तदानीं जीवत्येव॥ एतस्य चरोरङ्गत्वेन होतुर्बलीवर्द-दानं विधत्ते—"सोमारुद्रयोर्वा एतं ग्रसितꣳ होता निष्खिदति स ईश्वर आर्तिमार्तोरनड्वान् होत्रा देयो वह्निर्वा अनड्वान् वह्निर्होता वह्निनैव वह्निमात्मानꣳ स्पृणोति" (तैसं २-२-१०) इति। [29]रोगिसंबन्धि-रसशरीरयोः सोमारुद्राभ्यां स्वीकृतत्वात्तयोर्मुखे रोगी ग्रसितो वर्तते। तं ग्रसितं होता याज्यानुवाक्याबलात् निष्खिदति। तयोर्मुखान्निःसारयति। स च होता तयोः कोपादार्तिं प्राप्तुमीश्वरो योग्यो भवति। अनडुहो वह्नित्वम् "अनड्वाहमग्नीधे" (तैसं १-८-१८) इत्यत्रोपपादितम्। अग्निविषयावाहनमन्त्रपाठाद्धोतुः वह्नित्वम्। तथा सत्यनडुहो दाता होता तेनानडुद्रूपेण वह्निनैव वह्निरूपं स्वात्मानं स्पृणोति आर्तिशान्त्या प्रीणयति॥ पुनरपि फलान्तराय विधत्ते "सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषः स्तृणीयादर्धं नार्धमिध्मस्याभ्यादध्यादर्धं न स्व एवास्मा आयतने भ्रातृव्यं जनयति" (तैसं २-२-१०) इति। अस्मै स्व आयतनेऽस्य वैरिणः स्वकीयगृह-विषये क्षेत्रविषये वा भ्रातृव्यं विवादकारिणमन्यं विरोधिनं जनयेयमिति यः कामयेत स एतं चरुं निर्वपेत्। तस्य वेदिपरिग्रहस्थानं सूत्रकारेण दर्शितम्—"भ्रातृव्यक्षेत्रं गत्वैतामिष्टिं निर्वपेत। तत्र दक्षिणमर्धं वेद्या उद्धत्य तदेवार्धेन बर्हिषः स्तृणीयात्। अर्धमिध्मस्याभ्यादध्यात्" (आपश्रौ १९-१९-१०-११) इति। एवं कृते सत्ययं यजमानोऽस्य भ्रातृव्यस्य तदीयस्थान एव विवादकारिणं जनयति॥

अत्र विनियोगसंग्रहः—

"आग्नावैष्णवमित्यादावभिचारहविष्क्रये।
अग्ना प्र णो बृहेत्याद्या अधिका तु विकल्प्यते॥ १॥
आ न एककपाले तु मैत्रावरुणनामके।
अग्निमित्यादिका धाय्याः स्युः सोमारौद्रके चरौ॥ २॥
देवानामिति चार्धर्चस्तिसृष्वृक्ष्वनुषज्यते।
षड्धाय्या द्वे तु याज्यानुवाक्ये सोमेत्युदीरिते
सोमापौष्णे तु सोमेति मन्त्रा एकोनविंशतिः"॥ ३॥ इति[30]॥

अथ मीमांसा॥ अष्टमाध्यायस्य तृतीयपादे चिन्तितम्—

"आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः।
अग्नीषोमीयविकृतिरथ वा व्यत्ययो द्वयोः॥

---

२८. शुद्धीकृतः पाठः; आ.इ.उ.पा.म६–ददामि; क–ददाम। २९. इ.उ.पा.म६–रोगसंबन्धि-शरीरयो। ३०. आ–' इति ' नास्ति।

प्रथमत्वद्वितीयत्वसाम्यादाद्योऽन्तिमो भवेत् ।
द्विदेवत्वैकदेवत्वसाम्यस्य श्रुतिमत्त्वतः "॥ (जैन्या ८.३.१-२) ॥

हविर्गणः कश्चिच्छ्रूयते—"आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वत्यै चरुं बार्हस्पत्यं चरुम्" इति । गणान्तरमेवं श्रूयते—"अग्नये पावकायाग्नये शुचयेऽष्टाकपालम्" (द्र. तैब्रा १.१.५-६) इति । अत्राऽऽग्नावैष्णवस्य प्रथमस्थानत्वादाग्नेयविकृतित्वं युक्तम्, शुचिदेवकस्य द्वितीयस्थानत्वादग्नीषोमीयविकृतित्वम् इति चेत् । न । द्विदेवत्वादिसाम्यस्य श्रूयमाणत्वेनार्थसिद्धस्थानतो बलीयस्त्वात् । तस्मादाग्नावैष्णवोऽग्नीषोमीयविकृतिः, शुचिदेवक आग्नेयविकृतिः ॥

विस्पष्टमनुवाकार्था वर्ण्यन्ते बुद्धिशुद्धये ।
अनुमत्यादयो वैश्वदेवो वरुणघासकाः ॥ १ ॥
साकमेधाः पितृयज्ञस्त्र्यम्बकाश्च शुनादिकाः ।
शुनासीरीयमिन्द्रादि तुरीयं च द्वयं तथा ॥ २ ॥
पञ्चेध्मीयमपामार्गे होम एते शुनादिकाः ।
देविकाद्यं कर्मषट्कं स्याद्रत्निहविरादिकम् ॥ ३ ॥
हवींषि रत्निनां तद्वद्दीक्षणीयाऽभिषेच्यगा ।
हवींषि स्युर्देवसुवां जलग्रहणसंस्कृती ॥ ४ ॥
दिशां व्यास्थापनं तद्वदभिषेकोऽथ दिग्जयः ।
सेवा संसृड्ढविस्तद्वद्दशपेयो ह्यवेष्टयः ॥
हवींषि प्रयुजां सौत्रामणी याज्या इतीरिताः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमः प्रपाठकः ॥ ८ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमः काण्डः समाप्तः ॥ १ ॥



## शुद्धिपत्रम् ( संहितापदपाठयोः )

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४९ | २ | प्रजामैत्रं | प्रजामैत्र |
| ७० | ८ | ओषति | ओषति |
| १३० | ५ | धुक्षीमहिं | धुक्षीमहिं |
| १५१ | १ | गृह्णाति | गृंह्णाति |
| १६३ | २ | °नोपाप्नोतिं | °नोपाप्नोति |
| १७४ | ३–४ | यज्ञस्यं (४) आशीं | यज्ञस्या(४)शीं |
| १७९ | ३ | °ह्वदस्तुं | °ह्वदस्तु |
| २०८ | ११ | ह्वयेत | ह्वयेत |
| २८४ | ४ | °मुर्दजयन् | °मुर्दजयद् |
| ४१५ | ३ | अग्नेश्चैकादश | अग्नेस्तैकादश |
| ४३९ | १ | °नड्वांह° | °नड्वाहं° |
| ४७३ | ३ | सुष्वान | सुन्वान |

---

## भाष्यस्थं शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३ | २२ | अथ | अथो |
| ५६–६२ | शीर्षकपङ्क्तिः | ग्रह° | गृह° |
| ५६ | १० | ग्रहपश्वाद्यु° | गृहपश्वाद्यु° |
| ५६ | ११ | ग्रहाणां | गृहाणां |
| ५८ | १९–२० | °मुपतिष्ठतेऽस्मिन्नेव | °मुपतिष्ठते गार्हपत्यमुपतिष्ठतेऽस्मिन्नेव |
| ६० | २८ | इति । एवं | इति । तन्तवेऽमुष्मा इत्यत्र नामग्रहणं विधत्ते–' पुत्रस्य नाम गृह्णात्यन्नाद-मेवैनं करोति ' इति । एवं |
| १०० | २६ | द्वादशकपालं सनिं | द्वादशकपालं |
| १०० | २८ | धनलाभम् । | सनिं धनलाभम् । |
| १०४ | २७ | पृतनाः | पृतनाः सहस्व पृतन्यतः । |

| | | | |
|---|---|---|---|
| ११७ | २२ | (तैसं २·४·१२) | (तैसं २·५·२) |
| ११९ | २ | °समागच्छन्त | °समगच्छन्त |
| १२० | १८ | देवयज्ययाह्लादा | देवयज्ययाह्लादो |
| १५२ | १९ | उपस्तृणुतः | उपस्तृणुते |
| १६५ | ११ | समा संः | समासः |
| १७२ | २६ | °रेऽऽ सादयेत् | °रेवोपसादयेत् |
| १८६ | १२ | इन्द्रमेव | इन्द्रमेव स्वेन |
| १८६ | १४ | स्यादेवास्मै | स्वादेवास्मै |
| २०३ | २० | एवं | एव |
| २२३ | २२ | (तैसं १·७·१) | (तैसं १·६·३) |
| २२५ | २१-२२ | प्र जायते | प्राजायत तस्मादेव यजमानो मिथुनेन प्रजायते |
| २५८ | ३० | प्रयच्छर्ती | प्रयच्छति |
| २७१ | २३ | पवित्रं वै दर्भाः। पुनात्येवैनान् | यज्ञो वै ताप्यम्। यज्ञेनैवैन॰ समर्धयति। दर्भमयं परिधापयति। पवित्रं वै दर्भाः। पुनात्येवैनम्। |
| २७२ | १८ | गोधूमं | गोधूमं |
| २७४ | २६ | प्रजा इत्याह | प्रजेत्याह |
| ३०६ | १५ | नैर्ऋतेन | नैर्ऋतेन पूर्वेण |
| ३०८ | १४ | नयन्ति | यन्ति |
| ३११ | २५ | दधि | दधि। |
| ३१८ | ७ | सोऽग्निरब्रीत् | सोऽग्निरब्रवीत् |
| ३२६ | ८ | अपधुरमेवैनां | अपधुरमेवैना |
| ३३९ | २३ | सा॰ | साक॰ |
| ३५८ | १९ | पादवेप्रश॰ | पादप्रवेश॰ |
| ३७२ | ३ | वृद्धानिन्द्रः | वृद्धामिन्द्रः |
| ३७९ | ६,७ | (तैसं २·६·४) | (तैसं १·१·९) |
| ३७९ | १५ | परिवहति | परिवहन्ति |
| ,, | १७ | °णैत्रामूर्ते | णेव मूर्ते |
| ३८० | २० | (तैब्रा ३·७·४) | (तैब्रा ३·३·७) |
| ३९३ | २० | मरुतः | मरुतः। |
| ३९९ | २३ | आविन्नो मित्रा॰ | अविन्नो मित्रा॰ |
| ४१५ | १८ | (तैसं ४ ४·५) | (तैसं ४·५·५) |
| ४२३ | १२ | (तैसं १·७·७) | (तैसं १·८·१५) |
| ४२७ | १५ | देवनामासि | देहवानसि |
| ४३३ | १८ | सोमेण | सोमेन |
| ४४१ | २ | सद्यस्कालत्वाविधानात् | सद्यस्कालत्वविधानात् |